# तर्ककुतूहलम्

पर्वतीय-श्रीविश्वेश्वरपाण्डेय-
विरचितम्

नित्यानन्द-स्मारक-समितिः
वाराणसी

श्रीकेशवग्रन्थमालायां द्वितीयं रत्नम्

पदवाक्यप्रमाणपारावारीण-कवितार्किकचूड़ामणि-

पर्वतीय-श्रीविश्वेश्वरपाण्डेय-

विरचितम्

# तर्ककुतूहलम्

सम्पादक :

जनार्दनशास्त्री पाण्डेयः

एम. ए., साहित्याचार्यः

प्रकाशिका

श्रीनित्यानन्द-स्मारक-समितिः

वाराणसी

# Foreword

To the scholars of Sanskrit, the name of **Shri Vishweshwar Pandey** is not unfamiliar, though it may not be as well known as it deserves to be. While some of his writings have seen the light of day, there are still many that have to be unearthed and brought into the open. 'TARKKUTUHAL' is one such gem which **Shri Nityanand Smarak Samiti** is prsenting *to* the lovers of Sanskrit language and literature.

**Vishweshwar** was a man of amazing genius who flourished towards the close of the eighteenth century. *He* strode like a colossas in the varied fields of Sanskrit learning. If Mandar Manjari is a monument to his power of creative fiction, TARKKUTUHAL is a gymnastic exercise in Naiyayik reasoning, a fine example of verbal dialectics presenting the Naiyayik point of view in regard to the phenomenal world and holding its own in sheer subtleties of reasoning. Of the six facets of orthodox and traditional Hindu metaphysics, Nyaya--Vaisheshik form the backbone of the ancent Hindu thought, attempting to probe into the mysteries of the phenomenal world from a logical point of view. Unlike the Vedantist, the Naiyayik postulates the reality of the material world and proceeds on the basis of the causative functioning of the manifest. The effect and cause are a binding universal law, and every atom of matter is conditioned in its operational behaviour by its causative nucleus. In a reasoning of this kind the visible forms of the manifested matter cannot be brushed aside as hallucinations of mind or delusions of thought.

The theory of Maya is thus not acceptable to the student of Nyaya. **Vishweshwar** assumes this attitude and dives into the Upanishadic lore, collecting passages bearing on the illusory nature of the world aorund us and otherwise, and then embarks on a reinterpretation to prove that the Naiyayik view is the correct one. It is not only in the views set forth by him but also in the manner of semantic reasoning and interpretative acumen displayed by him that his personality, depth of learning, freshness of thought, are fully revealed, and the real significance of this unique work unfolded. He has allowed a fresh breeze to blow into the time-worn and traditional argumentative paraphernalia of earlier metaphysicians, and has given a new dimension to the metaphysics of Nyaya. It is the effectiveness of the argumentative art displayed here that marks him out amongst the giants of late eighteenth century Sanskrit writers; his style of writing, presentation of material, forceful reasoning, and diction take him back to the earliest ages of Sanskrit writers who packed meaningful loads of scholarly thought in the chiselled aphoristic idioms. **Vishweshwar** is fresh, original and profound and a master of style. What an amazing fecundity did he possess that he at once shone like an unrivalled star in all spheres of creative writing, fiction, poetry, drama, rhetoric to name only a few. In the list of his works, printed or unpublished, are included all the different kinds of creative or critical writing.

—G. D. Shastri.

———

# प्रकाशकीयम्

ब्रह्मीभूत-महामहोपाध्याय-पण्डितनित्यानन्दपन्तपर्वतीयमहोदयानां जन्मशताब्दिमहोत्सवः पौषकृष्णत्रयोदश्यां २०२४ वै० वाराणसेय-संस्कृतविश्वविद्यालयस्य मुख्यभवने महता समारोहेण सम्पन्नोऽभवत्। तत्रैव काशीस्थपर्वतीयैरिदं निरणायि यत् काश्यां पूज्यपर्वतीयपादानां स्मृतिश्चिरस्थायिनी भवेदेतदर्थमेकस्याः स्मारकसमितेः संगठनं कर्तव्य-मिति। श्री प्रो. गणेशदत्तशास्त्रिमहोदयानामाध्यक्ष्ये संगठिता समितिः राजकीयनियमानुसारं पञ्जीकृता च। अस्याश्च समितेः पर्वतीयस-माजस्योत्थापकेषु बहुषूद्देश्येषु अयमप्येक आसीदुद्देश्यो यत् पर्वतीय-विद्वद्भिर्विरचितानामद्यावधिप्रकाशमनुपगतानां रचनाविशेषाणां संक-लनं प्रकाशनं च कर्तव्यमिति। स्वल्पेनैव कालेन समित्या बहुशोऽज्ञात-चराणां कृतीनां संकलनं कृतं क्रियते च। समितेः कार्यकारिण्या परिषदा निश्चितं यत् विद्वन्मूर्धन्यश्रीविश्वेश्वरसूरिविरचिताः ग्रन्थाः संस्कृतवा-ङ्मयेऽतीव लब्धादरा महत्त्वपूर्णा विद्वदुपकारकाश्च। तेषु येऽप्रकाशि-तास्ते त्वप्रकाशिता एव ये प्रकाशमुपगतास्तेऽपि सम्प्रति प्रायो दुर्लभा एव सन्ति, अतस्तेषां समग्रोपलब्धग्रन्थानां क्रमशो मालारूपेण प्रकाशनं समित्या कर्तव्यमिति। तमेव निर्णयमनुसृत्य तर्ककुतूहलं प्रकाश्य विदुषां पुरत उपस्थाप्यते।

वर्षशतकात्पूर्वमेव विद्वन्मूर्द्धन्यैः स्वर्गीयपण्डितकेशवदत्तशास्त्रिभिः स्वयं परिश्रम्य बहुव्ययं च कृत्वा पर्वतीयविद्वद्भी रचिता भूयांसो ग्रन्थाः सङ्कलिता आसन्। तत एव तत्तनूजन्मभिः श्रीगणेशदत्त-शास्त्रिभिः एतद्ग्रन्थकृत्प्रणीता मन्दारमञ्जरी कुसुमाभिधटीकासंवलिता प्रथमरत्नरूपा प्रकाशिताऽऽसीत्। तस्यामेव ग्रन्थमालायां द्वितीयमिदं ग्रन्थरत्नमेतर्हि मुद्रितम्। यदि विद्यानुरागविपुलैर्विद्वद्भिरेतान् ग्रन्थान् समादृत्यास्माकमुत्साहवर्धनं पर्वतीयबन्धुभिश्च स्मारकसमितेर्यथासम्भवं साहाय्यं करिष्यते चेदाशास्महे शीघ्रमेव वयं बहूनां दुर्लभानां ग्रन्था-नामुपस्थापने समर्थाः भविष्याम इति।

निवेदकः
**सुरेशचन्द्रपन्तः**
मन्त्री
नित्यानन्दस्मारकसमितेः

* श्रीः *

# प्रास्ताविकम्

## ग्रन्थकर्त्तुः परिचयः

अस्ति च हिमाद्रेरुपत्यकायां सुरम्या "अलमोड़ा"भिधाना नगरी, तस्याश्चतुष्क्रोशान्तरं यावत् पाटियाख्यो ग्रामः पाण्डेयाभिजनानां भरद्वाजगोत्रीयब्राह्मणानां वसतिः। तत्र चाभवल्लक्ष्मीधरपाण्डेयो नाम कश्चन सर्वशास्त्रपारङ्गतः पण्डितप्रकाण्डः। श्रूयतेऽनपत्यतातापतप्तेन तेन काशीमागत्य कोटिलिङ्गार्चनं कृतम्। तत्तपस्तुष्टेन च भगवता विश्वेश्वरेण स्वप्ने "मत्सदृशमेव पुत्रमाप्नुहि" इति वरो दत्तः। तद्वरप्रभावादेव सुदीर्घे वयसि लब्धस्य पुत्रस्य नामाप्यनेन "विश्वेश्वर" इत्येव कृतम्। अयं च विश्वेश्वरो जन्मत एव विचित्रप्रतिभासम्पन्न आसीत्। पञ्चवर्षवयस्क एव कृतोपवीतः पङ्क्त्यालापादिना सर्वानाश्चर्यचकितांश्चक्रे। दशवर्षानन्तरं तु यं कमपि शास्त्रमधिजिगाय तस्मिन्नेव ग्रन्थनिर्माणं प्रारेभे। सर्वाण्यपि शास्त्राण्यनेन स्वपितुः सकाशादेवाधिगतानीति तद्रचितग्रन्थेभ्यः स्फुटमेवावगम्यते[1]।

---

१. यथा—

लोकस्वान्तघनान्धकारपटलप्रध्वंसदीपाङ्कुरा  
विद्याकल्पलताप्रतानजनने वीजं निजासङ्गिनाम् ॥  
मध्येमौलि ममासतां सुविमला मालायमानाश्चिरं  
श्रीलक्ष्मीधरविद्वदङ्घ्रिनलिनोदीताः परागाणवः ॥  
( तर्ककुतूहले, अलङ्कारकौस्तुभे च )

सद्विद्वत्पदवाक्यमाननिगमाकूपारपारङ्गम—  
श्रीलक्ष्मीधरलब्धबोधजनुषा विश्वेश्वरेणोदिते।  
श्रीसिद्धान्तसुधानिधौ सुधिषणैरध्यायमध्यायतं  
ध्यायंध्यायमिहाभिधेयमधुना शोधाय धीर्धीयताम् ॥  
( सिद्धान्तसुधानिधौ )

वाग्देवतां द्विरदवक्त्रमपि प्रणम्य लक्ष्मीधरस्य विदुषश्चरणावुपास्य।  
भावानलङ्करणकौस्तुभगुम्फितान् स्वान् विश्वेश्वरो विवरितुं यतते समासात् ॥  
( अलङ्कारकौस्तुभटीकायाम् )

## स्थितिकालः

अयं कदा प्रादुरभवत् कदा च ब्रह्मीभूत इति तिथिस्तु दृढं नैव वक्तुं शक्यते, किन्तु निश्चितमेवैतद् यदयं वैक्रमेऽष्टादशशतके विद्यमान आसीत्। यतो हि सिद्धान्तसुधानिधावनेन भट्टोजिदीक्षितमतमालोचितम्, किन्तु तत्पौत्रस्य शब्दरत्नकर्तुः हरिदीक्षितस्य सुप्रसिद्ध वैयाकरणस्य नागेशस्य वा नामापि न क्वचिद् गृहीतम्, एतेन प्रतीयतेऽयं भट्टोजिदीक्षितादनन्तरवर्ती हरिदीक्षिताच्च पूर्ववर्ती इति। अलंकारकौस्तुभेऽप्यनेन अप्पय्यदीक्षितस्य पण्डितराजजगन्नाथस्य च मतं स्पष्टमालोचितम्, अतः स्पष्टमेव तयोरनन्तरवर्तीति। श्रूयते च हरिदीक्षितेन काशीमागतेनास्य दर्शनं कृतमासीत्। सरस्वतीभवनग्रन्थालयस्थनैषधीयचरितटीकायां भावप्रदीपाख्यायामन्ते श्लोको विद्यते—

८ ३ ६ १

अस्मिन् व्याकरणत्रयीरसरसासंख्याः समा बिभ्रति
श्रीहालस्य शकेऽधिपञ्चमि सहोमासस्य पक्षे सिते।
श्रीहर्षोक्तिषु नैषधीयचरिते भावप्रदीपं कृतिं
श्रीताताङ्घ्रिसरोरुहां प्रथयितुं द्राक् पर्शुरामोऽलिखत् ॥ १ ॥

एवमेव रसमञ्जरीटीकाया अन्तेऽपि—

---

श्रीमन्हीमहिततत्तदसीमधीमन्मूर्धन्यताकलितसङ्गतधन्यताकः।
लक्ष्मीधरो यमुदसूत मुदं प्रसूतां विश्वेश्वरस्य कृतिरस्य चिरस्य लोके ॥

( रसचन्द्रिकायाम, दीधितिप्रवेशे, कवीन्द्रकर्णाभरणे च )

सूरीन्द्रमौलिमुकुटामलरत्नदीपलक्ष्मीधराख्यबुधवर्यतनूद्भवेन।
विश्वेश्वरेण हृदयालुहृदां मदाय रोमावलीशतकमेतदकारि चारु ॥

( रोमावलीशतके )

प्रणम्य सम्यक्प्रतिपत्तिरम्यं लक्ष्मीधराख्यं धिषणं धरायाः।
विश्वेश्वरेण क्रियते समासात् समञ्जसाख्या रसमञ्जरीयम् ॥

( रसमञ्जरीटीकायाम् )

अन्तर्वाणिकुलावतंसपरिषद्बालाविलासायित—
श्रीलक्ष्मीधरगोचरप्रतिपदां धाराभिराराधितः।
आधातुं कवितासुधोदधिसमुद्ग्राहस्पृशामद्भुतं
स्फीताभिर्निरमात् स काव्यतिलकं विश्वेश्वरः सूक्तिभिः ॥

( काव्यतिलके )

८ ३ ६ १
दिग्गुणर्तुशशलाञ्च्छनयुक्ते शालिवाहनशके जयकृष्णः।
श्रावणीयसितपक्षदशम्यां - निर्मितिं पितुरिमां विलिलेख ॥

उपर्युक्तयोरुभयोरपि श्लोकयोरायाति यत् १६३८ शकाब्देऽयं विद्यमान आसीत्, इदमपि श्लोकाविमौ सूचयतः यदस्य महाभागस्य द्वौ पुत्रावास्तां परशुराम-जयकृष्णाख्यौ। प्रथमश्लोकस्थेन 'द्राक् अलिखत्' इत्यनेन संभाव्यते यदयं अवीतिस्म पुत्रश्च झटिति लिलेख।

एतदनन्तरं चैतदीयवंशजा काशीं विहाय गंगातटवर्तिनि "अनूपशहराख्ये" नगरे न्यूषुः।

श्रूयते चत्वारिंशद्वर्षवयस्क एवायं शिवसायुज्यमाप।

## पाण्डित्यं रचनापद्धतिश्च

अयं नैयायिकधुरन्धरः, वैयाकरणाग्रणीः, आलङ्कारिकप्रवरः, गद्यपद्योभयरचनाचातुरीप्रवीणः काव्यकलामर्मज्ञो महाकविश्चासीदित्येतत्प्रणीतग्रन्थैः प्रत्यक्षीभवत्येव। परपक्षखण्डने यथा विलक्षणमस्य सामर्थ्यं तथैव स्वपक्षस्थापनेऽपि। इदं तु निश्चितं यदयं प्रथमं नैयायिकस्ततोऽन्यत्किमपि, यतो हि समग्राप्यस्य रचनापद्धतिर्नव्यन्यायपरिपाट्या सर्वतोऽनुस्यूता। कोमलहृदयग्राहिणि काव्येऽप्ययं दार्शनिकान् पदार्थान् कया चमत्कारिकरीत्या संनिवेशयतीति मन्दारमञ्जर्यां द्रष्टव्यम्[1]।

प्रसादगुणपरिपूर्णास्य वर्णनपद्धतिः, लघुतरस्यापि विषयस्य विस्तरेण विवेचनमस्मै रोचते। गदाधरभट्टाचार्यस्येवास्यापि प्रकृतिः यत् कस्मिन्नपि विषये यावत्यः कोट्यःसमुद्भावयितुं शक्यन्ते तावतीः समुद्भाव्य समादधाति। यं कमपि प्राचीनमाचार्यमाक्षिपति चेत् केवलं सिद्धान्तदृष्ट्या, न कदापि शिष्टतां जहाति।

---

जयति यथाजातानां वाग्जातसुजातपारिजातश्रीः।
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः॥

( मन्दारमञ्जर्यां रसचन्द्रिकायां च )

१. "यत्किल प्रमाणं काव्यविशेषाणां, प्रमेयमुत्प्रेक्षाविशेषाणां, संशयात्मकं चाक्षुषद्रव्यपरिमाणपरिच्छेदस्य, प्रयोजनं नानाकार्यार्थिनां, दृष्टान्तो महापरिमाणशालिनां, सिद्धान्तः समृद्धिकाष्ठायाः, अवयवः सुरलोकस्य, तर्कसमूहविषयः कविबुद्धीनां, निर्णयगोचरः परमोत्कर्षस्य, वादो महेन्द्रभवनस्य, जल्पपर्यवसानहेतुरुत्प्रेक्षकाणां, वितण्डा-

## एतन्निर्मिता ग्रन्थाः

पूर्वमुक्तमेवास्माभिर्यदयं दशवर्षादारभ्यैव यं कमपि विषयमधीतवान् तस्मिन्नेव ग्रन्थरचनां प्रारेभे। संस्कृतवाङ्मयस्य प्रायः सर्वास्वेव शाखास्वनेन रचनाः कृताः, आफ्रेख्टनिर्मिते "कैटलागस कैटलागरुम्" इत्याख्ये ग्रन्थसूचीसंग्रहे एतन्निर्मितानां त्रयोविंशतिग्रन्थानां नामानि दृश्यन्ते, तेषु येऽस्मद्दृष्टिपथमागतास्तेषां संक्षिप्तपरिचयो दीयते—

**व्याकरणे—**

( १ ) **सिद्धान्तसुधानिधिः**—अयं ग्रन्थः अष्टाध्यायीसूत्रक्रमेण भाष्यवचस्तात्पर्यकुसुमामोदविस्तारगर्भं ग्रथितोऽपि निःशेषतः सिद्धान्तप्रतिपादनेन क्वचिद्भाष्यवार्तिकक्रन्मतयोर्लाघवगौरवविचारोट्टङ्कनात्, क्वचिच्च "अत्रेदमवधेयं" "वस्तुतस्तु" इत्यादिना भाष्यवार्तिकादितः स्फुटमनवगम्यमानविषयाणामाञ्जस्येन बोधनाच्च स्वतन्त्रतया प्रकरणग्रन्थतां भजते।

स चायमध्यायत्रयमात्रमुपलब्धश्चौखम्भा-संस्कृत-ग्रन्थमालातः १५८८ पृष्ठेषु मुद्रितः, अष्टाध्यायात्मकः संपूर्णो ग्रन्थ उपलभ्येत चेत् कियान् विशालः स्यादिति, सुधीभिरूहनीयम्।

**न्याये—**

( २ ) **दीधितिप्रवेशः**—गङ्गेशोपाध्यायकृतस्य श्रीतत्त्वचिन्तामणौ रघुनाथशिरोमणिकृता अनुमानभागे दीधित्यभिधा या टीका तस्यां सारल्येन पिपठिषूणां प्रवेशः

---

त्मकं परपुराणां, हेत्वाभासत्वकरं स्वोपरोधोपायानां, छलहेतुः पाखण्डानां, जातिबाधकसंग्रहरूपमासुरसर्गस्य, निग्रहस्थानं विपक्षाणां चाभूत्"।

"मतान्तरानुगाभिरिव द्रव्याभिन्नगुणाभिमानिनीभिः, पृथिवीभिरिव द्रव्यान्तरसंसर्गाधीनस्नेहाभिः, जातिभिरिवैकवृत्तित्वरहिताभिः"।

"......जातिनिराकरणं सौगतसिद्धान्तेषु, ईश्वरद्वेषो मीमांसकेषु, सुहृन्निपातनं पाणिनीयेषु, अदृश्यत्वमाकाशादिषु, मिथ्योक्तिरव्ययेषु, सविकल्पकत्वं ज्ञानविशेषेषु, सत्प्रतिपक्षत्वं बाधितत्वं च हेत्वाभासविशेषेषु, दुःखद्वेषाधर्मवार्ता गुणनिरूपणेषु, आत्मसत्त्वप्रतिपादनं सदागमेषु, द्रव्याभावो बुद्धदर्शनेषु, प्रकृत्यन्यथाभावो निष्क्रियचेतनपुरुषत्वं च साङ्ख्येषु, न्यूनमनस्कत्वं वैशेषिकेषु, स्वतः प्रामाण्याभावो नैयायिकेषु, उपनयत्यागपक्षो जैमिनीयानुमानेषु, निरालम्बनता नास्तिकमतविशेषे, उपसर्गयोगो धातुषु, भागहीनत्वं नित्यद्रव्येषु, परार्थहरणं समासादिवृत्तौ, दोषोदयो वैद्यकेषु, बहुवचनादर्शनं तद्राजप्रत्ययेषु, पदाभावो भसंज्ञायां, विकलत्वमङ्गभेदे, अशक्तत्वमुपसर्गेषु, अङ्गहारो नाट्यकलासु, विकरणान्वयो धातुषु......जनेषु। (पृष्ठ ४६–६३)

स्यादिति कृत्वा रचितोऽयं ग्रन्थः, इममाधृत्य सुलभमध्ययनं दीधितेः। नायमद्यावधि प्रकाशितः।

( ३ ) तर्ककुतूहलम्—एर्तीह भवतां करस्थमेव, एतद्विवेचनमग्रे क्रियते।

अलङ्कारशास्त्रे—

( ४ ) अलङ्कारकौस्तुभः—भामहादारभ्यालङ्कारिकाणां या परम्परा प्रसृता तस्यामन्तिमोऽयं ग्रन्थकारः, नव्यन्यायशैलीमनुसृत्य प्रत्यलङ्कारमनेनात्र ग्रन्थे सर्वेषामेव पूर्ववर्तिलाक्षणिकानामालोचनं कृतं, यत्र यस्य मतमुचितं प्रतिभाति तत्र तस्य समर्थनं यत्र च नानुकूल्यं प्रतीयते तत्र तस्यैव प्रौढं खण्डनमत्र दृश्यते, न कस्मिन्नपि विशेषेणास्याग्रहः तथापि काव्यप्रकाशकृतो मम्मटस्य प्रायो मतमूरीकरोति, रसरीतिगुण-दोषालङ्काराः सर्व एवात्र विवेचिताः, टीकाप्यस्य ग्रन्थकृता स्वयमेव रचिता किन्तु रूपकालङ्कारपर्यन्तमेवोपलभ्यते।

स चायं ग्रन्थो बम्बईस्थनिर्णयसागरमुद्रणालयतः काव्यमालायां मुद्रितः।

( ५ ) अलङ्कारमुक्तावली—अलङ्कारकौस्तुभस्था एव कारिकाः स्वल्पविवृतिसहिता अत्र दत्ताः, प्रारम्भ एव ग्रन्थकृता स्वाभिप्रायः प्रकटितो यत् अलङ्कारकौस्तुभाध्ययने काठिन्यमनुभवतां शिशूनां सुखबोधायेयं मुक्तावली क्रियत इति। इमामधीत्यालङ्कारकौस्तुभाध्ययने सारल्यं भवति।

( ६ ) अलङ्कारप्रदीपः—केवलमर्थालङ्कारनिरूपकोऽयं लघुकायो ग्रन्थः, अत्र सरलैः संक्षिप्तैः सूत्रभूतैर्वाक्यैरलङ्कारलक्षणानि तथा प्रतिपादितानि यथा सुकुमारमतयोऽपि क्लेशलेशं विनैवालङ्कारतत्त्वमवबुद्धयेयुः, उदाहरणेषु च स्वीयान्येव-पद्यानि स्थापितानि, गहनः शास्त्रीयो विचारो नात्र प्रचारितः।

( ७ ) रसचन्द्रिका—लघुकायेऽस्मिन् प्रबन्धे केवलं रसविषयकमेव विवेचनमस्ति, नायकादीनां परिष्कृतप्रायाणि लक्षणानि नवीनप्रायाणि चोदाहरणानि दत्तानि।
( ५, ६, ७ ) एते त्रयो ग्रन्थाः चौखम्बा—संस्कृतग्रन्थमालायां मुद्रिताः।

( ८ ) रसमञ्जरीटीका—भानुदत्तकृतायाः सुप्रसिद्धाया रसमञ्जर्याष्टीकेयं समञ्जसाख्या इतराभ्यो बहुसंख्यकटीकाभ्यो विस्तृता विलक्षणा च, नेयमद्यावधि मुद्रिता। केशवस्मृतिसंग्रहे, सरस्वतीभवनग्रन्थालये चास्या मातृके वर्तेते।

( ९ ) कवीन्द्रकर्णाभरणम्—इदं च विदग्धमुखमण्डनानुसारि ततोऽप्यधिकतरं चमत्कारकारीति विद्वद्भिरवश्यमवलोकनार्हम्, बम्बईस्थनिर्णयसागरमुद्रणालयतः प्रकाशितायाः काव्यमालाया अष्टमगुच्छके मुद्रितमिदम्।

काव्येषु—

(१०) मन्दारमञ्जरी—गद्यकाव्यकथेयमतीव रुचिरा लौकिक-शास्त्रीयव्यवहारवर्णनपरा कादम्बरीतोऽतिविलक्षणा वासवदत्तातोऽतिविचित्रा, इदं चास्या वैशिष्ट्यं यदत्र दार्शनिकाः पदार्था गहनतमा अपि प्रसङ्गसङ्गत्या सरलतया सरसतया च लौकिकपदार्थवर्णनप्रकारेण कथायामेवं सन्निवेशिता यथा तेऽनधीतदर्शनानामपि स्फुटं हृदयङ्गमा भवेयुरिति ।

अस्याश्च पूर्वभागः काशीस्थपर्वतीय-प्रकाशनमण्डलतो मुद्रितः, उत्तरार्धस्त्वमुद्रित एव ।

(११) नैषधीयचरितटीका—भावप्रदीपाख्येयं टीकातिविस्तृता पदार्थबोधिनी च, सरस्वतीभवनग्रन्थालयेऽस्याः मातृका वर्तते, अमुद्रितेयम् ।

(१२) आर्यासप्तशती—चतुःषष्ट्युत्तरसप्तशतसंख्यामितैरार्यापद्यैर्घटितेयम्, अत्र च अकारादिक्षकारपर्यन्तमाद्यक्षरक्रमेण व्रज्यारूपेण गुम्फनम्, नैतयनया गतार्थता गोवर्धनकृता आर्यासप्तशती, इदमपि चौखम्बा सं० ग्रन्थमालायां मुद्रिता ।

(१३,१४) काव्यतिलकं, काव्यरत्नं च—१०१,१०३ पद्यै रचितयोरनयोर्ग्रन्थयोर्मातृके सरस्वतीभवनग्रन्थालये विद्येते, अत्र च स्वरचितानामुत्तमपद्यानां संग्रहः ।

(१५) रोमावलीशतकम्—नाम्नैव गतार्थमिदं काव्यमालाया अष्टमगुच्छके मुद्रितम् ।

(१६,१७) वक्षोजशतकम्, होलिकाशतकं च—नाम्नैव गतार्थममुद्रितमिदं शतकद्वयम् ।

(१८) लक्ष्मीविलासः—लक्ष्मीस्तुतिरूपोऽयं ग्रन्थः शतश्लोकात्मकोऽमुद्रितः ।

(१९) षड्ऋतुवर्णनम्—नाम्नैव गतार्थममुद्रितं च ।

नाटके—

(२०) नवमालिका नाटिका—'मालवमयूर' संस्कृतपत्रिकायां क्रमशः प्रकाशितेयं नाटिका संभवतः ग्रन्थरूपेण उज्जयिनीतः प्राप्यते ।

(२१) शृङ्गारमञ्जरी-सट्टकम्—शौरसेनी-महाराष्ट्र्योः प्राकृतयोरुत्कृष्टकोटिकनिदर्शकमिदं सट्टकं ग्रन्थकृतो भाषायां कियानधिकार इति स्फुटं प्रकटीकरोति ।

धर्मशास्त्रे—

(२२) आशौचीयदशश्लोकीविवृतिः ।

तन्त्रशास्त्रे—

(२३) अभिधार्थचिन्तामणिः—तारासहस्रनामव्याख्यारूपः ।

(२१,२२,२३) एतत्त्रयममुद्रितं नास्मद्दृष्टिपथमुपगतम् ।

संक्षपेणैतन्निर्मितग्रन्थानामेष परिचयो दत्तः, तत्र तत्र विषये का चैतस्य विद्वद्धौरेयस्य पाण्डित्यप्रौढिरिति तु सुधियः स्वयं तानधीत्यावबोद्धुं शक्नुवन्ति ।

## तर्ककुतूहलम्

कस्यापि लौकिकस्यालौकिकस्य वा तत्त्वस्य सम्यगवबोधाय तर्कोऽपेक्ष्यते, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो…" इति श्रुतिरपि मननमाहात्म्यं ख्यापयति, मननं विना नात्मसाक्षात्कारः शक्यः, आत्मसाक्षात्कार एव दर्शनशास्त्रस्य चरमो लक्ष्यभूतः । बुद्धिबलेन वयं जगतः पदार्थानां, सूक्ष्मभावनानामचिन्त्यस्य परमतत्त्वस्यापि ज्ञानं कुर्महे, अस्मिंश्च कार्ये तर्कस्यातीव साहाय्यमपेक्ष्यते, सत्यस्य समर्थनायासत्यस्य खण्डनाय वा वयं प्रमाणानां साहाय्यं गृह्णीमहे किन्तु व्यवहारे तर्कं विना प्रमाणानां प्रामाण्यं साधयितुं न शक्नुमः । यद्यपि तर्कः स्वतन्त्ररूपेण नास्ति प्रमाणम्, केवलेन तर्केणैव कोऽपि विषयो निर्णेतुं न शक्यते, अत एव च "नैषा तर्केण मतिरापनेया[१]" "तर्काप्रतिष्ठानात्[२]" इत्यादिषु तर्कस्तिरस्कृतः । वाक्यपदीये[३] च तर्के निरन्तरपरिवर्तनस्य सर्वा एव संभावनाः परिगणितास्तथापि ध्रुवमेवैतत् यत्तर्कं विना न वयं कस्यापि सिद्धान्तस्य निर्णयस्य वा चूडां लप्स्यामहे । प्रमाणानां चरमसहायकस्तर्कः ।[४] अस्यैव तर्कस्य प्राधान्यमुपलक्ष्य जगतः पदार्थाः विशेषेण यस्मिन् शास्त्रे विवेचितास्तच्छास्त्रम् 'तर्कशास्त्रम्' 'न्यायशास्त्रम्' 'हेतुशास्त्रम्' 'आन्वीक्षिकी' 'प्रमाणशास्त्रम्' 'वादविद्या' 'वाकोवाक्यं' वेति विविधनामभिः प्राचीनैर्ग्रन्थकृद्भिरभिहितम्, अस्यैव तर्कशास्त्रस्य कुतूहलम् (=चमत्कारः) अत्र ग्रन्थे ग्रन्थकृता प्रदर्शित इति स्पष्टमुक्तम्—

अथ प्रतिविपश्चितामभिनिवेशमूलान् बहू–
नपोहितुमुपप्लवानखिलवस्तुसत्त्वस्थले ।
तिरोहितपरोहितस्थिति[५] करोति विश्वेश्वरो
वरोक्तिभिरकर्कशं किमपि तर्ककौतूहलम् ।।
(तर्क० १।३)

यतो ह्यत्र जीवात्मपरमात्मनोः परस्परं न कोऽपि संबन्धः, द्वावेव स्वस्वक्षेत्रे निरपेक्षौ, जीवात्मा स्वीयानादिकर्मवशाच्छरीरान्तरं प्रविशति, सर्व-

१. कठोपनिषत् १–२–९ । २. ब्रह्मसूत्रं २–१–११ । ३. वाक्यपदीयं १–३४ ।
४. प्रमाणानामनुग्राहकस्तर्कः ( न्यायभाष्यं १–१–१ ) ।
५. तिरोहिता परैः ऊहितानां स्थितिर्यस्मिन्निति तर्ककौतूहलस्य विशेषणमिदम् ।

दुःखविनिर्मुक्तौ च मुक्तो भवति, किन्तु मुक्तावस्थायामपि मनसा तस्य वियोगो नास्ति, अत इदं शास्त्रम् द्वैतपरकमभिधीयते ।

वेदान्तदर्शनं त्वद्वैतपरकम्। तत्र हि अविद्ययाऽनादिकालत आत्मनः स्वरूपं मेघेनेवाच्छादितमत एव जिज्ञासवे आत्मस्वरूपज्ञानं न भवति, वस्तुतस्तु आत्मा एक एवास्ति, अविद्याच्छन्नत्वे सति स एव जीव इत्याख्यो भूत्वा स्वं परमात्मनो भिन्नं मनुते, यदा तस्य तदविद्यावरणं विनश्यति तदा स स्वीयं परमात्मस्वरूपं ज्ञात्वाऽऽनन्दी भवति। इदं च स्वस्वरूपदर्शनं दर्पणे स्वमुखप्रतिबिम्बदर्शनमिव न भवति, यतो ह्यत्र द्रष्टृदृश्ययोर्मध्ये दर्पणस्थानीयं किमपि नास्ति, अतः द्रष्टा तावद् दृश्यं न द्रक्ष्यति यावत् तदपि द्रष्टैव न स्यात्। उभयोरपि द्रष्टृत्वे न कोऽपि भेदस्तयोरतः कः कं पश्येत्, यदाह याज्ञवल्क्यः—"विज्ञातारमरे केन विजानीयात्"। यदि तौ द्वौ न स्तस्तदा एकस्यापि भानं न भवेत्, यतो हि एकं द्वे इत्यादि तु सापेक्षे सङ्ख्ये। अनादिकालादाच्छन्नस्यावरणस्य विनाशे तस्य यदानन्दस्वरूपं भवति तदनिर्वचनीयमवाङ्मनसगोचरं वा, इयमेव संक्षेपेण द्वैताद्वैतयोः कथा।

तत्र द्वैतपरा नैयायिकादयोऽद्वैतपराणां वेदान्तिनां, ते चाद्वैतपरास्तेषां नैयायिकादीनां सिद्धान्तान् खण्डयन्तः स्वपक्षस्थापने धीवैभवं वाग्विलासं च दर्शयन्तः शतशो महत्त्वपूर्णान् ग्रन्थान् विरचयामासुः। तेषु भेदप्रकाशे शङ्करमिश्रेण खण्डनोद्धारे चाभिनववाचस्पतिना अन्यैश्चोद्भटनैयायिकैर्यत्रकुत्राप्यद्वैतखण्डनं कृतं तत् प्रायश उपर्युक्तस्यानिर्वचनीयतावादस्यैव। किन्त्वस्मिन् तर्ककुतूहलेऽनेन विद्वद्धौरेयेणाद्वैतवादिनां मूल एव कुठाराघातः कृतः। तद्यथा—वेदान्तशास्त्रं तच्छास्त्रं वर्तते यस्य उपनिषद एव प्रमाणानि, अस्य शास्त्रस्य त एव सिद्धान्ता मान्या भवन्ति येषां साधकान्युपनिषद्वाक्यानि, एतान्याधृत्यैव बादरायणमुनिर्ब्रह्मसूत्रं विरचयांचकार। तर्ककुतूहलकृता स्वकीयो ग्रन्थः परिच्छेदद्वये विभक्तः तत्र प्रथमपरिच्छेदेऽद्वैतस्य श्रुतिगम्यत्वं निराकृतम् प्रतिज्ञातं च प्रारम्भ एव—

मिथ्यात्वसाधकतयाभिमताः परैर्या
वाचः श्रुतिस्मृतिपुराणसमीर्यमाणाः।
प्रामाणिकं समभिधाय तदीयमर्थं
सर्वस्वमौपनिषदस्य निराकरोमि॥

( तर्ककुतूहलं १।४ )

अस्य सर्वथा नवीनो मौलिकः स्तुत्यर्हश्चायं प्रयासो यत् श्रुतिवाक्यानामद्वैतपराणां वेदान्तिभिः कृतस्यार्थस्य युक्तियुक्तं खण्डनं विधाय तेषामेव वाक्यानां नैयायिकदृष्ट्या द्वैतपरकोऽर्थोऽनेन प्रदर्शितः। अस्मिंश्च प्रयासेऽपूर्वं साफल्यमनेनावाप्तमिति सुधीभिरूहनीयमहो विलक्षणचमत्कारकारिपाण्डित्यमस्य। न केवलं द्वित्रिचतुर्णां पञ्चषां वा वाक्यानामपि तु यस्यां कस्यामप्युपनिषदि यत्र कुत्राप्यद्वैतपराणि वाक्यान्यासन् ततोऽन्विष्यान्विष्य विवेचितानि, एतावन्मात्रेणास्य सन्तोषो नाभवदतो ब्रह्मसूत्रे, गीतायां, स्मृत्यादिषु, पुराणेतिहासेषु च विकीर्णानामपि तादृशस्थलानां स्फुटमालोचनमनेन कृतम्। एतदालोचने प्रसङ्गादागतानां व्याकरणमीमांसादिविषयाणामपि विस्तरेण विवेचनं विहितम्। द्वितीये च परिच्छेदे प्रमाणान्तरेणाद्वैतसिद्धौ करिष्यमाणायां सर्वप्रमाणश्रेष्ठेन प्रत्यक्षेणैव विरोधः स्यादिति प्रतिपादयता मानान्तरसिद्धिरपि निराकृता तत्राप्युक्तं प्रारम्भ एव—

अध्यक्षादिविगानतः पदगतेर्मर्यादया च श्रुते—
रद्वैतावगमे ऽन्तरिक्षसुमनःसब्रह्मचारीकृते।
तच्छायामुपजीव्य लब्धपदतामासेदुषामद्वये
मानानां प्रमितिं प्रति प्रवणता तत्सौरभोरस्यभूत्॥ (तर्क० ७१२)

अद्वैतवेदान्ते यावन्तः प्रमुखा ग्रन्थकाराः सिद्धान्तप्रवर्तकाश्चासन् तेषां सर्वेषामेव ग्रन्थेभ्यस्तन्मतं यथावदुद्धृत्य तद्दृष्टिं सम्यक् प्रतिपाद्य सयुक्तिकं तत्खण्डनं च विधाय तत्र स्वमतमुपन्यस्तमनेन। तत्र भगवत्पादश्रीशङ्कराचार्यस्य, संक्षेपशारीरकप्रणेतुः सर्वज्ञात्ममुनेः, भामतीकर्तुः प्रथमवाचस्पतिमिश्रस्य, विवरणकारस्य प्रकाशात्मनः, ब्रह्मविद्याभरणकारस्याद्वैतानन्दस्य, तत्त्वदीपिकाकारस्य चित्सुखाचार्यस्य, कल्पतरुकारस्यामलानन्दस्य, तत्त्वदीपनकारस्याखण्डानन्दस्य, दृष्टिसृष्टिवादप्रचारकस्य प्रकाशानन्दस्य, अद्वैतसिद्ध्यादिविविधग्रन्थप्रणेतुः श्रीमधुसूदनसरस्वतीमहाभागस्य, खण्डनखण्डखाद्यकर्तुः श्रीहर्षस्य, अन्येषां च प्रायः सर्वेषामेवाद्वैतसिद्धान्तपरिपोषकाणां प्रमुखसिद्धान्तकाराणां सिद्धान्तान् सम्यक् प्रदर्श्य तेषां सयुक्तिकं च खण्डनं विधाय नैयायिकदृष्ट्या तत्समाहितम्। न कोऽपि सिद्धान्तकारोऽवशेषितः। यच्च स्वपक्षमुपस्थापितं तस्यापि गङ्गेशोपाध्याय-रघुनाथशिरोमणि-वाचस्पति-पक्षधर-शशधरमिश्रोदयनाचार्यप्रभृतीनां नैयायिकधुरन्धराणामुक्तिभिः परा पुष्टिः कृता,। यावतां ग्रन्थानां ग्रन्थकाराणां चोद्धरणान्यनेनात्रोट्टङ्कितानि तावतां नामापि स्मर्तुमस्माकमसुलभम्।

श्रुतीनां परोक्षार्थप्रातिकूल्यावधारणं यावदेव ग्रन्थोऽयमुपलब्धः, चतुर्विंशेंऽशे दृष्टिसृष्टिनिरासः प्रारब्धो ग्रन्थकृता किन्तु पंक्तिचतुष्टयमेव तस्यास्मत्संग्रहालयीयग्रन्थे सरस्वतीभवनस्थग्रन्थे च लिखितं वर्तते । अग्रे च पत्रमपि न पूरितं न च कश्चिद् विरामसूचकः संकेतो दत्तः, मन्ये कस्याश्चिदेकस्या एव मातृकायाः प्रतिलिपीकृते द्वे इमे पुस्तके । संप्रति यावदुपलब्धस्तावदेव ग्रन्थोऽयं प्रकाशीक्रियते प्रयासश्च क्रियतेऽस्माभिरग्रिमांशस्योपलब्धये, लब्धश्चेदग्रिमे संस्करणे तदंशोऽपि प्रकाशयिष्यते । मध्येऽप्युक्तं ग्रन्थकृता "एतत्तु दृष्टिसृष्टिनिरासे वक्ष्यामः" इति, एतेन प्रतीयते प्रकरणमिदमवश्यं रचितं स्यात्, इतोऽग्रेऽपि के के सिद्धान्ता निराकृता अद्वैतस्य इत्यपि न वक्तुं शक्नुमः ।

नैतदपिवक्तुं शक्नुमो वयं यदपूर्ण एवायं ग्रन्थः स्यादिति, यतो ह्येतदनन्तरम् सिद्धान्तसुधानिधे रचना ग्रन्थकृता विहिता, तत्र च बहुत्र तर्ककुतूहलस्य नामोल्लेखो दृश्यते ।

एतावन्महत्त्वमुपदधतोऽप्यस्य ग्रन्थस्याद्यावधि मुद्रणं नाभूदिति महदाश्चर्यस्य विषयः । अतो विश्वेश्वरकृतसमस्तग्रन्थानां प्रकाशनस्य निर्णयावसरे श्रीनित्यानन्दस्मारकसमितिसदस्यैः प्रथममस्यैव प्रकाशनं स्वीकृतम् । अस्य च ग्रन्थस्य प्रथम-द्वितीयपरिच्छेदयोः पृथक्-पृथङ् मातृकाद्वयं सरस्वतीभवन-ग्रन्थालयत उपलब्धम् । अपरा चैका मातृका एशियाटिकसोसाइटी--कलकत्तातः प्राप्ता किन्त्वपूर्णा । अस्यां च भूयानेव पाठभेदो दृष्टिपथमुपायातः, स च टिप्पण्यां ख. संज्ञया व्यवहृतः । यद्यपि हस्तलेखस्याशुद्धिबहुलतया विषयस्यातीव जटिलतया चास्य संपादने काठिन्यमन्वभावयं तथापि—

मज्जत्करीन्द्रविपुलेऽम्बुनिधावगाधे
किं नैव चापलपराः शफराः स्फुरन्ति ॥

इत्युक्तिं स्मारं-स्मारं विदुषां साहाय्येन कथंचित्साहसमकरवम् । तत्र संपादने यैर्विद्वद्भिर्बहूपकृतोऽहं तेषु सरस्वतीभवनग्रन्थालयाध्यक्षवर्याणां न्यायाचार्य पं० श्रीविभूतिभूषणभट्टाचार्याणां ( संप्रति वाराणसेय-संस्कृत-विश्वविद्यालयस्य प्रस्तोतृमहोदयानां ) तथास्मदग्रजकल्पानां न्याय-साहित्याचार्य-पं० श्रीनन्दिनाथमिश्रमहोदयानां प्रत्यक्षरसाहाय्यं न लभेयं चेदेतद्ग्रन्थस्येदंरूपतायां संशीतिरेव स्यात् । तदनयोर्महानुभावयोरुपकृतिभरेणानतोऽहं

वाचामात्रेण कृतज्ञताज्ञापनं मदीयं धार्ष्ट्यमेवेति मन्ये। साङ्गवेदविद्यालयाध्यापक-होशमनेश्रीरामचन्द्रशास्त्रिभिः, गोयनकाविद्यालयीयविश्वनाथपुस्तकालयाध्यक्षैः पं०श्रीकृष्णपन्तमहोदयैश्च महत् साहाय्यमकारि तदर्थं मुहुर्मुहुर्धन्यवादानर्पये। श्रीनित्यानन्दस्मारकसमितेरध्यक्षाणां प्रो० गणेशदत्तशास्त्रिणां विषये किमत्र वक्तुं शक्यते यदेतेषां निर्देश एवास्माकं पथप्रदर्शकः। प्राचीनप्रणालीपरिलिखितानां पाण्डुलिपीनां प्रथममुद्रणावसरे कियत्काठिन्यमनुभूयते (विशेषतो यत्रैकमेवादर्शपुस्तकमुपलभ्येत) इति तु न तिरोहितं विदुषाम्। यथामति संशोधने प्रयतितेऽपि मदीयव्यस्ततावशादज्ञानाद् दृष्टिदोषाद्वा यदि काश्चन विप्रतिपत्तयो दृष्टिगोचराः स्युस्ताः शोधनीया इति साञ्जलिबन्धं याचे कृपाधनान् विपश्चितः। भूयो निवेदये च—

यदत्र सौष्ठवं ग्रन्थे प्रणेतुस्तद्धि मन्यताम्।
यदत्रासौष्ठवं किञ्चित्तन्ममास्तीति मृष्यताम्॥ इति

वैशाखशुक्ल–पूर्णिमायां
सं० २०२८ वै०

विदुषां वशंवदः
**जनार्दनशास्त्री पाण्डेयः।**

———

# विषय-सूची

## प्रथमपरिच्छेदे



## द्वितीयपरिच्छेदे

———

॥ श्रीगणेशाय नमः ॥

# तर्ककुतूहलम्

## प्रथमोऽंशः

फलमाकलयत्यपव्यलीकं विषये स्याद्विषमेऽपि यः प्रयासः ।
[1]पणितश्चरणारविन्दरेणुस्त्रसरेणुर्यदि सर्वमङ्गलायाः ॥ १ ॥

लोकस्वान्तघनान्धकारपटलप्रध्वंसदीपाङ्कुरा[2]
विद्याकल्पलताप्रतानजनने बीजं निजासङ्गिनाम् ।
मध्येमौलि ममासतां सुविमला मालायमानाश्चिरं
श्रीलक्ष्मीधरविद्वदङ्घ्रिनलिनोदीताः परागाणवः ॥ २ ॥

अथ प्रतिविपश्चितामभिनिवेशमूलान् बहू-
नपोहितुमुपप्लवानखिलवस्तुसत्त्वस्थले ।
तिरोहितपरोहितस्थिति करोति विश्वेश्वरो
वरोक्तिभिरकर्कशं किमपि तर्ककौतूहलम् ॥ ३ ॥

मिथ्यात्वसाधकतयाभिमताः परैर्या
वाचः श्रुतिस्मृतिपुराणसमीर्यमाणाः ।
प्रामाणिकं समभिधाय तदीयमर्थं
सर्वस्वमौपनिषदस्य निराकरोमि ॥ ४ ॥

सामर्थ्यमल्पमपि कल्पयितुं न नाम
यद्यप्यवद्यमपि न प्रगुणं गुणं वा ।
अस्मादृशस्य तदपि प्रतिपद्य कंचित्
सद्यः श्रमोऽद्य नयितायम[3]मोघभावम् ॥ ५ ॥

---

१. पतितः—क ।   २. ध्वंसप्रदीपाङ्कुराः—क ।
३. मम—ख । पञ्चमपद्यस्यान्तिमः पाद इत्थं प्रतिभाति—
नात्र श्रमोऽयमयिता मम मोघभावम् ।

तत्राद्ये श्रुतिगम्यत्वमद्वैतस्य निरस्यते ।
परिच्छेदान्तरे मानमन्यच्च न्यक्करिष्यते ॥ ६ ॥

तत्रादौ प्रतिवादिनामभिमतस्यार्थस्य तत्तत्पदै-
र्लभ्यत्वेऽपि परप्रमाणविहतेस्तात्पर्यमुत्सार्यते[1] ।
तादृक्षार्थसमर्पणं प्रति पुनस्तेषां पदानां मना-
गप्यास्ते न समर्थतेति परतः कारिष्यते पल्लवः ॥ ७ ॥

इह खलु प्रपञ्चस्य सत्त्वमासंसारं सर्वानुभवसिद्धं दुरपह्नवम् । यदनुरोधादौपनिषदैरपि व्यावहारिकं सत्त्वमुपगम्यते । परन्तु—

स्वपरप्रतिघाततो विभङ्गं कलयद्भिर्व्यवहारभूमिकायाम् ।
परमार्थदशेति काचिदन्या विगतन्यायमुपेयतेऽद्वयस्य ॥

नन्वनेकप्रमाणसिद्धमद्वैतं कथमन्याय्यमिति चेन्न; परीक्षितप्रामाण्यकप्रत्यक्षविरोधेनाद्वैतश्रुतीनां तावद्यथाश्रुतार्थे तात्पर्यस्य दुर्वचत्वात् । तथा चोक्तं चतुर्थे **तात्पर्यटीकायाम्**—"प्रत्यक्षविरोधादनुपपन्नार्थाः श्रुतयः 'एकमेवाद्वितीयम्' इत्याद्याः प्रथमां वृत्तिमुल्लङ्घ्य जघन्यामालम्बन्ते" इति । **लीलावत्यामपि**—"अद्वैतश्रुतेश्च द्वैतावभासिप्रत्यक्षविरोधाद् ग्रावप्लवन[2]श्रुतिवदुपचरितार्थत्वात्" इति । अत एव "आदित्यो यूपः" इत्यादौ गौण्यैवार्थसिद्धिः । तथा च प्रथमचतुर्थे **जैमिनिना**[3] सूत्रितम्—"सत्सिद्धि-जाति-सारूप्य-प्रशंसा-भूम-लिङ्ग-समवाया इति गुणाश्रयाः" इति । यजमानः प्रस्तरः, अग्निर्वै ब्राह्मणः, आदित्यो यूपः, अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः, सृष्टीरुपदधाति, प्राणभृत उपदधाति, इति षण्णामुदाहरणानि । आद्यचतुष्टये प्रत्यक्षविरोधात् कुशमुष्टिरूपप्रस्तरस्य यजमानाभेदानुपपत्त्या यजमानपदस्य स्रुग्धारणादिरूपयजमानकार्यकारित्वे "मुखादग्निरजायत", "ब्राह्मणोऽस्य मुखमासीद्" इति च श्रुतौ सृष्टिकालेऽग्निब्राह्मणयोरेकस्थलादुत्पत्तिश्रवणादग्निपदस्याग्निजननस्थलोत्पन्नत्वे, घृताञ्जनजन्यदीप्तिमत्त्वेन[4] यूपपदस्यादित्यसदृशतेजस्वित्वे, गवाश्वभिन्नानामजादीनां पशुत्वस्य प्रत्यक्षत्वात्[5] "पशुना यजेत" इत्यादौ पशुकार्ये विधानाच्चापशुपदस्य गवाश्वगतप्राशस्त्याभावे तात्पर्यमित्यादेस्तत्राभिहितत्वात् ।

१. °विहिते—क । २. °प्लावन°—ख । ३. भगवज्जै°—ख ।
४. अतः परम्—आदित्यपदस्य आदित्यसदृशस्थलोत्पन्नत्वे—इत्यधिकः पाठः—ख ।
५. प्रत्यक्षसिद्धत्वात्—ख ।

स्यादेतत्; निश्चितप्रामाण्यकमेव प्रत्यक्षं प्रबलम्, प्रकृते सत्त्वप्रत्यक्षं तु न तथा, आगमादिविरोधात्। न च प्रत्यक्षाप्रामाण्यसिद्धौ तद्विरोधाभावादागमादेः प्रामाण्यम्, तत्प्रामाण्ये च तद्विरोधात्प्रत्यक्षस्याप्रामाण्यमित्योन्याश्रयः, प्रत्यक्षप्रामाण्ये तु नैवम्, [1]तस्यानपेक्षत्वादिति वाच्यम्[1]; चन्द्रतारकादीनामल्पपरिमाणप्रत्यक्षस्याप्यागमाद्विरोधादप्रामाण्य[2]दर्शनात्प्रत्यक्षेणापि स्वप्रामाण्यसिद्धयर्थमन्याविरोधस्यावश्यमपेक्षणीयत्वात्। एवं चान्योन्याश्रयस्य तुल्यत्वात्परस्परविरोधेन द्वयोरप्रामाण्यसन्देहे [3]श्रुतावाप्तप्रणीतत्वादिना भ्रमाजनकत्व[3]व्याप्तेः वेदे प्रामाण्यनिश्चये जाते तेन स्वतःसम्भावितदोषस्य प्रत्यक्षस्य बाधान्नान्योन्याश्रय इति चेत्, मैवम्; बाधितार्थेऽपि वेदतात्पर्यस्वीकारेऽतिप्रसङ्गस्य दर्शितत्वात्। निर्दोषत्वं त्वस्मदभिमतार्थपरत्वेनाप्युपपन्नमित्यग्रे निरूपयिष्यमाणत्वात्। न चोभयोरन्यापेक्षत्वसाम्यं प्रत्यक्षेण स्वप्रामाण्यसिद्धयर्थमेवान्याविरोधस्यापेक्षणात्, चन्द्रतारकादेः शास्त्रतो महत्त्वं जानतामपि न्यूनपरिमाणप्रत्यक्षस्य जायमानत्वात्, शाब्देन तु स्वोत्पत्त्यर्थमेव तदपेक्षणात्, भेदप्रत्यक्षे यजमानप्रस्तरादीनामभेदान्वयबोधानुदयादिति वैषम्यात्। एवं स्थिते विरोधिनि प्रत्यक्षे सत्यद्वैतवाक्येभ्यः शाब्दधीरेव दुर्लभा, कुतस्तत्[4]प्रामाण्यनिश्चयस्यावसरः। सति हि धर्मिणि धर्मचिन्ते[5]ति न्यायात्।

न च प्रत्यक्षविरोधाननुसन्धानदशायां भवत्येव तच्छाब्दमिति वाच्यम्; तस्याकिञ्चित्करत्वात्। यदा यस्य बाधधीर्नास्ति तदातनं तस्य बोधमादाय तत्र शास्त्रतात्पर्यस्य व्यवस्थापयितु[6]मशक्यत्वाद् अतिप्रसङ्गाद् बाधधीतदभावकालयोः शास्त्रार्थभेदप्रसङ्गाच्च[7]पूर्वजातस्यापि बोधस्य विचारदशायामवैदिकत्वव्यवस्थापनात्।

स्यादेतत्; एवं सति चन्द्रादिमहत्त्वशाब्दबोधो[8]ऽपि न स्यात्, प्रत्यक्षबाधितत्वात्, जातोऽपि वा पश्चादप्रमात्वेन व्यवस्थाप्येतेति चेत्, न; तथाहि—

प्रत्यक्षविषयार्थस्य विरहप्रतिपादकम्।
तदसंवादि यन्मानं तन्मानं नार्हति ध्रुवम्॥

---

१–१. नास्ति–ख। २. अप्रमाणत्व–ख। ३–३. सन्देहे भ्रमाजनकत्वेन–ख। ४. तत्र–ख। ५. °वर्त्तेति–ख। ६. व्याख्यातु–ख। ७. °प्रसङ्गात्–क। ८. महत्वबोधो–ख।

प्रत्यक्षग्राह्यार्थविपरीतप्रतिपादकं प्रत्यक्षसंवादहीनं च प्रमाणं प्रत्यक्षापेक्षया दुर्बलमिति हि वस्तुस्थितिः। धर्माधर्मादिप्रतिपादकशास्त्रस्यातीन्द्रियविषयकानुमानादेश्च प्रत्यक्षसंवादित्वाभावादप्रामाण्यवारणाय आद्यं विशेषणम्, भ्रमात्मकप्रत्यक्षविपरीतार्थप्रतिपादकस्य पीतत्वाभावव्याप्यशङ्खत्वादिमत्ताज्ञानादेस्तद्वारणाय द्वितीयम्, तस्य दोषाभावकालीनप्रत्यक्षसंवादित्वमेव। वस्तुतस्त्वतीन्द्रियविषयकशाब्दादेः प्रत्यक्षविषयाभावतद्व्याप्यान्यतरानवगाहितया आद्येनैव तद्वारणम्। तदसंवादीत्यस्य तु प्रत्यक्षग्राह्यस्यापि यद्विषयस्य प्रत्यक्षाविषयत्वं प्रत्यक्षजातीये कुत्रचित् क्लृप्तदोषेण व्यवस्थापयितुमशक्यं तदित्यर्थः। चन्द्रादिमहत्त्वस्य तु प्रत्यक्षाविषयत्वं दूरस्थवृक्षपरिमाणविशेषप्रत्यक्षप्रतिबन्धकत्वेन क्लृप्तदोषत्वेन दूरत्वेन व्यवस्थापयितुं शक्यत एवेति न दोषः।

यत्तु प्रत्यक्षस्याप्यनुमानशब्दाभ्यां बाधो दृश्यते—इदं रजतमिति प्रत्यक्षस्यानुमानाप्तवाक्याभ्याम्, नभो नीलमित्यस्य नीरूपत्वग्राहकानुमानेन, गौरोऽहमहमिहैवास्मि सदने जानान इत्यनयोश्चन्द्रप्रादेशिकत्वप्रत्यक्षस्य चानुमानागमाभ्याम्, पीतः शङ्खः गुडस्तिक्तः इत्यादेश्चानुमानाप्तवचनाभ्यां[1] बाधदर्शनादिति। तदेतेन[2] निरस्तम्, प्रत्यक्षान्तरसंवादेनैव तत्र बाधप्रामाण्यव्यवस्थापनात्। विशेषदर्शने सति रजतत्वाभावप्रत्यक्षाद् भ्रमपूर्वमपि तत्सत्त्वाद्वा[3]।

यदप्युक्तं रजताभेदज्ञानस्य शरीराभेदज्ञानस्य च प्रतिबन्धकत्वसामर्थ्ये युक्त्या विघटिते सत्येव तत्र रजतभेदादिप्रत्ययो[4] न त्वन्यथा। न चाभेदप्रत्यक्षे सति[5] युक्तिरपि नोत्पद्यत इति वाच्यम्; रजतत्वाभावव्याप्यकालपृष्ठत्वादिमत्ताज्ञानरूपाया युक्तेः प्रत्यक्षग्राह्याभावव्याप्यावगाहित्वेऽपि साक्षात्तद्ग्राह्याभावानवगाहितया प्रत्यक्षस्य तदविरोधित्वात्। पश्चात्तदभावव्याप्यवद्विशेष्यक[6]तत्प्रकारकत्वेन हेतुना तत्र भ्रमत्वानुमितावप्रामाण्यज्ञानाभाव[7]वैशिष्ट्यस्याभेदज्ञाने विघटनात्प्रतिबन्धकाभावेन पश्चादेव रजतभेदादिप्रत्ययोदयादिति। तन्नास्माकं प्रतिकूलम्, नहि वयं मानान्तरेण प्रत्यक्षबाध एव नास्तीति ब्रूमः, किन्तु यदंशे प्रत्यक्षस्य मानान्तरेण

१. वाक्याभ्यां—ख। २. तदेतन्निरस्तम्—ख। ३. सत्त्वाच्च—ख।
४. रजतभेदप्रत्यक्षं—ख। ५. नास्ति—ख। ६. व्याप्यतद्वद्विशे°—ख।
७. भावे—ख।

बाधस्तदंशस्य संप्रतिपन्नप्रत्यक्षान्तरविषयत्वनियममेव। प्रत्यक्षजातीये दोषत्वं यस्य क्लृप्तं तन्निर्वाह्य तत्प्रत्यक्षाविषयत्वमिति यावत्। तेन किञ्चिद्भ्रमविशेषस्य[१] जन्यप्रत्यक्षप्रमित्यनुदयेऽपि न क्षतिः। तच्च बाध्यप्रत्यक्षस्य तदविषयकत्वं[२] यत्र संमतदोषेण निर्वाहयितुं शक्यं तत्रैव नान्यत्रेति। बाधो हि अप्रामाण्यग्रहाभावविशिष्टभ्रमत्वनिर्णय एव, तत्र विशेषणांश उक्तरीत्यैव निर्वहति न त्वन्यथा, अन्यथा सकलव्यवहारोच्छेदापत्तेः। भ्रमात्मकविशेषदर्शनेनापि प्रमाया बाधदर्शनेन बाधमात्रस्याकिञ्चित्करत्वात्। तस्माद्यदि भ्रमत्वनिर्णयमात्रं युक्तिमात्रेणापि भवतीति ब्रूषे, तदा ओमिति ब्रूमः[३]। न तु तावता त्वदिष्टसिद्धिः। यदि तूक्तविशेषणविशिष्टम्, तत्तु प्रत्यक्षविरुद्धमानान्तरप्रतिपाद्यार्थस्य प्रत्यक्षाविषयत्वसम्पादकसम्प्रतिपन्नदोषव्यतिरेकेण ब्रह्मणापि दुःसाध्यमिति। गौरोऽहमित्यत्रापि मम शरीरमिति प्रत्यक्षसत्त्वात्, नभसि च सन्निधौ नैल्यप्रत्यक्षविरहात्। न च तत्र सन्निधानस्यैव दोषत्वकल्पनाशङ्का, आकाशस्यैकव्यक्तितया दूरत्वावच्छिन्नस्य नैल्यस्वीकारे समीपेऽपि तन्नीलव्यक्तेरेव रूपान्तरविरहस्यावश्यकत्वादवयवभेदाभावाच्च तथा वक्तुमशक्यत्वात्। वस्तुतो यावत्सन्निधाने द्रव्यान्तरस्य न दर्शनं यथा चक्षुर्लग्नकज्जलादेः, तदधिकदूरेऽप्याकाशे नैल्यचाक्षुषानुदयात्सन्निधिप्रतिबद्धप्रत्यक्षविषयताकरूपाश्रयद्रव्यप्रत्यक्षस्यापि तत्प्रतिबध्यत्वात्, रूपाविषयकद्रव्यचाक्षुषस्याऽप्रसिद्ध्या सन्निधौ केवलनभश्चाक्षुषस्य वक्तुमशक्यत्वात्। अहमिहैवास्मि[४] सदने जानान इत्यत्र तु ज्ञाने समवायेनात्मन इवावच्छेदकतया शरीरस्यापि हेतुत्वाज्ज्ञप्तावपि शरीरस्यावश्यमपेक्षितत्वाज्ज्ञाधातूत्तरशानच्प्रत्ययस्याऽवच्छेदकत्वरूपाश्रयत्वार्थकतया तदभिलप्यमानप्रत्यक्षस्यापि तादृशाश्रयत्वविषयकत्वमाश्रित्य शरीरविषयकत्वेनैवोपपत्त्या प्रमात्वेन न बाध्यत्वम्। न च शरीरस्याहमिति नोल्लेख इति **वाचस्पत्याद्युक्तं** शङ्क्यम्। तथापि शरीरावच्छिन्नसमवायेन ज्ञानाश्रयत्वमादायात्मविषयकस्यापि तस्य प्रमात्वानपायात्।

ननु[५] ज्ञानं प्रत्येव शरीरमवच्छेदकं न तु तत्समवायं प्रत्यपीति वाच्यम्; मानाभावात्। अत एव च शब्दस्येव शब्दसमवायस्यापि कर्णावच्छिन्नत्वमुक्तं सन्निकर्षवादे **मिश्रैः**।

---

१. °विशेष्यकस्य—क। २. विषयत्वं—ख। ३. प्रतिब्रूमः—ख। ४. एवास्मि—ख। ५. न च—ख।

यत्त्वात्मन आकाशवत्सर्वगतत्वेन[1] इहैवेति व्यवच्छेदस्याप्रामाणिकत्वादिति, तच्चिन्त्यम्; एतद्देशवर्त्तित्वस्यैव तत्राप्रामाणिकत्वात्। सर्वमूर्त्तसंयोगित्वमेव हि सर्वगतत्वं न तु सर्ववृत्तित्वम्। प्रत्युतैतदन्यत्र नास्मीति व्यवच्छेदांश एव प्रामाणिकः। इहेत्यनेनैतद्देशसंयुक्तत्वमेव विषयीक्रियत इति चेत्; तथाप्युक्तरीत्या दोषाभावात्। शरीरावच्छिन्नज्ञानसमवायविशिष्टस्यान्यदेशसंयुक्तत्वे मानाभावात्। वस्तुत आत्मप्रत्यक्षे अहमिति देहावच्छिन्न आत्मैव भासतेऽतो नानुपपत्तिः। आगमेन केवलात्मन एव व्यापकत्वबोधात्। अत एव स्वप्रकाशत्वनिरासप्रस्तावे जिज्ञासानपेक्षप्रत्यक्षविषयत्वाभावे हेतौ प्रत्यक्षपदं सर्वांशप्रमारूपप्रत्यक्षपरं सर्वमेवाधुनिकमात्मप्रत्यक्ष [2]देहसंभेदावगाहितया भ्रमरूपमेवेति **मिश्रव्याख्यातृ**भिरुक्तम्। अत एवाहंप्रत्ययमात्रेणात्मतत्त्वावगमाभावोऽपि मन्मते न व्याहतः, आगमाभावे उक्तप्रत्ययस्य देहप्रादेशिकत्वमात्रविषयकत्वानवधारणात्। नहि शिखी नष्ट इत्यादिवाक्यमप्रमाणं[3], देहसंभेदानवगाहिकादाचित्कमहं सुखीत्यादितत्त्वज्ञानमित्यादि**बौद्धाधिकारदीधिति**पर्यालोचनेऽपि प्रकृतज्ञानस्य[4] देहसंभेदावगाहित्वध्रौव्यात्। किञ्च आगमबोध्यस्य सर्वमूर्त्तसंयोगित्वादिरूपव्यापकत्वस्य योग्यायोग्यार्थघटितत्वेन प्रत्यक्षविषयत्वमेव नास्ति; [5]तत्रागमप्रवृत्तावपि कथं पूर्वोक्तनियमे व्यभिचारः[5]। नहि सर्वमूर्त्तसंयोगित्वं ज्ञानान्तरस्यापि विषयः, सामग्रीविरहात्, येन तदुपनीतमपि कथञ्चिन्मानसविषयः स्यात्। न चोक्तरूपविभुत्वस्य प्रत्यक्षाभावेऽपि महत्त्वं जातिविशेषप्रकारकप्रत्यक्षविषय एवेति वाच्यम्; तावन्मात्रस्योक्तप्रतीतावविरोधित्वात्, आत्ममहत्त्वस्य प्रत्यक्षानङ्गीकाराच्च। अत एव आत्मन एकत्वं[6] च न मनोयोग्यमिति **टीकाकृतः**।

आत्मा व्यापक इति लौकिकशब्दस्तु स्वप्रामाण्यार्थमागममेवोपजीवतीति तत्समानकक्ष एव। एवमेतादृशानुमानमपि तथेति। तथा च मानान्तरबोध्यप्रत्यक्षविरुद्धार्थस्य क्लृप्तदोषानुपपाद्य[7]तत्रागमप्रवृत्तावपि कथं पूर्वोक्तनियमे व्यभिचारः[7]? तदविषयताकप्रत्यक्षयोग्यतायामेव मानान्तरस्याप्रवृत्तिरिति तदर्थात्। अत्र च विशेष्यस्याप्यभावात्, पीतः शङ्खस्तिक्तो गुड इत्यत्रापि न परोक्षज्ञानमात्रं बाधकम्, तत्प्रत्यक्षे परोक्षज्ञानरूपबाधस्य कारणीभूताभाव-

---

१. यन्मन आकाशवत्संत्तं—ख। २. शरीर°—ख। ३. वाक्यप्रमाणं—ख।
४. नास्ति—ख। ५–५. नास्ति—क। ६. परिमाणं—ख। ७–७. नास्ति—ख।

प्रतियोगित्वरूपबाधकस्याभावात् । शङ्खो न पीत इत्यादिपरोक्षज्ञानसत्त्वेऽपि पित्तादिवशात् शङ्खगुडादौ पीतत्वतिक्तत्वादिभ्रमस्य जायमानत्वेन तादृश-बाधाभावस्य तदहेतुत्वात्, भ्रमत्वेन गृह्यमाणत्वरूपबाधस्य च प्रमां प्रत्यपि संभवेनाकिञ्चित्करत्वस्योक्तत्वाद्, भ्रमांशेऽप्रामाण्यग्रहाभावस्य चोक्तरीत्या कालान्तरीयप्रत्यक्षसंवादाधीनत्वात् ।

यत्तु सर्वदा पित्तदूषितनेत्रस्य परोक्षज्ञानादेव तद्बाध इति, तन्न; मानाभावात् । तस्यापि[1] पुरुषान्तरप्रत्यक्ष[2]संवादेनैव प्रामाण्यव्यवस्थानाच्च । अत्र मिथ्यात्वस्य पुरुषान्तरप्रत्यक्षविषयत्वासिद्धेः, परोक्षज्ञानग्राह्यपीतत्वाभावस्यान्यत्र क्लृप्तदोषत्वेन पित्तेन तत्प्रत्यक्षविषयत्वाभावस्य साधयितुं शक्यतया पूर्वोक्तनियमे व्यभिचारप्रसवितविरहाच्च । एतेन दूरस्थिताल्पपरिमाणज्ञानं दूरत्वदोषनिबन्धनमप्रमा, शैलाग्रस्थविटपिह्रस्वपरिमाणज्ञानवदिदमपि तथेति युक्तिवशादेव च चन्द्रप्रादेशिकत्वप्रत्यक्षस्य बाध इत्युक्त्वा युक्त्या प्रत्यक्षस्य न बाध इति वचनं व्याहतम् । एवं पीतः शङ्ख इति प्रत्यक्षेऽपि प्राचीनं पीतत्वाभावप्रत्यक्षं न बाधकम्, तस्य तदानीमभावात् । न च तत्स्मृतिरनुभवाद्[3]दुर्बलत्वात्, किन्तु युक्त्युत्थान एव तस्योपयोगः बाधिका तु युक्तिरेवेत्यपि परास्तम् । उक्तनियमे व्यभिचारानवकाशात्, प्रत्यक्षानुपजीवकयुक्त्या तद्बाधस्य तावताप्यनानयनादिति[4] दिक् ।

एतेन नहि चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि प्रागेव दुष्टकरणत्वनिश्चयः, नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणज्ञानाविश्वासप्रसङ्गात्, किन्त्वागमादिना बाधानन्तरमेव । तद्वत्प्रकृतेऽपि मिथ्यात्वसिद्ध्यनन्तरमेवाविद्यारूपदोषनिश्चय इति परास्तम् ।

प्रतियन्ति हि शास्त्रकथानभिज्ञा अपि प्रत्यक्षविषयीभूतमहत्त्वादधिकमपि महत्त्वं चन्द्रादौ दूरत्ववशान्न भासत इति; क्रोशयोजनादिपरिमाणविशेष एव परं तत्र शास्त्रगम्यः, नहि प्रत्यक्षेऽपि घटादौ हस्तवितस्त्यादिपरिच्छेदस्तन्मात्रसाध्यः । तत्र प्रकारान्तरेणापि तत्परिच्छेदो भवति, चन्द्रादौ पुनः शास्त्रेणैवेति विशेषः । नैकट्यस्येत्यादिकं तु नाशङ्क्यम्, सर्वावच्छेदेनावयविचक्षुस्संयोगे सति तदनवकाशात् । अविद्याया अद्वैतप्रत्यक्षं प्रति दोषत्वकल्पनं तु दूरापास्तम्, प्रतिबध्यप्रतिबन्धकयोः द्वयोरप्यप्रसिद्धेः । दूरत्वं हि प्रत्यक्षजातीये दोषत्वेन क्लृप्तम्, अविद्या तु न कुत्रापि, तस्या एवेदानीं प्रमाणपथानवतारात् ।

---

१. तच्छाब्दस्यापि–ख । २. 'प्रत्यक्ष' इति नास्ति–ख ।
३. °रनुभवा–ख । ४. °नाच्चेति–ख ।

यत्तु "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृताः", "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः", "आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा", "विविदिषन्ति यज्ञेनेति" "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" "जनैः स्वकर्मस्तिमितात्म-निश्चयैः" इति श्रुतिस्मृतिपुराणप्रसिद्धमेवाविद्यारागपापविशेषाणां दोषत्व-मिति। तन्न; मिथ्यात्वप्रत्यक्षनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि-त्वस्य ततोऽप्यसिद्धेः। आत्मतत्त्वज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य त्वस्माकमपीष्टत्वादित्यलं तावत्। तस्माद्यत्रान्यत्र क्लृप्तदोषेण प्रत्यक्षस्य प्रमाणान्तरगम्यार्थानवगाहित्वं कल्पयितुं शक्यम्, तत्रैव तत्प्रमाण-प्रसरो न तु तत्प्रमाणवत्त्वेनैव दोषं कल्पयित्वा प्रत्यक्षबाधः। एतेन मिथ्या-त्वानुमानस्यापि प्रत्यक्षे बाधकत्वमपास्तम्। शशशृङ्गादावपि तथा वक्तुं शक्यत्वात्। पशुत्वादिलिङ्गकानुमानादेस्तत्रापि सम्भवात्। व्यभिचारस्थले च त्वदुक्तरीत्या तेनैव प्रत्यक्षबाधापत्तेः। एतेनाऽयोग्यशृङ्गादि[1]साधने प्रत्यक्षबाधस्यासम्भवेन तत्र व्याप्तिग्राहकतर्केष्वाभासत्वस्य त्वयापि[2] वक्तव्य-त्वेनोभयसमाधेयत्वान्न दोषः, नहि तर्काभाससध्रीचीनमनुमानं प्रमाणमिति केनाप्यभ्युपेयते इति परास्तम्।

मन्मते शृङ्गस्य योग्यव्यक्तिसम्बन्धिनो योग्यत्वनियमात्। तत्र शृङ्गस्यायोग्यत्वे मानाभावात्, त्वां प्रत्युक्तरीत्योक्तदोषोद्भावस्य निर्दोष-त्वात्, पशुत्वादेरयोग्यशृङ्गासाधकत्वात्। एवं च शशादौ शृङ्गस्य प्रत्यक्ष-बाधेन पशुत्वशृङ्गयोर्व्याप्तिरेवापसार्यते। न चायोग्यशृङ्गकल्पनासम्भवः, तदयोग्यताकल्पकदोषस्यान्यत्राक्लृप्तत्वात्, दूरत्वाद्यभावेऽपि तदप्रत्यक्षाच्च। त्वद्रीत्यान्यत्राक्लृप्तत्वेऽपि शशादि[3]पुरस्कारेणैव शृङ्गप्रत्यक्षविरोधिदोषस्य कस्यचित्कल्पयितुं शक्यत्वात्। व्यभिचारग्रहाभावेन व्याप्तिग्रहे बाधका-भावान्मिथ्यात्वानुमानेऽप्यनुकूलतर्काभावाच्च। श्रुतेस्तदर्थतात्पर्यत्वासिद्धेः पल्लवस्य पुरस्तात् प्रकाशयिष्यमाणत्वात्। "आदित्यो यूपः" इत्यादावपि तदभेदप्रत्यक्षप्रतिबन्धकदोषकल्पनापत्तेश्च वेदतात्पर्यविषयत्वतदभावाभ्यां वैषम्यमिति चेन्न; तस्यैवेदानीं निरूप्यमाणत्वात्। यत्तु—

"उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥"

---

१. शृंगो हि—ख। २. तथापि—क। ३. शशादिषु—ख।

इतिषड्विधतात्पर्यग्राहकलिङ्गवत्त्वा[1]दद्वैतश्रुतेर्बलवत्त्वात्तद्विरुद्धविश्व-सत्त्वग्राहिप्रत्यक्षमप्रमाणम्, अत्रापि अज्ञातत्वमबाधितत्वं प्रयोजनवत्त्वञ्चेति त्रयमर्थनिष्ठं प्रामाण्यशरीरघटकम्। ज्ञाते बाधिते निष्फले च प्रमाणानां तात्पर्याभावात्। अबाधितागृहीतार्थज्ञानस्यैव प्रमात्वात्। ततश्च तात्पर्याभावव्याप्यस्वाभावविघटकत्वेनैषां तात्पर्योपयोगित्वं सिद्धम्। उपक्रमोपसंहारयोरेकनिष्ठत्वम्, अभ्यासोऽर्थवादश्चेति त्रयं तु शब्दनिष्ठमतिप्रसङ्गवारकम्। यत्र हि पूर्वोक्तलिङ्गत्रयं द्वयोरर्थयोरस्ति, अभ्यासादित्रयमध्येऽन्यतममात्रं त्वेकस्यैवार्थस्य, तत्राद्यत्रयेणा[2]भ्यासादिविरहिण्यप्यर्थे तात्पर्यं प्रसक्तावेदं वाक्यं यद्येतदर्थतात्पर्यकं न स्यात्तदैतदर्थेऽभ्यासादि युक्तं न स्यादित्यापाद्य व्यतिरेकनिश्चयं विधाय तस्य तात्पर्यनिश्चयोपयोगः। अस्ति च **छान्दोग्योपनिषदि** उद्दालकस्य श्वेतकेतूपदेशे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युपक्रमस्य "ऐतदात्म्यमिदं सर्वं तत्सत्यम्" इत्युपसंहारस्य चाऽद्वैतनिष्ठत्वादैकरूप्यम्। अभ्यासोऽनन्यार्थपुनःश्रवणं यथोक्तवाक्यस्य नवकृत्वः प्रोक्तिः, अर्थवादो "येनाश्रुतं श्रुतं भवति" इत्यादि प्राशस्त्यबोधकवाक्यम्। तच्चाऽद्वैतब्रह्मप्राप्तिसाधने श्रवणादौ प्रवर्तकत्वादद्वैतब्रह्मतात्पर्यग्राहकम्। इदञ्च त्रयमुपनिषन्मात्रसाधारणम्। अद्वैतब्रह्मतत्त्वस्य मानान्तरासिद्धतया चाज्ञातत्वरूपमपूर्वत्वं "तमादेशमप्राक्ष" इति वाक्ये आदेशोऽज्ञातत्वेनोपदेशार्ह इत्यर्थात् तज्ज्ञानस्य परमपुरुषार्थहेतुतया च फलवत्त्वमिति। तच्चिन्त्यम्; उपक्रमादीनां यादृशार्थबोधकत्वं संभवति तदर्थे तात्पर्यमित्यत्र विवादाभावात्। नह्युपक्रमादौ मानान्तराविरोधो नापेक्षणीय इति वेदवाक्यमस्ति।

नन्वेवं तस्यैव तात्पर्यनिर्णायकत्वे उक्तलिङ्गवैयर्थ्यमिति चेत्; तर्हि शशशृङ्गादिविषयकोपक्रमादिलिङ्गसहकृतवाक्यान्तरस्यापि प्रामाण्यमस्तु। न च तत्र मानान्तराविरोधोऽप्यपेक्ष्य इति वाच्यम्; अत्रैव तदनपेक्षायां बीजानिरुक्तेः। तस्माद्यत्रार्थद्वयं मानान्तराविरोधादिना सम्भावितातात्पर्यविषयताकं तत्रोपक्रमोपसंहारयोरन्यतरार्थतात्पर्यनिर्णायकत्वम्। किञ्च अबाधितत्वरूपा उपपत्तिरत्रैव षड्विधलिङ्गमध्ये निविष्टा, तत्कथं प्रमाणान्तरबाधितेऽपि तात्पर्यमित्युच्यते, अद्वैतस्याबाधितत्वप्रसिद्धौ तत्र तात्पर्यग्रहः, तत्सिद्धौ च प्रत्यक्षप्रामाण्यद्वाराबाधितत्वसिद्धिरित्यन्योन्या-

१. °वत्त्वादेः—ख। २. °त्रयेऽभ्या°—ख।

श्रयात्। एतेन प्रकारान्तरेणाबाधितस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य यथागमेन बाधः, तथा प्रकारान्तरेणाबाधितस्य सन् घट इत्यादिप्रत्यक्षस्य मिथ्यात्वबोधकागमेन बाध इति भावि[1]बाधनिश्चयात् प्रत्यक्षमप्रमाणमित्यपि परास्तम्; वैषम्यस्य दर्शितत्वात्। प्रत्यक्षेण मिथ्यात्वागमस्यैव मुखनिरोधात्, प्रत्यक्षं प्रति तद्बाधकत्वस्य दूरापास्तत्वात्।

यत्पुनरत्र परैः प्रकारान्तरेण प्रत्यक्षप्राबल्यमाशङ्क्य निराकृतं तेन नास्माकं क्षतिः, उक्तरीत्या प्राबल्यस्य निर्दोषत्वात्। तथाप्यवान्तरचमत्कारार्थं किञ्चितदुपदर्श्यते। तथाहि औष्ण्यप्रत्यक्षेण वह्निशैत्यानुमितिप्रतिबान्धदर्शनात् प्रत्यक्षस्य जात्या प्राबल्यमिति न शङ्क्यम्, तत्रोपजीव्यत्वेनैव तद्बाधसम्भवात्। न च वह्नेः चक्षुषापि ग्रहात्त्वाचप्रत्यक्षं[2]मुपजीव्यम्, अत एव "न च खलु चक्षुषाग्निधर्मिकबुद्धौ तत्रानुष्णत्वानुमानमनुमितेः प्रागनन्तरं वा स्पार्शनौष्ण्यप्रत्यक्षेण न बाध्यते" इत्युद्धारकृद्भिरुक्तमिति वाच्यम्; साध्यप्रसिद्धेस्त्वगधीनत्वाच्छैत्यस्य चक्षुरयोग्यत्वादित्युक्तम्। तन्न; अनुद्भूतशैत्यमादायानुमितेरबाध्यत्वापत्तेः, रसनेन्द्रियादौ तत्प्रसिद्धेः, तत्र त्वचोऽप्यनपेक्षितत्वात्। महत्त्वोद्भूतरूपसमानाधिकरणस्पर्शस्योद्भूतत्वनियमात्तस्य च त्वाचप्रत्यक्षत्वनियमात्। वह्निर्यदि शीतस्पर्शवान् स्यात्तदा तत्त्वेनोपलभ्येतेत्यापादनसम्भवेन योग्यानुपलब्ध्यैव तत्र शैत्यानुमितिबाध इति चेत्तर्हि किमुपजीव्यत्वोद्भावनेन, अस्मदुक्तार्थ एव पर्य्यवसानात्। नाप्युपजीव्यत्वेनैव तत्र बाधसम्भवः; यस्य पुरुषस्य शैत्यज्ञानं शाब्दमेव, तदपि वा जातं तत्रौष्ण्यस्पार्शनेन शैत्यानुमितेन बाधापत्तेः। उभयविधशैत्यज्ञानसत्त्वे स्पार्शनमेव तदनुमित्युपजीव्यं न तु शाब्द[3]मपीति विनिगन्तुमशक्यत्वात्। शाब्दादिरूपसाध्यप्रसिद्धेनाप्यनुमित्युपयोगित्वोपगमात्। तदेतदुक्तं **खण्डनोद्धारकृद्भिः** "न ह्युपजीव्यत्वमेव बाधकतायां तन्त्रम्, ईदृश्या अपि ज्वालाबुद्धेरबाधकत्वात्प्रत्युत बाध्यत्वात् तस्मादनन्यथासिद्धिरेव तत्रोपयुज्यते, सा च प्रस्तुतेऽपि तुल्यैव" इति। अत एव **न्यायभास्करकारैः** उक्तं "प्रत्यक्षानुमानोपस्थितौ प्रत्यक्षस्यानन्यथासिद्ध्यनवधारणेऽपि स्वार्थपरिच्छेदकत्वान्न सत्प्रतिपक्षता, विषयाव्यवस्थितिस्तु प्रामाण्यग्राहकानुमानप्रतिरोधात्तत्सन्देहसमाहृतात्सन्देहात्। तदवधारणे तु किं वराकमनुमानं तदन्यथासिद्धेरप्रतीक्षणात्। अनुमानं तु प्रत्यक्षादेर्विरोधिनोऽन्यथासिद्धिमुपजीव्यैव स्वार्थप्रत्यायकमिति विशेषात्।"

१. भवति—क। २. न त्वाचप्रत्यक्षस्य—ख। ३. शाब्दादिक°—ख।

न चैवं ज्वालैकत्वग्राहिप्रत्यक्षविरोधात् परिमाणभेदलिङ्गभेदानुमानानुत्पत्तिरेव दूरे बाधकत्वमिति वाच्यम्; तत्रापि सादृश्यादप्यभेदप्रत्ययोत्पत्तिरिति प्रत्यक्षमुखपिण्डमुपजीव्यैवानुमानप्रवृत्तेरिति। यदप्यनुमानाद्यगृहीतरेखोपरेखादिग्राहित्वेन प्रत्यक्षस्य प्राबल्यमाशङ्कचोक्तं प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्यापत्तेरिति, तदपि न, [1]धर्मादेरपीश्वरप्रत्यक्षगृहीतत्वात्[1]।

यत्तु शाब्दत्वादिजातिविशिष्टागृहीतविशेषोऽप्रसिद्धः, केनचित्पुरुषेण तदादिशब्दैर्बुद्धिविशेषविषयत्वादिरूपेण विशेषमात्रे गृहीतसङ्केतैः स्वरूपत एव सर्वविशेषाणां ग्रहणसम्भवादिति, तच्चिन्त्यम्; एकपुरुषस्य स्वरूपतो यावद्विशेषोपस्थितेरसम्भवात् [2]प्रमाविभाजकयदुपाध्यवच्छिन्नागृहीतग्राहिणी या प्रमा सा तज्जातीयप्रमापेक्षया प्रबलेत्यस्य विवक्षितत्वात्। साक्षात्कारत्वस्य प्रमाणफलाविभाजकत्वाभावेऽपि प्रमाविभाजकत्वात्[2]। स्ववृत्त्यसाधारणधर्मांशे निरवच्छिन्नप्रकारताकोपस्थितेश्चागृहीतपदबोध्याभावप्रतियोगिविषयत्वविशेषणज्ञानपदार्थत्वेन विवक्षितत्वात्। यद्यप्यनुमानाद्यनिवर्त्तितदिङ्मोहादिनिवर्त्तकत्वेन प्रत्यक्षप्राबल्यमाशङ्कचोक्तम्, अस्य वैधर्म्यमात्रत्वेऽपि प्राबल्यं प्रति न प्रयोजकत्वम्; अन्यथा यद्यदनिवर्त्तितभ्रमनिर्वर्त्तकं तत्ततः प्रबलमित्युक्तो काठिन्यविशेषादिविषयकवंशस्पार्शनस्यापि मण्डूकवसाञ्जनरूपचक्षुर्दोषसत्त्वे चाक्षुषवंशोरगभ्रमानिवर्त्तकत्वात्, त्वगपेक्षयाऽपि चक्षुषः प्राबल्यं स्यात्। ततश्च चित्रनिम्नोन्नतत्वज्ञानस्य तद्विरोधित्वाच्च ज्ञानाद्बाधो न स्यात्। एवं प्रत्यक्षानिवर्त्तितस्य यागादावधर्मत्वभ्रमस्य श्रुत्या निवृत्तिदर्शनात्, साऽपि प्रत्यक्षात् प्रबला स्यात्।

न च निवर्त्तके प्रत्यक्षत्वं[3] विशेषणं, शाब्दत्वस्यापि विनिगमका[4]भावेन दुर्वारत्वादिति, तदपि न; यद्यदनिवर्त्तित[5]यद्विषयविषयकभ्रमानिर्वर्त्तकम्, तत्ततः प्रबलमिति वाच्यत्वात्। चाक्षुषवंशोरगभ्रमस्य त्वगनिवर्त्तितत्वेऽपि तस्य त्वग्विषयविषयकत्वाभावात्। न हि मण्डूकवसाञ्जननिबन्धनत्वाच[6]वंशोरगभ्रमः सम्भवति। तदुक्तं **मणिकृता**—"मण्डूकवसाञ्जनं नयन एव दोषो न त्वचि" इति। दोषान्तरनिबन्धनस्तु[7] चाक्षुषवंशोरगभ्रमः काठिन्यविशेषादिविषयकवंशस्पार्शनेन निवर्त्तत एव। एवं च न द्वितीयोऽ-

---

१—१. नास्ति—ख। २—२. नास्ति—ख। ३. प्रत्यक्षं—ख।
४. गमकत्वा°—ख। ५. निर्वर्तितविषयं—ख। ६. त्वग्—क।
७. दोषान्तरपरिवर्तितस्तु—ख।

प्यतिप्रसङ्गः, अधर्मस्य प्रत्यक्षविषयत्वाभावात्। न चेश्वरप्रत्यक्षमादायातिप्रसङ्गः, फलरूपस्यैव प्रत्यक्षस्यात्र विवक्षितत्वात्। भ्रमसमानाधिकरणस्यैव प्रत्यक्षस्यावश्यं वाच्यत्वात्।

यत्तु तत्प्रत्यक्षत्वजातेर्युष्मन्मते[1]ऽलीकत्वादिति, तन्न, प्रमाणषाड्विध्यस्य[2]वेदान्तिभिरप्यभ्युपगमात्, प्रमाविभाजकोपाधिरूपस्य प्रत्यक्षत्वरूपस्य कस्यचिद् धर्मस्य तैरवश्यं मन्तव्यत्वात्, तत्त्वावेदकत्वरूपप्रामाण्यसदसद्भावस्येदानीमनुपयुक्तत्वात्। इदं च तान् प्रति सर्वत्र वक्तव्यम्—

यद्वस्तु सर्वव्यवहारसिद्धं तवापि तत्सम्प्रतिपन्नमेव।
अतात्त्विकत्वप्रतिपादनेऽस्य परन्तु बन्ध्यो भवतः प्रयासः॥

प्रत्यक्षं जात्यैव प्रबलमिति प्रवादस्याऽप्युक्तार्थ एव तात्पर्यम्। एतेन जात्या[3] प्राबल्यमित्यस्य प्रत्यक्षत्वेनैव प्राबल्यमित्यर्थः। स च दुष्ट एवेत्यपास्तम्।

प्रत्यक्षमनुमानञ्च शास्त्रं च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥
प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्॥

इति **स्मृताव**पि हि वेदत्वमात्रेण प्राबल्यमिति नार्थः, अतिप्रसङ्गस्य स्पष्टत्वात्। "क्व च प्रत्यक्षतः प्राप्तमनुमानागमबाधितम्" इत्यस्याप्युक्तमेव तात्पर्यम्। एतेनागमापेक्षया प्रत्यक्षे श्रद्धालुत्वं **चार्वाक**सख्यमात्रविजृम्भितमित्यप्यपास्तम्। बाधितेऽप्यद्वैते श्रद्धा **शून्यवादि**सख्यविजृम्भितमिति प्रतिवन्दिसम्भवात्।

यत्तु सर्वशून्यतावादोऽपि हि शून्यवादः; स चास्माकं नास्ति, अधिष्ठानसत्यत्वोपगमात्। तदुक्तं **खण्डने**—"सौगतब्रह्मवादिनोऽयं विशेषः यदादिमः सर्वमनिर्वाच्यं व्यनक्ति[4] इतरस्त्वात्मान्यदिति"; तच्चिन्त्यम्; अस्माकमपि प्रत्यक्षमात्रप्रामाण्यानभ्युपगमेन चार्वाकसख्योक्तेरसंगतत्वात्। उक्तविशेषोऽप्यनुपपन्नः, शून्यवादिभिरप्यधिष्ठानसत्यत्वोपगमात्। उक्तं हि—"अथातो ब्रह्मजिज्ञासा" इति सूत्रे **वाचस्पतिमिश्रैः**—"वस्तुमात्रस्य सत्यत्वाभावे निरधिष्ठानस्याऽनृतस्याप्यनुपपत्त्या व्यवहारविरोधापत्तेः। शून्यवादेऽपि शून्यताया एव सत्यत्वात्" इति। **न्यायवार्त्तिकतात्पर्यटीकाया-**

१. रस्मन्मते—ख। २. षाड्गुण्यस्य—ख। ३. तात्पर्या॰—क।
४. वक्ति—ख।

मपि तैरुक्तं शून्यवादसिद्धान्तमुपसंहरद्भिः—"तस्माद्भावानां शून्यतैव पारमार्थिकी, कल्पनया त्ववस्तुसत्या सन्त इव भासन्ते" इति। अत एव—

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोकसंवृतिसत्यं च सत्यं च परमार्थतः॥"

इति **बौद्धोक्तिः** संगच्छते। शून्यतान्यस्य पारमार्थिकत्वे तेषामपसिद्धान्तात्, तस्याः पारमार्थिकत्वाभावे च पारमार्थिकसत्यत्वाश्रयोक्तिव्याघातात्। यदपि **बौद्धाधिकारे** शून्यतायाः परतः सिद्धावनवस्थादिदोषमुक्त्वा "स्वतः-सिद्धश्चेद्; आयातोऽसि मार्गेण, स्वतःसिद्धतया तदनुभवरूपं शून्यत्वादेव न तस्य कालावच्छेद इति नित्यमत एव न देशावच्छेद इति व्यापकम्" इत्यादिना वेदान्तिमतप्रसक्त्या शून्यवादत्वहानिरुक्ता। अधिष्ठानमात्रसत्य-तायां शून्यवादस्य मन्मताविशेषः स्यादिति। तदपि न; तस्याचार्यैरापादित-त्वेऽपि तन्मतत्वाभावात्। यद्युक्त्या परमतं दूष्यते तस्यास्तदीयत्वनियमा-भावात्। तन्मते शून्यत्वं सत्यम्; त्वन्मते तु ब्रह्मेति विशेषाच्च[१]।

यत्तु साक्षिणो बाध्यत्वे बाध्यत्वं निःसाक्षिकं स्यादिति, तन्न; साक्षी हि त्वन्मतेऽपि बाध्य एव, अज्ञानवृत्त्युपहितचैतन्यस्य साक्षित्वात्। उक्तञ्चा-विद्यालक्षणे **अद्वैतसिद्धौ** "केवलचिन्मात्रं न साक्षि किन्त्वविद्यावृत्त्युपहितम्, तथा चास्थिराविद्यावृत्त्युपहितस्य साक्षिणोऽप्यस्थिरत्वेनेत्यादि"। अविद्यो-पहितसाक्षित्वपक्षेऽपि अविद्याया अपि ब्रह्मज्ञानोच्छेद्यत्वाभ्युपगमेन साक्षिणो बाध्यत्वावश्यकत्वात्। न च अज्ञानोपहितस्य साक्षित्वेऽप्यज्ञानं न साक्षिकोटौ प्रविशति जडत्वात्, किन्तु साक्ष्यकोटावेवेति वाच्यम्; तथापि तादृशरूपेण मिथ्यात्वतादवस्थ्यात्[२] अबाध्यं च शुद्धं ब्रह्म न साक्षीति दिक्।

यत्तु क्व वा प्रत्यक्षत इत्यस्य परीक्षितप्रामाण्यकप्रत्यक्षपरत्वमेवेति; तत्र वदन्ति—सन् घट इत्यादेरपि फलपर्यन्तं परीक्षितत्वादिति। यत्तु स्वाप्न-प्रियासंगम[३]विज्ञानादेः फलपर्यन्तं परीक्षितत्वेऽपि दुर्बलत्वमिति, तन्न; बाधकाभावस्यापि विवक्षितत्वात्। न च पाश्चात्यबाधादिकमत्रापि तुल्यमिति वाच्यम्; बाधस्यैव खण्ड्यमानत्वात् तद्दशायामेव बाधसत्त्वस्योद्भावयितु-मशक्यत्वात्।

प्रकृतमनुसरामः, प्रथमप्रवृत्तत्वादपि प्रत्यक्षं प्रबलम्। स चायं न्यायः **पूर्वमीमांसायां तृतीये** प्रसिद्धः। तथाहि—"अग्नेर्ऋग्वेदो वायोर्यजुर्वेद

१. विशेषः—क। २. मिथ्यात्वावश्यकत्वात्—क। ३. संगमादेः—ख।

आदित्यात्सामवेदः" इत्युपक्रम्य ज्योतिष्टोमे श्रूयते "तस्मादुच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्नेति" तत्र ऋगादिपदार्थोद्देशेन विहिते उच्चैष्ट्वादौ किम् ऋगादिपदमुख्यार्थो मन्त्रविशेष एवोद्देश्यम्, उत ऋग्वेदादिविहितकर्माङ्ग-मन्त्रमात्रमिति संशयः। तत्र विधिस्थऋगादिपदमुख्यार्थत्वानुरोधेनार्थ-वादस्य ऋग्वेदादिपदानाम् ऋगादिमात्रे लक्षणा। न च विनिगमकाभावः, गुणानुरोधेन प्रधाने लक्षणानौचित्यादिति पूर्वपक्षः।

सिद्धान्तस्तु ऋग्वेदादेरुद्देश्यत्वविधेयत्वान्यतरप्रकारेणापि वाक्यार्थाप्रवेशे श्रुतेरप्यनुपपत्तेः, प्रधानस्यापि विधिवाक्यस्य ऋगादिपदानां वेदलक्षकत्वं विना निर्वाहाभावात्। अङ्गगुणविरोधन्यायानवतारात्। एकवाक्यत्वाभावेनापच्छेदन्यायस्याप्यप्रवृत्तेः, विधेश्च पूर्वमनुत्पन्नस्य पूर्वोत्पन्नेषु[1] लक्षणारूपोपमर्दसामर्थ्याभावात्। विधिवाक्यान्तर्गतानामृगादिपदानाम-प्युद्देश्यसमर्पकत्वेन लक्षणाया अदोषत्वाच्च। प्रथमोपस्थितवेदादिपदानुरोधेन ऋगादिपदानां तत्तद्वेदविहितकर्माङ्गमन्त्रमात्रपरत्वमिति। तदुक्तम्—

"असंजातविरोधित्वादर्थवादो यथाश्रुतः।
आस्थेयस्तद्विरुद्धस्य विध्युद्देश्यस्य लक्षणा॥"

तद्वदत्रापि असंजातविरोधित्वेन प्रत्यक्षप्रामाण्यम्; श्रुतेस्तु तदविरोधे-नान्यथैव व्याख्या युक्ता।

यत्तु तत्रैकवाक्यस्थपरस्परसापेक्षपदत्वेनोभयोस्साम्यात्तथा, अत्र तु गृहीतप्रमाणभावश्रुत्यपेक्षया भ्रमविलक्षणत्वेनानिश्चितस्य प्रत्यक्षस्य न्यूनबलत्वान्नेति[2]। तदसत्; प्रत्यक्षविरोधेन श्रुतेस्तदर्थे तात्पर्यं नेति विचार-दशायां श्रुतेर्गृहीतप्रमाणभावेति विशेषणासिद्धेः। तदर्थे गृहीतप्रामाण्य-कत्वं हि तद्बलवत्त्वे प्रयोजकम्, तच्च नास्तीत्युक्तत्वात्। अत एव शब्दखण्डे **मिश्रव्याख्यातृभि**रुक्तम्—"न हि वेदार्थत्वेनैवाबाधितत्वनिश्चयः। ग्रावाणः प्लवन्ते इत्यादौ व्यभिचाराद् इति।" अत एव "तस्माद् धूम एवाग्ने-र्दिवा ददृशे नार्चिरर्चिरेवाग्नेर्नक्तं ददृशे न धूमः" इत्यस्य दृश्यविरोधा-दप्रामाण्यमिति पूर्वपक्षे "दूरभूयस्त्वाद्" इति **जैमिनीय**सिद्धान्तसूत्रम्। अस्यार्थः—दृशिरत्र गौणी, दूरभूयस्त्वं च गुणः। तथा च दूरस्थस्य यद्भूय-स्त्वेन दर्शनं तद्दृशिना लक्षयित्वा नञा तद्विषयत्वाभावो अग्न्यादौ बोध्यते,

१. पूर्वोत्पन्नस्य—ख। २. च्चेति—ख।

आदित्यस्तुत्यर्थम्। दिवा हि दूरस्थैर्भूयस्त्वेन धूम एव दृश्यते नार्चिः। नक्तं च तैर्भूयस्त्वेनार्चिरेव दृश्यते न धूम इति। तथा च "सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति" इति मिश्रलिङ्गकमन्त्रविधेः शेषः। तस्माद्दिवाग्निरादित्यं गतो रात्रावादित्यस्तमिति वाक्यं तस्याप्युपपादकम्, धूम एवेत्यादिकं उभयोर्देवतयोरेकत्र सम्बन्धादुभयदैवत्यहोमस्तुतिः। यद्वा केवललिङ्गकमन्त्रविधिमध्य[1]पठितमप्युक्तवाक्यम् "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति" इति केवललिङ्गकमन्त्रविधे[2]रेव शेषः। मिश्रलिङ्गकमन्त्रविध्यपेक्षितस्य "उभाभ्यां सायं हूयते उभाभ्यां प्रातर्न देवताभ्यः समदं दधाति" इति समवेतार्थकार्थवादान्तरस्य श्रूयमाणत्वात्। यस्माद्दिवाग्नेरदर्शनादादित्यान्तर्गतिस्तस्मादादित्यस्यैव ज्योतिष्ट्वम्, एवं रात्रावप्यग्नेः। अतः केवलदैवत्यावेव युक्ताविति तत्प्राशस्त्यसिद्धिरिति। एवञ्च "यजमानः प्रस्तरो यजमान एककपालः" इत्यत्र प्रस्तरैककपालयोरचेतनतया स्वातन्त्र्येण यागकर्तृत्वासम्भवेऽपि यागप्रयोगवर्त्तिस्वव्यापारं प्रति स्थाल्यादिवत्कर्त्तृत्वसम्भवादवयवयोगेन यजमानपदं प्रस्तरैककपालयोर्नामिधेयं सोमादिपदवद् रूढत्वात्, प्रयोजनं तु "स्रुवं यजमानोऽन्वारभते" इत्यादौ प्रस्तरैककपालयोरपि ग्रहणसिद्धिरित्येकः पूर्वपक्षः। अन्यस्तु स्वव्यापारे आश्रयत्वरूपकर्तृत्वस्योक्तरीत्या सम्भवेऽपि कर्तृगामिक्रियाफलविहितात्मनेपदसञ्ज्ञकशानच्प्रत्ययान्तयजमानपदस्य स्वर्गादिफलानर्हात् तेन प्रस्तरादियोगानुपपत्त्या भिन्नार्थकयोः प्रस्तरयजमानपदयोः सामानाधिकरण्यमात्रेण नामत्वमनुपपन्नम्। अतो यो होतासावध्वर्युरितिवदेकपदस्य कार्यलक्षणामङ्गीकृत्यापरपदार्थो विधीयते। तत्र च यजमानकार्ये त्यागादावचेतनस्य प्रस्तरादेः कर्तृत्वासम्भवात् प्रस्तरादिपद एव कार्यलक्षणया प्रस्तरकार्ये स्रुग्धारणादौ यजमानो विधीयते।

न च स्रुग्धारणादौ विनियुक्तस्य स्वपदार्थकरणविरोधः। अन्यत्र कथञ्चिदविरोधे वा "दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्य" इति वाक्यविहितदक्षिणदेशावस्थानरूपस्वप्रयोजनीभूतपदार्थकरणविरोधो दुष्परिहर एवेति वाच्यम्; दक्षिणदेशावस्थितस्यैव स्रुग्धारणादिसाधनत्वोपपत्तेः। वेदिदेशकत्वरूपप्रस्तरधर्मबाधेऽपि क्षतिविरहात्, प्रस्तरपक्षे

१. मध्ये—क। २. विधि—ख।

तत्सार्थक्याच्च। यद्वा सामान्यविहितं दक्षिणदेशावस्थानं स्रुग्धारणारूपप्रस्तरकार्यपूर्वोत्तरकालेऽनुष्ठेयम्।

न च तथाप्येककपालसाध्यत्यागस्य स्वात्मनि क्रियाविरोधाद् यजमानसाध्यत्वानुपपत्तेरेककपालकार्ये यजमानविधिः कथमिति वाच्यम्; गुरौ स्वात्मानमर्पयेत्सख्यमात्मनिवेदनमित्यादिवत् स्वशरीरे स्वात्माभिमाननिवृत्त्युपपत्तेः।

न चैवमपि[1] सूक्तवाकेन "प्रस्तरं परिहरति" इति प्रस्तरवत्कार्यापत्त्या यजमानस्य प्रहरणाख्यप्रतिपत्त्यापत्तेः "एककपालं सर्वहुतं करोति" इति एक कपालवत्सर्वहोमापत्तेश्च सर्वलोपप्रसङ्गः। अन्यार्थस्यैव यजमानस्य पुरोडाशकपालवत्स्रुग्धारणादौ विनियोगेऽपि तावन्मात्रेण कृतार्थत्वविरहात्प्रतिपत्त्यनर्हत्वादिति। सिद्धान्तस्तु, नैतदेवम्; दक्षिणदेशे उदङ्मुखासीने यजमानेऽध्वर्युणा स्रुचो धारयितुमशक्यत्वात्।

न चोक्तसंङ्कोचेन निर्वाहः, कल्प्यविधिना क्लृप्तविधिबाधानुपपत्तेः। एवमेककपालसाध्ये स्वत्वत्यागेऽपि न विधिः। स्वस्य स्वस्मिन् स्वत्वाभावेन निवृत्तेरशक्यत्वात्। किञ्च कार्यापत्त्या प्रहरणसर्वहोमापत्तिः। न चाकृतार्थत्वान्न प्रतिपत्तिः, [2]प्रयोगानुरोधेन सर्वयाजमानपदार्थकरणोत्तरकाले प्रतिपत्तेर्दुर्वारत्वात्। न चेष्टापत्तिः; क्रमनिबद्धसोमयागाद्युत्तरक्रतुतन्त्रलोपापत्तेः। प्रस्तरपक्षविषयकत्वकल्पने च कल्प्यविध्यनुरोधेन पाक्षिकत्वकल्पनानुपपत्तिः, तद्वरमर्थवादत्वमेवास्तु।

न च यजमानपदेन प्रस्तरादेः स्तुत्यनुपपत्तिः, गौण्या तत्सम्भवात्। तथाहि स्वशक्यगुणवत्ता गौणीवृत्तिः। गुणवत्ता च क्वचित्समानजातीयगुणवत्तासम्बन्धेन, क्वचित्त्वारोपेण साक्षादेव। आद्या यथा सिंहो देवदत्त इति सिंहपदशक्ये सिंहे विद्यमाना ये प्रसह्यकारित्वादिगुणास्तत्समानजातीया गुणा देवदत्ते सन्तीति सिंहपदं तत्र गौणम्। तथा च सिंहपदात् सिंहप्रतीतौ एकसम्बन्धिज्ञानेनेतरसम्बन्धिस्मरणन्यायेन तद्वृत्तिगुणानामुपस्थितौ उक्तन्यायेनैव तत्सजातीयगुणानामप्युपस्थितिस्ततस्तत्प्रकारको बोधः। अतश्च सिंहवृत्तिगुणसमानजातीयगुणप्रकारकदेवदत्तविशेष्यकज्ञानवत्त्वं सिंहपदशक्यवृत्तिगुणसजातीयगुणवत्ताज्ञानस्य कार्यतावच्छेदकम्। द्वितीया तु भेदधीसत्त्वेऽपि सिंहनिष्ठसिंहत्वक्रूरत्वादिकं देवदत्तादावारोप्य शब्दप्रयोगे तत्रानुभवसिद्धारोपस्य दुरपह्नवत्वात् साक्षादेव। स्वशक्यवृत्तिगुणवता गौणी।

१. चैवम्—ख। २. प्रयोजना—क।

सा च "सौन्दर्य्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः" इत्यादिकाव्ये रूपकस्थले प्रसिद्धा, वेदेऽपि "योषा वाव गौतमाग्निः" इत्यादौ। तस्माद्यजमानप्रस्तरयोर्यागजनकत्वसाम्येन यागाख्यकार्यनिरूपितत्वाख्यमेकं धर्ममादाय यजमानप्रस्तरधर्मनिष्ठयोः कारणत्वयोः साजात्याद् गौणी युक्तेति।

"अग्निर्वै ब्राह्मणः" इत्यादावपि पूर्ववद्विधित्वे प्राप्ते उच्यते—"आग्नेयमष्टाकपालं निर्वपेद् ब्राह्मणो ब्रह्मवर्चसकामः" इत्येतद्वाक्यशेषे "प्रजापतिरकामयत प्रजाः सृजेयमिति, स मुखतस्त्रिवृत्तं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनाम्" इत्येकप्रजापतिमुखोत्पन्नत्वमुक्तम्[1]। अतस्तदेव परम्परया गौणीवृत्तिनिमित्तम्। "आदित्यो यूपः यजमानो यूपः" इत्यादावपि पूर्ववदेव पूर्वपक्षः। यूपकार्यं पशुनियोजनादावनपक्रमसाधनत्वेनादित्यविधिरशक्यः। दारुमयादित्यप्रतिकृतिरूपे[2] विधौ गुणवृत्त्यापत्तिः। एवं तत्र यजमानविधिरप्यनुपपन्नः कार्यापत्त्योत्तरं वेदिप्राग्देशखननापत्तेः। यजमानपदार्थेन दक्षिणदेशावस्थानेन तद्बाधकल्पने च बाधस्यैव दोषत्वात्। अतो गुणवृत्त्या यूपस्तुतिरेवेयम्, सारूप्यञ्च तन्निमित्तम्। यद्यपि च सारूप्यं सादृश्यम्, तच्च तद्भिन्नत्वे सति तद्गततेजस्वित्वादिजातीयगुणवत्त्वम्। एवञ्च तत्सिद्धयादिस्थलेऽपि समानजातीयत्वाख्यसारूप्यस्य सत्त्वात्कथमुभयत्र निमित्तभेदः, तथापि यत्र सारूप्यसम्बन्धेन मुख्यनिष्ठा गुणा एव प्रकारत्वेन भान्ति तत्र तत्सिद्धयादीनि पञ्चनिमित्तानि। यत्र तु सादृश्यमपि प्रकारीभवति तत्र सारूप्यमिति केचित्। चक्षुर्ग्राह्यसारूप्यमत्र भाति, अन्यत्र तदन्यदित्यन्ये, उभयमपीदं चिन्त्यम्, यजमानकार्यकारित्वादेरपि चक्षुर्ग्राह्यत्वसंभवात्. संबन्धविधयादित्यतेजस्वितासदृशतेजस्विता प्रकारत्वेन भाति।

"अग्निर्वै ब्राह्मणः" इत्यादौ तु सादृश्यसम्बन्धेन अग्निजननसम्बन्धिजननं भातीत्यत्र विनिगमकाभावात्। अग्निजननस्थानजातत्वेनादित्यवृत्तितावच्छेदकवैलक्षण्यविशिष्टतेजस्वितात्वेन च भानादुभयत्रापि गुणघटकसादृश्यभाने मानाभावाच्च। अतोऽत्र भेदांशस्याधिकस्य भानम्, अत्रापि चाभेदांशस्य भानेऽपि जात्याद्यघटितगुणभानमिति विशेष इत्यपरे।

"अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा अयज्ञो वा एष यदसामा असत्रं वा एतद्यदछन्दोगम्" इत्यादौ अपश्वादिशब्दो नामधेयमिति

१. कथितम्—ख। २. °परत्वे—क।

सम्भवमात्रेणैकः पूर्वपक्षः। अजादीनां पशुशब्दवाच्यत्वादेवापशुसञ्ज्ञकत्वानुपपत्त्या घटादीनाञ्च प्रमाणान्तरेणैवापशुत्वसिद्धेः सञ्ज्ञाविधानवैयर्थ्यात्। समासान्तर्गतपशुशब्दस्य पशुकार्ये लक्षणया नञा गवाश्वनिभाना[1]मजादीनां पशुकार्ये पर्युदासः क्रियते। गवाश्वव्यतिरिक्ताजादिभेदेन[2] पशुकार्याग्नीषोमीयादि कुर्यादिति। अथवाजादीनां विहितत्वेन विकल्पस्यापरिहार्यत्वाद् दूरस्थाग्नीषोमीयादिवाक्यैकवाक्यताकल्पनक्लेशापत्तेश्च प्रतिषेध एवायमिति प्राप्ते, अजादीनां विहितत्वेन निषेधकल्पनमनुपपन्नम्। कल्प्येन निषेधेन क्लृप्तस्य विधेः पाक्षिकत्वापादनस्याशक्यत्वात्। नापि "अयज्ञिया वै माषाः" इतिवत्प्रतिनिधित्वेन प्राप्तं तन्निषेधकत्वम् "पुरस्तात्प्राचीनमश्वस्योपदधाति पश्चात्प्राचीनमृषभस्य" इति प्रकृतविध्येकवाक्यताभङ्गापत्तेः। अतो गवाश्वगतप्राशस्त्याभावस्यापशुशब्दार्थतया अजादीनां निन्दावगतिः। सा च नहि निन्दान्यायेन गवाश्वस्तुत्यर्था, अपशुशब्दस्य च पशुभिन्नघटादिवचनस्य स्वशक्यनिष्ठगवाश्वगतप्राशस्त्याभावरूपगुणयोगादजादौ गौणत्वम्, अतश्च प्रशंसाभावस्य गुणत्वे प्रतियोगिविधया[3] प्रशंसाया अपि प्रकारतायां प्रविष्टत्वान्निमित्तत्वोपपत्तिः। एवमयज्ञ इत्यादावप्यूह्यम्। एतच्चतुष्टयं च प्रत्यक्षविरोधात् श्रुतेरन्यथानयनं पूर्वपक्षे सिद्धान्ते च स्पष्टम्।

प्रसङ्गाद्भूमलिङ्गसमवायावप्युच्येते। "सृष्टीरुपदधाति" इत्यत्र सृष्टिपदं सृष्टिलिङ्गकमन्त्रमात्रपरं सृष्टचसृष्टिघटितसमुदायपरं वेति संशयः। सृष्टिलिङ्गकाश्च "तिसृभिरस्तुवत ब्रह्माऽसृज्यत" इत्यादयः सृजिधातुयुक्ताः। "एकयास्तुवत प्रजायनी ( ? ) अधीयन्त" इत्याद्यास्तु तद्धीनाः। तत्र न तावदयमर्थवादो विध्यन्तरैकवाक्यत्वविरहात्। येन गुणवृत्त्यापि नीयेत। किन्तु विधिराख्यातश्रुतेः विधेयं च नोपधानं, "इष्टकाभिरग्निं चिनुत" इति विध्यन्यथानुपपत्त्यैव स्वरूपेणेष्टकासम्बन्धित्वेन चोपधानस्य प्राप्तत्वात्। अनुपधीयमानाभिरिष्टकाभिश्चयनस्य कर्तुमशक्यत्वात्। किन्तूपधानानुवादेन सृष्टिपदार्थ एव विधेयः। यद्यपि "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" इति पाणिनीयस्य स्मृत्या सृष्टिलिङ्गकमन्त्रोपधेयेष्टकानां गम्यत्वे मतुपो लोपविधानात्, तत्सन्नियोगेन चकारेण यत्प्रत्ययविधानाच्च "ऋतव्या उपदधाति" इतिवत् सृष्ट्या इत्यापत्त्या नात्र तदर्थः सम्भवति, तथापि केवलसृष्टिपदेनैव सृष्टिमन्मन्त्रोपधेयेष्टकाविशेषलक्षणया तदर्थसिद्धिः।

१. भिन्नानां—ख। २. भिन्ने—ख। ३. प्रतियोगितया—ख।

अत इष्टकाविशेषाणां सृष्टिपदार्थत्वेऽपि काम्यमिष्टकानां सृष्टिमन्त्रैरुपधानमिति विशेषानवगमादिष्टकाविधिप्राप्तेष्टकासामान्यविधिनैव निर्विशेषणसामान्यमिति न्यायेनेष्टकाविशेषाणामप्युपधानप्राप्तेश्च विधिरयुक्तः। एवमिष्टकाविशेषोद्देशेनोपधानविधिरप्ययुक्तो विशेषानवगमात्। अतः परिशेषान्मन्त्रविधानमेव युक्तम्। सृष्टिपदस्य विधायकत्वे च तत्र गौण्या वृत्त्याऽसृष्टिमन्त्रप्रतिपादकत्वं विधौ गौण्यङ्गीकरणं चायुक्तम्।

न चैवमेकानुवाकगतमन्त्राणां मध्ये सृष्टिलिङ्गानमुक्तविधिना विनियोगेऽप्यसृष्टिलिङ्गकानामानर्थक्यापत्तिरिति वाच्यम्; प्रमाणाभावेन तेषां चयनाङ्गत्वाभावेऽपि वाचस्तोमादौ सर्वयजुर्मन्त्रादीनां विनियोगेन तत्र सार्थक्यादिति प्राप्तेः। उच्यते; उभयोः सम्भवत्प्राप्तिकत्वे भावार्थन्यायेन धात्वर्थस्यैवात्राक्षेपतः पूर्वप्रवृत्त्या विधेयत्वं युक्तम्।

न चाक्षेपादेव तत्प्राप्तिः चयनसाधनतानिर्वाहार्थमावान्तरव्यापारतयोपधानाक्षेपेऽपि तस्येष्टकासाध्यत्वमेव स्यात्, इष्टकासंस्कार[1]सिद्ध्यर्थं विधिसार्थक्यात्। तत्फलं तु प्रतिप्रधानं गुणवृत्तिरिति प्रतीष्टकमुपधानसिद्धिः। अन्यथा समुदितेष्टकोपधानं चयनभिन्नकर्तृकत्वञ्च स्यात्। अर्थाक्षिप्तस्य कृष्यादिवद्विध्यकल्पकत्वेन विधिगर्भाङ्गत्वायोगेनाङ्गप्रधानयोरेककर्तृकत्वयुक्तिमूलकस्यैककर्तृकत्वानुपपत्तेः। सन्धुक्षणादिव्यापारस्यान्यकर्तृकत्वेऽपि देवदत्तेन पाकः कृत इति व्यवहारेणावान्तरव्यापारस्य कार्येण समं समानकर्तृकत्वनियमाभावात्। सृष्टिपदेन च सन्निधिसहकृतलिङ्गबलेन प्राप्ता एव मन्त्रा अनूद्यन्ते सृष्टिलिङ्गकमन्त्रवत्, सन्निधानावगताङ्गत्वस्यासृष्टिमन्त्रेष्वपि बाधायोगात्सृष्टिपदमुभयपरम्। अत एव "सृष्टीरुपदधाति" इत्युपक्रम्य "एकयास्तुवत" इत्यारभ्य सप्तदशभिर्मन्त्रैस्संस्कार्याणामिष्टकानां स्तुतिं कृत्वा "यत्सप्तदशेष्टका उपदधाति" इत्यर्थवादेनापि सृष्टिपदस्य गौण्या सप्तदशपरत्वं लभ्यते।

न चोपक्रमस्थासन्दिग्धविध्युद्देशेन चरमस्यार्थवादानुरोधेन जघन्यवृत्त्याश्रयणानर्हत्वम्, उपसंहारस्थेष्वप्यर्थवादेषु बहुष्वानर्थक्यगौण्यादिकल्पनापेक्षयैकस्मिन् विध्युद्देश एव तथात्वौचित्यात्। तस्मादजहत्स्वार्थवृत्त्या सृष्टिबाहुल्यसमानाधिकरणसमुदायाश्रयत्वरूपगुणयोगेन सृष्टिपदं सृष्ट्यसृष्ट्युभयमन्त्रपरम्। अस्ति हि सृष्टिषु बाहुल्यं सृष्ट्यसृष्टिघटितसमुदाय-

---

१. °सार्थकत्व°-ख।

स्यैव[1], यत्सप्तदशेष्टका इत्येकाभिधानगम्यः साहित्याख्यो धर्मस्तादृशसमुदायाश्रयत्वेन सृष्टिपदस्य सप्तदशसु गौणत्वमिति दिक् ।

"प्राणभृत उपदधाति" इत्यत्र प्राणभृत्पदघटितमन्त्रस्य तदघटितमन्त्रापेक्षया स्वल्पत्वेन प्राणभृदल्पत्वसमानाधिकरणसमुदायाश्रयत्वगुणयोगेन प्राणभृत्पदं प्राणभृदप्राणभृन्मन्त्रपरम्। पूर्वत्र बाहुल्यस्य निमित्तत्वमत्र स्वल्पत्वस्येति विशेषः। अल्पादश्च तदपेक्षया बहुत्वाभावपरं तेन साम्येऽपि गौणी। "श्यालं स्वस्रोरथाग्रहीद्" इत्यत्र स्वसृपदं स्वसृतत्पत्योर्गौणमिति **श्रीधरोक्तेरित्यपास्तम्**[2]।

एवं वेदान्तिभिरपि मानान्तरानुरोधेन तत्त्वंपदयोरखण्डार्थे लक्षणाभ्युपगम्यते। यदि तु[3] प्रत्यक्षादिकमवधूयापि श्रुतेर्यथाश्रुतार्थ एव तात्पर्यं तर्हि तत्सर्वमनुपपन्नं स्यात्, प्रत्यक्षमप्रमाणमित्येव वक्तव्यत्वापत्तेः।

यत्तु प्रत्यक्षत्वादे[4]र्व्यावहारिकप्रामाण्यमात्रं परीक्षया सिद्धं तच्चाद्वैतश्रुत्या न बाध्यते, किन्तु तात्त्विकप्रमाणत्वमेव बाध्यते, तच्च न परीक्षया सिद्धम्; अतो न विरोधः। धूम एवेत्यादेस्तु मुख्यार्थत्वे प्रत्यक्षस्य व्यावहारिकं प्रामाण्यं व्याहन्येत, अतस्तदनुरोधात्तत्र श्रुतेरमुख्यार्थत्वमिति; तदसत्; व्यावहारिकप्रामाण्ये तत्रोत्तरस्यापच्छेदन्यायसाम्यमग्रे वक्ष्यमाणत्वात्। किञ्च यथाद्वैतश्रुतिविरोधेन प्रत्यक्षादेर्व्यावहारिकमेव प्रामाण्यमभ्युपेत्य तात्त्विकं[5] तदपह्नुषे तथा धूम एवेत्यादेरागमस्याविरोधेन तत्तत्प्रत्यक्षस्य व्यावहारिकमपि प्रामाण्यमपलप्यताम्। तात्त्विकत्वं परित्यज्य प्रामाण्यनिष्ठव्यावहारिकत्वरक्षायाः निर्बन्धत्वे निबन्धनविरहात्। तात्त्विकप्रमाणभूताद्वैतश्रुत्यपेक्षया तद्विरुद्धस्य व्यावहारिकप्रामाण्यवतः व्यावहारिकप्रमाणभूतयजमानप्रस्तरादिश्रुतिविरुद्धप्रत्यक्षस्य तदपेक्षयापकृष्टप्रामाण्यस्याप्यवर्जनीयत्वात्। यत्र तु व्यावहारिकप्रामाण्यवतोरुक्तागमप्रत्यक्षयोर्विरोधस्य प्रबलबलवत्त्वं त्वयाभ्युपगतं, तत्र को नाम पक्षपातः, स च प्रत्यक्षापेक्षयाद्वैतागमस्य बलवत्त्वे तात्त्विकप्रामाण्यवत्त्वादिति चेत्, तत्प्रामाण्यस्यैव तात्त्विकत्वे भवदीयशपथातिरिक्तस्य बीजस्याभावात्। तत्प्रामाण्यतात्त्विकत्वे सिद्धे प्रत्यक्षस्य तद्विरोधादप्रामाण्यम्, तत्सिद्धौ च तत्प्रामाण्यस्य तात्त्विकत्वमित्यादिदोषावताराच्च।

---

१. समुदायश्च–ख। २. रित्यास्ताम्–ख। ३. यत्तु–ख। ४. प्रत्यक्षादे–ख। ५. 'तात्त्विकं' नास्ति–ख।

यदप्युक्तम्—षड्विधलिङ्गैर्गतिसामान्येन वा अखण्ड एवावधार्यमाणस्य तात्पर्यस्यानुपपत्तेः जीवेशगतसर्वज्ञत्वकिञ्चिज्ज्ञत्वादीनामैक्यान्वयानुपपत्तेश्च तात्पर्यविषयीभूताखण्डप्रतीतिनिर्वाहाय तत्त्वंपदयोर्लक्षणा। तात्पर्यविषयीभूतान्वयनिर्वाहाय लक्षणायाः सर्वसम्मतत्वात्।

न चैवममुख्यार्थत्वम्, तद्धि प्रतीतार्थपरित्यागेनान्यार्थपरत्वं वा शक्यार्थपरत्वं वा? नाद्यः, सामानाधिकरण्येन प्रतीतस्यैक्यस्य रक्षणात्। नान्त्यः, जहदजहत्स्वार्थलक्षणया शक्यैकदेशत्यागेऽपि सोऽयं देवदत्त इत्यादौ एकशक्यकदेशस्यैवान्वयोपगमात् विशेषणांशबाधेन विशेष्यमात्रान्वयमात्रेण लक्षणा इति व्यपदेशात्। तथा चोक्तं **वाचस्पतिमिश्रैः** "प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थमद्वैतवाक्यं त्वनन्यशेषत्वान्मुख्यार्थमेव। उक्तं हि **शाबरभाष्ये** न विधौ परः शब्दार्थ इति" इति, तदप्यसत्; भिन्नाभ्यां धर्माभ्यामेकधर्मिबोधकत्वस्यैव सामानाधिकरण्यशब्दमुख्यार्थत्वात्। तस्य च तद्रीत्या परित्यागात्। जहदित्यादिकमपि सावद्यम्, शक्यैकदेशत्याग एव बीजस्य तार्किकेण प्रष्टव्यत्वात्। विशेष्यान्वयरक्षणमात्रस्यानुपयुक्तत्वात्, सोऽयमित्यादौ च पूर्वापरकालावच्छिन्नैक्यान्वयानर्हतया परैरपि प्रत्यक्षादिविरोधेनैव विशेष्यमात्रपरत्वकल्पनात्। एवमखण्डार्थतात्पर्येत्यादिकमप्ययुक्तम्, अखण्डार्थे तात्पर्यस्यैव ग्रहीतुमशक्यत्वात्। षड्विधलिङ्गेत्यत्र चोत्तरस्योक्तत्वात् 'तत्त्वमसि' इत्यादिश्रुतिविरुद्धत्वाच्च। एवञ्च सत्यखण्डार्थतात्पर्यग्रहे तत्त्वमसीत्यत्रापि एकदेशत्यागेनाखण्डार्थपरत्वं, तद्ग्रहे[1] च तद्विरोधाभावेनाखण्डार्थतात्पर्यग्रह इत्यन्योन्याश्रयात्। अहो चित्रम्—मानान्तरानुरोधेनैव तत्त्वमस्यादौ विशेष्यमात्रपरतां कल्पयित्वान्यत्र मानान्तरं नापेक्ष्यत इति व्यवस्थापनम्। एतेन न्यायाधीनस्य श्रुतितात्पर्यनिर्णयस्य दुर्बलमानान्तराविरोधनिरपेक्षत्वादित्यपि परास्तम्। मानान्तरानादरे न्यायाधीनत्वोक्तिविरोधात्[2]। मानान्तरदौर्बल्यस्य च पूर्वमसिद्धत्वात्। एतेन श्रुतितात्पर्यनिर्णायकोपक्रमादीनामपि प्राबल्यप्रयोजकं निरवकाशत्वादिकमस्त्येवेत्यपि निरस्तम्। विस्तरस्तु पुरस्तात्। एवञ्च निर्णीततात्पर्यानुरोधेन तत्त्वमादिपदानामखण्डलक्षणाभ्युपगमात्, सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविशेषणयोः सोमेन यजेदित्यादौ सोमयागाद्योश्चाभेदे निर्णीतश्रुतितात्पर्याभावेन तदंशे प्रत्यक्षाद्यविरोधस्यापेक्षणीयत्वात्, तात्पर्यविषये हि श्रुतिः प्रबलेत्याद्युक्तमित्यपि निरस्तम्। मानान्तरविरोधस्य साम्येऽप्यद्वैतश्रुतितात्पर्यम्, न तु सोम-

१. अखण्डपदार्थत्वं तत्सत्वे—ख। २. व्याघातात्—क।

यागाद्योरभेद इति वैषम्ये बीजाभावात्। उपक्रमादिबलादिति चेन्न; तत्रापि मानान्तरविरोधानादरे हेत्वभावेन त्वदभिमतार्थविषयकत्वस्य दुर्बलत्वात्। उपक्रमादिश्रुतय एव ह्येकमेवाद्वितीयमित्याद्या अद्वैतश्रुतयः, तथैव परग्रन्थदर्शनात्, अन्यथास्यानुपपत्तेश्च। ततश्च तात्पर्यग्राहकत्वं ग्राह्यतात्पर्यवत्त्वं च तासामेव कथं स्यात्, तदेतदापन्नमसिद्धमसिद्धेनेति। तावन्मात्रञ्च सोमयागाद्यभेदान्वयेऽप्यस्त्येव। उपसंहाराद्याधिक्यादिति चेन्न; शतमप्यन्धानां न पश्यतीति न्यायात्। [1]अत एवोपक्रमोपसंहारादेरन्योन्यतात्पर्यनिर्णायकत्वमप्यनुपपन्नम्, प्रत्यक्षादिविरोधेनैकस्यापि तादृशार्थनिर्णयविरहात्[1] यस्माद्वाक्यादापाततो योऽर्थः प्रतीयते तस्य तत्रैव तात्पर्यमित्येव हि भवदुक्तार्थपर्यवसानम्। तच्च केवलोपक्रमादावप्यस्ति तात्पर्यस्याऽद्वैतविषयकत्वेन तच्छ्रुतीनां प्राबल्यमित्येतदन्यस्य प्राबल्यबीजस्य त्वया सूपन्यासात्। इत्यास्तां तावत्।

तस्मान्मानान्तरविरोधे शब्दस्य तदविरुद्धार्थकल्पनं लक्षणादिनाप्यावश्यकम्। अत एव "सोमेन यजेत" इत्यत्र सामानाधिकरण्येनाऽन्वये प्रत्यक्षविरोधान्मत्वर्थलक्षणाश्रीयते। एवम् "अथातो ब्रह्मजिज्ञासा" इति सूत्रे "तद्विजिज्ञासस्व" इति श्रुतौ च ज्ञानेच्छायाः कृत्यसाधकत्वग्राहकमानानुरोधेन जिज्ञासापदं विचारलक्षकम्। अतश्च प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थमिति **वाचस्पत्योक्तिरयुक्ता**। तथाहि—अमुख्यार्थकत्वं लाक्षणिकार्थगर्भमन्यवाक्यार्थतात्पर्यकं वा। नाद्यः, लक्षणायामन्यशेषत्वस्याप्रयोजकत्वात्, प्राथमिकबोधे तत्र प्रत्यक्षविरोधस्यैव लक्षणाकल्पकत्वात्। "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ भूतार्थवादे व्यभिचाराच्च। नान्त्यः; हेतोः साध्याविशेषात्, अन्यार्थतात्पर्यकत्वस्यैवान्यशेषत्वात्। एतेन स्वकीयमुख्यतात्पर्यविषयीभूतार्थप्रतिपादकत्वं मुख्यार्थत्वम्। अर्थवादप्रतिपाद्यः प्राशस्त्यधीद्वारीभूतो वाक्यार्थोऽवान्तरस्यैव तात्पर्यस्य विषयीभूतो न तु मुख्यस्य। प्राशस्त्यं मुख्यतात्पर्यविषयोऽपि न वाक्यार्थः। **वाचस्पतिमते** तु मुख्येति न देयं, प्राशस्त्यधीद्वारीभूते वाक्यार्थे तात्पर्यानङ्गीकारात्। अन्यार्थतात्पर्यकत्वं त्वमुख्यार्थत्वं, न तु लाक्षणिकत्वमात्रं, तथाचाद्वैतागमस्य तात्पर्यविषयीभूतार्थबोधनिर्वाहाय लक्षणाश्रयणेऽपि मुख्यार्थत्वमव्याहतम्।

न चैवमवान्तरवाक्यीभूतार्थवादेन गम्यमाने देवताविग्रहादौ तस्य प्रामाण्यं न स्यादिति वाच्यम्; यद्वाक्यं यदर्थविषयकतात्पर्याभाववत्तत्र न

१–१. अयमंशः "त्वयासूपन्यासात्" इत्यनन्तरम् "इत्यास्ताम्" इत्यतः पूर्वं वर्तते–ख।

प्रमाणमिति नियमाभावात्। अन्यथा विशिष्टविधेर्विशिष्टपरत्वं न स्यात्। नागृहीतविशेषणन्यायेन विशेषणेऽपि तत्प्रामाण्यस्य वाच्यतया विशिष्टविधेर्विशेषणविशेष्योभयतात्पर्ये वाक्यभेदापत्त्या विशेषणविधिकल्पनद्वारा विशेषणतात्पर्यमित्यस्य च विशेषणविधिना विशेषणे प्रमिते विशिष्टविधिर्विशिष्टविधौ च सति तदन्यथानुपपत्त्या विशेषणविधिकल्पनमित्यन्योन्याश्रयग्रस्तत्वेनानुल्लासाद्। एतस्यैव "रेवतीषु वारवन्तीयमग्निष्टोमस्य साम कृत्वा पशुकामो ह्येतेन यजेत" इत्यादौ रेवत्यधिकरणकवारवन्तीस्वरूपवाक्यमात्रगम्याविशेषणे तात्पर्यविषयेऽपि विशिष्टविधेः प्रामाण्योपपत्तेः। सोमस्य लौकिकमानगम्यत्वेन सोमप्रमितेर्विशिष्टविध्यनापन्नत्वेन प्रागुक्तान्योन्याश्रयविरहे मत्वर्थलक्षणायामपि स्वार्थापरित्यागान्नामुख्यार्थत्वम्। यद्यपि पदमात्रस्य स्वार्थपरित्यागेऽपि तात्पर्यविषयीभूतवाक्यार्थबोधकत्वान्नामुख्यार्थत्वम्, तथापि पदस्यामुख्यार्थत्वाद्वाक्यस्यापि तदिति कुचोद्यपरिहारायेदमुक्तम्। अमुख्यार्थपदघटितत्वेन वाक्यस्यामुख्यार्थत्वे पदमात्रस्य संसर्गलाक्षणिकत्वे वाक्यमात्र मतान्तरेऽपि सोऽयमित्याद्यखण्डार्थवाक्यममुख्यार्थं स्यादतः शक्याघटितार्थकपदघटितत्वमेवामुख्यार्थत्वं वाक्यस्य परेणापि वाच्यमिति तद्रीत्यापि न दोष इत्यपि निरस्तम्। मुख्यार्थत्वादेरेवंविधत्वेऽपि मानान्तरविरुद्धार्थे पदे लक्षणाया अनिवारितत्वात् लक्षणान्यशेषत्वाभ्यां पदवाक्ययोरमुख्यार्थत्वव्यवहारात्। मुख्यतात्पर्यार्थविषयीभूतार्थबोधकत्वस्य सत्येऽप्यद्वैतब्रह्मैव मुख्यतात्पर्यविषय इत्यस्य प्रथमं दुर्ग्रहत्वात्। यद्यपि इत्यादिकमपि सदोषं **भट्टमते** संसर्गान्यामुख्यार्थपदघटितस्यैवामुख्यार्थत्वस्य सम्भवात्। अशक्यमात्रतात्पर्यके पदघटितत्वस्य तथात्वाद्वा। अन्वये लक्षणायामपि स्वशक्यप्रतियोगिक एव तत्र तात्पर्यात्, अन्यपदार्थतात्पर्यकपदघटितत्वस्य चातथात्वात्, संसर्गस्य च पदद्वयार्थप्रतियोगिकत्वेनान्यपदार्थत्वाभावात्, संसर्गादिपदवाच्यत्वस्य चाकिञ्चित्करत्वात्। यस्मिन् संसर्गे प्रतियोग्यविषयकज्ञानाविषयकत्वं तस्य विवक्षितत्वात्। शक्याद्यघटितार्थकपदघटितत्वं तु न तथा। पदं हि तद्वाक्यघटकं[१] यत्किंचित् सर्वं वा? नाद्यः; प्रस्तरादिवाक्यममुख्यार्थमित्यस्यानुपपत्तेः, गौणत्वेऽपि शक्यघटितार्थकत्वात्। नान्त्यः; अप्रसिद्धेः। तदुक्तं **महार्णवे** "न सर्वलाक्षणिकपदगर्भं वाक्यमिति गङ्गायां द्विरेफ इत्यादावपि विभक्तेरेव मुख्यार्थत्वात्।"

किञ्च 'न विधौ परः शब्दार्थः' इति **शबरस्वामि**वाक्यस्य मुख्यतात्पर्य-

---

१. °घटितं—ख।

विषयो वाक्यार्थो नान्यवाक्यार्थविशेष इति भवदुक्तार्थोऽनुपयुक्तः[1]। अनाशङ्कितनिषेधत्वापत्तेः, सर्वग्रन्थविरोधाच्च । तथाहि—

वाच्यस्यार्थस्य वाक्यार्थसम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥

इति **मणिकृदुदाहृत**कारिकाव्याख्यायां "वाक्यार्थेऽन्वयानुपपत्तिर्विधेयार्थान्वयानुपपत्तिः, एतेन 'न विधौ परः शब्दार्थ इति सूचितम्' इति **शब्दालोकः । तत्कण्टकोद्धारे** व्याख्यातम्—"विधेयान्वयानुरोधेनान्यत्र लक्षणास्वीकारात्, अन्यत्र लक्षणोपपत्तेर्न विधेयपदे लक्षणेत्यर्थः । एतेन 'श्येनेन यजेत' इत्यादौ लिङि 'घटो नील' इत्यादौ च पदे विधायके लक्षणा न विरुद्धा" इति । एवं **मीमांसावार्त्तिकेऽपि** "वाक्यशेषो हि भवन् पारतन्त्र्याद् गौण्याद्यपि प्रतिपद्यत" इत्युक्तम् "अर्थस्तु विधिविशेषाद्" इति सूत्रे । यत्तु "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीव्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वरुणपाशादमुच्यत वरुणो वा एनं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति श्रूयते । अनयद्दत्तवान् देवतां वरुणरूपां जलोदराख्यरोगरूपेण परिणतामार्च्छत् प्राप्तवान् । वरुणपाशान् जलोदरान् गृह्णाति जलोदररूपेण प्राप्नोति, इत्यर्थः । इयमिष्टिर्दातुः प्रतिग्रहीतुर्वेति संशयः, यद्यप्युपक्रमानुरोधेन दातुरेव सम्भवति तथापि **मैत्रायणीयशाखायां** "अथैषोऽश्वः प्रतिगृह्यते स वा उभयतोदन् प्रतिगृह्णतो निर्वभस्त्यस्येन्द्रियञ्च पशूंश्च वरुणो वाश्वो वरुणदैवत्यो योऽश्वं प्रतिगृह्णाति तदश्वहविषा यष्टव्यं निर्वरुणत्वाय चतुष्कपालाः भवन्ति चतुष्पाद्वाश्वः कपालैरेवैनमाप्नोति यावन्तोऽश्वास्तावन्तः पुरोडाशा भवन्ति । सर्वत एवैनं मुञ्चन्ति" इति वाक्ये प्रतिग्रहोपक्रमाया एवैतदिष्टेराम्नानात्तदनुरोधेन पूर्वोक्तशाखान्तरीयवाक्येऽपि अनयदित्यादिपदे प्रतिग्रहे लक्षणायाः प्रतिगृहातुरेवेयम् । एवञ्च यावन्तोऽश्वान् प्रतिगृह्णीयादिति विधौ यथाश्रुतार्थः संघटिष्यत इति प्राप्ते, उच्यते; **मैत्रायणीयवाक्ये** तथात्वेऽपि उक्तवाक्ये प्रबलोपक्रमे लक्षणानौचित्यात् । एतद्वाक्यबलेन दातुरिष्टिरित्यत्र बाधकाभावः । **मैत्रायणोक्त**दूरस्थकर्मानुवादेनाश्वदानरूपोद्देश्यसम्बन्धबोधनानुपपत्तेरेतद्वाक्यस्य कर्मान्तरविधायकत्वसम्भवात् । नामादीनामुपस्थापकानामभावेन शाखान्तराधिकरणन्याया-

१. न युज्यते—ख ।

सम्भवात्। एतद्वाक्यानुरोधेन **मैत्रायणीय**वाक्योपक्रमस्यापि[1] प्रयोजककर्तृ-परत्वेन व्याख्यानात् तत्कर्मण एवात्रापि विधिसम्भवात्। तदुपक्रमस्यापि दातुरिष्टिपरत्वाच्च। तस्मादुपक्रमानुरोधेन विधिस्थे प्रतिगृह्णातौ प्रतिग्राहक-प्रयोजकव्यापारे दाने लक्षणेति तृतीयचतुर्थे चिन्तितम्। तथा चार्थवादानु-रोधेन विधौ न लक्षणेति परोक्तार्थोऽसंगत एवेति, तदसत्; निरनुयोज्यानु-योगत्वात्। न ह्यर्थवादानुरोधेन विधौ न लक्षणेति नियमो मयोक्तः। अन्यत्र लक्षणयोपपत्ताविति स्पष्टमेव **मिश्रव्याख्यातृभि**रुक्तत्वात्। अत्र च नार्थवादे लक्षणयोपपत्तिरुपक्रमाधिकरणन्यायेन तदसम्भवात्। अत एव "सृष्टीरुप-दधाति" इत्यत्रार्थवादे बहुकुसृष्टिकल्पनापेक्षया विध्युद्देशान्तर्गतेऽपि सृष्टिशब्दे गौणी स्वीकृता। एवं "श्येनेन यजेत" इत्यत्रापि वक्ष्यते।

यत्तु, अत्रार्थवादानुसारेण विधौ न लक्षणा किन्तूपक्रमप्राबल्यादिति न युक्तम्, अर्थवादानुसारेण विधौ यत्र लक्षणाप्रसक्तिस्तत्रैव त्वया तस्या निषेध्यत्वात्प्रसक्तेश्चार्थवादस्योपक्रमाद्यनुरोधेनैव सम्भवात्, अतस्तत्र निषेधोऽसङ्गत एव तदभावे तन्निषेधस्तून्मत्तप्रलाप इति, तदसत्; उपसंहार-स्यार्थवादानुरोधेनाविरोधेनापि विधौ लक्षणायाः प्रसक्तिसम्भवात्, श्येनपदादौ तथाभ्युपगमाच्च। फलोपधानप्रसक्तेर्निषेधानुपयोगित्वादनन्यशे[2]षवाक्या-र्थस्य केनचिदनाशङ्कितरूपत्वेन तन्मत एवाप्रसक्तनिषेध इत्युक्तत्वाच्च[2]। [3]तस्माद्यत्किञ्चिदेवैतत्[3], भ्रान्तिमत्पुरुषाभिप्रायेण तदर्थवत्त्वस्य च वैयर्थ्य एव पर्यवसानात्। एतेन—

प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्।
शीघ्रमन्थरगामित्वात्तथैव श्रुतिलिङ्गयोः॥

श्रुतेर्लिङ्गापेक्षयेव प्रत्यक्षस्य लिङ्गा[4]न्तरापेक्षया शीघ्रगामित्वात्प्राब-ल्यमित्याशङ्क्य परीक्षितस्य मन्थरगामिनोऽपि प्राबल्यादित्युक्तमप्यपास्तम्, परीक्षितत्वस्यैवासिद्धेः। युक्त्यन्तरेण बाधकोपमर्दो हि परीक्षा, न तु स्वेनैव। अन्यथा परीक्षातदभावयोरव्यवस्थितत्वापत्तेः, प्रत्यक्षप्रामाण्यस्याप्यनपवा-दापत्तेश्च। अवच्छेदकावच्छेदेन बाधाभावस्योभयत्राप्यभावात्, प्रत्यक्षत्व-सामानाधिकरण्यमात्रेणेव वेदशाब्दत्वसामानाधिकरण्यमात्रेणापि प्रमाणान्त-रानुरोधस्य कल्पितत्वात्। अत एव 'नहि बाधितमर्थमागमोऽपि बोधयति' इति

१. वा क्योपन्यासस्या०—ख। २—२. नास्ति—क। ३—३. नास्ति—ख।
४. प्रमाण°—क।

**अभियुक्तानामुद्घोषः** सङ्गच्छते। एतेन "यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया बाधनिश्चयस्तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वनिश्चयः" इति **विवरणोक्ते**र्गृहीतप्रामाण्यकशब्दतदुपजीव्यनुमानातिरिक्तयुक्तिमात्रविषयकत्वकल्पनेन प्रकृते वैषम्यकथनमप्यपास्तम्। प्रकृतशब्दस्य गृहीतप्रामाण्यकत्व एव विवादेन विशेषणासिद्धेरुक्तत्वात्। किञ्च लिङ्गस्य श्रुत्यपेक्षयापि दुर्बलस्य प्रत्यक्षापेक्षया सुतरामेव दौर्बल्यम्। तथा हि "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षाद्" इति तृतीये **जैमिनिसूत्रम्**। श्रुत्यादीनि षट् प्रमाणान्यङ्गत्वबोधकानि, तेषां परस्परमविरोधे तावन्न सन्देहः। विरोधे तु तेषां समवाये एकत्रोपनिपाते सूत्रपाठक्रमेण परस्य पूर्वविरोधे दौर्बल्यम्। तत्र हेतुरर्थविप्रकर्षादिति पूर्वसापेक्षस्यैव परस्यार्थबोधकत्वात्, तच्चाग्रे स्फुटीभविष्यति। उक्तञ्च—

श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या॥

इति। तत्र श्रुतेर्बाधकत्वमेव समाख्यायास्तु बाध्यत्वमेव। मध्यानान्त्वपेक्षाभेदादुभयमपि। तदुक्तम्—

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वं व्यपेक्षया॥ इति।

श्रुतिः पदान्तरनिरपेक्षः शब्दः। तदुक्तम्—

"अभिधातुं पदेऽन्यस्मिन्निरपेक्षो रवः श्रुतिः।" इति।

रवः शब्दः। न च निरपेक्षत्वमसिद्धं केवलद्वितीयादितो बोधानुदयादिति वाच्यम्; प्रकृत्यर्थेऽवघातजन्यफलाश्रयत्वरूपस्वार्थान्वयबोधे पदार्थान्तर[1]नैरपेक्ष्यस्य विवक्षितत्वात्। तावतैव व्रीहीणामवघातशेषित्वसिद्धेः। ततश्चाङ्गत्वघटकीभूतपरोद्देश्यकत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः श्रुतिः। अस्यार्थः—परोद्देशप्रवृत्तकृतिकारकत्वेन विध्यन्वयित्वं ह्यङ्गत्वम्। स्वर्गोद्देशप्रवृत्तपुरुषीययागानुकूलकृतौ करणत्वेन यागस्य विध्यन्वय इति यागः स्वर्गाङ्गः। प्रयाजादीनामपि प्रकरणबलादपूर्वहेतुयागोद्देशप्रवृत्तपुरुषकृतौ प्रधानानुकूलायां यागानुकूलायां वा कारकत्वेन विधानाद्दर्शाद्यङ्गत्वं, नतु स्वर्गाङ्गत्वम्, तदुद्देशेन दर्शादीनामेव विधानात्प्रयाजादीनां

१. पदान्तर–ख।

तदभावात्। द्रव्यस्य क्रियानिर्वर्त्तकत्वेनारुण्यादिगुणस्य द्रव्यपरिच्छेदकत्वेन नियोज्यस्य कर्तृत्वेन कालदेशयोरधिकरणत्वेन यागानुकूलकृतिकारकत्वविध्यन्वययोः सत्त्वात्। एवंस्थितेऽङ्गत्वस्य द्वयं घटकम्—परोद्देश्यत्वं कृतिकारकत्वञ्च। तदन्यतरस्य प्राधान्येन वाचको द्वितीयातृतीयादिकारकविभक्तिरूपः शब्दः श्रुतिः। "व्रीहीन् प्रोक्षति" इत्यत्रेप्सिततत्वार्थया द्वितीयया व्रीहीणामुद्देश्यत्वलाभात् प्रोक्षणादेस्तदङ्गत्वधीः। तथाहि—व्रीहीन्प्रोक्षतीत्यादौ व्रीह्यादिसंस्कारार्थत्वेन प्रोक्षणादेर्विधानाद् गुणकर्मत्वम्, उत व्रीह्यादिसाधनकस्य स्वतन्त्रादृष्टार्थकस्य प्रधानकर्मत्वमिति संशयः। तत्र व्रीह्यादेः प्रोक्षणाद्यजन्यत्वेन भाव्यत्वायोगादवघातवद् दृष्टोपकारकाभावेन विकार्यकर्मत्वस्याप्यसम्भवात्। व्रीह्यादिविशिष्टप्रोक्षणादिकमेव स्वातन्त्र्येण[1] विधीयते। क्रतूपकारश्च तत्फलं प्रयाजादिवत्।

न च द्वितीयया व्रीह्यादीनां प्राधान्यावगमात्, अर्थात् प्रोक्षणादीनां तदङ्गत्वापगमाद्, दृष्टोपकारबाधेन द्रव्यनिष्ठसंस्काररूपातिशयकल्पनाच्च गुणकर्मत्वमेवेति वाच्यम्; मानाभावात्। द्वितीयायाः प्राधान्यवाचित्वं प्रयोगाद्वानुशासनाद्वा प्रयोजनाद्वा? नाद्यः, "बल्वजान् शिखण्डकान् कुरु सक्तून् जुहोति" इत्यादौ करणत्व एव द्वितीयाप्रयोगदर्शनात्। करोतेर्द्विकर्मकत्वाभावेन एककर्मविरुद्धे द्वितीयकर्मान्वयानुपपत्तेः। जुहोतेश्च देवतोद्देशप्रक्षेपद्रव्यत्यागसमुदायशक्ततया तत्समुदाये सक्तूनां कर्मत्वायोगात्। न च तदेकदेशं प्रत्येव कर्मत्वम्, ईप्सितत्वाभावात्; "प्रयाजशेषेण हवींष्यभिघारयति[2]" इत्यत्र विनापि द्वितीयां प्रयाजशेषस्य प्राधान्यदर्शनेन व्यतिरेकव्यभिचाराच्च। न द्वितीयः, उक्तप्रयोग[3]विरोधेनानुशासनस्य तदतात्पर्यकत्वात्। नान्त्यः, "पुरोडाशकपालेन तुषानुपवपति" इत्यादौ पुरोडाशकपालादीनां सप्रयोजनत्वेऽपि तुषोपवापसंस्कारत्वानङ्गीकारात्। अत उक्तरीत्या प्रधानकर्मैवेदमिति प्राप्ते उच्यते, गुणकर्मैवेदम्, द्वितीयायाः प्राधान्यवाचित्वात्। न च तत्र मानाभावः, कर्मणि द्वितीयेति सूत्रस्यैव मानत्वात्। न च तस्य निर्मूलत्वं घटं करोतीत्यादिप्रयोगस्यैव मूलत्वात्। न चात्रापि घटस्य विषयतासम्बन्धेन कृतिकरणत्वात्तदेव द्वितीयार्थः, कर्मत्वप्रतीतेः सर्वानुभवसिद्धत्वात्। अतश्च शास्त्रान्तरेण विनियुक्तानां व्रीहीणां व्रीहीन्प्रोक्षतीति द्वितीयया जन्यत्वावगमात् संस्कारविशिष्टत्वेनैव जन्यत्वं कल्प्यत इति द्वितीयप्रथमे चिन्तितम्। इत्यास्तामप्रासङ्गिकम्।

१. प्राधान्येन—क। २. क्षारयति—ख। ३. °प्रत्यय°—ख।

श्रुतस्यार्थान्तरेणाविनाभावलक्षणं सामर्थ्यं लिङ्गम्। ततश्चाङ्गत्वघटकयोः परोद्देश्यत्वकृतिकारकत्वयोर्मध्ये एकवाचकपदकल्पनानुकूलं क्लृप्तपदार्थनिष्ठयोग्यत्वं लिङ्गमित्यर्थः। यथा स्रुवेणापद्यतीत्यत्र द्रवमित्युद्देश्यवाचिपदकल्पनानुकूलं स्रुवनिष्ठं योग्यत्वम्, द्रवद्रव्यावदानस्यैव स्रुवसाध्यत्वात्। एवं क्लृप्तेषु मन्त्रेष्वपि स्वप्रतिपाद्यार्थनिष्ठमुद्देश्यप्रतिपादककल्पनानुकूलं योग्यत्वं लिङ्गमेवेत्यर्थः।

तस्य दुर्बलत्वं कथमिति चेत्, सत्यम्; तत्तत्पदरूपश्रुतिकल्पनद्वारैव लिङ्गस्य क्लृप्तकल्प्यपदार्थयोः शेषशेषित्वबोधकत्वात्। उदाहरणम्–"निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इति **भाष्यकारः**। नव्यास्तु "कदाचनस्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यग्नौ श्रुतमेवात्रोदाहरणम्—

निवेशनस्संगमनो वसूनां विश्वाभिरूपाभिचष्टे शचीभिः।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्॥

इत्यत्र नशब्दस्योपमार्थत्वादिन्द्रस्यैवोपमानोपमेयत्वानुपपत्तेर्वसूनां पावकश्चास्मीत्यग्नेरेव वसुप्राधान्योक्तेश्चात्रापि तथाभिधानाच्चाग्निपरत्वावगमादित्याहुः।

अत एव द्रव्योपायविवरणादौ कदाचनेत्येवोदाहृतम्। एवं प्रत्यक्षानुमानबाध्यत्वसिद्धिप्रकरणे **अद्वैतचन्द्रिकयोरपी**त्यवधेयम्। तत्र गार्हपत्यमिति विधिगतद्वितीयाश्रुत्या उपस्थानं प्रति गार्हपत्यस्य प्राधान्यं तृतीयाश्रुत्या च तत्रैन्द्र्याः करणत्वं बोध्यत इति श्रौतोऽयं विनियोगः। मन्त्रगतादिन्द्रशब्दात्तु श्रुत्या इन्द्रस्वरूपमात्रबोधादिन्द्रनिष्ठमन्त्रनिरूपितप्राधान्यस्य मन्त्रनिष्ठकरणत्वस्य च कुतश्चिदनवगमान्मन्त्रस्येन्द्रोपस्थानाङ्गत्वं विना चन्द्रप्रकाशकत्वान्यथानुपपत्तिपर्यालोचनयैव तन्मन्त्रस्येन्द्रोपस्थानाङ्गत्वं कल्प्यत इति लैङ्गिकः।

न चैन्द्रीगार्हपत्ययोः प्रत्येकं शेषशेषित्वमेव श्रुत्या गम्यते, न त्वन्योन्यनिरूपितम्, तच्चैकवाक्यतयैव सिध्यति। ततश्च श्रुतिमात्रगम्यस्यार्थस्य इन्द्रमाग्नेयान्तरश्चादाय विरोधविरहाद् गार्हपत्यनिष्ठशेषित्वनिरूपितैन्द्रीनिष्ठशेषत्वस्य च लिङ्गविरुद्धस्य वाक्यगम्यत्वाल्लिङ्गवाक्ययोरेवायं विरोधो न तु श्रुतिलिङ्गयोरिति वाच्यम्; श्रुत्यनादरे वाक्यस्याप्यविरोधात्। गार्हपत्यद्वितीयाशब्दयोरिन्द्रसप्तम्यर्थलक्षणायां विरोधाभावात्। अतः श्रुतिवाक्योभयमूलकत्वाद् युक्तः श्रुतिविरोधः।

न चायं विरोधः श्रुतेरेव कथं व्यवह्रियते; उभयीयत्वादिति वाच्यम्; प्रमेयस्य शेषशेषिभावस्य श्रुत्यैवोक्तेः। श्रुत्युक्तयोस्तु शेषशेषित्वयोः परस्परापेक्षितः प्रतियोग्यंश एव वाक्येन समर्प्यत इति प्रधानेनैव व्यपदेशौचित्यात्। किञ्च लिङ्गनिष्ठबाधकतानिरूपितबाध्यताशालित्वमेव तद्विरोधकप्रयोजकं यथा "स्योनं ते सदनं कृणोमि" इत्यत्र वक्ष्यमाणे उत्तरार्धैकवाक्यतारहितस्यापि पूर्वार्धस्यार्थप्रतिपादकतया तत्र वाक्यस्य लिङ्गविरोधः। अत्र तु लिङ्गस्य बलवत्त्वे वाक्यबाधोऽनुपपन्नः। श्रुतितः पृथगेव वाक्यबाधाभ्युपगमे पदमात्रस्याप्रमाणतया गार्हपत्यैन्द्रीपदयोरर्थानवबोधकत्वादिति श्रुतेरेवात्र बाधः स्यादतः श्रुतिलिङ्गयोरेवात्र विरोधः। तत्रैकत्र श्रुत्या गार्हपत्यार्थत्वम्, अपरत्र तु सामान्यार्थपर्यालोचनया इन्द्रार्थत्वमित्युभयोस्तुल्य एव विनियोगकाल इति तुल्यबलत्वाद्विकल्पेन द्वयोरुपस्थानम्।

यद्वा उभयत्रापि प्रमाणद्वयेन मन्त्रस्य समुच्चयः, प्रधानभूतोपस्थानानुरोधेन तदङ्गमन्त्रावृत्तेन्र्याय्यत्वात्। कथञ्चिच्छ्रुतेर्बलवत्त्वेऽपि समुच्चयेनोपपत्तौ विरोधाभावान्न बाध्यबाधकभावः। अथवा शब्दप्रवृत्तेर्वस्तुशक्त्यनुसारित्वात् श्रुत्यपेक्षया लिङ्गस्यैव बलवत्त्वमिति प्राप्तेऽभिधीयते। "इदि" परमैश्वर्ये इति धात्वर्थानुसारेण गौणवृत्त्या सामर्थ्यस्य च वह्नावपि सत्त्वात् न तावल्लिङ्गस्य बलवत्त्वम्, नापि तुल्यबलत्वम्, यावद्धि मन्त्रतो मन्त्रार्थं प्रतीत्य ततः सामर्थ्यमुपगम्य तदाकाङ्क्षावशादनेन मन्त्रेणेन्द्र उपस्थेय इति श्रुतिः कल्प्यते, तावत्प्रत्यक्षश्रुत्या मन्त्रस्य गार्हपत्याङ्गत्वे बोधिते मन्त्राकाङ्क्षोपशान्तिः, आकाङ्क्षामूलकश्रुतिकल्पनानवकाशाद्, अतः शीघ्रप्रवृत्तश्रुत्या मन्थरप्रवर्त्तिनो लिङ्गस्य बाध एव।

यत्तु विरोधाभावान्न बाध इत्युक्तम्, तत्र मन्त्राकाङ्क्षानिवर्तिकायाः श्रुतेराकाङ्क्षामूलकप्रामाण्येन लिङ्गेन विरोधावश्यकत्वादिति। ततोऽपि[1] अनेकपदसामर्थ्यं वाक्यं दुर्बलं यथा—

"स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि।
तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध: सुमनस्यमानः॥"

इति मन्त्रः सर्वोऽपि सदनकरणे पुरोडाशप्रतिष्ठापने च प्रयोक्तव्यः, उत स्वेच्छया सकलो विभक्तो वा। अथवा कल्पयामीत्यतः सदनकरणे तस्मिन्नित्यादि प्रतिष्ठापने प्रयोक्तव्य इति संशयः। तत्र वाक्यस्य बलवत्त्वे पूर्वः,

---

१. °भेदा°–ख।

  

लिङ्गवाक्ययोस्तुल्यबलवत्त्वे मध्यः, लिङ्गप्राबल्ये तूत्तरः पक्षः। तत्र सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्तस्मिन् सीदेति तच्छब्देन पूर्वार्धार्थस्य स्वार्थैकवाक्यतां गमितत्वादुभयत्रापि सर्वस्यैव मन्त्रस्य प्रयोगः। यद्वा लिङ्गस्य श्रुतिकल्पकतया[1] तस्य प्रत्यक्षश्रुत्यपेक्षया दुर्बलत्वं युक्तम्। लिङ्गवाक्ययोस्तु श्रुतिकल्पकत्वमविशिष्ट[2]मेवेति तुल्यबलत्वात्सकलस्य विभक्तस्य वा[3] विकल्पेन प्रयोग इति प्राप्तेः, उच्यते; यद्यप्युभयोः श्रुतिकल्पकत्वं समानं तथापि वाक्येन लिङ्गं कल्पयित्वा श्रुतिः कल्प्यते, लिङ्गेन त्वव्यवधानेनैवेति लिङ्गस्यैव प्राबल्यम्। "स्योनं ते सदनं कृणोमि" इत्यस्य हि सदनकरणसामर्थ्यमन्यानपेक्षमेव प्रतीयते। ततश्च श्रुतिमनुमाय सदनकरण एवास्य विनियोगः। पुरोडाशप्रतिष्ठापने तु तद्भागस्य स्वरूपतः सामर्थ्याभावात्। प्रतिष्ठापनसामर्थ्यता तस्मिन् सीदेत्यनेन सहैकवाक्यत्वपर्यालोचनया पूर्वार्धस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापने सामर्थ्यं[4] क्लृप्तमिति तत्रैव तस्य विनियोगो न त्वेकवाक्यत्वानुरोधेनः[4] सामर्थ्यं कल्पयित्वा सदनकरणेऽपीति, अर्थभेदान्नैकवाक्यत्वमिति विभज्यैव विनियोग इति। ततोऽप्यन्यतरस्यान्योन्यस्य वाऽऽकाङ्क्षया वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं प्रकरणं दुर्बलम्। इदञ्च श्रुतिलिङ्गवाक्यैर्यदविनियुक्तं तद्विनियोगे प्रमाणम्। असंयुक्तन्तु प्रकरणादिति न्यायात्तद्विरोधेऽस्य दुर्बलत्वादिति वक्ष्यत एव। अन्यतराकाङ्क्षया यथा राजसूये पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानाः श्रूयन्ते, तत्राभिषेचनीयाख्यसोमयागसन्निधौ विदेवनादयः समाम्नाताः। तत्रेष्टिपशुसोमानां विकृतत्वात्प्राकृतेनेतिकर्त्तव्यताजातेन कथमित्याकाङ्क्षापूरणात् प्रातिस्विकरूपेण निराकाङ्क्षत्वेऽपि राजसूयात्मना पुनराकाङ्क्षोत्थानं श्रुत्यादिविहिताङ्गसन्दंशवशात्तदाकाङ्क्षानिवृत्तये प्रधानस्याकाङ्क्षापरिकल्पनात्। पवित्रसंज्ञसोमयागविशेषादारभ्य क्षत्रस्य धृतिसञ्ज्ञमिष्टिविशेषं यावदङ्गविधिषु "राजसूयाय ह्येना उत्पुनाति राजसूयेनेजानः सर्वमायुरेति" इति राजसूयपरामर्शात् तावत्पर्यन्तानुवर्त्तिना राजसूयकथंभावेन मध्यपतितानां विदेवनादीनां तदङ्गत्वेन ग्रहणात्। उभयस्य यथा "स्वर्गकामो यजेत" इत्यत्र यागेन स्वर्गं भावयेदिति बुद्धेः, केन प्रकारेण यागेन स्वर्गः कर्त्तव्य इति कथंभावापेक्षायां समिधो यजतीत्यादावपि फलश्रुत्यभावेन प्रयोजनाकाङ्क्षायां सत्यां विश्वजिन्न्यायेन स्वर्गकल्पनायां गौरवात्तदपेक्षया द्वयोरप्येकवाक्यतां कल्पयित्वा क्रत्वपेक्षितव्यापारविशेषसमर्पकत्वमेव समिधो

१. °कल्पनया–क। २. अपि विश्रुतमेव–क। ३. च–क। ४–४. नास्ति–ख।

यजतीत्यादीनां कल्प्यते समिधादियागैरदृष्टद्वारा अवघातावाहनादिभिश्च द्रव्यदेवता संस्कारद्वारा द्रव्यदेवताभ्याञ्च[1] स्वरूपसम्पादनेन यागे व्याप्रियेत्। अनेन यागस्य फलाभिमुखत्वं सहकारिसम्पत्तेरेवोपकारत्वादिति तेषां क्रतूपकारः फलमिति। प्रकृतोदाहरणं यथा दर्शपौर्णमासप्रकरणे "अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्" इति। एवं "इन्द्राग्नी इदं हविरजुषेताम्" इत्यादिमन्त्रः सूक्तवाकनिगदे समाम्नातः। सुष्ठुक्तं वक्तीति व्युत्पत्त्या एकप्रयोगवर्त्तियावदिष्टदेवताप्रकाशकमन्त्रविशेषे सूक्तवाकशब्दो रूढः, निगदत्वं मन्त्रत्वव्याप्यधर्म इति **द्वितीयप्रथमे** स्थितम्। पौर्णमास्यामिन्द्राग्न्योरमावास्यायां चाग्नीषोमयोर्देवतात्वाभावादसमवेतार्थकं पदं विहाय समवेतार्थकमेव प्रयोज्यमिति लिङ्गप्राबल्यादेव स्थिते देवतापदेन सहैकवाक्यतापन्नानि इदं हविरजुषेतामित्यादिपदानि प्रकरणाविशेषादन्यत्रापि प्रयुज्येरन्, उत देवतापदैकवाक्यत्वानुरोधेन तद्वदेव व्यवस्थितानीति संशये वाक्यप्रकरणयोस्तुल्यप्रमाणत्वात् श्रुतिकल्पकत्वसाम्यात्तुल्यबलत्वम्। यद्वा प्रधानाकाङ्क्षा प्रकरणम्, प्रधानार्थञ्च सर्वमिति प्रकरणस्य प्राबल्यात्तन्मूलकविनियोगेनोभयत्र तेषां प्रयोग इति प्राप्ते, उच्यते, नहिप्रकरणं विनियोज्यमनपेक्ष्य विनियोजकम्, अन्यथा; "पूष्णोऽहं देवयज्यया" इति पूषानुमन्त्रणमर्थस्य तद्देवतारहितयोरपि दर्शपूर्णमासयोः प्रकरणेन विनियोगापत्तौ तस्य प्रकरणादुत्कर्ष इति सिद्धान्तभङ्गापत्तेः। ततश्च झटिति प्रवर्त्तमानैः श्रुतिलिङ्गवाक्यैर्यावानंशो बाध्यते तदतिरिक्तमेव प्रकरणेन विनियुज्यते। विरुद्धश्रुत्याद्यभावे पुनः प्रकरणस्य स्वातन्त्र्येण विनियोजकत्वम्। अत्र तु लिङ्गेन देवतापदस्यैकवाक्येन तदेकवाक्यतापन्नशेषभागस्यापि प्रथममेवापनयनान्न प्रकरणं तद्विनियोजनाय पर्याप्तम्। तथाहि अग्नीषोमपदस्येदं हविरित्यादेश्चैकवाक्यत्वं क्लृप्तम्, तेन चेदं हविरित्यादेरग्नीषोमप्रकाशनसामर्थ्यं कल्प्यते, ततः श्रुतिस्तयाविनियोग इति तृतीयो विनियोगकल्पनाकालः। अग्नीषोमपदैकवाक्यतापन्नस्य त्विदं हविरित्यादेरिन्द्राग्निपदैकवाक्यत्वं न प्रत्यक्षसिद्धम्, किन्तु प्रकरणादिदं हविरित्यादेर्दर्शपूर्णमासाभ्यामेकवाक्यता, अनेन मन्त्रेण दर्शपूर्णमासयोरुपकुर्यादिति। तत उपकारविशेषाकाङ्क्षायां देवतापदैकवाक्यतया देवताप्रकाशनसामर्थ्यं कल्प्यम्, ततः श्रुतिः, ततो विनियोग इति चतुर्थस्तत्काल इति विप्रकर्षात्प्रकरणस्य दौर्बल्यमिति सिद्धान्तः।

देशसाम्यं क्रमः। स च द्विधा—पाठसादेश्यमनुष्ठान[2]सादेश्यञ्च। पाठ-

१. ताभ्यां च–ख। २. अनुमान°–क।

सादेश्यमपि द्विविधम्, यथासङ्ख्याम्नानं सान्निध्याम्नानञ्च । आद्यं यथा दर्शपूर्णमासयोर्ह्याग्नेयवैष्णवोपांशुयाजाः क्रमेण पठिताः, मन्त्रभागेऽपि त्रयोऽनुमन्त्रणमन्त्राः पठिताः । तत्र मन्त्रद्वयस्य लिङ्गवशादाग्नेयवैष्णव-यागसम्बन्धे निश्चितेऽपि उपांशुयाजसमीपे "दब्धिर्नामासि" इतिमन्त्रः पठ्यते । तस्य तदङ्गत्वं न वेति संशये श्रुतिवाक्ययोरभावात्, लिङ्गप्रकरणयोश्चाग्नेयादि-साधारण्यात्, उपांशुयाजमात्राङ्गत्वग्राहकप्रमाणाभावात् क्रमस्य च प्रमाण-त्वाभावात् न तत्राङ्गत्व[१]मिति प्राप्ते, उच्यते; क्रमादुपांशुयाजाङ्गत्वं कर्मणां मन्त्राणाञ्च क्रमेण सामाम्नातात् यस्य कर्मणः क्रमे यो मन्त्रः समाम्नातस्तत्र तत्स्थानसादृश्यात्तत्कर्मोपस्थितिः, तत्कर्मक्रमे च तन्मन्त्रोपस्थितिरित्युभयोः समानस्थानसमाम्नात सम्बन्धार्थमिति तदाकाङ्क्षा तया चैकवाक्यतां कल्प-यित्वा तदङ्गत्वमिति[२] । द्वितीयं यथा—शुन्धध्वमिति मन्त्रस्य सान्नाय्यपात्र-शुन्धनाङ्गत्वम् । तृतीयं यथा–पशुधर्माणामग्नीषोमीयाङ्गत्वम्, प्रकृतं यथा-राजसूयं षोडशप्रधानात्मकम्, तत्राभिषेचनीयाख्यसोमयागसन्निधौ "अक्षैर्दी-व्यति दुन्दुभयो नदन्ति शौनःशेफमाख्यापयति" इत्यादिवाक्येन समाम्नायन्ते विदेवनादयः[३] । त एते अक्षद्यूतादयः किंप्रकरणाद्राजसूयाख्यसर्वपञ्चिष्टिसोमया-गाङ्गत्वम्, उत, सन्निधाख्यस्थानबलादभिषेचनीयमात्राङ्गत्वमिति संशयः । सन्निधिविशेषेणाभिषेचनीयमात्राङ्गत्वम् इति प्राप्ते, सिद्धान्तः प्रकरणस्य-सर्वेषामविशिष्टत्वात् सर्वाङ्गत्वम् । अभिषेचनीयप्रकरणस्य सत्त्वेऽपि अन्येषा-मपि तत्सत्त्वेन तन्मात्राङ्गत्वस्य परिशेषयितुमशक्यत्वात् । वस्तुतस्तु—अभि-षेचनीयस्य प्रकरणं नास्त्येव, तस्य प्राकृतेनेतिकर्त्तव्यताते[त्वे]न निरा-काङ्क्षतया कथंभावाकाङ्क्षायास्तत्र विरहात् ।

न चान्येषामपि तत्रत्यानां प्रधानकर्मणां विकृतत्वात्तेषामपि प्रकरणं नास्त्येवेति वाच्यम्; अवान्तररूपेण तथात्वेऽपि राजसूयरूपेण तदाकाङ्क्षाया उक्तत्वात् । अभिषेचनीये तु सत्यपि सन्निधाने विशेषरूपेणाकाङ्क्षामूह्याप्येक-वाक्यत्वं कल्पनीयम्, ततः सामर्थ्यम्, ततः श्रुतिः, तया च विनियोगः कल्प्यः । राजसूयरूपेणाकाङ्क्षा च कल्पितैव, परन्त्वेकवाक्यत्वं सामर्थ्यं श्रुतिर्वि-नियोगश्चेति चतुर्थकाले विनियोगः, पूर्वत्र तु पञ्चमे इति विप्रकर्षात् प्रकरणस्य बलवत्त्वमिति । क्रमसमाख्ययोर्विरोधे यथा पौरोडाशिकेति समाख्याते मन्त्रकाण्डे पौरोडाशिकेत्यत्र पुरोडाशस्यैतानि पात्राण्युलूखलमुश-लादीनि पौरोडाशिकानि, तान्यधिकृत्य प्रवृत्तम् पौरोडाशिकमन्त्रकाण्डमिति पुरोडाशपात्रमन्त्रकाण्डयोः सम्बन्धनिमित्ता समाख्यानादित्वात्तद्वाचकतया

१. तत्र तन्मात्राङ्गत्व॰–क । २. मेवेति–क । ३. विदेवनादीनि समाम्नायन्ते–ख ।

तस्याश्च सम्बन्धव्यतिरेकेणाऽनुपपत्त्या पात्राणां मन्त्राणाञ्च कश्चिदसाधारणः सम्बन्धोऽस्तीति पात्रसंस्कारकत्वमेव मन्त्राणां सम्बन्धं कल्पयतीति स्थितम्। तत्र सान्नाय्ययागक्रमे "शुन्धद्ध्वं दैव्याय कर्मणे" इति मन्त्रः श्रूयते, तस्य समाख्याबलात्पुरोडाशपात्रशुन्धने विनियोगः, उत क्रमवत्त्वात्सान्नाय्यपात्रशुन्धनाङ्गत्वमिति सन्देहः। तत्र शब्दबलादेवोक्तरीत्या पात्रमन्त्रयोः सम्बन्धावगमः। क्रमस्य च प्रकरणाद्युन्नायकत्वेन वैपरीत्यमिति समाख्याया बलवत्त्वादाद्यः पक्षः, द्वितीयस्तु स्पष्टः। समाख्यादौर्बल्ये हेत्वभावात्। सिद्धान्तस्तु—

पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचित्॥

इति रीत्या प्रकृतिप्रत्ययाभ्यां प्रत्येकं सम्बन्धिद्वयमात्रमुपस्थाप्यते। तयोः परस्परसम्बन्धस्तु समभिव्याहारलभ्यतया न कस्यचिदभिधेय इति। प्रकृतेऽपि पौरोडाशिकपदे प्रकृतिप्रत्ययाभ्यां पुरोडाशपात्रस्वरूपं काण्डस्वरूपञ्चोक्तम्, तयोस्तु सम्बन्धोऽनभिहित एव कल्पनीयः। क्रमे तु देशसामान्यरूपः सम्बन्धः प्रत्यक्ष एवेति वैषम्यम्, ततश्च समाख्यया क्रमोऽनुमेयः, तेन प्रकरणम्, तेन वाक्यम्, तेन लिङ्गम्, तेन श्रुतिः, ततो विनियोग इति षष्ठो विनियोगसमयः। क्रमे तु तस्य प्रत्यक्षतया तेन प्रकरणमनुमेयम्, तेन वाक्यम्, तेन लिङ्गम्, तेन श्रुतिस्ततोविनियोग इति पञ्चम इति सन्निकर्षात् तदपेक्षया समाख्या दुर्बलेति सान्नाय्यपात्राङ्गत्वमेवेति।

ननु लिङ्गादिभिः पञ्चभिः श्रुतिरेवावश्यकत्वात् कल्प्यताम्, न तु स्वपूर्वं सर्वमिति श्रुत्यपेक्षयैव तेषां दौर्बल्यं युक्तम्, न त्वन्योन्यापेक्षयापीति चेन्मैवम्; स्वपूर्वपठितप्रमाणकल्पनां विना तेषां श्रुतिकल्पकत्वानुपपत्तेः। श्रुतिविशेषकल्पनस्य तावत्प्रतिसन्धानपूर्वकत्वनियमात् कल्पितश्रुतिमूलकशेषशेषिभावस्यान्यथाज्ञातुमशक्यत्वादिति। प्रकृतमनुसरामः।

ये तु[१] वदन्ति अद्वैतब्रह्मलिङ्गानि न्यायान्तरसापेक्षाणि, वैदिकलिङ्गत्वादर्थवादगतलिङ्गान्तरवदित्यनुमानं न युक्तम्, तदर्थतात्पर्याभाववत्त्वस्योपाधित्वात्। तथाहि "इति ह स्माह वषट् कुर्वाणो माषानेव मह्यं पचेतेत्यादेरर्थवादगतलिङ्गस्य 'अयज्ञिया वै माषा' इत्यादि विरोधान्माषाणां यज्ञियत्वे तात्पर्याभावः" इति, तल्लिङ्गेन माषाणां यज्ञियत्वं न कल्प्यते, ब्रह्म-

१. यत्तु—ख।

लिङ्गानां त्वनन्यशेषतया स्वार्थ एव तात्पर्यम्, "तुल्यं च साम्प्रदायिकम्" इति न्यायेन नैरर्थक्यानुपपत्तेः, विध्यन्तरशेषतायां च प्रमाणाभावात्। अतः प्रत्यक्षाद्युपमर्दनैव तेषां प्रवृत्तिः। अत एव क्वचिल्लिङ्गस्य स्वार्थकल्पकत्वं क्वचिन्नेत्यपि पूर्वमीमांसकानामुद्घोषः। तथाहि "द्विरैन्द्रवायवस्य भक्षयतीति द्विर्ह्येतस्य वषट् करोतीति"। हि शब्दोपनिबन्धेन सन्निधिना च वषट्कार-भेदस्य भक्षणावृत्तिं प्रति हेतुत्वं गम्यते। ततश्च श्रुतहेतुत्वान्यथाऽनुपपत्त्या [1]'यत्र कर्मभेदः तत्रैकस्मिन् शेषे शेषिकर्मावृत्तिरिति व्याप्तिः कल्प्यते। ततश्च "इन्द्राय रथन्तराय निर्वपति, इन्द्राय वा हन्तवे" इत्यादि[1] वषट् कर्मातिम-कायां सर्वपृष्ठायामिष्टौ यथादैवतं निर्वापं कृत्वा प्रकृतिवदवघातपेषणे सहैव कृत्वा प्राप्तमपि विभागं वचनबलादकृत्वा सर्वैरेकमेव पुरोडाशं कृत्वा ततः सम तदुपर्यवदानं कृत्वा षट् प्रधानकर्माणि क्रियन्ते। तत्र प्रधानभेदादतिदेशप्राप्तस्यावदानादिशेषकर्मणः पृथगेवानुष्ठानम्। सर्वपुरो-डाशस्य सर्वार्थत्वे त्यक्तस्य पुनस्त्यागायोगात्तत्तदवयवस्यैव तत्तद्यागसाधन-त्वात्, तादृशावयवोत्तरार्द्धादवदीयमानस्य तच्छेषादेवावद्यत्वमिति भेदस्यैव न्याय्यत्वादिति प्राप्ते, उच्यते;

> सर्वसाधारणः शेषः, तस्मात्सकृदवद्यते।
> तावतैव हि सर्वेषां कृतं स्यादविशेषतः॥

होमदेशानां वचनबलाद्व्यवस्थितत्वेऽप्यवदानोत्तरमवशिष्टस्य पुरोडा-शभागस्य विशेषाभावात् प्रमाणाभावाच्च शेषकार्यं तन्त्रेण सकृदेव कार्यम्। ऐन्द्रवायवे तु वचनबलात्प्रतिकर्मभक्षभेदो न प्रधानभेदात्। प्रथमोपस्थितविध्युद्देशवदैन्द्रवायवपदवैयर्थ्यापत्तेर्विधेर्हेत्वनपेक्षत्वात् हेतुत्वस्य च स्तुतिं प्रत्येवोपयोगात्, द्विपदस्य लक्षणापत्तेश्च। अन्यथा सर्वपृष्ठायां भक्षणभेदालाभात्। न विधौ परः शब्दार्थ इति न्यायेन विधौ लक्षणाया अयुक्तत्वादिति स्थितं तृतीये। यत्र तु हेतुविधावपि न लक्षणा तत्र सोऽप्य-ङ्गीक्रियते एव। यथा आतिथ्यायामिष्टौ तु चतुर्गृहीतान्याज्यानि भवन्ति। न ह्यत्रानुयाजान् यक्ष्यन् भवतीत्यत्रानुयाजाभावश्चतुर्गृहीतत्रित्वविधिफली-भूतायामष्टगृहीतगतग्रहणचतुष्कनिवृत्तौ हेतुरेव। अतो यत्रानुयाजाभाव-स्तत्र चतुर्गृहीतत्रित्वमिति विधिः कल्प्यते। अत आतिथ्याव्यतिरिक्तायामपि खण्डेष्टौ अनुयाजाभावाच्चतुर्गृहीतत्रित्वमेव बहुवचनबलादनुयाजत्वाव-

१—१. नास्ति—क।

च्छिन्नप्रतियोगिताकाभावस्य हेतुत्वलाभादवभृथे "अबर्हिषोऽनुयाजान् यजति" इति वचनेन बर्हिरनुयाजमात्राभावेऽपि न तथेति दिक्।

अत्रेदं वक्तव्यम्—मानान्तरविरुद्धार्थतात्पर्याभाववत्त्वस्य साध्यतया तादृशस्यैवोपाधित्वानुपपत्तिः। साध्यं हि नोपाधिः, साधनव्यापकत्वात्। उपाधिव्यभिचारेण साध्यव्यभिचारे साधनीये साध्याविशेषापत्तेरनुमानमात्रोच्छेदापत्तेश्चेति सिद्धान्तात्। यथाश्रुततात्पर्याभाववत्त्वं चोक्तसाध्ये नोपाधिः। तात्पर्यवत्यप्यर्थे मानान्तरविरुद्धत्वाभावप्रयुक्तयथोक्तविशिष्टाभावसत्त्वेन साध्याव्यापकत्वात्। ब्रह्मण एव तल्लिङ्गेषु प्रतिपिपादयिषितत्वेनाद्वैतांशे[1] तात्पर्यस्य तद्बलादेव वक्तुमशक्यत्वात्। अनुल्लिखितार्थविशेषतात्पर्याभावस्य साध्यव्यभिचाराद्यनुन्नायकत्वात्। सतात्पर्यकेऽपि वाक्येऽर्थान्तरविषयकतात्पर्याभावसत्त्वात् तस्य सर्वसाधारण्यात्। अत एव शब्दालोकेऽप्युक्तम्—"न तावदनुल्लिखितार्थविशेषं सदर्थकं संभवितार्थं न वेतिसंशयज्ञानमुत्पत्तुमर्हति। क्वचिदर्थे वाक्यानां बाधेन क्वचिच्चाबाधेन द्वयी कोटिरविरोधिन्येवेति सन्देहानुपपत्तेः" इति। एवञ्च प्रकृतेऽपि तात्पर्याभावाभाववद्वृत्तित्वरूपेण यथोक्तोपाधिव्यभिचारेण हेतौ साध्यव्यभिचारो नोन्नेतुं शक्यः, किञ्चित्तात्पर्यकिञ्चित्तात्पर्याभाववत्त्वेनासिद्धेरित्यास्तां विस्तरः।

यत्तु अपच्छेदन्यायेन वेदस्य प्राबल्यम्, तथाहि[2] षष्ठपञ्चमे विभागश्रुते प्रायश्चित्तं यौगपद्येन विद्यत इत्यधिकरणे विचारितम्[2], ज्योतिष्टोमेऽध्वर्यादिकमिश्रुतगात्प्रस्तोत्रादीनां बहिःपवमानस्तोत्रार्थं गमनमुक्तम् "अध्वर्युं निष्क्रामन्तं प्रस्तोता तमनुयान्तं प्रतिहर्ता तमुद्गाता तं यजमान" इति। तत्र च विच्छेदे सति प्रायश्चित्तं श्रूयते। "यदि प्रस्तोतापच्छिद्याद् ब्रह्मणे वरं दद्याद्यदि प्रतिहर्ता सर्ववेदं वरं दद्याद्यदि उद्गाताऽदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत। तत्र तद्द्याद्यत् पूर्वस्मिन्दास्यन् स्याद्" इति। तत्रोभयक्रियाजन्ये वच्छेदे प्रायश्चित्तमस्ति न वेति संशये उभाभ्यां क्रियमाणस्य विच्छेदस्यान्यतरकर्तृकत्वेन व्यपदेशानर्हत्वादन्यतरकर्तृव्यवच्छेदरूपनिमित्ताभावात्तन्नैमित्तिकं प्रायश्चित्तं नास्तीति प्राप्ते—

स्यादेवम्, यदि कर्तृत्वं सापेक्षमुभयोर्भवेत्।
एकैकस्य तु यत्नेन निरपेक्षेण जायते॥

---

१. अद्वैततात्पर्यांशे—ख। २—२. नास्ति—क।

विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः ।
कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥ इति सिद्धान्तः ।

तदुत्तरश्च "तत्र विप्रतिषेधाद्विकल्पः स्यात्" इत्यधिकरणे निरूपितम् । प्रतिहर्त्र्युद्गात्रोर्युगपदपच्छेदे पूर्वोक्तरीत्या प्रायश्चित्तद्वयमापतति, तयोस्समुच्चयो विकल्पो वेति संशयः, विकल्पस्याष्टदोषदुष्टतया द्वयोः समुच्चयः । न चादाक्षिण्यसर्वस्वदानयोर्विरोधः, पुनः प्रयोगे सर्वस्वदानस्य शक्यत्वादिति पूर्वपक्षः । सिद्धान्तस्तु, यत्र प्रयोगे निमित्तोत्पत्तिस्तत्रैव नैमित्तिकं प्रायश्चित्तमङ्गम्, प्रयोगान्तरे च क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यमनुपपन्नम् । अतः एकत्रैव प्रयोगे द्वयोः प्रसङ्गात्तत्रादाक्षिण्यसर्वस्वदानयोर्विरोधेन समुच्चयासंभवाद्विकल्प एवेति "तदनन्तरश्च पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवद्" इति सूत्रे स्थितम् । यत्रानुपूर्व्येणोद्गातृप्रतिहर्त्रोरपच्छेदो भवति, तदा किं पूर्वोत्पन्नावच्छेदनिमित्तकं प्रायश्चित्तं कार्यमुतोत्तरोत्पन्ननिमित्तकमिति संशयः, तत्रासंजातविरोधतया पूर्वनिमित्तस्य बलवत्त्वात्तदेव कार्यम्, उत्तरस्य तद्विरोधेनावगन्तुमशक्यत्वादिति पूर्वपक्षः । सिद्धान्तस्तु, न ह्यत्र पूर्वज्ञानेनोत्तरज्ञानस्योत्पत्तिनिरोधः, प्रत्यक्षवाक्येन स्वशाब्दबोधस्यावश्यमुत्पादनात् । तत्रोत्तरज्ञानं जायमानं पूर्वज्ञानमनुपमृद्य नोत्पत्तुमीष्टे, पूर्वज्ञानबाधश्च नानुत्पत्तिस्वरूपः तस्योत्पन्नत्वात् । किन्तु तत्राप्रामाण्यज्ञानासञ्जननरूपः । पूर्वज्ञानकाले तु तद्विरोधिन उत्तरज्ञानस्यानुपस्थित्या न तस्योत्तरज्ञाने भ्रमत्वज्ञापनरूपोपमर्दक्षमत्वमिति वैषम्यम् ।

तदुक्तम्—

पूर्वं परमजातत्वादबाधित्वैव जायते ।
पूर्वाबाधेन नोत्पत्तिरुत्तरस्य तु सेत्स्यति ॥ इति ।

नैमित्तिकशास्त्रस्य वायमर्थः प्रागन्यथाकर्तव्योऽपि क्रतुनिमित्तसत्त्वेऽन्यथाकर्त्तव्य इति । ततश्च यथा ज्योतिष्टोमदक्षिणाया नित्यद्वादशशतज्ञानमुत्पन्नं पाश्चात्येन न नैमित्तिकसर्ववेदसदानादिज्ञानेन बाध्यते । एवं पूर्वनैमित्तिकमप्युत्तरनैमित्तिकेन बाध्यत इति । एवमत्रापि श्रौतेन चरमोत्पन्नेनाद्वैतज्ञानेन । अत एवेदं रजतमिति ज्ञानं बाधित्वा नेदं रजतमित्यादेरुत्पत्तिः । यत्र तूत्तरज्ञानोत्पत्तौ पूर्वज्ञानापेक्षा तत्र पूर्वमेव बलीयः । तदुक्तम्—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत् ॥

इति पूर्वोत्पन्नप्रत्यक्षात्मकद्वैतज्ञानस्य बाधो द्रष्टव्य इति। तदपि चिन्त्यम्; तत्र पूर्वोत्पन्ननैमित्तिकस्य यत्र स्वोत्तरं विरुद्धनैमित्तिकप्रयोजकनिमित्तस्य नोत्पत्तिस्तत्र सावकाशत्वात्, अत्र च द्वैतप्रत्यक्षस्य विषयान्तराभावेन वैषम्यात्। न हि प्रमाणप्राप्तस्यात्यन्तं बाधो युक्तः। यत्तु व्यावहारिकप्रामाण्ये प्रत्यक्षस्य सावकाशत्वमिति, तदसत्; व्यावहारिकपारमार्थिकत्वरूपप्रामाण्यभेदस्याद्ययावदसिद्धतया तद्विषये सावकाशत्वायोगात्। न हि प्रकृते वेदस्य प्रत्यक्षापेक्षया प्राबल्यसिद्धेः पूर्वं प्रत्यक्षस्यान्यस्य वा व्यावहारिकं प्रामाण्यं कुत्रचित्क्लृप्तमस्ति। अत एवोक्तं प्रामाण्यमात्रस्य तात्त्विकस्य स्वीकारादिति। यत्तु श्रुतिप्रत्यक्षयोः तात्त्विकप्रामाण्यविरोधे श्रुतेरतात्त्विकप्रामाण्यस्यासम्भवात्प्रत्यक्षस्यैवातितात्त्विकं प्रामाण्यमित्युक्तत्वात्, तत्र प्रतिकूलतर्कमप्रदर्श्य तदस्वीकारमात्रस्याप्रयोजकत्वादिति, तदप्यत एव परास्तम्, उत्तरस्योक्तत्वात्।

एतेन "प्रत्यक्षस्योपजीव्यत्वेन प्राबल्यमाशङ्क्य यदुपजीव्यते व्यावहारिकं सत्त्वं तदद्वैतश्रुत्या न बाध्यते, यच्च बाध्यते पारमार्थिकं सत्त्वं तदुपजीव्यम्" इति वाचस्पत्युक्तसमाधानमप्यपास्तम्। अत एव वर्णपदविभक्तितदर्थभेदोपजीवनीनामद्वैतश्रुतीनामुपजीव्याभिर्भेदबुद्धिभिर्बाधः स्यात्। एकमेवेत्येवकारव्यवच्छेद्येनाद्वितीयमिति द्वितीयेन नानेति नानार्थेन किञ्चनेत्यनेन बहुना विनानुपलभ्यमानेन व्याघात इत्याशङ्क्य—

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।
विरोधादुपजीव्येन न बिभेति कदाचन॥

इति खण्डनमपि परास्तम्। प्रमाणान्तरसिद्धे हि विषये सावकाशत्वं हीनबलतायां प्रयोजकं न तु बाधकत्वेन स्वकल्पितप्रामाण्यानुरोधमात्रेण बाध्यस्य विषयान्तरं कल्पयित्वा तद्वक्तुं शक्यम्, अतिप्रसङ्गात्। ततश्च व्यावहारिकप्रामाण्यसिद्धौ तत्र चरितार्थस्य प्रत्यक्षस्याद्वैतश्रुत्यपेक्षया दौर्बल्यम्, तत्सिद्धौ च व्यावहारिकप्रामाण्यसिद्धिरिति परस्पराश्रयं दुर्वारम्, अन्यथा तुल्यत्वानुमितेरप्यबाध्यत्वापत्तेः।

यत्तु, अनौष्ण्यं तात्त्विकं स्यादिति कोऽर्थः, यदि तत्त्वतः औष्ण्यं नास्तीति, तदा अद्वैतपर्यवसानादिष्टापत्तिः। अथ व्यवहारतोऽपि नास्तीति तदा व्यवहाराविसंवादिरूपपरीक्षाविशिष्टमौष्ण्याप्रत्यक्षं बाधकमिति, तदसत्; [1]उष्णत्वाभावस्तात्त्विकः स्यादित्यस्यापत्त्यर्थत्वात्[1]। अत एव—

---

१–१. नास्ति–ख।

तात्त्विकादित्यतां यूपस्याश्रित्य शरणं श्रुतिः ।
विरोधादुपजीव्येन न बिभेति कदाचन ॥

इति प्रतिबन्दिरप्यनवद्यैव । एतेन—

"तत्परत्वात्परत्वाच्च निर्दोषत्वात्त्ववैदिकम् ।
पूर्वस्य बाधकं नायं सर्प इत्यादिवाक्यवत् ॥"

**इत्यानन्दबोधोक्तमपि** निरस्तम् । तदाहुः—

तत्परत्वमसिद्धत्वात्परत्वं व्यभिचारतः ।
निर्दोषतान्यथासिद्धेः प्राबल्यं नैव साधयेत् ॥ इति ।

प्रत्यक्षबाधिते तात्पर्यस्यैव दुर्ग्रहत्वात् तत्परत्वञ्च प्रमान्तरभ्रमे व्यभिचारि, मानान्तराबाधितत्वविशिष्टं परत्वञ्च प्रकृते नास्त्येव प्रत्यक्षबाधस्योत्कटत्वात् । निर्दोषत्वं तु अबाधितार्थप्रामाण्येनान्यथासिद्धम्, नहि प्रत्यक्षादिविरुद्धार्थतात्पर्यकत्वव्याप्यं निर्दोषत्वमिति भावः ।

यत्तु नैतद्युक्तं प्रत्यक्षस्यानिश्चिततात्त्विकप्रामाण्यकत्वेन व्यावहारिकप्रामाण्ये सावकाशत्वेन च तात्त्विकप्रामाण्यं विना निरवकाशत्वादिना श्रुत्यबाधकत्वाद्, अन्यथा अन्यतरस्यैव तात्त्विकप्रामाण्यनिश्चयेन बाधकनिश्चये तत्परत्वरूपावच्छेदन्यायानुसरणस्य वैफल्यात्, तस्मात्परीत्यान्यतरस्यापि तदनिश्चयान्मद्रीत्या श्रुतेस्तन्निश्चयेऽपि प्रकारान्तरेणापि श्रुतौ तन्निश्चयाय तदनुसरणादिति, तदपि चिन्त्यम्; व्यावहारिकप्रामाण्यस्य मानान्तरासिद्धतया तत्र सावकाशत्वस्य निरस्तत्वात् । नापि तात्त्विकप्रामाण्यव्यतिरेकेण श्रुतेर्निरवकाशत्वम्, श्रुतित्वावच्छेदेन तथात्वस्य त्वयाप्यनभ्युपगमात् । "प्राक् च तथाभूतात्मज्ञानात्प्रवर्त्तमानं शास्त्रमविद्यावद्विषयकत्वं नातिवर्त्तते" इति **भगवद्भाष्यदर्शनेन** स्वर्गकामादिश्रुतीनां व्यावहारिकस्यैव प्रामाण्यस्य स्वीकृतत्वात्, अद्वैतश्रुतीनामेव तात्त्विकं प्रामाण्यमित्यस्य वाद्वैतश्रुतिबलमात्रेण कल्पयितुमशक्यत्वात् । एतेन निर्दोषत्वमपि नान्यथासिद्धम्, तात्पर्यविषय एव प्रामाण्यस्याभ्युपेयत्वादित्यपि परास्तम्, प्रत्यक्षविरोधेन तात्पर्यविषयत्वस्यैवाद्वैते दुर्ग्रहत्वात् । अपि च श्रुतीनामविरुद्धार्थपरत्वेऽपि तात्त्विकमेव प्रामाण्यम्, प्रत्यक्षस्य तु अर्थान्तरपरत्वेन प्रामाण्यमत्यन्तमेवानुपपन्नम् । तस्योल्लिख्यमानार्थातिरिक्तार्थविषयत्वोपपादयितुमशक्यत्वात् । अत उभयोस्तात्त्विकप्रामाण्यरक्षणार्थं श्रुतीनां गौण्यादिनार्थव्याख्यानेऽपि न कोऽपि

दोषः । अन्यतरस्याप्रामाण्यापरपर्यायव्यावहारिकप्रामाण्यकल्पनानुपपत्तेः, विनिगमकस्य चोक्तत्वात् ।

वस्ततस्तु परत्वं व्यभिचारत इत्यस्य परत्वस्याव्यवस्थितत्वादित्यर्थः । दृष्टान्ते हि प्रतिहर्त्रपच्छेदानन्तरं तत्प्रयोगव्यक्तौ नोद्गातुरपच्छेदः सम्भवतीति नियमतः पूर्ववर्त्युद्गात्रपच्छेदनिमित्तकस्य तेन बाधः । दार्ष्टान्तिके तु श्रौतशाब्दबोधानन्तरमपि सत्त्वप्रत्यक्षस्योत्पत्तिसम्भवादनियतपौर्वापर्यकत्वेन कथं प्रत्यक्षस्यैव बाधः ? अत एवेदं रजतमित्यादेर्नेदं रजतमित्यादेश्च ज्ञानव्यक्तेरव्यवस्थित एव बाध्यबाधकभावः, परन्तु विषयसत्त्वासत्त्वाभ्यां मानान्तरेण बाधबुद्धेः प्रमात्वभ्रमत्वग्रह इत्येव विशेषः ।

न चात्राद्वैते वेदतात्पर्यविषयत्ववादिभिरपि तद्दोषोत्तरं सत्त्वप्रत्यक्षं स्वरूपेणापि न जायत इति वक्तुं शक्यम्, पश्वादिभिश्चाविशेषादिति **भगवत्पादा**दिभिरेव तत्त्वज्ञानानामपि व्यवहारे लौकिकेभ्यो विशेषविरहस्योक्तत्वात् । न त्वद्वैतज्ञानस्य सत्त्वप्रत्यक्षं प्रति कारणीभूताभावप्रतियोगित्वरूपं बाधकत्वं नोपगम्यते, किन्तु शङ्खः पीत इत्यादेरिव भ्रमत्वज्ञापकत्वरूपमेवेति चेत्, न; पूर्वमेव निरस्तत्वात् । अतोऽद्वैतशाब्दद्वैतप्रत्यक्षयोः बाध्यबाधकभावसाम्ये प्रमाणान्तरेण तत्र प्रमात्वादिनिर्णये कल्पनीये उक्तरीत्या द्वयोरेव तात्त्विकप्रामाण्यकल्पनं युक्तम् । न त्वत्राऽपच्छेदन्यायावकाशः, व्यवस्थितपौर्वापर्यस्थल एव तत्प्रवृत्तेः । [1]अत एव स्वरूपमात्रेण परत्वमप्रयोजकम्, आर्थिकस्यैव तस्य नियामकत्वात्, इत्याशयेन "मृडमृदगुधकुषक्लिशवदवसः क्त्वा" इति पूर्वेणापि "न क्त्वा सेट्" इति परस्य बाध इति दृष्टान्तः । स्वभावसिद्धकित्त्वस्य निषेधं विना तत्प्रतिप्रसवार्थं मृडेत्यादेः प्रवृत्त्युपयोगादित्यलं बहुना[1] । वस्तुतः पूर्वानपेक्षे सत्येवोत्तरस्य बलवत्त्वम्, अन्योऽन्यनिरपेक्षाणामिति स्वष्टमुक्तत्वात्, श्रुतेस्तु प्रत्यक्षसापेक्षत्वमेवेति न प्राबल्यम् तस्मादपच्छेद[2] न्यायोद्भावः प्रतारणमात्रं वैषम्यस्य दुरपह्नवत्वात् ।

न चैवं प्रतियोगिज्ञानस्योपजीव्यत्वापादनात् प्रत्यक्षस्य दौर्बल्यापत्तेरिति वाच्यम्; तज्ज्ञानविषयस्य रजतादेर्देशान्तरे सत्येन तस्यात्यन्तमनपवादादित्यलं बहुना[2] । एतेनाद्वैतश्रुतेर्लक्षणयार्थान्तरपरत्वेऽपि सावकाशत्वं नतु प्रत्यक्षस्य, अतः सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायेन प्रत्यक्षस्य बलवत्त्वमित्यनूद्य यद्दूषणमुक्तं, सावकाशत्वं हि विशेषविषया-

१–१. नास्ति–क । २–२. नास्ति–ख ।

दन्यत्र स्वारसिका प्रवृत्तिर्न तु लक्षणादिरूपोपमर्दप्रयुक्ता। वस्तुतः श्रुतेरप्यनवकाशत्वमेवानन्यपरत्वात्। किंच "नेह नानास्ति किंचन" "नात्र काचन भिदा" "इदं सर्वं यदयमात्मा" इत्यादौ किमादिसर्वनाम्नां विशेषरूपेण बोधकत्वात्।

न पुण्यपापे मम नास्ति नाशो, न जन्मदेहीन्द्रियबुद्धिरस्ति।
न भूमिरापो मम वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरञ्च॥

"अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवायु······"
"अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यद्"

इत्यादिश्रुतौ विशेषवाचकपदयोगात् पृथिवी मिथ्येत्यादिविशेषानुमानाच्च श्रुत्यादीनामपि विशेषरूपेण मिथ्यात्वविषयत्वाद्विशेषरूपेणैव सत्यताविषयकप्रत्यक्षबाध्यत्वशङ्कानुपपन्नेति, तत्परास्तम्। यथाश्रुतार्थमादाय विशेषविषयकत्वसाम्येऽपि लक्षणागम्यार्थमादाय श्रुतेः सावकाशत्वानपायात्। अनन्यपरत्वस्य चासिद्धत्वात् प्रमाणतावच्छेदकशब्दत्वसामानाधिकरण्येन कृतस्य लक्षणाश्रयस्यापेक्षयाक्लृप्तस्य व्यावहारिकादिप्रामाण्यभेदस्य कल्पनया प्रत्यक्षस्य सावकाशीकरणमित्युक्तेरनुपपत्तेः। उक्तञ्च **भगवत्पादैर्गीताभाष्ये**—"न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवत्प्रामाण्यमुपेयात्, यदि ब्रूयात् शीतोऽग्निरप्रकाशो वेति, तथाप्यर्थान्तरे श्रुतेर्विवक्षितं कल्प्यं प्रामाण्यान्यथानुपपत्तेः" इति। अत एव नेह नानेत्यादेर्विशेषरूपेण मिथ्यात्वबोधकत्वमित्यपास्तम्।

अपुण्यमित्यादेश्चात्मनि पुण्यादौ सम्बन्धनिषेधपरत्वान्ममेति षष्ठ्या सप्तम्यर्थत्वे मानाभावात्। पुण्यादिमिथ्यात्वबोधने तात्पर्याभावात्। यदपि प्रत्यक्षायोग्यस्यैव भूम्यादेर्निषेधोऽतः प्रत्यक्षश्रुत्योर्भिन्नविषयत्वमित्याशङ्क्योक्तम्—"अदृष्टमव्यवहार्य्यमतीन्द्रियम्" इति। **नृसिंहतापनीयश्रुतौ** "अशरीरं शरीरेषु" "अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः" "अप्राणो ह्यमना" इत्यादिश्रुतिषु प्रत्यक्षविषयत्वादिरूपदृष्टत्वादिना निषेधस्याफुटत्वात्।

न चादृष्टमित्यादिकं तत्पुरुष इति वाच्यम्; अन्तःप्रज्ञमित्यादिबहुव्रीहिप्रायपाठादबहुव्रीहित्वस्याविनिगम्यत्वाच्चेति, तदप्यसत्; अदृष्टमित्याद्येकवाक्यतया दृष्टत्वरूपप्रत्यक्षविषयत्वस्य निषेधप्रतियोगितावच्छेदकत्व-

स्वीकारे तदविषयस्य भूम्यादेर्मिथ्यात्वासिद्धिप्रसंगात्। प्रायःपाठस्य च निर्णायकान्तरे सत्यप्रयोजकत्वात्। अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया पूर्ववर्त्तिपदार्थप्राधान्येन तत्पुरुषस्यान्तरङ्गत्वात्। उभयत्राप्यतिरिक्तशक्तिस्वीकारपक्षेऽपि तादृशलाघवस्यादरणीयत्वात्। अन्यथा निषादस्थपत्यधिकरणन्यायविरोधात्। तथा च **वैयाकरणै**रुक्तम्—

पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम्॥

यदप्यौत्सर्गिकप्रामाण्यस्य प्रत्यक्षेऽपि निश्चयावश्यकत्वात् सामान्यविशेषन्यायेन प्रत्यक्षस्य प्रामाण्यबाधो न युक्त इति पक्षमनूद्य दूषणमुक्तम्, औत्सर्गिकत्वादेव दोषसत्त्वेऽपवादादन्यथौत्सर्गिकत्वहानेरिति, तदपि चिन्त्यम्; न ह्यौत्सर्गिकस्य हानिस्तादवस्थ्यात्, न ह्यत्यन्तमेवानवकाशमुत्सर्गत्वमप्यनुभवितुमर्हतीत्याग्रहमपहाय विभावनीयम्। अत एव बाध्यतावच्छेदकरूपावच्छिन्नस्यापि क्वचिन्नापवादेन बाधो यत्र बाधकतावच्छेदकरूपमन्यथासिद्धम्, यथा "तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" इति तातङादेशान्न "ङिच्च" इति सूत्रेणान्तादेशत्वप्राप्तापि अनन्यार्थ[१] ङित्यकेषु अनङादिषु ङिच्चेत्यपवादस्य चरितार्थत्वाद् गुणप्रतिषेधाद्यर्थतया सम्भवं ङित्यके तातङि मन्थरं प्रवृत्तत्वाद् "अनेकालशित्सर्वस्य" इति सूत्रेण सर्वादेशत्वमेव। उत्सर्गापवादयोः समबलत्वादिति सिद्धान्तः। एतावाँस्तु विशेषो यत्तत्र बाधकत्वाभिमतस्य सम्भवत्कार्यान्तरनिमित्तकत्वादन्यथासिद्धत्वम्, प्रकृते त्वर्थान्तरतात्पर्यकल्पनादिति। अत एव **ऐतरेयब्राह्मणम्**—"तस्माद्दीक्षितेन सत्यमेव वदितव्यमथो खल्वाहुः। कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सर्वं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं विद्ध्येतेन पश्यतीत्येतद्धि वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति सपद्यदर्शमित्याहाथास्मै श्रद्दधाति यद्यु वै स्वयं पश्यति न बहूनां च नान्येषां श्रद्धधाति तस्माद्विचक्षणवतीं वाचं वदेत्सत्योत्तरा ह्यस्य वागुदिता भवति" इति।

यत्तु यदि चक्षुरेव मानान्तराद् बलवत्तदा त्वगाद्यपेक्षयाऽपि बलवत्स्यात्। यदि चक्षुःसंवादिवदनमेव सत्यं तदा त्वगादिसंवादि सत्यं न स्यात्। चक्षुःपदस्य प्रत्यक्षापरत्वेऽप्यतीन्द्रियादिविषये निर्दोषानुमानादिसंवादि-

१. अन्यूनार्थं ङिच्चे—ख।

वदनमेव सत्यं न स्यादिति, तन्न; अन्यथासिद्धप्रत्यक्षस्य तद्विषयकविपरीतार्थ-कमानान्तराद् बलवत्त्वे श्रुतेस्तात्पर्यात्। एतेन व्यावहारिकसत्यत्वपरतया सत्यपदव्याख्यानमप्यपास्तम्, तदसिद्धेरुक्तत्वाच्च। तस्मादयमर्थः सत्यं प्रमाजनकमेव वाक्यं वक्तव्यम्।

नन्वेतदयुक्तं भ्रममूलकवाक्यस्यापि प्रयुज्यमानत्वात्। वाक्यप्रयोग-हेतुभूतज्ञानस्य प्रमात्वनियमाभावात्, इत्याशङ्कते—**अथो खल्वाहुरित्यादि**। स्वयमन्यथागृहीत्वा प्रतारणार्थंवाक्यं न प्रयोक्तव्यमित्यभिप्रायेण समाधत्ते-**विचक्षणवतीमित्यादि**। प्रत्यक्षसंवादिनीमित्यर्थः। तत्र भ्रमः प्रमा वास्त्वित्यत्र नादरः। परस्यान्यथाबोधो भवत्वित्येतादृशेच्छापूर्वकवाक्यप्रयोक्तुरेव प्रतारकत्वात्।

ननु तथापि सत्यवचनानिर्वाहितादवस्थ्यमत आह—**चक्षुर्वा** इत्यादि। तथा च प्रत्यक्षस्यैवंविधं प्रामाण्यं येन तदनुसारिणोऽसत्यवाक्यस्यापि न दोषजनकत्वमतः सर्वप्रमाणापेक्षया उक्तविषये तस्य बलवत्त्वमिति भावः। अत एव च **वृहदारण्यके**ऽपि श्रूयते—"तस्माद्यदिदानीं द्वौ विवदमानावेया-तामहमद्राक्षमहमश्रौषमिति। य एवं ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्धध्याम" इति। अत्र शब्दापेक्षयाऽपि प्रत्यक्षस्य प्रामाण्यं स्पष्टमेवोक्तम्। अतः परं प्रकृतमनुसरामः।

यत्तु मिथ्यात्वा[१]नुमानमधिकृत्यानुमानापेक्षिताशेषार्थग्राहकत्वेन प्रत्यक्षस्योपजीव्यत्वात्प्राबल्यम्, तच्च पक्षादेरैन्द्रियकत्वे, साक्षादतीन्द्रियत्वे तु परम्परयेत्येतावान् भेदः। दृष्टं चापेक्षितैकदेशग्राहिणामप्युपजीव्यत्वं सद्विरुद्धग्राहिणस्तस्य बाधश्च पश्चाद् घटविभुत्वानुमाने पक्षग्राहिणेन्द्रि-येण, नरशिरःशुचित्वानुमाने साध्यग्राहिणागमेन, मनोवैभवानुमाने ज्ञानास-मवायिकारणसंयोगाश्रयत्वरूपहेतुग्राहकेणानुमानेन। प्रकृते त्वनुमानापेक्षित-सर्वार्थग्राहकप्रत्यक्षेण तद्बाधस्यात्यन्तं सुलभत्वात्।

न चैवं श्रुत्यपेक्षया प्राबल्यं चक्षुरादेर्न स्यादिति वाच्यम्; शब्दतज्जन्य-ज्ञानतत्प्रामाण्यादेश्चक्षुराद्यग्राह्यत्वेऽपि तद्ग्राहकश्रोत्र[२]साजात्येन चक्षुरादेरपि प्राबल्यसम्भवात्। अत एव नरशिरःशुचित्वानुमानोपजीव्यव्याप्तिग्रहोपयुक्त-शङ्खनिष्ठशुचित्व[३]प्रतिपादकागमसजातीयस्य "नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेद्" इत्यागमस्य तदनुमानापेक्षया प्राबल्यमिति पक्षमनूद्य

१. त्वदनु°—क। २. श्रोत्रादि—क। ३. शुचिता—क।

दूषणमुक्तम्—"स्वरूपमात्रमुपजीव्यम्, तच्च न बाध्यते। बाध्यत्वं बाधितार्थविषयकत्वं नोपजीव्यम्, तस्य कारणत्वे प्रवेशाद्" इति, तदपि पूर्वोक्तरीत्या परास्तं वेदितव्यम्।

यदप्याहुः अनुमितित्वावच्छेदेन न प्रत्यक्षोपजीवकत्वम्, अतीन्द्रियपक्षसाध्यहेतुकानुमितिविशेषस्य प्रत्यक्षानपेक्षोत्पत्तिकत्वात्। शब्दानुमानादिनैव तत्र व्याप्त्यादिधीसम्भवात्।

ननु किञ्चिद्विषयकप्रत्यक्षत्वावच्छेदेनापि नानुमित्युपजीवकत्वम्। न चानुमित्यात्मकविशेषणज्ञानजन्यप्रत्यक्षे तदिति वाच्यम्; विशेषणज्ञानहेतुताया अनङ्गीकारात्। किञ्चिद्विषयकानुमितित्वावच्छेदेन तु प्रत्यक्षोपजीवकत्वमस्त्येव, ऐन्द्रियविषयकानुमित्यादौ तदसम्भवात्। तथा च किञ्चिद्विषयकयज्जातीयप्रमासामान्यं यज्जातीयप्रमोपजीवकं तज्जातीयं तज्जातीयापेक्षया दुर्बलमिति नियमः। न च "दीपदश्चक्षुराप्नोति" इत्यादिवाक्यात् स्वेष्टसाधनत्वाद्यनुमितेः परम्परया चक्षुरादिप्रयोजकत्वात्प्रत्यक्षस्यैवानुमित्युपजीवकत्वाद्दौर्बल्यापत्तिः, अदृष्टाद्वारकस्योपजीवकत्वस्य निवेशादिति चेन्मैवम्; चक्षुर्घर्षणादिपक्षकेष्टसाधनत्वानुमितिप्रयोज्यचक्षुषैव यद्व्यक्तिविशेषस्य प्रत्यक्षं जातं, न तु पुरुषान्तरीयचक्षुषा, तत्तद्विषयकप्रत्यक्षत्वावच्छेदेनानुमित्युपजीवकत्वसम्भवात्। न च सविषयकान्यमद्वारीकृत्येत्यपि विशेषणं वाच्यम्; विशुद्धमातृपितृजन्यत्वविषयपरोक्षज्ञानसापेक्षब्राह्मणत्वादिप्रत्यक्षस्य तथाप्यवारणादिति।

तच्चिन्त्यम्; अतीन्द्रियविषयकानुमानेऽपि उपनयजन्यमानसव्याप्तिप्रत्यक्षस्यावश्यमपेक्षितत्वात्। शाब्दादिपरामर्शेऽपि पदप्रत्यक्षस्यापेक्षणीयत्वात्। तदुक्तं **दीधितिकृता**—"अनुमितयस्तु सर्वाः साक्षात्परम्परया वाच्या यदि प्रत्यक्षोपजीवकाः" इति। वस्तुतो मानसपरामर्शादेव सर्वत्रानुमित्यङ्गीकारादनुमितित्वावच्छेदेन प्रत्यक्षोपजीवकत्वं सुलभमिति विभावनीयम्। यद्वा यत्प्रमाविभाजकोपाधिर्यत्प्रमाविभाजकोपाधिमद्व्यक्तिनिष्ठस्वप्रमाणतावच्छेदकधर्मावच्छिन्नकारणताप्रतियोगिककार्यताशालिव्यक्तिवृत्तिः तज्जातीयं तज्जातीयापेक्षया दुर्बलम्। अस्ति च व्याप्तिज्ञानाख्यप्रमाणफलविभाजकोपाधिरनुमितित्वम्। इन्द्रियाख्यप्रमाणफलविभाजकोपाधिभूतजन्यसाक्षात्कारत्वाश्रयचाक्षुषाद्यात्मकपरामर्शनिष्ठव्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यताशालितदनुमितिव्यक्तिवृत्तिः। अतोऽनुमितिजातीयं प्रत्यक्षापेक्षया दुर्बलम्। साक्षात्कारत्वं तु न तथा, अनुमितित्वाश्रयव्यक्तिनिष्ठाया इन्द्रियत्वा-

वच्छिन्नकारणताया अप्रसिद्धेः। तदवृत्तिधर्मस्य तद्वृत्तिकारणतानवच्छेदकत्वात्। तथा च यत्प्रमाकारणतावच्छेदकं यत्प्रमाविभाजकोपाधिमद्व्यक्त्यवृत्ति तज्जातीयं तज्जातीयापेक्षया बलवत्। अस्ति चेन्द्रियत्वमनुमितित्ववद्व्यक्तिवृत्ति, व्याप्तिज्ञानत्वं तु साक्षात्कारत्वरूपप्रमाविभाजकोपाधिमच्चाक्षुषादिव्याप्तिज्ञानवृत्त्येवेति, न तथेति व्यभिचारः। यत्प्रमोपजीवकवृत्तित्वमप्युपाधिविशेषणं प्रकृतसंगतये देयमिति, तिष्ठतु तावत्, एतेन तात्त्विकत्वं कारणतायां न निविशते। तथा च **खण्डनकृद्भिरुक्तम्**—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्ववहिर्भूतसत्त्वासत्त्वकथा वृथा॥ इति।

अस्यायमर्थः—अनन्यथासिद्धत्वे सति कार्याव्यवहितप्राक्कालावच्छेदेन कार्यव्यापकत्वमेव कारणत्वम्, अन्यथासिद्धव्यभिचारिणोस्तावतैव वारणात्। सत्त्वांशस्य तु न तत्र निवेशो वैयर्थ्यादिति परास्तम्। कारणतायां तदप्रवेशेऽपि असत्त्वस्य बोधयितुमशक्यत्वमित्यस्यैवेदानीमुक्तत्वात्। पल्लवः पुरस्तात्।

एवमुपजीव्यत्वमूलकसन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति **महाभाष्योदाहृतन्यायविरोधोद्भावनमपि** साध्वेवेति बोध्यम्। तथाहि सन्निपातः सम्बन्धो लक्षणं निमित्तं यस्य तादृशो विधिः स्वप्रवृत्तिनिमित्तस्यार्थस्य विघाते निमित्तं न भवतीत्यर्थः। यथा शतानि सहस्राणीत्यत्र "ष्णान्ता षट्" इति सूत्रे उपदेशपदानुपादानपक्षे षान्ता नान्ता च संख्या षट्सञ्ज्ञा स्यादित्यर्थे शतसहस्रशब्दाभ्यां परस्परं "जश्शसोःशिः" इति शिभावे "शिसर्वनामस्थानम्" इति तस्य सर्वनामस्थानसंज्ञायां च सत्यां मत्वन्तस्याजन्तस्य च नपुंसकस्याङ्गस्य नुमागमः स्यात् सर्वनामस्थाने परे, इत्यर्थकेन नपुंसकम्, "नपुंसकस्य झलचः" इति सूत्रेण प्रकृत्यंशे च अकारानन्तरं नुमागमे शतन् सहस्रन् इति स्थिते, नकारान्तत्वे सति संख्यावाचकत्वरूपषट्संज्ञासम्पत्त्या "षड्भ्यो लुग्" इति सूत्रेण जश्शसोर्लोपः प्राप्नोति, स चोक्तन्यायेन वार्यते। शिसन्निपातकृतनुमागमेन नान्तत्वसिद्ध्या हि षट्सञ्ज्ञा प्रवृत्ता नुमागमनिमित्तस्य शिभावस्य लोपं न प्रवर्त्तयति, न ह्यत्र "प्रत्ययलोपे प्रत्ययलक्षणम्" इति न्यायेन शिलोपेऽपि स्थानिवद्भावेन निमित्तं तिष्ठत्येवेति कल्पयितुं शक्यम्। 'न लुमताङ्गस्य" इति सूत्रेण लुमताशब्देन लुका लुप्ते प्रत्ययलक्षणनिषेधात्, अग्निचिदित्यादौ तु क्विपो लुका लुप्तत्वाभावेन प्रत्ययलक्षणप्रवृत्त्या "ह्रस्वस्य पिति कृति तुक्" इति तुगागमो भवत्येवेति वैषम्यम्। एवं घुसञ्ज्ञासूत्रे उपादास्तेत्यत्र **भाष्यकारमते** एज्विषये वर्त्तमानमात्त्वं सिचोऽङ्कित्वमुपजीवति। **आत्वप्रयुक्तघुसंज्ञामादाय**

तत्र "स्थाघ्वोरिच्च" इति इत्वं प्राप्तं न भवति, सिचः कित्त्वापत्तेः। तत्र च गुणप्रतिषेधेन एज्विषयाभावेनात्वस्य निमित्तव्याघातात्। अत आत्वस्योपजीव्यं यदेज्विषयत्वं तस्योपजीव्यं यदकित्वं तद्विघातकं यदिदन्तस्य निमित्तभूतां घुसञ्ज्ञामादायात्वं न प्रवर्त्तयतीति स्थितम्। एवं प्रकृतेऽपि मिथ्यात्वधर्मिघटादिग्राहकप्रत्यक्षादिप्रामाण्यसन्निपातं निमित्तीकृत्य ततः प्रवर्त्तमाना विश्वमिथ्यात्वबोधकश्रुतिर्नोक्तसन्निपातविघातस्य निमित्तमिति।

यत्तु; नैतद्युक्तम्, प्रत्यक्षादेर्व्यावहारिकप्रामाण्यसम्बन्धस्योपजीव्यस्य श्रुत्या बाधाभावात् तात्त्विकप्रामाण्यसम्बन्धस्य श्रुत्या विघातेऽपि तस्याऽनुपजीव्यत्वादिति, तच्चिन्त्यम्; प्रामाण्यद्वैविध्ये मानाभावेन व्यावहारिकप्रामाण्यसम्बन्धस्योपजीव्यत्वासिद्धेः प्रपञ्चितत्वात्। यदप्युपजीव्यकं नोपजीव्यविघातकमित्येव सन्निपातन्यायार्थः।तस्य च बाधः स्फुट एव लोके उपजीवकेन वह्न्यादिना तृणादेर्विघाताद्। अत एव 'अचि ह्रस्वश्च वा इत्यकृत्वा 'ङिति ह्रस्वश्च' इति सूत्रद्वयकरणं सन्निपातपरिभाषाया ज्ञापकमिति **कौस्तुभे** उक्तम्। तन्न्यायस्य व्यभिचारित्वेऽपि यदनिष्पत्त्यर्थं क्वचिदादर इति तत्र भावोऽन्यथाज्ञापकानुसरणवैयर्थ्यात्। तस्मात्कल्प्यमानेऽर्थे उपजीव्यविरोधो दोषः। उपजीव्याविरोधेनैव कल्पनायाः प्रवृत्तेर्यथानुभवादिकारणत्वमुपजीव्यसंस्कारस्य कारणत्वेन कल्पनं तत्र विहितम्। यत्र तूपजीव्यविघातकत्वं मानान्तरे क्लृप्तं यथा वह्न्यादेस्तृणादिविघातकत्वम्, प्रत्यक्षेणाद्वैतश्रुतेः प्रत्यक्षविघातकत्वमुक्तमानेन क्लृप्तं तत्र तन्न दोषः। यथा न तौ पशाविति शास्त्रस्य पशावाज्यभागप्रापकत्वेनोपजीव्यातिदेशं प्रति विघातकत्वेऽपि यथा सर्वथा न तत्र विघातकत्वं तथा प्रत्यक्षादेः सत्यत्वविघातिकाप्यद्वैतश्रुतिर्व्यावहारिकसत्यतां न विहन्तीति; तदपि चिन्त्यमेव; वह्न्यादेस्तृणादिविघातकप्रत्यक्षस्येवाद्वैतश्रुतेः प्रत्यक्षविघातकत्वकल्पकस्य मानस्यानिरुक्तेः। न हि श्रुतिरेव तत्र मानं तस्यास्तद्विघातकत्वस्य श्रुतेर्विवादग्रस्तत्वात्। नाप्यनुमानं श्रुतेरद्वैततात्पर्यकत्वान्निश्चयदशायां तस्य प्रत्यक्षापेक्षया हीनबलत्वान्न तौ पशाविति दृष्टान्तश्च विषमः, न तौ पशाविति वाक्यं प्रकृतिवत्कुर्यादाज्यभागवर्जमित्यतिदेशवाक्यस्य तत्र कल्पनात्, अतिदेशस्याज्यभागातिरिक्ताङ्गमात्रविषयकत्वसिद्धेः। आज्यभागस्य पर्युदासप्रतियोगिनोऽतिदेशविषयीभूतानां चाङ्गान्तराणां मानान्तरसिद्धत्वात्। अतिदेशस्य प्रत्यङ्गव्यापारभेदाभावादेकव्यापारेणैव सर्वाङ्गप्रापकत्वाद्विशिष्याज्यभागप्रापकत्वाभावात्। यदि ह्येतद्वाक्यं तस्मात्तदातिदेशेनाज्यभागयोरपि तत्र व्याप्तिः स्यात्, सति त्वेतस्मिन्नतिदेशे ह्येतद्भिन्नविषयकत्वावधारणाद्। प्रकृते तु तदधिकरणपुरस्कारेणैव तत्सत्त्वप्रतिपादकप्रमाणस्य विषयान्तर-

परत्वे व्यवस्थापयितुमशक्यत्वात्, साधकप्रामाण्याभावसिद्धव्यावृत्तिकस्य बाधकप्रमाणविषयस्य वार्थस्य वैषम्यं नास्तीति ब्रह्मणापि दुर्वचत्वात्। प्रकृते तु बाध्यस्य तात्त्विकत्वस्योपजीव्यस्य च व्यावहारिकत्वस्य सत्यत्वनिष्ठस्य पूर्वमक्लृप्तत्वात्। ज्ञापकानुसरणस्य च लौकिकन्यायस्य व्याकरणे व्याश्रयणमित्येतदर्थत्वात्। "षदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इत्यादौ "णेरनिटि" इत्यादेः तथैव ज्ञापकत्वाश्रयणात्, "कष्टाय क्रमणे" इत्यादिनिर्देशान्यथानुपपत्त्या तु लक्ष्यानुरोधेन क्वचिन्न्यायोऽनाद्रियत इति नोभयत्रापि ज्ञापकानुसरणवैयर्थ्यमिति बोध्यम्। इदमप्यत्रानुसन्धेयम्—द्वैतग्राहिप्रत्यक्षतदुपजीवकानुमानकर्मकाण्डसगुणोपासनावाक्यादिरूपबहुप्रमाणानां बाधयाद्वैतवाक्यस्यैव प्रतीतार्थबाधो युक्तः। "भूयसामनुग्रहो न्याय्यः" इति न्यायात्।

यत्तु वदन्ति "विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्सधर्मत्वम्" इति न्यायस्य नायं विषयः। भूयोविषयकप्रमाणानुरोधेन स्वल्पविषयकप्रमाणबाध इत्येवैतन्न्यायशरीरम्। न त्वेकस्मिन्नेव विषये भूयसां प्रमाणानामनुरोधेन स्वल्पप्रमाणबाध इति। सर्वत्रैव शब्दानुमानाभासानां भूयसां सम्भवात्। भूयोविषयैकप्रमाणेन स्वल्पविषयबहुप्रमाणानामबाधापत्तेश्च। तथाहि—पञ्चदशरात्रे पञ्चदशसुत्याके सत्रविशेषेऽग्निष्टुन्नामकेऽहन्याग्नेयी सुब्रह्मण्या प्राप्ता। तस्य नामसाम्यादाग्नेयादग्निष्टुद्विकृतित्वात्तदुत्तराहे तु ज्योतिरायुरिति नामसाम्यादेकाहकाण्डोक्तज्योतिरादियागविकृतित्वादैन्द्री सुब्रह्मण्या प्राप्ता। अन्येष्वेकादशस्वहस्सु द्वादशाहविकृतित्वात्तदीया ऐन्द्री प्राप्ता। सुब्रह्मण्या च "इन्द्र आयाहि" इत्यादिनिगदविशेषः। तत्र सुत्याकालीनसुब्रह्मण्यापाठस्य दिनभेदेनानुष्ठेयत्वान्न सन्देहः। आतिथ्यान्ते उपसत्काले च सुब्रह्मण्यापाठस्य तन्त्रेण सर्वार्थत्वस्यैकादशे स्थापितत्वाद्विरोधप्रसक्तावग्निष्टुन्नामकस्य मुख्यत्वात् "तदीयैवाग्नेयी सुब्रह्मण्या कार्या" इति **प्रापय्यभाष्ये** सिद्धान्तितम्। भूयोऽनुग्रहार्थैव कार्येत्याग्नेयीप्रापकातिदेशस्यैकाहविषयकत्वादैन्द्रीप्रापकस्य तु चतुर्दशाहविषयकत्वादिति। अतः बहुविषयकत्वादेवात्र बाधो न तु बाधकबहुत्वादिति वैषम्यात्। प्रकृते तदुपन्यासो न युक्त इति, तत्रेदं चिन्त्यम्; बहुविषयकत्वेन बाधेऽपि बहुबाधापेक्षयैकबाधो न्याय्यः, इत्येव न्यायार्थो न तु विषयस्यैव च बहुत्वमिति[१]। विषयबाहुल्येऽपि बहुत्वस्यैव बाधनियामकत्वात्। तच्च विषयगतं बाधकगतं वा इत्यन्यदेतत्। अत एवावयवग्रन्थे स्थानस्थानिनोरुभयोरप्येकार्थ-

१. इत्यपि—ख

शक्तावन्यायश्चानेकार्थत्वमिति न्यायविरोध इति **मिश्रै**रुक्तम्। व्याख्यातं टीकाकृद्भिः—"यद्यप्येकस्य नानेकोऽर्थ इति न्यायार्थ इति, नानेकस्यैकार्थकत्वप्रतिक्षेपकत्वमिति न प्रकृतोपष्टम्भः, तथापि न्यायमूलं गौरवमित्युभयत्रापि तुल्यमित्यनेकस्य नैकोऽर्थः इत्यपि न्यायार्थ इति भवति। प्रकृतोपष्टम्भः" इति। **कल्पतरुकारै**रप्युक्तम्—"यथानेकार्थत्वमेकशब्दस्यान्याय्यमेवमेकार्थस्यान्याय्यमनेकशब्दत्वमित्यपि न्यायः, ततो ज्योतिष्टोमे ज्योतिःशब्दो नैकस्य कर्मणो वाचक इत्यर्थः"। अत एव बाधकबाहुल्यस्थलेऽपि विप्रतिषिद्धेत्यादिन्यायो बहुग्रन्थे लिख्यते। इति स्पष्टमेव स्मार्त्तादितत्तदनेकनिबन्धपरिशीलिनाम्। तथा चोत्तरमीमांसाद्वितीयप्रथमाधिकरणं दृष्टान्तयन् **माधव** आह—"प्रत्यक्षश्रुतिभिर्बह्वीभिरनुगृहीता बह्वयो **मन्वादिस्मृतयो** ब्रह्मणः कारणतामाचक्षते, साङ्ख्यस्मृतिस्त्वेकाकीनबला वेति दुर्बलत्वात् सैव बाध्या" इति। यदप्याहुः—विप्रतिषिद्धेत्यधिकरणोत्तरं मुख्यं वा पूर्वचोदनाल्लोकवदित्यधिकरणे चिन्तितम्। अध्वरकल्पासञ्ज्ञायामिष्टौ "आग्नावैष्णवमेकादशकपालं निर्वपेद्" "अपराह्णे सारस्वतीमाज्यस्य यजेत्" इति श्रूयते, तत्राद्य औषधद्रव्यकत्वाद् द्विदैवत्यत्वाच्चैन्द्राग्नविकारः, ऐन्द्राग्नस्यापि वैकल्पिकद्वादशकपालवत्त्वाच्च, अतस्तस्य दार्शिकं तन्त्रम्। द्वितीयस्त्वाज्यद्रव्यकत्वादुपांशुयाजविकार इति, आद्यस्य पौर्णमासिकं तन्त्रम्। अत आज्यभागमन्त्रहविरभिमर्शनमन्त्राणां विरोधः प्राप्तः। "चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्याम्" इति वाक्येन द्वितीयायाः सप्तम्यर्थबोधो न "पृथिवी होता द्यौरध्वर्यू रुद्रोऽग्नीत बृहस्पतिरुपवक्ता" इति चतुर्होतृमन्त्रस्य पौर्णमासीहविरभिमर्शने "अग्निर्होता अश्विनावध्वर्यू त्वष्टानग्नीत् मित्र उपवक्ता" इति पञ्चहोतृमन्त्रस्यामावास्याहविरभिमर्शने विहिततया तद्विकारेऽपि तथा प्राप्तत्वात्। तत्र मुख्यत्वादाधाय दार्शिकाज्यभागादिमन्त्राः कार्याः, मुख्यत्वन्यायापवादकस्यामुख्यभूयस्त्वादेरभावादिति सिद्धान्तयित्वा **वार्तिकादौ** मतान्तरमुक्तम्। विप्रतिषिद्धेत्यादिसूत्रेणामुख्यभूयस्त्वं मुख्यत्वापवादकमिति पूर्वपक्षः। मुख्यं वेत्यनेन तु सिद्धान्तः। मुख्यत्वमेवामुख्यभूयस्त्वापवादकम्, लोके बहुभिरमुख्यैर्मुख्यस्याबाधनात्प्रत्युत तद्विपरीतदर्शनादिति युक्तश्चैतद्दुर्बलानां भूयस्त्वस्याकिञ्चित्करत्वात्। उक्तञ्च—सत्प्रतिपक्षस्थले **न्यायभाष्यादौ** "व्याप्तिपक्षधर्मते बलं न तु भूयस्त्वमिति। दुर्बलता तु द्वैतसत्त्वप्रत्यक्षादेरनिश्चितप्रामाण्यकत्वादिना श्रुतेर्नित्यनिर्दोषत्वादनन्यपरत्वाच्च प्राबल्यमिति भूयोऽनुग्रहन्यायोपन्यासो निरालम्ब एव" इति। तदपि चिन्त्यम्, अद्वैतविषयकतात्पर्यवत्त्वेन निश्चितश्रुतिविरोधे

हि प्रत्यक्षादेर्द्वैतांशेऽनिश्चितप्रामाण्यकत्वं स्यादिदानीं तु तत्रैव विप्रतिपत्तिरिति कथं प्रत्यक्षस्यैव तथात्वं श्रुतेरप्यद्वैते प्रामाण्यानवधारणात्। अत उभयोः प्रामाण्यसन्देहे किं भूयसामनुग्रहः क्रियताम्, उत एकस्येति वीक्षायामुक्तन्यायेन द्वैतप्रत्यक्षादेः प्रामाण्यं श्रुतेरप्यन्यत्र तात्पर्यमिति कल्पनमेव युक्तं विनिगमकस्योक्तत्वात्। नित्यनिर्दोषत्वादित्यादिकं तु दत्तोत्तरत्वात्पुनरनुद्भाव्यमेव। मुख्यत्वमेवामुख्यभूयस्त्वबाधकमिति तु न मुख्यः पक्षः, जघन्यानामपि भूयसामनुग्रहो न्याय्यो मुख्यानुग्रहश्च समसंख्यविषय इत्येव सिद्धान्तस्य मीमांसकैरनुमतत्वात्। "श्येनेन यजेत" इत्यत्र गुणविधित्वपक्षे "यथा वै श्येनो निपत्यादत्ते एवं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन" इत्यस्यानुपपत्तिः, श्येनद्रव्यस्यैव विधेयतया तस्यैव स्तोतव्यत्वात् स्वस्यैव स्वोपमानत्वानुपपत्तेः।

न च "रामरावणयोर्युद्धं रामरावणयोरिव" इतिवदौपचारिकभेदमादाय तदुपपत्तिः, उपक्रमस्थविध्युद्देशवर्त्तिश्येनपदस्य गौणत्वकल्पनापेक्षयोपसंहारस्यार्थवादेन तदङ्गीकरणस्य न्याय्यत्वादितिवाच्यम्; एकस्या एव व्यक्तेः कालभेदेनोपमानोपमेयत्वकल्पने यथानया पूर्वं निपत्यादानं कृतम्, तथा वैरिणाप्यादानं क्रियत इत्यर्थापत्तेरादत्त इति लट्प्रत्ययस्य भूतकाललक्षणा, तथैवंशब्दाभ्यां समभिव्याहृतयोश्च श्येनपदसर्वनाम्नोर्भिन्नार्थकत्वेन प्रतीयमानयोरेकार्थकत्वकल्पनेत्यनेकदोषापत्तेः, तदपेक्षयोपक्रमस्थेऽपि श्येनपदे गौणीमङ्गीकृत्य फलोद्देशेन श्येनाख्ययागविधिरेव स्वीकार्यः। अन्योद्देश्येन शुद्धधात्वर्थकरणकभावनाविधिरिति द्वितीयविधिप्रकारस्य पूर्वपक्षाभिमतफलोद्देशेन गुणविशिष्टकर्मविधानमिति प्रकारापेक्षयालघुत्वादिति **कौस्तुभादाव**ङ्गीकारात्। अत एव 'अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणिह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशोह्येतेभ्यो ज्यायानाकाशः परायणम्' इति वाक्ये आकाशशब्दार्थो भूताकाश उत परब्रह्मेति वीक्षायाम्—

प्रथमत्वात्प्रधानत्वादाकाशं मुख्यमेव नः।
तदानुगुण्येनान्यानि व्याख्येयानीति निश्चयः॥

अस्य लोकस्य का गतिरिति **शालावत्यप्रश्नस्योत्तरं जैवलिसञ्ज्ञो** राजा आह—आकाश इति गतित्वेन प्रतिपाद्यमानस्याकाशस्य प्राधान्यात्तदनुरोधेन "सर्वाणीह वा इमानि" इत्यादिविशेषणानि नेयानि, तन्न; यतश्च भाष्ये स्पष्टं बहूनामप्यप्रधानां प्रधानानुरोधेन नेयत्वात् नवमे हि पूर्वतन्त्रे चिन्तितम्। "विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् गुणे त्वन्यायकल्पना एकदेशत्वाद्" इति

सूत्रम्, अग्नीषोमीये पशावेकपाशके द्वौ मन्त्रौ श्रूयेते, "अदितिः पाशान् प्रमुमोक्त्वेतान्" इत्येकः, "अदितिः पाशम्प्रमुमोक्त्वेतम्" इति चान्यः, तत्र प्रकृतावेकपाशिकायां बहुवचनस्यासमवेतार्थत्वाद्बहुपाशकेषु विकृतिभूतेषु पशुगणेषूत्कर्ष इति प्राप्ते, विशेष्यभूतस्य प्रातिपदिकस्याग्नीषोमीये समवेतार्थकत्वाद्विशेषणीभूतबहुत्ववाचि बहुवचनं गुणत्वादन्याय्यया लक्षणारूपया कल्पनया तदवयवेषु वर्त्तिष्यत इति। सूत्रार्थस्तु उक्तविप्रत्तिपत्तौ एकवचनान्तबहुचनान्तमन्त्रयोर्विकल्पः स्यात्, समत्वात्पाशप्रातिपदिकस्योभयत्र सम्भवात्। गुणे प्रत्ययार्थे तु अन्याय्यकल्पना लक्षणादिरूपा न तु तद्बलान्मन्त्रोत्कर्षः प्रत्ययस्य पदैकदेशत्वात्प्रातिपदिकपारतन्त्र्येणोत्कर्षत्वायोगादिति पूर्वपक्षे **भामत्यां** सिद्धान्तितम्।

सामानाधिकरण्येन प्रश्नतत्प्रतिवाक्ययोः।
पौर्वापर्यपरामर्शात्प्रधानत्वेऽपि गौणता॥

प्रपञ्चमात्रस्य कारणे पृष्टे भूताकाशस्य तद्वचनमयुक्तम्, तस्यापि लोकमध्यपातित्वात्।

न च प्रश्नोऽपि भूतकार्यमात्रपर इति वाच्यम्; असञ्जातविरोधित्वेन लोकसामान्यविषयस्य प्रश्नस्योपसञ्जातविरोधिनोत्तरेण चरमप्रवृत्तेन सङ्कोचानुपपत्तेः। किञ्चाकाशपदस्य मुख्यार्थत्वे सर्वशब्दः कथञ्चिदल्पविषयो व्याख्येयः, एवकारस्याप्यसामञ्जस्यम्, न ह्याकाशमात्रं जलस्य कारणम्, किन्तु तेजोऽपि, अन्नस्यापि नाकाशमेव कारणं किन्तु तेजोजले अपि, ब्रह्मणि तु सर्वमुपपन्नम्। लयोऽपि तत्रैव संगच्छते ततश्चोपसंहृतं सर्वेषां लोकानामिति प्रश्नेनोपक्रमात्, उत्तरे च तत्तदसाधारणब्रह्मगुणपरामर्शात् पृष्टायाश्च गतेः परमयनमित्यसाधारणब्रह्मगुणोपसंहारात्। भूयसीनां श्रुतीनां अनुग्रहाय, "त्यजेदेकं कुलस्यार्थे" इतिवद्वरमाकाशपदमात्रमसमञ्जसमस्तु एतावता हि बहुसमञ्जसं स्यादिति; स्यादेतत्।

ननु साम्ये विरोधिनां भूयसां न्याय इह तु प्रधानमाकाशब्दार्थो नाप्रधानैर्बहुभि[1]रपि बाध्येत। यदाह कश्चित्—

त्येजदेकं कुलस्यार्थे इति राद्धान्तयन्ति ये।
शेषिबाधेन तैर्दृष्टमात्मार्थे पृथिवीमिति॥

तत्राहेति कल्पतरुकृद्भिरवतारितस्य न चाकाशस्य प्राधान्यमुत्तरे, किंतु पृष्टार्थत्वादुत्तरस्य लोकसामान्यगतेश्च पृष्टत्वात्परायणमिति च तस्यैवोप-

१. भूयोभि–ख।

संहाराद् ब्रह्मैव प्रधानम् । तथा च तदर्थं तदाकाशपदं प्रधानार्थं भवतीति **वाच**-कस्यान्यवाक्यस्य पर्यालोचनया तत्रापि प्रधानानुरोधेनैव गुणानां व्याख्यानं प्रतीयत इति । अत्रोच्यते, तत्रोत्तरलिङ्गानुरोधेनाकाशपदोपमर्दे कृते सत्येव तस्य ब्रह्मरूपप्रधानार्थत्वसम्पत्तेः उद्देश्यत्वेन प्राधान्यस्य ब्रह्मनिष्ठत्वेऽपि शब्दार्थत्वेन प्राधान्यस्याकाशेऽपि सत्त्वात्तत्रोक्तरीतेरावश्यकत्वात् । परमार्थ-तस्तु आत्मार्थे पृथिवीं त्यजेदित्यस्यादरेऽपि नेहेत्यादिश्रुतेः स्वप्रामाण्या**पवाद**-प्रपञ्चमिथ्यात्वे तात्पर्यं दुर्घटमेवेत्यवधेयम् । तत्सिद्धं बाधकप्रमाणानां बहुत्वमपि नियामकत्वमिति । अत एवोपाधेर्दूषकताबीजविचारे सत्प्रतिपक्षेऽपि सत्प्रति-पक्षान्तरमुद्भाव्यत एव, अन्यतरबाधप्राप्तौ बहुबाधकल्पनापेक्षया एकबाधक-कल्पनाया एव लघुत्वमिति विनिगमकप्रवृत्त्यर्थं तथोपन्यासात् । अत एव **प्रमाण-निबन्धे**ऽस्माकं सम्यञ्चो बहवश्चेत्युक्तमितीति **मिश्रै**रुक्तम् । **दीधितावपि** तत्रैवो-क्तम्—यच्च प्रमाणतत्त्वबोधादौ बहुत्वमपि बलमुक्तं न तत्सत्प्रतिपक्षतायाम् किन्त्वेकत्राङ्गभङ्गप्रसक्तौ बहुषु तत्कल्पने गौरवमेकत्र लाघवमिति उक्तकल्प-तरुवाक्येऽपि स्फुट एवार्थः । **अद्वैतसिद्धिकृद्भि**रप्युक्तम्—

हेतवोऽभीष्टसिध्यर्थं सम्बन्धा बहवश्च ते ।
स्वल्पाः परस्य दुष्टाश्चेत्यत्र स्पष्टमुदीरितम् ॥

**लीलावत्युपाये**ऽपि—ईश्वरो नात्मा दुःखात्यन्ताभाववत्त्वाद् घटवत् ।

न चेश्वरात्मत्वसाधकानां ज्ञानवत्त्वादीनां भूयस्त्वाद् बलवत्त्वमिति वाच्यम् ; व्याप्तिपक्षधर्मते हि बलं न तु भूयस्त्वमिति, ते च तुल्ये एवेत्येकेनैव भूयसामपि प्रतिरोधात् । किञ्चानात्मत्वसाधकानामेव भूयस्त्वं ज्ञानादित्रय-मात्रस्यैवात्मत्वसाधकत्वं सुखादिषट्काभावस्यानात्मत्वसाधकत्वादित्युक्तम् । तस्मादन्यथोपपादयितुमशक्तानां भूयसां प्रामाणानामनुरोधेनान्यथोपपन्नस्या-ल्पीयसः प्रमाणस्यान्यथाकरणमिति न्यायः प्रकृते संगत एवेति स्थितम् ।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले ।**
**अद्वैतार्थत्वमध्यक्ष¹विरोधाद्क्षितं श्रुतेः ॥ १ ॥**

*

१. °मद्वैत°—क ।

# द्वितीयोंऽशः *

यत्पुनरत्र खण्डनादौ भेदप्रत्यक्षस्य श्रुतिजन्याभेदबोधप्रतिबन्धकत्वमाशङ्क्योक्तम्—"यत्तावदुक्तं भेदप्रत्यक्षेण श्रुतेर्बाध इति, तन्न; युगपदेकपुरुषस्यानन्तभेदप्रतियोग्यनुयोगितावच्छेदकधर्मानुपस्थित्या सर्वपदार्थभेदज्ञानासम्भवाद्यत्किञ्चित्पदार्थभेदज्ञानं वाच्यम्, ततश्च पदार्थान्तराभेदज्ञानं प्रति पदार्थान्तरीयभेदज्ञानस्य प्रतिबन्धकत्वाभावात्तत्रैव श्रुतेरवकाशात्। तथा च प्रतिबन्धप्रतिबन्धकत्वाभिमतयोर्भेदाभेदबुद्धयोरेवाभेदः श्रुत्या बोध्यः। ततः प्रत्यक्षभेदबुद्धया स्वसत्तायां नाशे वा न श्रौताभेदधीप्रतिबन्धः स्वस्य स्वबोधकत्वानुपपत्तेः। बुद्धेः स्वप्रकाशत्वेऽपि स्वमात्रग्राहकतया घटपटौ भिन्नाविति बुद्धया स्वप्रतियोगिकभेदवत्तया स्वातिरिक्तव्यक्तेस्तत्प्रतियोगिकभेदवत्तया च स्वस्य ग्रहे सामर्थ्याभावात्।

न च स्वस्य विषयस्य च बुद्धया ग्रहात् स्वरूपात्मको भेदो गृहीत एवेति वाच्यम्; इदं रजतमित्यादौ भ्रमस्थले पुरोवर्त्तिनो रजतस्य ग्रहेण भेदग्रहापत्तावभेदभ्रमोच्छेदप्रसङ्गात्। न च स्वरूपमेव न भेदः, किन्तु धर्मविशेषान्तर्भावेनैव, घटत्वादिज्ञानाद्भेदत्वप्रकारकज्ञानस्यैव वैलक्षण्यादिति वाच्यम्; बुद्धिविषययोः स्वरूपग्रहेऽपि तुल्यत्वाद्। बुद्धेः पूर्वं तन्निष्ठधर्मसन्निकर्षाभावात्। न च यथा बुद्धेः स्वग्रहे सन्निकर्षानपेक्षत्वं तथा स्वधर्मभेदग्रहेऽपीति वाच्यम्; स्मृतित्वप्रमादावपि तदापत्तेः। ततश्चेदं रजतमित्यादाविदमाद्यंशे ग्रहणत्वस्मरणत्वविवादो न स्यात्। ततश्च बुद्धिविषययोरभेद एव श्रुत्या निर्बाधो बोध्यः। एवञ्च प्रत्यक्षविषयादन्यत्र लब्धपदार्थामद्वैतश्रुतौ परम्परया बाधकत्वाभिमतबुद्धेरप्रामाण्यनिश्चयात् तद्विषयेऽप्यभेदबोधः श्रुत्येति सर्वाभेदबुद्धिः। न च प्रमाणद्वयबलाद्भेदाभेदसिद्धिरेवास्त्विति वाच्यम्; एकमेवेत्येवकारविरोधात्तस्य भेदविनाशमात्रतात्पर्यकत्वादिति।

अत्राहुः—अनया सर्वाभेदः क्रमेण बोध्यते किं वा युगपत्? नाद्यः, श्रुतेर्विरम्य व्यापारायोगात्। तदाहुः "जन्मैव बुद्धेर्व्यापारो नार्थग्रहरूपायाः" इति। ततश्चार्थग्रहणे बुद्ध्यर्थव्यापारान्तरानपेक्षत्वात्पर्यायेण प्रवृत्त्यनुपपत्तेः। न द्वितीयः, अंशतो भेदग्राहिप्रत्यक्षविरोधात्। किञ्च चैत्रेण घटमठयोर्मैत्रेण

* समग्रोऽप्ययमंशो नास्त्येव 'ख' पुस्तके।

दण्डपीठयोर्भेदग्रहे सति चैत्रं प्रति घटमठान्येषां मैत्रं प्रति दण्डपीठान्येषामभेदस्य श्रुत्या बोधने प्रतिपुरुषप्रतिनियतानेकवाक्यार्थप्रसङ्गः ।

यत्तु युगपदेव श्रुत्या सर्वपदार्थानामभेदो बुद्धचते "ज्योतिष्टोमेन यजेत" इत्यादावंशत्रयविशिष्टभावनाया युगपद्बोधेऽपि धात्वर्थादीनां करणत्वादिविषयकज्ञानानां क्रमेण विचारानुसारादुत्पत्तिवत्प्रकृतेऽपि सर्वाभेदज्ञाने जाते प्रत्यक्षादिविरोधेन तद्विशेष्यकमप्रामाण्यज्ञानं यदापाततो जायते, तन्निरासकानामुपपादकज्ञानानामेव पश्चादुत्पत्त्या तत्पूर्वोत्पन्नश्रौतसर्वाभेदज्ञाने प्रामाण्यग्रहसिद्धेरिति, तच्चिन्त्यम्; सर्वाभेदबुद्धित्वस्यैव प्रात्यक्षिकभेदबुद्धिप्रतिबध्यतावच्छेदकत्वेन प्रथमं तदुत्पत्तेरसम्भवदुक्तिकत्वात् । भेदज्ञानाभावकालीनज्ञानस्य चाकिञ्चित्करत्वात् । पश्चाद् बाधकानुसन्धानवेलायां तस्याप्रमात्वकल्पनात् । एवञ्च बाधकज्ञानान्तरसत्त्वासत्त्वाभ्यामंशत्रयविशिष्टभावनाबोधाद्वैषम्यस्य स्फुटतरत्वात् ।

यत्तु शाब्दबोधेऽयोग्यतानिश्चयो न प्रतिबन्धकः, तथा च **खण्डनम्**—

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम् ।। इति ।

अयमर्थः—अत्यन्तासति विपरीततया निश्चिते कलहादिस्थल इति शेषः । अबाधादिति कलहादिस्थलेऽनाप्तोक्तत्वादिना वाक्यार्थज्ञानस्य भ्रमत्वेऽपि श्रौतज्ञानस्योक्तरीत्या भ्रमत्वज्ञानरूपबाधासम्भवादित्यर्थः । स्वतःप्रामाण्यनिश्चलां स्वतःसिद्धप्रमात्वान्निःशङ्कप्रामाण्याम् । विपरीतज्ञानरूपस्यायोग्यताज्ञानस्य प्रतिबध्यत्वं न, परोक्षापरोक्षसाधारणरूपेण प्रत्यक्षस्थले इच्छाविषयस्याप्रतिबध्यतया तद्व्यावृत्तरूपेणैव प्रतिबध्यत्वात् । अत एवोक्तं **मणिकृता**—"प्रत्यक्षादावुत्पन्ने ज्ञानेऽप्रामाण्यमासज्यते, बाधेनानुमितौ तूत्पत्तिरेव प्रतिबध्यते" इति । एवञ्च परोक्षस्यानुमितित्वेनैव प्रतिबध्यत्वं विपरीतधीसत्त्वे उद्बोधकसत्त्वे मानाभावेन तदभावादेव स्मृत्यभावोपपत्तेरननुगतोद्बोधके मानाभावात् । भावे वा परोक्षत्वजातौ मानाभावेनाक्लृप्तत्वात् । इच्छाघटितस्मृत्यादिसामग्रीप्रतिबध्यतावच्छेदकजात्या सङ्करात् । परोक्षत्वतज्जात्योः प्रत्यक्षस्मृतौ च परस्परात्यन्ताभावसमानाधिकरणयोरनुमित्यादौ समावेशात् ।

न च प्रत्यक्षान्यज्ञानत्वरूपमेव परोक्षत्वं प्रतिबध्यतावच्छेदकम्, प्रत्यक्षान्यत्वज्ञानत्वादीनां विशेषणविशेष्यभावे विनिगमकाभावेन गौरवात् । बाधस्थले शाब्दबोधस्य निश्चितत्वात् । अन्यथा कलहादिस्थले शब्दान्य-

विशिष्टधीसामग्रीकल्पने गौरवात्। शाब्दव्यावृत्तरूपेणैव प्रतिबध्यत्वं तद्योग्यताज्ञानहेतुत्वे च न मानम्, इतरकारणसत्त्वे तद्विलम्बेन शाब्दधी-विलम्बस्यादृष्टत्वादिति। तत्रेदं वक्तव्यम्—विपरीतज्ञानसत्त्वे शाब्दबोधोत्पत्तौ मानाभावः। वह्निना सिञ्चतीत्यादितस्तदनुदयस्य बाधधीसत्त्वे सर्वानुभव-सिद्धत्वात्। अत एव **सत्प्रतिपक्षग्रन्थे दीधितावुक्तम्**—"बोध्याभावव्याप्य-वत्त्वनिश्चयेन शाब्दादिधीप्रतिरोधाच्च" इति। तदभावव्याप्यवत्ताज्ञानस्यापि विरोधित्वे तदभाववत्ताज्ञानस्य विरोधित्वात्। एवञ्च प्रत्यक्षान्यज्ञानत्वम-नुमितित्वशाब्दत्वोभयं वा प्रतिबध्यतावच्छेदकीकृत्य विपरीतज्ञानस्य विरोधित्वकल्पनमावश्यकम्। अनुभवापह्नवेऽनुमितित्वस्यापि प्रतिबध्यता-वच्छेदकत्वकल्पनस्यैवानुपपत्तेः। एतेन तत्र शब्दान्यविशिष्टधीसामग्रीकल्पने गौरवं परास्तम्। निरनुयोज्यानुयोगत्वात्। यद्वा परोक्षत्वमेव प्रतिबध्यता-वच्छेदकम्। तथा च **मिश्रव्याख्यातृभि**रुक्तम्—"साध्याभावनिश्चयमात्र-मनुमितिशब्दयोर्विरोधि, तत्र प्रतिबध्यतावच्छेदकं परोक्षज्ञानत्वमेव लाघ-वाद्" इति। बाधधीप्रतिबध्यतावच्छेदकस्य परोक्षस्मृतिव्यावृत्तत्वेनेच्छाघटित-स्मृतिसामग्रीप्रतिबध्यतावच्छेदकजात्या समं साङ्कर्यानुपपत्तेः।

न चैवं बाधधीसत्त्वे स्मृतिप्रसङ्गः, इष्टत्वात्, कदाचिदनुभवं प्रत्येव विशेषदर्शनविरोधादित्य**भियुक्तो**क्तेः। अत एव विशेषणतावच्छेदकप्रकारक-निश्चयजन्यतावच्छेदकेनानुभवत्वेनापि न सङ्करः, तद्व्याप्यापरोक्षत्वजातेः जन्यप्रत्यक्षमात्रवृत्तिजातेश्च तज्जन्यतावच्छेदकत्वाभ्युपगमे तु तद्विरुद्धत्वेनैव तत्तच्छङ्कानवकाशात्। न च तथाप्यनुमित्साविशिष्टानुमितिसामग्रीप्रतिबध्यता-वच्छेदकत्वेन सिद्धानुमित्यन्यज्ञानवृत्तिजात्या सङ्करः, तत्रानुमित्यन्यज्ञानत्व-स्यैव प्रतिबध्यतावच्छेदकत्वस्यागत्या कल्पनात्, अन्यथा प्रत्यक्षेच्छाविशिष्ट-प्रत्यक्षसामग्रीप्रतिबध्यतावच्छेदकत्वादिना सिद्धजात्या साङ्कर्यस्य दुर्वारत्वात्। प्रत्यक्षान्यज्ञानस्य प्रतिबध्यतावच्छेदकत्वेऽपि तु गौरवम्, विशेष्यविशेषण-भावे विपर्ययेऽप्यवच्छेदकताया व्यासज्यवृत्तित्वपक्षेऽवच्छेदकैक्येन कारण-ताभेदाभावात्। महानसीयवह्न्यभावीयवह्निवृत्तिप्रतियोगितायाः महान-सीयत्ववह्नित्वोभयपर्याप्तावच्छेदकताकत्वस्य ग्रन्थेषु दर्शनात्। अनुद्भूतत्वभेद-कूटरूपोद्भूतरूपत्वेन बहिरिन्द्रियजन्यद्रव्यलौकिकप्रत्यक्षत्वावच्छिन्ने हेतुत्वस्य **मणिकारादिभि**रभिधानात्।

अथ प्रत्यक्षभेदनिष्ठमवच्छेदकत्वं भेदत्वावच्छिन्नम्, जात्यतिरिक्त-पदार्थनिष्ठावच्छेदकत्वस्य किञ्चिद्धर्मावच्छिन्नत्वनियमात्। ज्ञानत्वनिष्ठं तन्नि-

रवच्छिन्नम्, एवं ज्ञानत्वनिष्ठमवच्छेदकत्वं समवायावच्छिन्नं भेदनिष्ठं तु विशेषणताविशेषावच्छिन्नमित्यवच्छिन्नत्वानवच्छिन्नत्वभेदे चावच्छेदकावच्छेदकसम्बन्धभेदेनोक्तावच्छेदकत्वस्य न व्यासज्यवृत्तित्वमुपपद्यते। यत्तु स्वावच्छिन्नप्रतियोगिताकभेदसमवायोभयघटितसामानाधिकरण्येन प्रत्यक्षत्वविशिष्टज्ञानत्वमेव प्रतिबध्यतावच्छेदकमस्तु। अत्र समवायोऽवच्छेदकताघटकः, उक्तसामानाधिकरण्यं त्ववच्छेदकतावच्छेदकघटकसम्बन्धः। न चात्रापि विनिगमनाविरहः, उक्तगुरुसम्बन्धस्यावच्छेदकत्वापत्तेः। अवच्छेदकतावच्छेदकसम्बन्धस्तु तत्रापि समवायत्वावच्छिन्नप्रतियोगिताकभेदघटितसामानाधिकरण्यमेवेत्युभयत्र तत्साम्यम्।

न च प्रत्यक्षत्वावच्छिन्नभेदस्य विशेषणताविशेषसमवायघटितसामानाधिकरण्येन निवेशमादाय विनिगमकाभाव इति वाच्यम्, अवच्छिन्नत्वांशे प्रत्यक्षत्वप्रतियोगिकत्वस्य भेदांशे विशेषणताविशेषस्य चाधिकस्य निवेशादिति, तन्न; विषयितासम्बन्धेन प्रत्यक्षत्वावच्छिन्नभेदस्यातिप्रसक्ततया समवायावच्छिन्नस्ववृत्तिप्रतियोगितावच्छेदकताकभेदसमवायाघटितसामानाधिकरण्येनैव ज्ञानत्वांशे प्रत्यक्षत्वस्य निवेशनीयतया गौरवस्य दुर्वारत्वात्, इति चेन्मैवम्; प्रकृते व्यासज्यवृत्त्यच्छेदकत्वे बाधकाभावात्।

न चावच्छिन्नत्वानवच्छिन्नत्वभेदेन तद्भेदः, न हि तदवच्छेदकत्वैक्ये तन्त्रम्, दण्डचक्रत्वादावप्यवच्छेदकत्वस्य व्यासज्यवृत्तित्वापत्तेः, समवायस्यैव तत्रोभयत्रावच्छेदकतावच्छेदकसम्बन्धत्वात्, जातित्वेन तदङ्गत्वस्य निरवच्छिन्नत्वाच्च। किन्त्ववच्छेद्याधिकरणेऽवच्छेदकतापर्याप्त्यधिकरणद्वयस्य विद्यमानत्वमेव कारणताधिकरणे दण्डादौ तदवच्छेदकत्वापर्याप्त्यधिकरणस्य चक्रत्वादेरवृत्त्या उक्तदोषाभावात्। प्रकृते त्वनुमित्यादौ प्रतिबध्यताधिकरणे प्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणस्य प्रत्यक्षान्यत्वज्ञानत्वोभयस्य विशेषणतासमवायाभ्यां वृत्त्यावच्छेदकत्वस्य व्यासज्यवृत्तित्वमुपपन्नमेव। अत एवोक्तप्रामाणिकग्रन्थाः सङ्गच्छन्ते। अत एव घटपटौ न स्त इत्यत्र घटत्वं पटत्वं द्वित्वञ्चेति त्रितयपर्याप्तमवच्छेदकत्वम्, घटौ न स्त इत्यत्र तु घटत्वं द्वित्वं चेत्युभयपर्याप्तमिति पक्षमुपन्यस्य प्रतियोगिताधिकरणेऽवच्छेदकतापर्याप्त्यधिकरणस्यावृत्तेः कथं प्रतियोगितावच्छेदकत्वमिति दूषणं **दीधितिटीकाकारै**रुपन्यस्तम्। तस्मादवच्छेदकसम्बन्धभेदादिनावच्छेदकत्वभेदकल्पनं निर्मूलम्, अवच्छेदकत्वस्य कुत्रापि व्यासज्यवृत्तित्वानभ्युपगमेन सम्बन्धैक्याभावादेस्तद्भेदापादकत्वासिद्धेः। तद्भेदेऽवच्छेदकस्यैक्याभावस्योक्तत्वात्।

एतेन वह्निप्रकारकशाब्दत्वादीनां तदभावव्याप्यवत्तानिर्णयप्रतिबध्यतायां शाब्दत्वादिकमवच्छेदकम्, वह्निप्रकारकत्वन्त्ववच्छेदकतावच्छेदकम्। न च वह्निप्रकारकत्वस्यातिप्रसक्ततया कथं तथात्वमिति वाच्यम्; अनुमितित्वादिनिष्ठसामानाधिकरण्येन तथात्वेऽपि शाब्दत्वादिनिष्ठसामानाधिकरण्यसम्बन्धेन तस्यानतिप्रसक्तत्वादवच्छेदकत्वावच्छेदकत्वोपपत्तेरित्यादिकमपि निरस्तम्, सामानाधिकरण्यदिश्यवच्छेदकत्वाधिकरणनिष्ठत्वनिवेशे गौरवात्। अभ्युपेत्य तु ब्रूमः—आदित्यो यूप इत्यादावपि कथं न यथाश्रुतार्थविरोधः, तत्त्वमसि इत्यादावपि तन्मते भागत्यागलक्षणानुपपत्तिश्च। अद्वैतवाक्यजन्यशाब्दबुद्धावेवायोग्यतानिश्चयो न प्रतिबन्धक इत्यस्य ब्रह्मणापि दुर्घटत्वात्। एतदन्यशाब्दधीत्वस्य प्रतिबध्यतावच्छेदकत्वे गौरवाच्च भवत्येव तत्र शाब्दबोधः। परं तु प्रत्यक्षेण बाधनिर्णयात्तत्राप्रामाण्यं गृह्यत इति चेत्; अत्र कथमबाधो निर्णीतः, स्वेनैव स्वस्मिन्नबाधनिर्णये उभयत्रापि साम्यात्। वैदिकवाक्योत्पन्नस्यापि बोधयोरविशेषात्। वेदतात्पर्यविषयत्वस्य च विचार्यमाणत्वात्, इत्यास्तां तावत्। किञ्च सर्वत्वस्यैकस्याभावात् कथं तदवच्छिन्ने तदवच्छिन्नमिव बोधनम्, सर्वपदं हि बुद्धिविषयतावच्छेदकत्वं यावत्सु धर्मेषु गृहीतं तद्धर्मांशे निरवच्छिन्नप्रकारताकधीजनकम्। एकपुरुषस्य च घटत्वाद्यनन्तधर्मांशे निरवच्छिन्नप्रकारताकोपस्थितेर्जन्मसहस्रेणाप्यसम्भवात्। यस्य यावतामुपस्थितिस्तं प्रति तावतामेव परस्परावच्छिन्नादभेदबोधने तु वाक्यार्थस्याव्यवस्थितत्वं त्वदिष्टासिद्धिश्च। अहो महदाश्चर्यं यद्भेदप्रतियोगितानुयोगितावच्छेदकानन्तधर्माणामेकपुरुषस्य युगपदनुपस्थितिः परं प्रत्युद्भाव्या, भेदबोधे तदप्रतिसन्धानं प्रातिस्विकरूपेणोपस्थितेर्विना भेदस्यापि ग्रहानुपपत्तेः।

यदप्यन्यदुक्तम् "न च तद्बुद्ध्या स्वस्य स्वविषयस्य च भेदाग्रहेऽपि बुद्ध्यन्तरेण तयोर्भेदग्रहसम्भवात्तत्रापि नाद्वैतश्रुतेरवकाश इति वाच्यम्; तद्बुद्धिविषययोर्भेदग्राहिबुद्ध्यन्तरेणापि स्वस्य स्वविषयेण भेदानवगाहनात्तत्रैव श्रुतेः सावकाशत्वात्। न च तद्बुद्धितद्विषयबोधोऽपि बुद्ध्यन्तरेण ग्राह्यः, एवं तद्बुद्धितद्बुद्धिविषयभेदोऽपि बुद्ध्यन्तरेणेति वाच्यम्; विषयान्तरसञ्चारानुरोधात्सुषुप्त्यनुरोधाद्वा कुत्रचिद् भेदज्ञानविच्छेदकस्यावश्यं वाच्यतया तद्बुद्धितद्विषययोरभेदं बोधयन्त्या एव श्रुतेः यथोक्तप्रकारेण सर्वाभेदे पर्यवसानात्। तदेतदुक्तम्—

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा।
विनिवृत्ताश्रयाभावात् सर्वथा...ैर्विजीयते॥ इति।

अयमर्थः—चरमधीभिन्नज्ञानरूपे सुदूरदेशे भेदावगाहनरूपं धावनं कृतवत्यपि सुषुप्तिलोपाद्यापत्तिरूपभ्रान्त्या चरमधीरूपदेशे भेदावगाहनरूपं धावनं कर्त्तुमशक्ता बाधबुद्धिर्ज्ञानस्य परम्परा श्रेणी निवृत्तौ तस्या अद्वयश्रुतिबाधकत्वायोग्यत्वप्राप्तौ पार्ष्णिग्राहैर्बाधबुद्धिपरम्परा विरोधिविषयकत्वरूपबाधतावच्छेदकयुक्तैरद्वयाम्नायैर्विजीयते बाध्यते, इति।

न चैकपुरुषेण तद्भेदानवबोधेऽपि पुरुषान्तरेण तद्भेदग्रहसम्भवान्न तत्रापि श्रुतेरवकाश इति वाच्यम्; परकीयबुद्धेस्त्वप्रत्यक्षत्वात्। न च बुद्धित्वं स्वाश्रयतद्विषयभेदग्राहकप्रमाणव्याप्यमिति चरमबुद्धेरपि बुद्ध्यन्तरेण भेदसिद्धिरिति वाच्यम्; व्याप्तिग्रहाभावेन चरमबुद्धौ भेदग्रहानुपपत्तेः। अन्यथा सामान्योपाधिप्रवृत्तव्याप्तिज्ञानेनैव पक्षे साध्यविशेषसिद्धावनुमानमात्रविलयापत्तेः। न च तज्जन्यानुमित्यैव भेदसिद्धिरिति वाच्यम्; अनुमितेः स्वान्यज्ञानविपक्षिकायाः स्वस्य विषयभेदानवगाहित्वात्तत्रैवाद्वैतश्रुतिप्रवृत्तिसम्भवात्। न च तदनुमितिमपि पक्षेऽन्तर्भाव्यानुमितिस्तु विवादपदम्, सर्वा बुद्धयः स्वविषयाद्भिन्ना, बुद्धित्वात्, घटपटबुद्धिवदिति वाच्यम्; विधिविषययोरेवाऽभेदस्य श्रुत्या बोधयितुं शक्यत्वात्।

न च सर्वा बुद्धिः सर्वतो भिन्ना बुद्धित्वाद्, बुद्ध्यन्तरवदिति वाच्यम्; स्वभेदस्यापि सिद्धौ बाधात्, दृष्टान्ते स्वभिन्नत्वाभावेन साध्यवैकल्यात्। स्वभिन्नसर्वभेदस्य साध्यत्वे त्वद्वैतवादिनं प्रति विशेषणासिद्धिः। यत्किञ्चित्प्रतियोगिकभेदसाधने त्वनुगमस्य भेदाप्रतियोगिन्येवाद्वैतश्रुतेरवकाशात्। उक्तञ्च—

> हेत्वाद्यभावसार्वज्ञे सर्वं पक्षतया स्थिते।
> किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः॥ इति।

अयमर्थः—सर्वस्य पक्षत्वे हेतोरभावः, हेतोरपि पक्षत्वेन, तस्मिंस्तस्यसिद्धत्वात्, अद्वैतमेव साध्यहेत्वोरविशेषेण साध्याविशेषश्च, साध्यस्य पक्षैक्याद्बाधः, हेतुपक्षयोरैक्यात्स्वरूपासिद्धिः, हेतुसाध्ययोरैक्याद्बाधत्वासिद्धिश्च। किञ्च सर्वस्य भेदप्रतियोगित्वानुयोगित्वेऽपि तत्र प्रत्येकधर्मावच्छिन्न एव साध्ये निवेश्ये, अन्यथा किञ्चिद्धर्मावच्छिन्नप्रतियोगित्वानुयोगिकभेदमादाय सिद्धसाधनार्थान्तरयोरापत्तेः। तथा च तत्तदसाधारणधर्मप्रकारकोपस्थित्यङ्गीकारे सर्वज्ञत्वापत्तिः। पूर्वं सर्वं पक्षयितुं प्रवर्त्तमानेन त्वयोक्तरीत्याद्वैतवादिना दोष आपादिते सति किञ्चिद्वस्तु त्यजता पक्षाद्बहिष्कुर्वता किञ्चिद्धर्मावच्छिन्नप्रतियोगिकानुयोगिक एव एकभेदः साध्यः।

तथा च यत्र तद्भेदो न सिद्धस्तत्रैवाद्वैतश्रुतेरवकाशात्। पूर्वोक्तरीत्या पुनः सर्वाभेदपर्यवसानमिति।

नन्वस्त्वर्थापत्तिर्भेदग्राहिका, तथाहि—घटपटौ भिन्नाविति प्रत्यक्षं भेदविषयकमित्यविवादम्, यदि च तदद्वैतज्ञानात् स्वविषयाच्च भिन्नं न स्यात्तदाभेदविषयकं न स्यात्, भेदप्रतियोग्यनुयोगिनोर्घटपटयोः प्रत्यक्ष-भिन्नत्वाभावे तयोर्भेदानुपपत्तेः। न हि तस्मादत्यन्ताभिन्नयोरर्थयोः परस्पर-भेदोपपत्तिरिति सिद्धो बुद्धिविषययोर्भेदः। एवञ्चाद्वैतज्ञानभिन्नत्वाभावे उक्त-प्रत्यक्षस्यापि घटपटभेदविषयकत्वापत्त्या तद्भेदविषयकत्वं न स्यात्, इति बाध्यबाधकत्वाभिमतभेदाभेदबुद्धयोरभेदबोधनं श्रुत्या न सम्भवतीति चेन्मैवम्; अद्वैतज्ञानयथोक्तप्रत्यक्षयोर्भेदव्यतिरेकेणोक्तप्रत्यक्षस्य घटपटभेद-विषयकत्वानुपपत्तिज्ञानेन तयोर्भेदग्रहेऽप्यनुपपत्तिज्ञानाद्वैतज्ञानयोर्भेदं विना कस्यचिदर्थस्यानुपपत्तिज्ञानाभावादुक्तार्थापत्त्यद्वैतज्ञानयोर्भेदानवगमे तयो-रेवाभेदस्य श्रुत्या बोधनसंभवात्। न च तत्राप्यनुपपत्त्यन्तरेण भेदग्रह इति वाच्यम्; सुषुप्त्यनुरोधेन क्वचिद्विश्रामावश्यकत्वे चरमार्थापत्त्यद्वैतज्ञानयोर-भेदबोधने श्रुतेर्निर्बाधकत्वात्। तदुक्तम्—

आद्यधीवेद्यभेदीयाप्यन्यथानुपपन्नता ।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम्॥ इति।

आद्या घटपटयोर्भिन्ना इति धीः, तद्वेद्यभेदस्यान्यथानुपपत्तिरद्वैत-ज्ञानात्। घटपटाभ्याञ्च तत्प्रत्यक्षस्य भेदाभावे तत्प्रत्यक्षस्य भेदविषयकत्व-मनुपपन्नमित्येवंरूपा अद्वैतश्रुतिं न बाधते, तावता तत्प्रत्यक्षाद्वैतबुद्धयोर-भेदानवगमप्रयुक्तार्थापत्त्यद्वैतज्ञानयोगेनेतरभेदस्योक्तरीत्या बोधयितुं शक्य-त्वात्, अर्थापत्त्यन्तरेण तद्भेदज्ञानानुसारेण चरमार्थापत्तावेव श्रुतेरवकाश इति दिक्।

अत्रेदं वक्तव्यम्—एकपुरुषस्य बाधधीविच्छेदेऽपि चरमबुद्धितद्विषय-योरेवेति श्रुतेः प्रवृत्तिर्न युक्ता, तावन्मात्रस्याकिञ्चित्करत्वात्तद्बोधाप्रामाण्यस्य पुरुषान्तरीयभेदज्ञानेनैव सुसाध्यत्वात्। न च तत्र पुरुषान्तरस्यापि भेदबुद्धिर्न भवतीति वाच्यम्; परात्मतद्गुणानां परायोग्यतया तदभावस्यापि त्वया प्रत्यक्षेणावगन्तुमशक्यत्वात्। नाप्यनुमानमनिरुक्तेः। एतदन्यपुरुषबुद्धि-श्चरमबुद्धितद्विषययोर्भेदग्राहकत्वरहिता, बुद्धित्वात्, एतद्बुद्धिवदिति चेन्न; सामानाधिकरण्यमात्रेण साध्येन घटादिबुद्धौ सिद्धसाधनात्। अवच्छेदका-वच्छेदेन तथात्वे तु वक्ष्यमाणरीत्या स्वबुद्धावेव बाधात्। किञ्चात्र **पूर्वाचार्यै-**

रुक्तम्—"स्वकीयबुद्धिधाराविश्रान्तौ पुरुषान्तरेण भेदग्रहसम्भावनयैव श्रुतेरप्रवृत्तिः। न च सम्भावनया सहस्रघटाद्यभेदश्रुतेरवकाशः। तत्रापि पुरुषान्तरभेदग्रहसम्भावने त्वनवस्थातद्विरहावप्यावयोस्तुल्यावेवेति।

यत्तु भेदप्रमाणसद्भावसम्भावनाया अद्वैतश्रुत्यैव निवृत्तिरिति तदसत्; तस्या अद्य यावदभिमतार्थसिद्ध्या तदंशे वैकल्यात्। किञ्च—

सत्यां भिदः प्रतिपदि प्रतिरोधबुद्ध्या भेदग्रहे पुनरसत्युपजीव्यहान्या।
अद्वैतवागुभयथापि कदर्थ्यतेऽस्याः सामर्थ्यमस्तु निजवस्तुनि कुत्र वस्तुम्॥

तथा हि यस्या बुद्धेः स्वविषयेण सममभेदः श्रुत्या बोध्यते तस्याः स्वविषयेण भेदग्रहस्तवास्ति वा न वा? नाद्यः, तस्यैव प्रतिबन्धकत्वात्। नान्त्यः, अनुपस्थितस्य भेदस्य निषेधानर्हत्वात्।

यत्त्वप्रसक्तप्रतिषेध इति, किं प्रतियोग्यप्रसिद्धिः, किं वा निष्प्रयोजनत्वम्? नाद्यः, अन्यत्र प्रसिद्धस्यैव भेदस्य भेदत्वेनोपस्थितस्य परस्परप्रतियोग्यनुयोगिभावेनान्यत्र निषेधसम्भवात्। न हि तत्रैव प्रसिद्धिस्तन्त्रं निषेधमात्रोच्छेदप्रसङ्गात्। न द्वितीयः, अनर्थनिवृत्तेरेव प्रयोजनत्वात्। "नान्तरिक्षे अग्निश्चेतव्यः" इत्यादौ स्तुतिमात्रप्रयोजनेनाप्यप्रसक्तप्रतिषेधदर्शनाच्चेति, तदसत्; अन्यत्र भेदप्रसिद्धिमात्रेणाप्यद्वैतक्षतितादवस्थ्यात्। तदुक्तमाकरे "क्वचिदपि भेदासिद्धावनिर्वचनीयख्यातेरप्युत्पत्तुमयोग्यत्वात्, अभेदज्ञानस्य तानेव शालीनित्यत्रेव सामान्यधर्मग्राहकतयाऽपि पिण्डलाभसम्भवात्, भेदप्रत्यये तु तल्लाभासम्भवात्। न च भेदधीमात्रस्य भ्रमत्वेनोपपत्तिः, भ्रान्तेरनुभूतिपूर्वकत्वनियमाद्" इति। किञ्च भेदज्ञाने प्रतियोग्यनुयोगिनोरुपस्थितौ च सत्यां भेदविशिष्टज्ञानसामग्र्याः सम्पूर्णत्वात्सिद्धा प्रतिबन्धकसम्पत्तिः। आरोपरूपं तज्ज्ञानमिति चेन्न; भेदाभावस्य तत्र ज्ञानान्तरासिद्धतया भ्रमत्वकल्पने मानाभावात्। न चैवं निषेधमात्रोच्छेदापत्तिः वह्न्यादीनामितरसाकाङ्क्षत्वाभावात्, भेदस्य चोपस्थितस्य प्रतियोग्यनुयोगिसाकाङ्क्षत्वेन बाधकाभावेन च वैषम्यात्। अत एवान्योन्याभावगर्भाया व्याप्तेरुपस्थित्यंशे लघुत्वाभ्युपगमः, तत्तदसाधारणधर्मप्रकारकोपस्थितेरेव भेदविषयकत्वनियमकल्पनाच्च तथैवानुभवात्। अत एवेदं रजमित्यादावभेदभ्रमोच्छेदापत्तिरिति निरस्तम्। अत एव श्रुतित्वेन पुरोवर्त्तिन उपस्थितौ तादृशभ्रमानुदयनियम इति न किञ्चिदेतत्।

यत्त्वनर्थनिवृत्तेरेव प्रयोजनत्वादिति, तन्न; कारणस्यैवानुपपत्तौ प्रयोजनपर्यवसाने प्रमाणाभावात्। यत्तु [illegible] इत्यादि, तन्न; "न पृथिव्यामग्नि-

श्चेतव्यो नान्तरिक्षे न दिवि" इति वाक्ये यथान्तरिक्षे दिवि च चयनमप्रसिद्धं तथा हिरण्यरहितायां भुवीति बोधनद्वारा "हिरण्यं निधाय चेतव्यम्" इति विहित-हिरण्यस्तुतौ तात्पर्येण निषेधे तदभावात्; प्राथमिकवाक्यार्थबोधमात्रस्य त्वत्राप्युदये क्षतिविरहादकिञ्चित्करत्वात्। अन्यथा दर्शपूर्णमासप्रकरणे "आज्यभागावग्नीषोमाभ्यां यजति" इति विधाय "न तौ पशौ करोति न सोमे" इति श्रूयमाणे वाक्ये न सोम इत्यंशो न प्रतिषेधः, सोमे तयोः प्राप्त्यभावात्। नापि सोमाङ्गदीक्षणीयादिद्वारेण प्रसक्तिः, सोमाङ्गेऽग्नीषोमीयपशौ पश्वन्तरे च तत एव निषेधसिद्धया न पशाविति निषेधान्तरवैयर्थ्यात्। तस्मान्नित्यानुवादो नान्तरिक्ष इतिवत् यथा सोमे आज्यभागौ न स्तः तथा पशावपि न कार्याविति दशमाष्टमाधिकरणविरोधात्। तत्राप्यप्रसक्तस्यैव निषेधोपपत्तेः। अत एव वैदिकनिषेधे तदधिकरणान्तर्भाविनैव निषेध्यप्रसक्तिरुपजीव्या। अन्यथा विकल्पापत्तिभयेन नानुयाजेष्वित्यादौ पर्युदासलक्षणानामङ्गीकारापत्तेः। निषेधमात्रस्य ह्रदे वह्निर्नास्तीत्यादिलौकिकवाक्ये उपपत्तावपि वैदिकस्य नित्यानुवादमात्रत्वे वैयर्थ्यापत्तेः।

न च वैदिकेऽपि वैदिकप्रसक्त्यैव यत्र निषेधोपपत्तिस्तत्रैव विकल्पापत्तिः, प्रसञ्जकनिषेधयोस्तुल्यबलत्वात्, लौकिकप्रसक्तौ तु वेदेन दुर्बलस्य प्रसञ्जकस्य बाधाद्विकल्पनापत्त्या निषेध एव "न कलञ्जं भक्षयेद्" इतिवदिति वाच्यम्; तत्रापि तृप्तिसाधनत्वेन लोकतः प्रसक्तस्य कलञ्जभक्षणस्य निषेधेन बलवदनिष्टाननुबन्धित्वमात्रबोधनात्। अत एवेष्टसाधनत्वमात्रस्य विध्यर्थत्वे निषेधानुपपत्त्या बलवदनिष्टाननुबन्धित्वमपि विध्यर्थ इति सिद्धान्तः। अत्र तु तत्रैव प्राप्तस्याभेदस्य तत्रैव निषेधे प्रापकस्यात्यन्तबाधापत्तेरित्यलं पल्लवेन।

किञ्च चरमबुद्धितद्विषययोः पुरुषान्तरेण भेदग्रहे मानाभाव इत्ययुक्तम्, सर्वं सर्वस्माद् भिन्नमिति वाक्यस्य तत्तत्पदार्थानां स्वस्माद् भेदमात्रे तात्पर्यम्, न तु परस्पराभेदेऽपि इति मयोच्यमाने तवोत्तराभावात्। विशेष्यतावच्छेदकावच्छेदेन विधेयान्वयस्य चरमबुद्धिविषये श्रुतिप्रवृत्तिं वदता त्वयाप्यनुपपादितत्वात्। विशेष्यतावच्छेदकसामानाधिकरण्यमात्रेणाभेदान्वयस्योक्तरीत्यापि सम्भवात्, घटत्वावच्छिन्नस्य घटत्वावच्छिन्नेनाभेद इत्यादिरीत्यावच्छेदकावच्छेदेनाप्यन्वयस्य रक्षणाच्च। अथ ययोर्भेदो लोकसिद्धस्तयोरेवाभेदे तात्पर्य्यम्, अन्यथा ज्ञातज्ञापकत्वेन वैयर्थ्यापत्तिरिति चेत्तर्हि यत्र त्वयाद्वैतश्रुतेरवकाश उच्यते, तयोर्भेदो लोकसिद्धोऽस्ति न वा, नान्त्यः; उक्तदोषात्। अथादिपक्षमङ्गीकुरुषे तर्हि चरमबुद्धितद्विषययोर्भेदः परकीयबुद्धिग्राह्य

इत्यत्र त्वद्वाक्यस्यैवास्माभिः प्रमाणत्वेनासादितत्वात्सिद्धमस्मदिष्टमिति किन्तव तत्र प्रत्यक्षानुमानयोः प्रमाणत्वनिर्वासनदुर्व्यसनेन। न च मद्-वाक्यं त्वां प्रति वादिवाक्यत्वात्कथं प्रमाणमिति वाच्यम्; बाधकाभावे वादिवाक्यस्यापि प्रमाणत्वात्। एवं श्रुतिविषयत्वेन तदभिमतेऽन्यत्रापि बोध्यम्। तस्मात्—

सिद्धसाधनबाधाय वाचोयुक्त्या प्रवृत्तया।
मूलबाधः समानीत इति जानीत नः प्रियम्॥

तथा हि—

अस्तु स्वप्रतियोगिकस्वगतभिद्वयावर्त्तिकैवाद्वया-
न्नायत्वाभिमतापि गीरिति मयि त्वां प्रत्यवस्थायुते।
भिन्नस्यैव भिदा निषेधविषयं तद्भावमुद्भावयं-
स्तान् स्वोक्तादवकाशतोऽपि न भवान् स्पष्टं निराचष्ट किम्॥

एवं स्वभिन्नसर्वभेदस्य साध्यत्वेऽद्वैतवादिनं प्रति विशेषणासिद्धिः, इत्यपि निरस्तम्। उक्तश्चात्र **वृद्धैः**—"अनिच्छाहेतोरभेदप्रामाण्यस्य श्रुतेरेवाद्य यावद्विकल्प्यत्वात्" इति। न च स्वत्वाननुगमो दोषः। प्राचीनमते तस्यानुगतत्वात्। स्वावच्छेदकवदवृत्तित्वसम्बन्धेन प्रतियोगिताविशिष्टो यः सर्वभेदस्तस्य वा साध्यत्वात्।

वस्तुतो यत्र त्वयाद्वैतश्रुतेरवकाश उच्यते तामेव बुद्धिं पक्षीकृत्य स्वविषयाद्भेदसाधनेनैव तत्र श्रुतिप्रवृत्तिप्रतिबन्धसिद्धिः। पूर्वप्रवृत्तीनां विषयादगृहीतभेदानां बुद्धीनां दृष्टान्तत्वसम्भवात्। न हीदानीं बुद्धिमात्रस्य स्वविषयभिन्नत्वे विवादः, चरमबुद्धिरेवाद्वैतश्रुतिविषया इति पक्षस्यैव प्रक्रान्तत्वादिति। तथा च सर्वबुद्धीनां सर्वभेदसिद्धौ दोषाभिधानं निरनुयोज्यानुयोगः। यत्तु व्याप्तिग्रहमात्रेणेत्यादि, तत्राप्याहुः—धूमवान् वह्निमानिति बुद्ध्या पर्वतो धूमवानिति बुद्ध्या च वह्निमत्पर्वतसाध्यकपर्वतपक्षकव्यवहाराभावेनानुमितेरननुमन्तव्यत्वात्। अथ व्याप्तिबोधात्सामान्यमात्रे जिज्ञासाविच्छित्तिरस्तु, विशेषे तु सास्त्येवेत्युच्यते; तर्हि जिज्ञासावशादेव सिद्धसाधनताविरहादित्यादि। तदेतत्सर्वमभिसन्धाय **वृद्धैरुक्तम्**—"चरमबुद्धौ न श्रुतेरवकाशः तदुपस्थितौ चरमत्वव्याघातात्। अनुपस्थितौ तु तत्राद्वैतश्रुतेः प्रवृत्त्यनवबोधात्" इति। एतेन तव भेदत्वेनानुपस्थितत्वस्यैव चरमशब्दार्थत्वादिति। तदुपरि दूषणोपन्यासो निरस्तः। उक्तरीतेस्तत्राभिमतत्वादित्यास्तां विस्तरः।

अर्थापत्तिस्थलेऽप्येवं वदन्ति । यावदुपपादकं तत्सर्वमर्थापत्तेर्विषयो न तु यत्किञ्चिदुपपादकमेव । तथा चार्थापत्तेरद्वैतज्ञानापेक्षभेदाभावे तत्रैव श्रुतेः सावकाशत्वात्, घटपटभेदासिद्धिप्रसङ्गादर्थापत्तिभेदस्यापि पटघटभेदोपपादकत्वादर्थापत्तिविषयकत्वमावश्यकम्, अन्यथा त्वन्मते दृग्दृश्यसम्बन्धानुपपत्तिः प्रपञ्चस्य सत्त्वेन ज्ञाननिर्वर्त्यत्वानुपपत्तिश्च त्वन्मतो मिथ्यात्वं न विषयीकुर्यात् । "सर्वं खल्विदं ब्रह्म" इति श्रुतिर्नेह नानास्तीतिनिषेधानुपपत्तिश्च ब्रह्मणि स्वाभेदं न गोचरयेत् । तथा च श्रुत्यभेदे स्वबोधनार्थं श्रुत्यन्तरस्य, अर्थापत्त्यभेदबोधनार्थमर्थापत्त्यन्तरस्य चापेक्षायामनवस्था स्यादिति ।

यत्तु तत्रोपपादकदृश्यत्वादेर्मिथ्यात्वबोधकश्रुत्यादिसाधारण्यादेकधर्मावच्छिन्नत्वान्मिथ्यात्वबोधकं श्रुत्यादि स्वस्यापि मिथ्यात्वं विषयीकरोति, प्रकृते तु विषयितया घटपटभिन्नत्वमुपपाद्यं तदुपपादकं च न सर्वभिन्नत्वम्, स्वतोपि भेदापत्तेः । नापि स्वभिन्नयावद्भिन्नत्वम्, विशेषणासिद्धेः स्वत्वाननुगमाच्च । तथा च प्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदवत्ताज्ञानमेवोपपादकमिति; तन्नानात्वादर्थापत्त्यद्वैतज्ञानयोर्ज्ञानस्य घटपटभेदोपपादकत्वेऽपि नार्थापत्तिविषयत्वम् । नहि वस्तुत उपपादकत्वमर्थापत्तिविषयकत्वे तन्त्रम्, भ्रमरूपार्थापत्तेरुच्छेदापत्तेः । किन्तूपपादकत्वेन ज्ञानमेव, तच्चात्र नोभयसाधारणमिति, तन्न; विशेषणासिद्ध्यादेः पूर्वमेव निरस्तत्वात् । स्वसमानाधिकरणानवच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य स्वावच्छिन्नचैतन्याभिन्नचैतन्यप्रतियोगिकतादात्म्यरूपस्य वृत्तिव्याप्यत्वरूपदृश्यत्वस्य चाननुगतत्वसाम्याच्च तादात्म्यस्य समवायन्यायेन तैरपि नानात्वोपगमात् । इदञ्च सम्भवेनोक्तम्, वस्तुतस्तु यत्र त्वयाद्वैतश्रुतेरवकाश उच्यते, तत्रैवार्थापत्त्या भेदः साधनीयः । अन्यत्र श्रुतिप्रवृत्तेः प्रकारान्तरेणैव निरोधोपपत्तेः । अन्यथा चरमार्थापत्तिपर्यन्तं त्वदनुधावनवैयर्थ्यात् ।

न च त्वदुक्तायां तस्यामेवार्थापत्तौ श्रुतेरवकाशो मया वाच्य इति वाच्यम्; तथापि मयार्थापत्त्यन्तरेण भेदस्य साध्यत्वात् ।

नन्वेवमनवस्था स्यादिति चेत्तत्रापि तस्यास्तुल्यत्वात् । उक्तञ्चात्र **वृद्धैः**—"यदा च बाधबुद्धिपरम्परया विषयं परित्यज्यान्यत्र विषये श्रुतिपदारोपणमेकेन त्वया कर्त्तव्यमकरणे श्रुतिजाभेदज्ञानोपपादनायोगात्, तदा तवैवायमतीव श्रमः, बाधबुद्धिपरम्परायाश्च पुरुषभेदेनापि सम्भवेनास्माकं श्रमलाघवम् । न च श्रमगौरवेणापि भेदशून्यविषयलाभ इति कुत्र श्रुतेरवकाशः स्यादिति । तस्मात्—

जैगीषव्यतपस्विने च रहितं भेदावगाहस्पृशा
ज्ञानेन स्थलमेकमाकलयितुं भूयोऽनुभूतश्रमः।
आनैश्वर्यमुपावहन्नुपहितां कर्तुं फलेन स्पृहाम्
अद्वैती त्रपयैव देवर इवानिच्छन्परावर्त्तते ॥

किञ्चाद्वैतवादिनो यथोक्तार्थापत्त्यद्वैतज्ञानयोर्भेदनिर्णयोऽस्ति न वा, नाद्यः, तत्राद्वैतश्रुतेरवकाशोक्त्ययोगात्। नान्त्यः, तत एव द्वैतव्यवहार-व्याघाताच्च।

यत्तु बाधकाद्वैतज्ञानसत्त्वेऽपि द्वैतसंस्काराधीनप्रतिभासस्य प्रारब्ध-कर्मकृतप्रतिबन्धेनानुच्छेदाद् द्वैतवादिकृतमापादनमद्वैतवादिनं प्रति व्यर्थ-मेव। नहि तस्य भ्रमत्वेन निर्णीयमानाद्वैतधीः सम्भवति। न चापाद्या-पादकभेदश्रद्धास्ति, येन तत्पराभूतिः स्यात्। तदुक्तं **खण्डने**—

नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि।
असिद्धभेदाद् व्याघातः पतेदापादकात्कुतः ॥ इति।

तदसत्; अद्वैतज्ञानञ्च तव भ्रमात्मकम्, अद्वैते श्रुतितात्पर्याभावात्। द्वैतज्ञाने च भ्रमत्वेन ज्ञानं तदभाववद्विशेष्यकतत्प्रकारकत्वाभाववति तद्विशेष्यकं तत्प्रकारकत्वप्रकारकत्वेन भ्रम एवेति। द्वैतवादिप्रत्यवस्थाने स्वानुभवशपथप्रदर्शनस्याप्रयोजकत्वादिति। नहि तव तादृशज्ञानं नास्तीत्यत्र विवादः। किन्तु श्रुतेस्तदर्थाभावे तत्र स्वानुभवमेव प्रमाणमुपदर्शयन् सर्वथा नमस्य एव, अकथत्वात्। एतेन श्रौतसर्वाभेदज्ञानस्य द्वैतमात्रोच्छेदकत्वेन प्रत्यक्षादिस्वरूपोच्छेदकत्वस्यापि सत्त्वात् श्रुतिः प्रबला। तथा च **खण्डनम्**—

प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते।
तत्रानौचित्यसाम्राज्यं वैपरीत्यात्तु नात्र तत् ॥ इति।

इत्यपि निरस्तम्; सर्वाभेदस्य श्रुतितात्पर्याविषयत्वविषयकविप्रपत्ति-वेलायामभेदज्ञानस्य प्रत्यक्षाद्युच्छेदकत्वमित्युक्तेः। सहृदयानामप्रवृत्तेः। सर्वाभेदे प्रमाणानुपन्यासे तदसिद्धौ तज्ज्ञानस्य द्वैतोच्छेदकतायाः शशविषा-णायमानत्वात्। ततश्च—

सर्वलोकानुभूतीनां प्रमाणत्वविपर्यये।
स्वानुभूतेश्च मानत्वे शपथः सत्पथः कथम् ॥

अपि च,

अद्वैतानुभवे त्वदीयशपथान्नैवापरं साधकं
द्वैतस्यानुभवो द्विषत्सुहृदुदासीनेषु साधारणः ।
अप्रामाण्यकलङ्कमङ्कुरयितुं त्वद्धीविरोधे क्षमे
स्वीयत्वेऽपि समे तवोत्तरमतौ द्वेषे विशेषात्कुतः ॥

अपरे पुनराहुः—"आपो वा इदं सर्वम्" इति श्रुतिः, विमतं जलाभिन्न-प्रतीयमानत्वाज्जलवदित्यनुमानं वा स्वबाधकस्य जलभेदज्ञानस्य जलाभेदं गृहीत्वा निर्बाधं सत्, वेदान्तरीत्या सर्वस्य जलाभेदं बोधयेदिति। यत्त्वत्र दूषणमुक्तम्—जलाभेदबोधनेऽपि बाध्यबाधकयोरापः सर्वमिति ज्ञानपृथिव्या-द्योरभेदबोधे भेदाधीनस्य बाध्यबाधकभावस्य दूरीकृतत्वान्न तथेति वैषम्यम्। अतो न बाध्यबाधकैक्यज्ञानस्य जलाद्यभेदज्ञानसाम्यमिति, तच्चिन्त्यम्; तत्रापि हि बाध्यबाधकयोरभेदज्ञानेन तयोर्बाध्यबाधकभावो न निराक्रियते। अद्वैतज्ञानस्यापीति भेदज्ञानविरोधित्वानुपपत्तेः। न चेष्टापत्तिः, त्वया तदभ्युपगमादिति। अतो बाध्यबाधकत्वाभिमतयोरैक्यज्ञानं बाधकत्वा-भावं प्रत्यप्रयोजकमेवेति, किं पृथिव्यादिविशेष्यकजलभेदतदभाव-ज्ञानयोरैक्यज्ञानाभावेन। तथाहि—अद्वैतज्ञानभेदज्ञानयोरैक्ये च द्वैतज्ञानस्य भेदज्ञानबाधकत्वं न स्यादित्याशङ्क्य **औपनिषदै**रेवोक्तम्—"व्यावहारिक-भेदमात्रस्य बाधकत्वाप्रयोजकत्वात्। परीक्षितप्रामाण्यकत्वं बलवत्त्वाद्बाधकं सन्दिग्धप्रामाण्यकं तु दुर्बलत्वाद्बाध्यमिति व्यवस्थाया एव तत्प्रयोजकत्वा-दिति शब्दप्रत्यक्षबलाबलविचारे दर्शितत्वात्" इति। तथा च बाध्यबाध-कयोरैक्यज्ञानाभावेऽपि भेदज्ञानस्य लौकिकत्वेन दुर्बलत्वाद्वैदिकजलाभेदज्ञाने विरोधित्वाभावेन जलाभेदज्ञानस्य जलभेदज्ञानप्रतिबन्धकतायां त्वदुक्तरीत्यै-वानुपपत्तेरभावात्। तथा चोक्तप्रतिवन्दिरनिन्दितैव। एतादृशशब्दस्य प्रत्यक्षापेक्षया बलवत्त्वं पूर्वमेव निराकृतमिति त्वन्यत्। एतेन सर्वं सर्वस्मा-द्भिन्नमिति वाक्यमपि व्याख्यातम्।

यत्तु बाध्यबाधकयोरभेदेऽपि बाधकत्वं न स्यादित्यत्र हेत्वभावात्तद-युक्तं पूर्वोक्तदोषाच्च। तथाहि अद्वैतज्ञानिनं प्रति तादृशवाक्यस्याप्रामाण्य-ग्रहाभावविशिष्टभेदज्ञानाजनकत्वात्तदुपन्यासो व्यर्थः। भेदज्ञानस्य स्वस्मि-न्नपि भेदसिद्ध्या बाधकत्वाभावापत्त्या स्वातिरिक्तसर्वभेदविषयकत्वं वाच्यम्। तथा च स्वान्यस्मिन् सर्वस्मिन्सर्वभेदरूपे वाक्यार्थे द्वैतज्ञानिनं प्रति

पदार्थासिद्धिश्चेति, तदसत्; भेदाभेदयोर्बाध्यबाधकभावे तदभावे वाकिञ्चि-करत्वस्योक्तत्वात्। अद्वैतवाक्यतज्ज्ञानविषयाणां तेभ्यो भेदग्रहे सत्यसति वा प्रकृतानुपयुक्तत्वात्। शब्दत्वेनैव तस्य प्राबल्यसम्भवात्। पूर्वोक्त-दोषाणां पूर्वमेव निरस्तत्वात्।

यत्तु "आपो वा" इत्यादिनारायणीयोपनिषद्वाक्यस्य स्तुतिपरत्वाद-भेदपरत्वाभावाद्भेदप्रत्यक्षापेक्षया दुर्बलत्वं न तु वाक्यस्य त्वनाप्तोक्तत्वेन घटो न घट इतिवदपार्थकत्वेन तथेति। तदप्यसत्; त्वदभिमतवाक्यस्यापि सर्वात्मकत्वेन ब्रह्मस्तुतावेव तात्पर्यात्। सर्वं सर्वाभिन्नमिति वाक्यस्यापि घटोऽघट इतिवदनाकाङ्क्षत्वात्, अनाप्तोक्तत्वाविशेषाच्च। नहि तादृशं वाक्यं श्रौतत्वेन क्वचिल्लिखितमस्ति, किन्त्वद्वैतश्रुतेः स्वाभिमतपर्यवसितार्थपरत्वेन त्वदीयैरेवोत्पत्तिवद्धमिति दिक्।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**सर्वैश्वर्यवतो[1]ऽखण्ड तर्केण शतपर्वणा ॥ २ ॥ ***

*

---

१. अद्वैतपर्वतो इति भाति। * ख. पुस्तकेऽयमंशो नास्तीति प्रारम्भे सूचितम्।

# तृतीयोंऽशः

एवं विश्वसत्त्वश्रुतिविरोधादपि "नेह नाना" इत्यादिश्रुतेर्नाद्वैतपरत्वम्। न चाद्वैतश्रुतिविरोधात्तच्छ्रुतेरेव न विश्वसत्त्वे तात्पर्यमिति-वाच्यम्; मानान्तरबाधितत्वेनाद्वैतश्रुतेर्दुर्बलत्वात्। अत एव "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति "अपाम सोममममृता अभूम" इत्यादि श्रुत्यपेक्षया "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र कर्मचितो लोकः क्षीयते" इति श्रुतेर्बलवत्त्वं कृतकत्वलिङ्गकविनाशित्वानुमानसह-कृतत्वादिति **वाचस्पतिमिश्रादयः**।

यत्तु विश्वसत्त्वश्रुतेरिन्द्रादिश्रुतावेव तात्पर्यान्न स्वार्थे प्रामाण्यमिति, तन्न; अवान्तरतात्पर्येण विश्वसत्त्वेऽपि प्रामाण्यस्य देवताधिकरणन्यायेन दुर्वारत्वात्। एतैरप्यद्वैतश्रुतिप्रामाण्यस्य तथैवाभ्युपगमात्। उक्तञ्च **खण्डन-कारैः**—"सिद्धार्थानां श्रुतीनामन्यपरत्वमपि यदि स्यात्तथापि [१]पदसमन्वय-बलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरिभवनाद्"[१] इति। व्याख्यातञ्च **टीकाकारैः**—"मानान्तरप्राप्तिविरोधयोरसतोरन्यपरस्य स्वार्थे प्रामाण्यादित्यद्वैतसिद्धिः"। यदपि मानान्तरबाधिते ज्ञाते चार्थे शब्दस्य प्रामाण्यं न तत्र व्यवस्थापितं किन्त्वज्ञातेऽबाधिते च "इन्द्रो वृत्राय वज्र-मुदयच्छद्" इत्यादेरिव देवताविग्रहादौ विश्वसत्त्वं तु मानान्तरप्राप्तं बाधितं चेति न तत्रावान्तरतात्पर्येण प्रामाण्यं सुवचमिति, तदपि न; मिथ्यात्वविरोधिसत्त्वस्य प्रत्यक्षगोचरतायास्त्वया तावदनङ्गीकारात्, बाधक-प्रमाणस्य दुर्वचत्वात्। अद्वैते श्रुतितात्पर्यस्याद्ययावदसिद्धेः।

वस्तुतस्तु प्रत्यक्षप्राप्तेऽपि वादिविप्रतिपत्त्या संदिग्धेऽज्ञातत्वानपाया-त्तत्र तात्पर्यं संभवत्येव, अज्ञातत्वं ह्यप्रामाण्यज्ञानानास्कन्दितज्ञानविषयत्वा-भावः। स च तत्र विशेषणाभावात्सुलभ एव। यथाकथञ्चिज्ज्ञानत्वस्यैव प्रामाण्यविरोधित्वे त्वन्मतेऽपि घटः सन्नित्यादौ ज्ञानमात्रे ब्रह्मणो नियमेन स्फुरणस्वीकाराद् ब्रह्मणापि वेदान्तानां तात्पर्यं न स्यात्। निर्गुणत्वाद्युप-

---

१–१. तथापि पदसमन्वयवेदरतासु····अन्वयपरीभवनाद्—ख।

लक्षितत्वेन शुद्धब्रह्मणो ज्ञानं तावता न सिद्धमिति चेत्तुल्यम् ; उद्देश्यासिद्धेरविशेषात् । ब्रह्म निर्गुणम्, वस्तुत्वात्, गुणवदित्यनुमानाभासादिभिस्तस्यापि सिद्धत्वाच्च । परमार्थतस्तु सत्त्वविषयकत्वे सत्यपि प्रत्यक्षस्य तत्र प्रामाण्यनिश्चयार्थं बाधकाभावनिश्चायकत्वेन विश्वसत्त्वश्रुतेर्नानुवादकत्वम्, अनुग्राह्यानुग्राहकयोरनुवाद्यानुवादकभावाभावात् । अन्यथा यागः स्वर्गजनको यागत्वादित्याद्यनुमानसमानविषयकत्वेन "स्वर्गकामो यजेत" इत्यादि श्रुतिरप्यनुवादिका स्यात् । न च तत्रानुमानप्रामाण्यार्थं श्रुतिरपेक्ष्या, अत एव शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वमिति लक्षणे प्रामाण्यार्थस्वजन्यप्रमाजननार्थं यावत्प्रमाणं शब्दमुपजीवति तदन्यत्वमतिरिक्तं तस्यार्थ इति वदन्तीति वाच्यम्, अत्रापि तदविशेषात् ।

ननु तादृशसत्त्वनिर्णयस्य व्यर्थतया तथापि न सप्रयोजनकत्वसिद्धिः, प्रवृत्तिनिवृत्त्योरेव शास्त्रप्रयोजनत्वादिति चेन्न; प्रपञ्चसत्त्वनिश्चये कर्मानुष्ठानाद्विप्रतिपत्तिनिरासस्य "स्वर्गकामो यजेत" इत्यादिविधिवाक्यापेक्षितत्वान्मन्त्रार्थसत्त्वस्यात्यन्ताविप्रकृष्टाद्वैतवाक्यशेषत्वकल्पनापेक्षया सन्निहितविधिवाक्यशेषत्वकल्पनौचित्याच्च । "विधिषु श्राद्ध ( श्रद्धावान् ? ) एवाधिकारी" इति[1] **वाचस्पत्युक्तेः** ।

यत्तु मिथ्यात्वनिश्चयाभावस्यैव कर्मानुष्ठानेऽपेक्षा तत्रोक्ता, न तु सत्त्वनिश्चयस्येति, तच्चिन्त्यम् ; "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" इत्यत्र तरप्प्रयोगाच्छ्रद्धारहितकर्मणोऽपि फलवत्त्वादद्वैतब्रह्मविदः कथं कर्मस्वनधिकार इत्याशङ्क्यम् । सा श्रद्धा भक्तिरूपा, इयं तु प्रमाणद्वारा विश्वासात्मिकैव, तदभावेऽनधिकार एवेति **कल्पतरुस्वारस्येन** सत्त्वनिश्चयस्यैव तत्रापेक्षोक्तेः । सत्त्वनिश्चयापेक्षया मिथ्यात्वनिश्चयाभावहेतुत्वे गौरवाच्च ।

यत्तु दृष्टेऽप्यर्थे प्रत्यक्षस्य स्वप्रामाण्यनिश्चयार्थं श्रुत्यपेक्षायां श्रुतिसंवादविरहिणि दृष्टे कुत्रापि निःशेषप्रवृत्तिर्न स्यादिति, तदयुक्तम्; अप्रामाण्यशङ्कायामेव प्रमाणान्तरस्य गवेष्यमाणत्वात्, शङ्कायाश्च नियमाभावेनानवस्थाविरहात्, श्रुतिरेवापेक्ष्येति नियमस्तु मया न स्वीक्रियते, यत्र श्रुतिसंवादविरहिणीति त्वदुक्तदोषावकाशः स्यात् । अन्यथा मिथ्यात्वानुमाने

१. श्राद्धएवाधिकारे तुं त—ख ।

विपक्षबाधकविधया श्रुतीनां त्वयाप्युपन्यासात्तद्विरहिणीति त्वदुक्तदोषाद् धूमलिंगकानुमित्यादौ प्रामाण्यनिश्चयो न स्यादित्यस्य मयापि वक्तुं शक्यत्वात्। अनुमानादिप्राप्ते मिथ्यात्वेऽखण्डब्रह्मपराणामपि श्रुतीनामवान्तरतात्पर्येण प्रामाण्यस्य तैरप्यङ्गीकाराच्च। कथं वा शैत्यानुमितिसाम्यभङ्गप्रकरणे प्रसक्तिं विनापि निषेधस्वीकारे "न तौ पशौ करोति न सोमे" इति वाक्ये न सोमे इति न प्रतिषेधस्तत्राज्यभागयोरप्रसक्तेरित्यंशविरोधमाशङ्क्य तैः स्वयमेवोक्तम्—"मानान्तरप्राप्तिप्रयोजनाभावाभावाभ्यां प्रतिषेधस्य तत्र तात्पर्याविषयत्वेन विध्यपेक्षितस्तुतौ न सोम इत्यादेस्तात्पर्येऽपि प्रपञ्चे तात्त्विकत्वाभावस्य वादिविप्रतिपत्त्या सन्दिग्धत्वेनाप्राप्तत्वात्तत्र श्रुतेस्तात्पर्यं युक्तमेव" इति। अद्वैतस्य मानान्तरेणाप्रसक्तौ वादिविप्रतिपत्तेरप्यनुत्थानापत्तेः, अन्यथाज्ञानस्यापि बहुभिः प्रत्यक्षानुमानार्थापत्तिशब्दैः सिद्धिस्तैरेवोच्यमानानुपपन्ना स्यात्। तदत्र "निन्दामि च पिबामि च" इति न्यायः परेषां दुर्वार एव।

यत्तु भावरूपत्वेन ज्ञानस्य[1] प्रत्यक्षं नास्तीति, तन्न; अहमज्ञ इत्यादिज्ञानस्य ज्ञानाभावविषयकत्वं निरस्यद्भिरेव तद्विषयस्य भावरूपत्वं नास्तीति वक्तुमशक्यत्वात्। उपसंहृतं हि तत्र तदेवमहमज्ञ इति ज्ञानस्य अभावज्ञानसामग्रीविलक्षणसामग्रीजन्यत्वादभावविलक्षणविषयत्वं सिद्धमित्यादि। भावरूपत्वप्रकारकशाब्दबोधस्य तु "अनृतेन हि प्रत्यूढा नीहारेण च प्रावृताः" इत्यादितोऽप्यनुदयात् पदादनुपस्थितस्य शाब्दबोधे प्रकारत्वेनाप्यन्वयबोधानुपपत्तेः। तदनुमानेऽप्यभावभिन्नत्वविशेषणानां सत्त्वाच्च।

यदपि श्रुतेः सृष्टिपूर्वकालीनत्वेनाज्ञानग्राहकत्वात्सुषुप्तिकालसम्बन्धित्वेन तद्ग्राहकप्रत्यक्षाद्भिन्नविषयत्वेनैव प्रामाण्यमिति, तदप्यसत्; सदसद्विलक्षणकार्यत्वादिलिङ्गकानुमानादिना प्रपञ्चे सदसद्विलक्षणकारणपूर्वकत्वग्रहणात्सृष्टिपूर्वकालीनत्वेनाप्यज्ञानं गृहीतम्, तथापि विपरीतानुमानादिना तादृशानुमानेऽप्रामाण्यशङ्कावतामनिपुणपुरुषाणामननुवादिकैवोक्तश्रुतिरित्यस्य स्वयमेवोक्तत्वात्।

यत्त्वेतावन्तं कालं ब्रह्म नावेदिषमित्यनुभवेन ब्रह्मधीपूर्वकालमात्रगतत्वेनाज्ञानग्रहणादनुवादकत्वं श्रुतेः स्यादिति पक्षमुद्भाव्य प्रलयकालत्वेन श्रुतेस्तद्ग्राहकत्वम्, प्रत्यक्षस्य तु ब्रह्मधीकालवृत्तित्वेनेति प्रकारभेदान्नानुवा-

१. अज्ञानस्य—ख।

दकतेति, तन्न; "वायुर्वै क्षेपिष्ठा देवता" इत्यत्रापि देवतात्वविशिष्टवायुत्वं धर्मितावच्छेदकीकृत्य क्षेपिष्ठत्वं प्रत्यक्षेण न सिद्धमित्यनुवादकत्वप्रसङ्गात्।

न च धर्मितावच्छेदकत्वेन या प्रकारता तदन्यप्रकारतांशे भेदो विवक्षणीयः, अप्रयोजकत्वात्, प्रलयकालवृत्तित्वस्य "तम आसीत्तमसा गूढमग्रे" इत्यतः शाब्दबोधाभावाच्च "अग्निर्हिमस्य भेषजम्" इत्यादावपि हिमनाशकत्वस्य लोकतः सिद्धावपि भेषजत्वेन तद्बोधासिद्ध्यानुवादत्वभङ्गप्रसङ्गात्। अत एवोक्तसाद्यनुभवस्य श्रुतिग्राह्यसदसद्विलक्षणत्वाग्राहकत्वाद् भ्रमप्रमासाधारणत्वेन भ्रमत्वशङ्कास्पदत्वेनोक्तश्रुतिसापेक्षत्वाच्च नोक्तश्रुत्यनुवादकताप्रयोजकत्वमिति स्वयमेवोक्तम्।

यत्तु सत्त्वप्रत्यक्षप्रामाण्येनैव मिथ्यात्वश्रुत्यनुमानादिबाधः। यदि च तत्प्रत्यक्षमप्रमाणं तर्हि कथं सत्त्वश्रुतिरनुवादिका, प्रमाणाप्राप्तार्थविषयत्वेन प्रामाण्यस्यैव सम्भवादिति पक्षमनूद्य दूषणमुक्तं प्रत्यक्षाप्रामाण्येऽपि तत्सिद्धबोधकस्यानुवादकत्वसम्भवात्। न हि प्रमितिप्रमापकत्वमनुवादकत्वम्, किन्तु पश्चाद्वादकत्वमात्रम्। पश्चात्त्वं च प्रमाणावधिकमप्रमाणावधिकं वेति न कश्चिद्विशेष इति, तदत्यन्तमसत्; लिङ्गाभासादिभिः सर्वस्याप्यलौकिकार्थस्य बोधयितुं शक्यतया पुरोवादस्थलस्य दुर्लभत्वापत्तेः। अपि चैवं सत्यं ज्ञानमित्यादीनामनुवादत्वापत्तिः। ब्रह्मत्वस्य लोकतो निरधिष्ठानभ्रमाङ्गीकारे शून्यवादापत्त्या च त्वद्रीत्यासिद्धत्वात्।

यत्तु ब्रह्मत्वसामानाधिकरण्येन सत्त्वस्य श्रुतिबोधकत्वम्, तच्च न प्रत्यक्षसिद्धम्, घटःसन्नित्यादेर्ब्रह्मविषयकत्वानिश्चयादिति, तन्न; ब्रह्म सत्, वस्तुत्वात्, घटवदित्यादिना ब्रह्मत्वसामानाधिकरण्येनापि सत्त्वावगमात्। प्रमितप्रमापकत्वस्य चानुवादत्वप्रयोजकतायास्त्वयानभ्युपगमात्। अत एव येषामनुमानाकौशलेन विरुद्धतर्काभासेन चानुमाने भ्रमत्वशङ्का तेषां[१] न ब्रह्मसत्त्वबोधरुक्तश्रुत्यैवेति तैरेवोक्तं संगच्छते[१]।

यत्तु घटः सन्नित्यादौ घटाद्युपहितसद्रूपस्यैव भानेन शुद्धब्रह्माभावात्तत्सत्यमित्यननुवादत्वशङ्कैव मन्देति, तच्चिन्त्यम्; उपहितविषयकस्य शुद्धविषयतायास्तैरभ्युपेयत्वात्, अन्यथा तदुत्तरं शुद्धसंशयाद्यापत्तेः। "तमेव भान्तमनुभाति सर्वम्" इत्यादिश्रुतीनां "अनुकृतेस्तस्य च" इति सूत्रस्य चानुपपत्तेः शुद्धस्य श्रुत्याप्युपस्थितिविरहाच्च शब्दजन्यवृत्तेरप्युपाधिविशेषात्।

१–१. तेषां तच्छून्यं ब्रह्म—क।

यत्तु **बृहदारण्यकभाष्ये** "देहभिन्नात्मबोधिका या अस्तीत्येवोपलब्धव्या" इति श्रुतेः प्रत्यक्षप्राप्तानुवादित्वमाशङ्क्य "वादिविप्रतिपत्तिदर्शनाद्" इत्यादिना तत्परिहृतम्। तथा च प्रत्यक्षसिद्धसत्त्वग्राहकत्वेऽपि वादिविप्रतिपत्तिनिर्णयार्थकेन विश्वसत्त्वश्रुतेरपि नानुवादकत्वमिति पक्षमनूद्य दूषणमुक्तम्; तत्र वादिविप्रतिपत्तिदर्शनेन भिन्नत्वेनात्मनः प्रत्यक्षमेव नास्ति, अन्यथा प्रत्यक्षप्रामाण्यवादिन**श्चार्वाका**देस्तत्र विप्रतिपत्तिर्न स्यादित्युक्तम्, न तु वादिविप्रतिपत्तिनिरासेनास्तीत्यादेः सार्थकत्वमनुवादकत्वं वा। तथा चोक्तं तत्रैव "तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारविशेषे च शास्त्रं वर्त्तते" इति, तत्रेदं वाच्यम्; आत्ममात्रस्य प्रत्यक्षं सर्वसिद्धम्, तच्च देहादिविषयकं न वेत्यत्र परं विवादः। तत्र यदि विशेषणांशानुरोधेन शास्त्रादेः सार्थक्यं तदात्रापि स्यात्। तत्परं देहभिन्नत्वमप्रामाण्यज्ञानाभावो वेत्यन्यदेतत्। किंवानेन निरस्तेन भवति, मिथ्यात्वस्य वादिविप्रतिपत्त्या सन्दिग्धत्वाद्वेदसार्थक्यस्य तैरप्यङ्गीकारेण तस्यैव बहुशो दृष्टान्तितत्वात्। यदपि **विज्ञानवादा**दिनापि मिथ्यात्वप्राप्त्या तेनानुवादत्वमाशङ्क्य निराकृतं तस्यापौरुषेयश्रुत्यवधिकपूर्वत्वाभावादिति, तच्चिन्त्यम्; "असदेवेदमग्र आसीद्" इत्यादौ **नास्तिकमत**स्याप्यनुवाददर्शनात्। किञ्च अग्र आसीदिति पदानां शून्यवादनिषेधार्थत्वम्। "अविनाशी वारेऽयमात्मा न विच्छित्तिधर्मा" इत्यत्राद्येन **नास्तिक**मतस्य द्वितीयेन च **वैशेषिक**मतस्य निरास इति च स्वयमेवोक्तम्। **बृहदारण्यके**ऽपि "अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व" इत्यादिकमुषस्तब्राह्मणम्, एवं देहभिन्न आत्मा नास्तीत्युषस्तस्य पूर्वपक्षः। तद्भिन्नात्मव्यवस्थापनेन च **याज्ञवल्क्यस्य** सिद्धान्त इत्येवं परतया व्याख्यातम्। प्रवाहानादित्वस्य सर्वत्राप्यविशिष्टत्वात्, निषेधप्रतियोगित्वेनैवानुवादो न त्वन्यथेति विशेषस्याकिञ्चित्करत्वादिति।

यत्तु सत्त्वप्रत्यक्षे भ्रमत्वशङ्काविरहान्न दाढ्यर्थं श्रुतिसापेक्षतेति, तच्चिन्त्यम्; मिथ्यात्वानुमानादिना भ्रमत्वशङ्कायाः सुलभत्वात्, शङ्कोपधायकविशेष्यस्याप्रयोजकत्वादिति। किञ्च प्रकारभेदस्यावश्यकत्वे घटत्वादिना प्रातिस्विकरूपेण सत्त्वग्रहेऽपि विश्वत्वादिनासत्त्वं श्रुत्या बोध्यत इति वक्तव्यम्। अत एव घटत्वादिनेतरभेदनिश्चयेऽपि पृथिवीत्वाद्यवच्छेदेनेतरभेदानुमानप्रवृत्तिः।

यत्तु विश्वत्वं नाम नैकोऽनुगतो धर्मो विश्वशब्दार्थः, किन्तु सर्वनाम-

  

त्वाद्घटत्वादिकमेवेति कथं प्रकारभेदोऽपीति, तन्न; "नेह नानास्ति किञ्चन", "ब्रह्मैवेदं सर्वम्" "यत्र त्वस्य सर्वमात्मैवाभूद्" इत्यादावपि किञ्चित्त्वसर्वत्वादेरेकस्याभावात्कथं प्रपञ्चमात्रस्य मिथ्यात्वग्रहः, घटत्वाद्यवान्तरानेकधर्माणां युगपदुपादानोपस्थित्योरसम्भवात्। अथात्र शाब्दबाधाविषयोपात्तभिन्नत्वादिस्तथेति चेत्; किमत्र स दण्डवारितः। नन्वेवमात्मनः सत्त्वं न सिध्यति, इति चेत्; कोऽर्थः ? विश्वसत्त्वश्रुत्या न सिध्येदिति वा प्रमाणान्तरेणापि न सिध्येदिति वा। नाद्यः, निरनुयोज्यानुयोगात्। नान्त्यः, बाधकाभावात्। यत्तु "अग्निर्हिमस्य भेषजम्" इत्यादेरपि विप्रतिपत्तिनिरासार्थत्वेन सार्थक्यं स्यादिति, तन्न; वह्निसंयोगहिमनिवृत्त्योर्नियमे कस्यापि वादिनो विप्रतिपत्तेरभावात्। यत्तु अग्नेर्हिमनिवृत्तिजनकरूपे वाक्यार्थे स्वभावयदृच्छावादयोर्विवादः, "अस्यामोषधयोऽजायन्त" इति वाक्यार्थे चावमन्थनाङ्गीकारमते ओषधिरूपस्थूलद्रव्योत्पत्तिरूपेऽर्थे विवाद एवेति, तच्चिन्त्यम्; एतत्पुरस्कारेणैव च विवादस्य तावताप्यदर्शनात्। किञ्च अग्निहिमनिवृत्त्योः पौर्वापर्यमात्रं ह्येतद्वाक्यार्थो न जनकत्वपर्यन्तम्, तत्र च न कस्यापि विवादः। नहि कारणत्वेनाभिमतानां पदार्थानां कार्यात्पूर्वं नियमतः स्वत्वमपि स्वभाववादादौ नाभ्युपेयते, प्रत्यक्षविरोधात्, किन्त्वन्यथासिद्धवत्सतामपि तेषां कार्येणापेक्षा न क्रियत इति, **कुसमाञ्जल्यादौ** तथैव दर्शनात्। एवञ्चौषधीनां स्थूलद्रव्यरूपत्वेनोत्पत्तिर्न तद्वाक्यार्थोऽपि त्वोषधीपदार्थत्वेनैव। स च परमाणुसमूहो वा तदतिरिक्तं वेत्यन्यदेतत्। अन्यथौषध्यादिपदात्तेषामन्येषाञ्च बोधसाधारण्यं न स्यादिति बोध्यम्।

ननु का तावद्विश्वसत्त्वश्रुतिरिति चेत् ? उच्यते; "विश्वं सत्यं मघवाना युवयोरिदापश्च न प्रमिणन्ति व्रतं वाम्। अच्छेन्द्राब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिनां जिगातम्" इति **ऋङ्मन्त्रः**। अस्यार्थः—इन्द्राब्रह्मणस्पती इति सम्बोधनम्, "देवताद्वन्द्वे च" इत्यनङ्, मघवाना इति मघवानावित्यर्थः "सुपां सुलुक्" इति छान्दससूत्रेण औकारस्याजादेशः। साहचर्यादन्यस्यापीति मघवत्पदेन निर्देशः। यौगिकार्थमादाय वा। सत्यं सत्त्वविशिष्टं विश्वं जन्यजातं युवयोरेव सम्बन्धि युष्मत्कार्यत्वादापो व्यापनशीला देवता अपि वां युवयोर्व्रतं संकल्पं न प्रमिणन्ति न हिंसन्ति। नान्यथयन्तीति यावत्। अप्रतिहतेच्छत्वात्, नोऽस्माकं हविर्हव्याद्यन्नं पुरोडाशादिकं चाच्छ अभिलक्ष्य वाजिनां वेगवतां चाश्वाविव युजायुक्तौ सन्तौ जिगातं यज्ञदेशमागच्छतं, "अच्छ गत्यर्थवादेषु" इतिसूत्रेणाच्छशब्दस्य जिगातमिति गच्छत्यर्थकछान्दसधातुयोगे गतिसंज्ञा, "व्यवहिताश्च" इति छान्दसं व्यवधानम्।

यत्तु विश्वं सर्वं सत्यं कर्म सद्भवत्वात्फलस्यावश्यम्भावित्वाद्वा। "यो वै धर्मः सत्यं तदिति, तस्माद् धर्मं वदन्तमाहुः सत्यं वदति" इति च श्रुतौ धर्मशब्दस्य सत्यार्थकत्वोक्तेः। "ऋतं पिबन्तौ सुकृतस्य लोके" इति मन्त्रे सत्य-पर्यायेण ऋतशब्देन कर्मफलमात्रोक्तेश्च सत्यशब्देन प्रकृतं धर्मरूपं कर्मोक्तम्, सतो ब्रह्मणो भव इति व्युत्पत्तेः। तथा च युवामेवोद्दिश्य सर्वाणि कर्माण्यनुष्ठे-यानीत्यर्थ इति, तन्न; उक्तव्युत्पत्तौ मानाभावात्, ब्रह्मभिन्नस्य सत्यमित्यस्य पूर्वमसिद्धेश्च, धर्मस्यैवासाधारणब्रह्मजन्यत्वाभावाच्च। सत्यधर्मत्वमित्यत्रैव तत्तात्पर्येण तयोः पर्यायत्वाभावात्, ऋतशब्देन कर्मफलोक्तावपि कर्मवाचक-त्वलाभविरहाच्च। अर्थानुरोधेन क्वचित्कथंचिद्व्याख्यानेऽपि तावता-शक्तेरसिद्धेः। यदपि सत्यं सत्यत्वेन परिदृश्यमानं जगत् युवाभ्यामेव सृष्ट-मिति, तदप्यसत्; सत्यत्वान्वये बाधकाभावेन तत्त्वेन परिदृश्यमानमित्यध्या-हारेण व्याख्याने मानाभावात्।

न चाद्वैतश्रुतिविरोध एव बाधकः, तस्या अद्याप्यद्वैततात्पर्यकत्वा-सिद्धेः, वैपरीत्ये विनिगमकस्य चोक्तत्वात्। एतेन युवयोरेव विश्वं सर्वं स्तोत्रं यथार्थं यद्यद्गुणजातं स्तुत्या प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न त्वा-रोपितमित्यपि परास्तम्। स्तोत्रपदाध्याहारे मानाभावात्, न त्वारोपित-मित्यर्थेऽपि गुणगुणिनोः सम्बन्धस्य तात्त्विकत्वलाभाच्चेति।

न च प्रातिभासिकवैपरीत्यमात्रं तदर्थ इति वाच्यम्; पारमार्थिक-पर्यवसानस्य तथापि दुर्वारत्वात्, सत्ताभेदस्याद्याप्यसिद्धत्वाच्च। तथा च "शाक्मना शाको अरुणः सुपर्ण आयो महः शूरः सनादनीलः, यच्चिकेत सत्यं नमोघं वसुस्पार्हमुत जेतोत दाता" शाक्मना बलेन, बाहुलकाद्दीर्घः। यत्तु शक्म एव शाक्मेति, तन्न; स्वार्थिकाणप्रत्ययान्तत्वविवक्षायां टिलोपेऽ-कारान्तत्वापत्तेः। शाकः समर्थः, अन्यानपेक्ष इति यावत्। अरुणो वर्णेन सुपर्णः शोभनः पक्षः आगच्छतीत्यध्याहारः, आ इत्युपसर्गस्य श्रूयमाणतया आख्या-तान्तधातोरेवाक्षेपयोग्यत्वात्। महो महान् शूरो विक्रान्तः सनात्पुराणः अनीलः नीलरहितः अग्निवत्कुत्रापि यज्ञे इन्द्रेण स्थितेरकरणात्, पक्षिरूपकेणेन्द्रस्तुति-रियम्। यद्वस्तु चिकेत जानाति तत्सत्यमेव न तु मोघम्, तत्प्रकारकज्ञानविशे-ष्यनिष्ठात्यन्ताभावप्रतियोगित्वरहितं सर्वांशप्रमातिरिक्तज्ञानविषयत्वशून्यमिति यावत्। यद्वा यदिति क्रियाविशेषणम्, यज्ज्ञानाश्रयः तज्ज्ञानं सत्यं यथार्थमेव, न तु कदापि भ्रम इति भावः। एतेन विषयसत्यत्वं विना ज्ञान[1]प्रामाण्यानुप-

१ ज्ञाना°—ख।

पत्तेस्तज्ज्ञानविषयाणां सत्यत्वाक्षेपः, इदमिदानीं कर्त्तव्यमिति । यज्ज्ञानातीति व्याख्यानं त्वपदार्थत्वादुपेक्ष्यम् । स्पार्हं स्पृहणीयम्, स्पृहाया इदमित्यण्, विषयत्वं सम्बन्धः वसु द्रव्यं जेता शत्रुसकाशात् उतापि दाता धनस्यैव कर्मत्वं तृन्नन्तत्वात्तद्योगे वसुशब्दे "न लोकाव्ययनिष्ठा-"इति षष्ठीनिषेधः । "उताप्यर्थ-विकल्पयोः" **इत्यमरः** । एवमी**शावास्योपनिषदि** मन्त्रवर्णोत्तरार्द्धे "कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" शाखान्तरे यथातथार्थानिति पाठ इति वदन्ति, याथातथ्यत इति सत्यार्थकयथातथ-शब्दात्स्वार्थिकष्यञ्प्रत्ययान्तात्तसिप्रत्ययान्तम्, तथा च सत्यानर्थान् व्यदधात्सृष्टवान् । यत्तु तथ्यशब्दस्यापि सत्यार्थकत्वेन यथार्थेत्यस्य वैयर्थ्यमिति तन्न; "यथार्थं तु यथातथम्" **इत्यमरव्याख्यात्रादि**वाक्यपर्यालोचनया यथातथशब्दस्य सत्यत्वानतिक्रमार्थतया तस्य स्वार्थे तद्धिते कृते घटघटत्वशब्दवच्छब्दान्तरत्वात् । तत्र च वैयर्थ्योद्भावनस्य दुराग्रहमात्रत्वात् । यदपि त्वन्मते कविरित्यादिविशेषणानां वाक्यार्थानुपयोगः, मन्मते तु यतः क्रान्तमतीतं सर्वं दृष्टवान् । यतश्च मनीषी मनसा इष्टे ऊहापोहकुशलः । यतश्च पूर्वसृष्टिविरुद्ध-मिच्छतामसुराणां परिभवसमर्थो यतश्च स्वयमन्यनैरपेक्ष्येण पूर्वसृष्टप्रकारेण जगद्भावनसमर्थस्ततो हेतोर्याथातथ्येन पूर्वं तथा व्यदधात् पूर्वसृष्टि-प्रकारेणेति यावत् । "यथापूर्वमकल्पयत्" इति श्रुतेरिति, तदपि न; पूर्वपदस्यात्राश्रवणात्, क्रान्तदर्शित्वेनातीन्द्रियसाक्षात्कारवत्त्वलाभेन तादृशपरमाण्वादि-साक्षात्कारवान् मनीषी कार्यकारणभावव्यवस्थाभिज्ञः, आशयानुरूपैरिति **वैशेषिकभाष्योक्तेः** । धर्मिप्रत्यक्षमात्रेण तदसिद्धेः । परिसमन्ताद्भवतीति परिभूरिति मनीषिविशेषणम्, । तथाचार्थाज्ज्ञानस्य कालिकव्याप्यवृत्तित्व-लाभः । अतो योगिवैलक्षण्यं स्वयम्भूरिति कार्यमात्रापेक्षया पूर्वकालवृत्ति-स्वाधिकरणकालोत्पत्तिकयावज्जन्यजनक इति यावत् । अन्यथा जन्यमात्र-कर्त्तृत्वानुपपत्तेः । यद्वा परि समंताद्भवतीत्यत्र दैशिकव्यापकत्वस्यापि धर्मिविशेषणद्वारा धर्मे ज्ञाने लाभाद् विषयतासम्बन्धस्य च व्यापकता-घटकत्वात् । ज्ञानस्य च सर्वविषयकत्वसिद्धिः । तथा च सर्वविषयक प्रमात्मकनित्यज्ञानवत्त्वलाभः । उक्त**ञ्चोदयनाचार्यैः**—

"साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ ।
भूतार्थानुभवे निविष्टनिखिलप्रस्तारिवस्तुक्रमे" ।। इति ।

स्वयम्भूरित्यस्य स्वयम्भावनसमर्थ इति णिजर्थान्तर्भावेन व्याख्याने च बीजाभावात् । मनसा इष्ट इति व्याख्यानस्यापि मनस ईषिणो मनीषिण

इति, "तानि विदुर्ब्राह्मणा ये मनीषिण:" इति मन्त्रव्याख्यापर**पस्पशागतमहाभाष्य**विरुद्धत्वात् । यदपि यथातथार्थानिति पाठे यथाशब्दवैयर्थ्यं तथाशब्दस्यापि सत्यार्थत्वात् । "धर्मराजस्तथागतः" इत्यत्र तथेति सत्यार्थं वितथवदिति **क्षीरस्वाम्यु**क्तेरिति, तदपि न; उक्तरीत्या यथागतशब्दं व्याख्याय तथाशब्देन सहैकपद्येनैव व्याख्येयत्वात् । भिन्नपदत्वनिर्बन्धेऽपि यथातथा इत्यत्र छान्दसेन शसोऽडादेशेन सिद्धेः । यद्वा यथेति हेतौ यस्मात्कविर्मनीषीत्यादिगुणयुक्तः "यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति"[१] इत्यादौ तथा दर्शनात् । तस्मात्तथा सत्यानर्थान् व्यदधादित्यर्थः । यदप्युक्तं याथातथ्यतः पाठेऽपि तथ्यशब्दस्यानतिक्रमार्थकयथाशब्देन समासे तादात्म्येन तथ्यानतिक्रमविवक्षायां तथ्यतोऽर्थानित्येव निर्वाहे यथाशब्दवैयर्थ्यापत्तिः । तस्मादुपादानतया तथ्यानतिक्रमोक्त्या सत्योपादानकाले सर्वानर्थान् व्यदधादित्यर्थः । तेनोपादानसत्यत्वाज्जगत्सत्यं भाति न तु वस्तुतः सत्यमिति श्रुतितात्पर्यलाभादस्मन्मतानुगुणमेवेदं वाक्यम् ।

न चात्रापि यथाशब्दवैयर्थ्यतादवस्थ्यम्, निमित्तहेतुत्वमात्रेणापि तन्निर्वाहात् । शब्दाधिक्येन कार्यतादात्म्याश्रयरूपोपादानहेतुलाभार्थत्वादिति, तदपि न; सत्यार्थकयाथातथ्यशब्दस्यैव ष्यञ्प्रत्ययान्तत्वेन व्याख्याततया तथ्यशब्दस्य यथाशब्देनाव्ययीभावमादाय दोषस्यानुक्तोपालम्भत्वात् । तथ्यशब्दयथाशब्दयोरव्ययीभावे यथाशब्द आदिवृद्ध्यभावाच्च यथातथशब्दादेव ष्यञ्प्रत्ययनिर्णयात् । उपादानत्वलाभाय यथाशब्द इति त्वयुक्तम्; स्वोत्प्रेक्षितार्थलाभार्थतया पदसार्थक्योक्तावस्मन्मतेऽपि तथ्यानतिक्रममात्रस्योपादानसत्यत्वमात्रेणापि निर्वाहात्तादात्म्येन तथ्यानतिक्रमलाभार्थतया तत्साथक्यमित्यस्य वक्तुं शक्यत्वादिति दिक् ।

तथा "विश्वमा प्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् जहि प्रतिचोऽनूचः पराचो विश्वं सत्यं कृणुहि विष्टमस्तु" । यत्तु व्याचक्षते विश्वमन्तरिक्षञ्चापरिच्छिन्नेन स्वस्वरूपमहिम्ना त्वमाप्राः, अतोऽन्यः सर्वोऽपि त्वावान् त्वत्सम्बन्धी सन् सत्यमद्धा साक्षात्त्वत्सम्बन्धं विना तु न किमपि न सत्यमित्यर्थः । नकिं माकिर्नकिरिति त्रयोऽपि वर्जने इति शाब्दिकाः । तथाविघ्नभूतानसुरान् हत्वा अस्मदनुकूलं विश्वं कुरु । तद्यद्यपि मिथ्या, तथापि त्वयोपादानेन सत्येन विष्टं व्याप्तं सत्सत्यमस्त्वित्यर्थः । कृतधीर्गम्यत इति, तच्चिन्त्यम्; समचरणद्वयार्थस्य पौनरुक्त्यापत्तेः । त्वावानिति पुंल्लिङ्गस्य

---

१. यथाधूमो व्योम्नश्चजत्व जलदधूमस्थगयती—क, यथा धू रंध्रं व्योम्नश्च जलदधूमः स्थगयति—ख ।

सत्यमिति क्लीबेन सामानाधिकरण्यायोगात्, सत्यपदार्थेपु[१]तद्वति वाच्यवदिति **विश्वादिकोषदर्शनात्**। सत्यमित्यव्ययस्य चाद्धाङ्गीकारार्थकत्वात् श्रद्धेत्यस्य च साक्षादित्यर्थकत्वे प्रमाणाभावात्। श्रद्धेति स्फुटावधारणयोः, तत्त्वातिशययोः इत्येके इत्यव्ययवर्गे[२] दर्शनात्। फलितार्थपरत्वोक्तावपि साक्षादेव सत्यं त्वत्सम्बन्धेन तु नेति सन्निहितपदार्थलभ्यव्याख्यानेन वेदान्तिमतप्रतिकूलतयैव व्याख्यानसम्भवाच्च। तस्मादयमर्थः—प्रथमचरणस्य तद्वदेव व्याख्यानं त्वावान् त्वत्सदृशः "युष्मदस्मदोः सादृश्ये वतुब्वाच्यः" इति वार्त्तिकोक्तेः। "त्वावतः पुरूरवसः न त्वावामन्यः यज्ञं विप्रस्य भावत" इत्यादेश्च तत्रोदाहृतत्वात् "त्वमावेकवचने" इत्यत्र "प्रत्ययोत्तरपदयोश्च" इत्युक्तेस्त्वादेशः। "आसर्वनाम्नः" इत्यात्वम्, एतेन त्वत्सम्बन्धीति। निर्मूलव्याख्यानमपास्तम्। अन्योऽतिशयेन त्वत्सदृशो नास्ति नित्यत्वादिनाकाशादीनां तत्साम्येऽपि नित्यज्ञानवत्त्वादिना तदभावात्। अनूचोऽनुगतान् पराचः पराङ्मुखांश्च प्रतीचः प्रतिकूलान् जहि। द्विविधा हि द्विषन्तः, केचित्प्रवेशेन प्राणं प्रदर्श्यान्तिस्तदपकारचिन्तकाः, अपरे च प्रत्यक्षमेव तादृशाः। विश्वं जन्यजातं सत्यं कृणुहि करोषि, विष्टं व्याप्तमस्तु। उभयत्र छान्दसोऽव्ययः। त्वयापि तथैव वाच्यत्वात्, अर्थान्तरतात्पर्यस्यापि तुल्यत्वात्। सत्यत्वस्यैव व्याख्यानं व्याप्तमिति विष्लृ व्याप्तावित्यनुशासनात्। तथा च यस्य यदधिकरणं तन्निष्ठात्यन्ताभावप्रतियोगित्वशून्यत्वमेवात्र व्याप्तत्वमिति पराभिमतमिथ्यात्वविरोध्यर्थः शब्दमर्यादयैव लभ्य इति सूक्ष्मं समीक्षणीयम्। **स्मृतिरपि**—

"असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्"।
"एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पचेतसः"॥

अनीश्वरं ब्रह्मभिन्नं जगदसत्यं स्वतः सत्यत्वरहितम् अल्पत्वस्य नञर्थत्वात् तच्चोपादानसत्त्वापेक्षया न्यूनसत्ताकत्वमेव। अप्रतिष्ठं बाध्यं च ये वदन्ति तन्निन्दाया उत्तरार्द्धे प्रतीयमानत्वात्। यत्तु अनीश्वमीश्वरानुपादानकमतोऽसत्यं सत्योपादानशून्यमतश्च बाधावधिरूपप्रतिष्ठाशून्यं जगदिति ये **माध्यमिकादयो** वदन्ति, तन्निन्दया सत्येश्वरोपादानकं सत्स्वभावावधि संहितमिति प्रतिपादितम्। तथा च तदुपादानकत्वाद्बाध्यत्वाच्च सदसद्विलक्षणमिति वेदान्तिमतानुकूलमेवेदं वाक्यमिति, तदसत्; तत्पुरुषापेक्षया बहुव्रीहौ गौरवादुपादानत्वस्यानुपस्थितत्वाच्च। सत्योपादानशून्यमीश्वरानुपादानकमित्यन्यत्रान्यतरस्य व्यर्थत्वात्। **माध्यमिकमते वेदान्तिमतवैपरीत्यानुवादस्य** तावतैव सिद्धेर्नत्वीश्वरभिन्नमित्यर्थः। त्वन्मतेऽपि न सम्भवति

१. °शब्दार्थेपु—ख। २. अपवर्गे—ख।

तत्पुरुषस्य विशेष्यलिङ्गत्वाभावात्। बहुव्रीहौ तु क्लीबत्वं विशेषणत्वादुपपन्नमिति चेत्, सत्यम्; तथापि न विद्यत ईश्वरो यत्रेति सद्व्यवहारप्रयोजकसत्ताश्रयत्वसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वं स्वीकृत्य त्वत्प्रातिकूल्येनैव व्याख्यानसम्भवात्।

इदमप्यत्रावधेयम्—यत्तु वदन्ति नेह नानेति निषेधार्थो विश्वसत्त्वानुवादः। न च किञ्चनेत्यादिनैव सर्वनाम्ना निषेध्यसमर्पणादेस्तदनुवादस्य वैयर्थ्यमिति वाच्यम्; विश्वसत्यत्वादिप्रत्येकरूपेण विश्वं सत्यमित्यादिवाक्ये "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्यादिवाक्ये चाकाशत्वादिना यत्प्रक्रान्तं तदेव सर्वनाम्ना परामृश्य तन्निषिध्यत इति सर्वनाम्ना परामर्शार्थं पूर्वं विश्वसत्त्वादिकं श्रुत्यानूद्यत इति दोषाभावाद्, अथवा किञ्चनेत्यनेन निषेधाधिकरणानन्तरभावेन निषेध्यसमर्पणेऽपि विशिष्य तत्तदधिकरणान्तरभावेन निषेधं प्रति तत्तदधिकरणे प्रतियोगिप्रसक्तेरपेक्षितत्वान्निषेधाधिकरणविशेषप्रतियोगिप्रसञ्जकतयोक्तवाक्यानामुपयोगाद्विशिष्यप्रक्रान्तबोधकसर्वनाम्नो विशेषरूपबोधकवाक्यसापेक्षत्वादिति, तदसत्; प्रत्यक्षादिनैव निषेध्यसमर्पणसंभवात्। यदि च प्रत्यक्षप्राप्तिसत्त्वादन्यदेव त्रिकालाबाध्यत्वादिरूपं सत्त्वं विश्वसत्त्वश्रुतिप्रतिपाद्यं तदेव नेह नानेत्यादिना निषेध्यते इति ब्रूषे; तदा मानान्तरानधिगतार्थज्ञापकत्त्वात्तत्रैव[1] श्रुतेस्तात्पर्यमिति दुर्वारम्। विश्वं सत्यमित्यादेर्नेहेत्यादेश्चैकप्रमाण[2]गतत्वाभावाच्च श्रौतनिषेधमात्रस्य श्रौतप्रसक्तिसापेक्षत्वेन "न कलञ्जं भक्षयेद्" इत्यादावतिप्रसङ्गात्। कल्पने च विकल्पापत्तेः। अधिकरणविशेषान्तर्भावेन तत्तत्प्रतियोगिसमर्पणं तत्प्रयोजनमिति तु मुखमस्तीत्युक्तम्। प्रतियोगिनां तदधिकरणानां चानन्त्येन विशेषरूपपुरस्कारेण तदभिधानस्य विश्वं सत्यमित्यादौ यस्मिन् पञ्चेत्यादौ च शङ्कितुमप्यशक्यत्वात्। "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इत्यस्य माध्यन्दिनानां तदुत्तरपाठात् प्राणादय एव पञ्चजनशब्दार्थाः इत्यस्य प्राणादयो वाक्यशेषादित्यधिकरणे व्यवस्थितत्वात्। "ज्योतिषैकेषामसत्यन्ने" इति सूत्रे एकेषां काण्वानां प्राणस्येत्युक्तवाक्येऽन्नस्यान्नमित्यंशस्य व्यवस्थितत्वात् प्रागभावेऽपि "तद्देवा ज्योतिषां ज्योतिरायुर्वोपासते अमृतम्" इति पाठेन ज्योतिषैव पञ्चसंख्यापूरणसंभवादित्यमिहितत्वात्। "नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ तु षोडशीग्रहणस्य प्रमाणान्तरेणाप्राप्तत्वाद्

---

१. तत्र च—क। २. प्रकरण—क।

"अतिरात्रे षोडशिनं गृह्णाति" इति वाक्यं प्रतियोगिसमर्पकमिति वैषम्यम्, वस्तुतस्तत्रापि प्रतियोगिसमर्पणमात्रार्थतया न तद्वाक्यसार्थक्यम्, किन्त्वतिरात्राङ्गत्वेन षोडशिग्रहणविध्यर्थमेव तद्वाक्यम्। निषेधवाक्ये प्रतियोगिसमर्पणमपि तेन क्रियत इत्यन्यदेतत्। न तु तावन्मात्रार्थं वाक्यारम्भो युक्तः। सुतरान्तु प्रत्यक्षादिप्रमाणान्तरप्राप्ते इति विज्ञैर्विभावनीयम्।

एतेन सर्वत्र निषेध्यसमर्पकवाक्यान्तरापेक्षत्वनियमाभावेऽपि प्रकृते सति सम्भवे त्यागायोग इत्यपास्तम्, अन्यथा सिद्धार्थपरत्वेन वैदिकवाक्यानां व्यवस्थापनायोगात्। अन्यथानुष्ठेयार्थस्मरणस्य प्रकारान्तरेणापि सम्भवान्मन्त्राम्नातवैयर्थ्यं स्यादतो मन्त्रपाठसामर्थ्यान्मन्त्रद्वारकमेवानुष्ठेयार्थस्मरणमभ्युदयकारीत्यभ्युदयशिरस्कत्वकल्पनं स्यात्। एवमर्थवादसत्त्वे तदवगतमेव प्राशस्त्यं तथेत्यादिकमपि न स्यात्। यत्त्वत्र वाक्यप्राप्तनिषेधेऽपि न षोडशिग्रहणवद्विकल्पापत्तिः, वस्तुनि विकल्पायोगात्।

न च दृश्यत्वावच्छेदेन सत्यत्वासत्यत्वयोर्विरुद्धत्वेऽपि वाक्यद्वयप्रामाण्यात् क्वचिद्दृश्ये सत्त्वं क्वचिच्चासत्त्वमिति व्यवस्थैवास्त्विति वाच्यम्; षोडशिग्रहणाग्रहणवाक्ययोरुभयोरपि मानान्तराप्राप्तविषयत्वेन तुल्यबलत्व[1]वदिह सत्त्वश्रुतेः मानान्तरप्राप्तविषयत्वेन निषेधश्रुतेश्चाप्राप्तविषयत्वेन[1] तुल्यबलत्वाभावात्। अत एव निषेधवाक्यप्राबल्यात्तदनुरोधेनैतद्वाक्यं नीयत इति, तदप्यसत्; निषेधश्रुतेरपि मिथ्यात्वानुमानादिप्राप्तविषयत्वात्। तदनुमानादिकमप्रामाण्यशङ्काकलङ्कितमिति चेत्; सत्त्वप्रत्यक्षमपि तथैवेति तुल्यम्। तस्मादन्यतरस्याप्यन्यतरापेक्षया विशेषानवधारणे किमनुरोधेन किन्नीयतामित्याकाङ्क्षायां सत्त्वश्रुतेरर्थान्तरकल्पने सत्त्वप्रत्यक्षस्यार्थान्तरविषयकत्वेन नेतुमशक्यत्वात् परिशेषादसत्त्वश्रुतेरेव वान्यथानयनं युक्तम्।

नन्वत्रापि मिथ्यात्वानुमितेर्विषयान्तरपरत्वेनैव कल्पयितुं शक्यमिति चेत्, सत्यम्; सत्त्वप्रत्यक्षं सर्वलोकस्वरसवाहि शास्त्रवासना[2]मूलकत्वाभावात्। मिथ्यात्वानुमानं तद्वासनामूलकं वादिमात्रस्यैवेति तदुपमर्दस्यैव युक्तत्वात्[3]। अत एव निषेधवाक्यप्राबल्यादिति निरस्तम्। नहि निषेधप्रतियोगिसमर्पकं वाक्यं स्वार्थतात्पर्यशून्यमेव तन्मात्रार्थकमिति वक्तुं शक्यम्; षोडशिग्रहणविधेरुच्छेदापत्तेः, शिष्टै स्तु प्रतिषेधः स्यादिति दाशमिकन्यायविरोधात्। "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यादावनुयाजेषु येयजामहप्रतिषेधस्वीकारे प्रतियोगिप्रसक्तेः प्रमाणान्तरेणाभावात्तत्प्रसञ्जनार्थं श्रुतिकल्पने

१–१. नास्ति—ख। २. °सत्ता°—क। ३. वक्तव्यत्वात्—ख।

तत्प्रामाण्येन विकल्पापत्तिरतस्तत्परिहारार्थं तादृशस्थले पर्युदासलक्षणैवेति सिद्धान्तस्य विलयापत्तेश्च । यदपि नेति निषेधार्थानुवादस्य यत्तदिति यल्लिङ्गं तदभावान्न विश्वसत्त्वश्रुतेरनुवादतेति पक्षमनूद्य दूषणमुक्तम् । "न कलञ्जं भक्षयेद्"इत्यादौ निषेधार्थेऽपि प्रतियोग्यनुवादे यत्तदिति लिङ्गाभावान्न तन्मात्रमनुवादलिङ्गं रजतमिदं ज्ञानन्तु परं नेदं रजतमित्यादाविव ज्ञानार्थरूपलिङ्गस्य त्वत्रापि सत्त्वादिति, तदपि न; निषेधमात्रार्थानुवादत्वस्य नञ्समभिव्याहृतत्वनियमान्नञ्घटितवाक्ये पृथक्प्रतियोग्युपादानवैयर्थ्यस्योक्तत्वात् । ज्ञानार्थत्वरूपानुवादलिङ्गस्य नेह नानेत्यादावपि तुल्यताया उक्तत्वात्, एतेन सत्त्वानुवादस्याप्राप्ततत्प्रतिषेधप्राप्त्यर्थत्वादिति निरस्तम्, अनुमानादिनासत्त्वस्यापि प्राप्तेर्दुर्वारत्वात् । एवञ्च "नेह नानास्ति किञ्चन" इत्यत्र किंशब्दस्य नेतीत्यादौ चेतिशब्दस्य यत्पदार्थपरामर्शकत्वेन तच्छब्दतौल्यं यत्तदोर्नित्यसम्बन्धेन यच्छब्दबलादेव तच्छब्दकल्पनसम्भवाच्च ।

वस्तुतस्तु यत्तदोरेकतरेणोत्तरवाक्यस्थेनान्यतरस्य पूर्ववाक्यस्थस्य समभिव्याहारो नापेक्ष्यते । अत एव—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥

इत्यादौ तथा दृश्यत इति **काव्यप्रकाशोक्ते**स्तच्छब्दसमानार्थककिमितिशब्दयोरप्युत्तरवाक्यस्थयोर्यच्छब्दसमभिव्याहारानपेक्षत्वात्प्रकृते यच्छब्दावश्यकत्वशङ्का मौर्ख्यादेवेति यदुक्तम्, तदप्यपास्तं वेदितव्यम्, किंशब्देतिशब्दयोस्तच्छब्दसमानार्थकत्वे बीजाभावात् । नहि यो धूमवान् स वह्निमानितिवत् को वह्निमानिति प्रयोगस्तादृगर्थप्रत्ययो वा कस्याप्यनुभवसिद्धः । इदमदःशब्दयोस्तु—

यो विकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥

इत्यादौ यच्छब्दनिर्दिष्टस्यार्थस्येदंशब्देन प्रतिनिर्देशदर्शनात् तच्छब्दतुल्यार्थत्वं प्रकाशकारादिभिः स्वीकृतमिति वैषम्यम् । उत्तरवाक्यस्थतच्छब्दस्य यच्छब्दानपेक्षत्वमपि निर्मूलम् । उत्तरवाक्यस्थयच्छब्दस्यैव पूर्ववाक्येन तच्छब्दोपादानसाकाङ्क्षत्वनियमो नास्तीत्यस्यैव तत्राविहितत्वात्, उदाहरणे तथैव दर्शनात् । यच्छब्दस्तूत्तरवाक्यगत एव सर्वत्र तच्छब्दाक्षेपसमर्थ इति **काव्यप्रदीप**फक्किकादर्शनाच्च । इदञ्च वस्तुगत्योक्तम्, प्रकृते तु सत्त्वश्रुतीनां

निषेधार्थानुवादत्वसिद्धावेवानुवादस्य पूर्ववृत्ति[1]त्वनियमान्नेहेत्यादि श्रुतीनामुत्तरवाक्यत्वमिति वक्तुं शक्येत। यदा त्वद्वैतश्रुतीनामेवानुवादत्वं विनिगमकाभावादिति वादिनः प्रत्यवस्थानं तदोक्तव्युत्पत्त्या निर्वाहोक्तिरत्यन्तमेवानुपपन्नेत्यलमनेन।

यदप्युक्तम्—सत्त्वप्रत्यक्षानपेक्षतया सत्त्वश्रुतेर्न सापेक्षानुवादत्वम्। निरपेक्षानुवादत्वं तु नाप्रामाण्यहेतुः, धारावाहिकबुद्धीनां प्रामाण्यस्य सर्वसिद्धत्वात्। उक्तं हि **नयविवेके** "सापेक्षानुवादेन प्रमितिर्दैर्घ्यानुवादे धारावहनवदित्यनूद्य दूषणमुक्तम्—अनुवादत्वमात्रं प्रामाण्ये प्रयोजकम्, न तु सापेक्षानुवादत्वं गौरवादनधिगतार्थबोधकत्वरूपप्रामाण्यशरीरस्य तावतैव गतत्वाच्च। धारावाहिकबुद्धीनां तु वर्तमानार्थग्राहकत्वेन तत्तत्क्षणविशिष्टग्राहकत्वेन क्षणांशेनाधिगतार्थविषयकत्वान्नाप्रामाण्यम्" इति, तदप्यसत्;

अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।
यथार्थानुभवो मानमनपेक्षतयेष्यते॥

इत्याचार्योक्तरीत्यानधिगतार्थबोधकस्य प्रामाण्यशरीरत्वानभ्युपगमात्। क्षणस्य चातीन्द्रियत्वमिति **मणिकारा**दिभिरुक्तत्वात्। स्थूलोपाधिमादायैव तदविषयतया प्रत्यक्षांश उपनीतमानात्मकज्ञानं, क्षणस्य त्वाशुविनाशित्वेनोपनयपर्यन्तमनवस्थितत्या तदुपनयासम्भवादतीतस्यैव क्षणस्य कथञ्चिद्वर्त्तमानत्वेन ग्रहे चाप्रमात्वापत्तेरित्यस्य **मिश्रै**रुपपादितत्वात्।

यत् संयुक्तादिविशेषणतया स्थूलकालस्येव क्षणानामपि योग्यत्वम्, विषयताप्रत्यक्षे तादात्म्येन क्षणानां प्रतिबन्धकत्वकल्पने मानाभावात्, घटोऽयं दृष्टो न वेति प्रश्ने सन्निहितक्षणे मया दृष्ट इत्युत्तरदर्शनात्। अस्तु वा तद्बुद्ध्युत्पत्तिद्वितीयक्षणविनाशिस्थूलकालविशिष्टाग्राहकत्वेन धारावाहिकबुद्धीनामननुवादकत्वमिति, तदसत्; स्थूलकालस्यापि योग्यत्वानभ्युपगमेन दृष्टान्तासिद्धेः। उक्तं हि **प्रत्यक्षालोके** "यद्यपि प्रहरादीनामप्यतीन्द्रियत्वमेव सूर्यक्रियारूपत्वात्, उपनीतता च क्षणस्यापि सुलभा" इत्यादि। सन्निहितक्षणे इत्यादेश्चाकाशे पक्षी दृश्यत इत्यादिवाक्यवदधिकरणस्य प्रत्यक्षाविषयत्वानुपपादकत्वात्। एतेन द्वितीयक्षणेत्यादिकमपि निरस्तम्। तस्याप्यतीन्द्रियत्वेन क्षणेन सह समानयोगक्षेमत्वात्।

यदपि—"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति सिद्धान्ते स्वोत्पत्तिक्षणग्राहित्वं सर्वप्रत्ययानां न सन्निकर्षादिप्रयुक्तम्, किन्तु

---

१. पूर्ववर्तित्व—क।

ज्ञानसामान्यसामग्रीज्ञानोत्पत्तिक्षणविशिष्टार्थविषयकमेव ज्ञानं जनयतीति नियमप्रयुक्तम्। अत एव इच्छादेर्मदंशादिविषयत्वं न कारणनियम्यमिति पक्षधरादयः।

एवञ्च वेदजन्यबुद्ध्यनुमित्यादि[1]धाराभ्युपगमेऽपि न द्वितीयादिबुद्धेरनुवादनियमेऽपि क्षणस्य विषयत्वे मानाभावात्। किं चैवं प्रायेण तज्ज्ञानानां भ्रमत्वापत्तिः, क्षणवैशिष्ट्यकाले ह्यर्थे कालिकमेव वाच्यम्। न चातीतानागतयोः कालिकसम्बन्धः स्वीक्रियते। किं च कश्चन कालो ज्ञानमात्रे भासत इत्येव नियमः प्रामाणिको न तु ज्ञानमात्रे वर्तमानकाल एवेति। अतीतानागतकालानवगाहिज्ञानसामग्र्याः स्वातन्त्र्येणैव वर्तमानकालग्राहकतयेति अन्यथाख्यातिवादीय**मिश्र**टिप्पण्यादिदर्शनात्[1]। तत्कथं ज्ञानोत्पत्तिक्षणेत्यादिनियमवर्णनं संगच्छताम्? अभ्युपेत्य तु ब्रूमः—ज्ञानत्वावच्छिन्ने स्थूलकालभावाभ्युपगममात्रेणानुवादत्वोक्तौ सत्वश्रुतेरप्यनुवादकत्वोद्भावनमयुक्तम्, तज्जन्यबोधेऽपि तद्विषयतायाः सम्भवात्। नहि धारान्तःपातिद्वितीयादिबोधव्यक्तेरेव तेनानुवादत्वं न त्वेकज्ञानस्थलेऽपि तदेति वैषम्यं ब्रह्मणापि सुघटम्।

अथ त्वन्मते किमत्राप्रामाण्यप्रयोजकं स्मृतिसाधारणं धारावाहिकधीव्यावृत्तं चेति चेत्; यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाधिकरणसमानाकारकनिश्चयोत्तरत्वं तज्जातीय[2]विशिष्टज्ञानं च प्रमा। अस्ति च स्मृतित्वावच्छेदेन तादृशनिश्चयोत्तरत्वं न तु धारावाहिकबुद्धीनां तदाद्यबुद्धावेव व्यभिचारादित्यस्य स्पष्टत्वादिति दिक्।

यदप्याहुः सत्त्वश्रुतिरपि सापेक्षानुवादिकैव, सत्त्वप्रत्यक्षसापेक्षत्वात्, नहि सत्त्वप्रत्यक्षं विना शक्यादि[3]ग्रहमूलकशब्दप्रवृत्तिसम्भवः। अत एवोक्तं देवताधिकरणे **वाचस्पत्ये** "यत्र तु प्रामाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिध्यति। द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरेकार्थप्रवृत्तेः। प्रमात्रपेक्षया त्वनुवादकत्वम्, प्रमाता ह्यव्युत्पन्नः, प्रथमं प्रत्यक्षादिभ्यो यथार्थमवगच्छति न तथाम्नायतः। तत्र व्युत्पत्त्यपेक्षत्वान्न तु प्रमाणापेक्षया द्वयोः स्वार्थेऽनपेक्षत्वादिति। आम्नायस्य व्युत्पत्त्यपेक्षत्वेन प्रत्यक्षसापेक्षत्वस्यैवानेनोक्तत्वादिति। तदप्यसत्; उक्तवाक्यं हि **कल्पतरुकारै**र्व्याख्यातम्—"न स्मृतिवत्सापेक्षत्वं किन्तु प्रत्यक्षादिभिस्तुल्यविषयत्वम्। न चैतावता भवत्यप्रमाणता, प्रत्यक्षानुमानयोरप्येकविषय-

१-१. नास्ति—क। २. तज्जातीयान्य—क। ३. विना तन्मूलकशक्यादि—ख।

त्वात्। तर्हि कथमनुवादकत्वप्रसिद्धिरत आह—प्रमात्रपेक्ष इति। प्रमातरि चरमप्रत्ययाधायकत्वादाम्नायस्यानुवादकत्वप्रसिद्धिरित्यर्थः" इति। अतश्च प्रत्येकपदशक्त्यादिज्ञानस्योपजीव्यत्वेऽप्युद्देश्यविधेयभावस्वरूपवाक्यार्थज्ञानसमानाकारकविशिष्टज्ञानस्यानुपजीव्यत्वान्न प्रत्यक्षसापेक्षत्वम्।

ननु क्वचित्तत्समानाकारकमपि प्रत्यक्षं भवत्येवेति चेत्; किन्ततः, नह्यस्तीत्येव तदुपजीव्यम्, अन्यथासिद्धसाधारण्यात्। अन्यथा विशिष्टप्रत्यक्षाभावस्थले प्रत्येकपदशक्तिज्ञानाच्छाब्दं न स्यात्। यदि च शक्त्यादिज्ञानविषयाप्युपजीव्यत्वमनुवादकत्वप्रयोजकं स्यात्तदा द्वयोः स्वार्थेऽनपेक्षत्वमिति मूलग्रन्थो न स्मृतिवत्सापेक्षत्वमित्यादिश्च टीकाग्रन्थोऽसंगत एव स्यात्। न च तात्पर्यज्ञानहेतुतया तदर्थं पूर्वं विशिष्टोपस्थितिरवश्यमपेक्ष्येति वाच्यम्; विशकलितयारेव पदार्थतत्संसर्गयोस्तात्पर्यग्रहस्य स्वीकारात्। **वैशेषिक**पक्षेऽपि तात्पर्यविषयत्वस्य संसर्गविशेषणत्वे हेतुज्ञानदशायामेव वाक्यार्थबोधापत्त्या शाब्दरूपानुमितिर्न स्यादित्याशङ्क्यापि तथैव **शब्दालोकादौ** व्यवस्थापितत्वात्। किञ्च—अत एव प्राण इत्यधिकरणे "प्रस्तोतर्यादेवता प्रस्तावमन्वा यत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते निपतिष्यति" इति **चाक्रायणोक्ते** कतमा सा देवतेति प्रस्तोत्रा पृष्टे "प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इति **छान्दोग्योपनिषदि** श्रूयते। प्रस्तावः साम्नो भक्तिविशेषः, तमन्वायत्तानुगता अत्र प्राणशब्दार्थो वायुविकारो वा ब्रह्म वेति संशये पूर्वपक्षः।

अर्थे श्रुत्यैकगम्ये हि श्रुतिमेवाद्रियामहे।
मानान्तरावगम्ये तु तद्वशात्तद्व्यवस्थितिः॥

ब्रह्मणः सर्वभूतकारणत्वे आकाशादीनां च वाय्वादिकारणत्वे मानान्तराणामप्रसरात्। यथाम्नायमेव सोऽर्थो गृह्यते। इह तु "यदा वै पुरुषः स्वपिति प्राणे तर्हि वागप्येति" इत्यादिकायाः श्रुतेः सर्वभूतसोरेन्द्रियसंवेशनोद्गमनप्रतिपादनद्वारा सर्वभूतसंवेशनोद्गमनप्रतिपदिकायाः मानान्तरानुग्रहलब्धसामर्थ्याया बलात्संवेशनोद्गमने वायुविकारस्यैव प्राणस्य न तु ब्रह्मण उद्गीथप्रतिहाराख्ययोः सामभक्त्योरादित्यान्नयोस्तदभिमानिन्योश्शरीरिण्योर्देवतयोर्ब्रह्मदेवतयोर्ब्रह्मभिन्नयोरभिहितत्वात्तत्साहचर्यात्प्रतिहाराख्यसामभक्तावपि ब्रह्मभिन्नस्यैव प्रमाणस्य देवतात्वौचित्याच्चेति। सिद्धान्तस्तु—

पुंवाक्यस्य बलीयस्त्वं मानान्तरसमागमात् ।
अपौरुषेये वाक्ये तत्सङ्गतिः किं करिष्यति ।।

नो खलु स्वतःसिद्धप्रमाणभावमपौरुषेयं वचः स्वविषयज्ञानोत्पादे वा तद्वचवहारे वा मानान्तरमपेक्षते, तस्यापौरुषेयस्य निरस्तसमस्तदोषाशङ्कस्य स्वत एव निश्चायकत्वात् । निश्चयपूर्वकत्वाद् व्यवहारप्रवृत्तेः, इन्द्रियसंवेशनोद्गमनयोर्वायुविकारे प्राणे सम्भवेऽपि सर्वभूतलयोत्पत्त्योस्तस्मिन्नसम्भवात्। "यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवति" इत्येतद्वाक्यवदत्रापि प्राणशब्दो ब्रह्म एवेति । व्याख्यातं च **कल्पतरुकृद्भिः** "स्वत एव निश्चायकत्वात् स्वविषयज्ञानोत्पादे मानान्तरं नापेक्षते निश्चयपूर्वकत्वाद् व्यवहारस्य स्वविषयव्यवहारे नापेक्षते" इति ।

यत्तु शक्त्यादिग्रहविधया तदुपजीवकत्वं प्रयोजकं तदा शब्दमात्रस्यैव तदनुवादकत्वं स्यादिति शब्दप्रामाण्यमेवोच्छिन्नं स्यात् । किञ्चैवं सत्यं ज्ञानमित्यादिवाक्यस्यापि शक्यसम्बन्धरूपलक्षणाज्ञानापेक्षितशक्यज्ञानापेक्षणीयेन सन्नहमित्यादिप्रत्यक्षेणानुवादः स्यादिति गतं तस्यापि प्रामाण्यप्रत्याशया ।

यत्तु ब्रह्मत्वसामानाधिकरण्येन सत्त्वग्राहकं न तत्प्रत्यक्षमिति, तन्न; सर्वावच्छेदेन सत्त्वस्यापि प्रत्यक्षतः प्राप्तत्वात् । अंशतः सिद्धसाधनस्य शब्दानुमित्योरदोषत्वादुपहितब्रह्मणि सत्त्वस्य प्रत्यक्षेणापि गृह्यमाणत्वात् । शुद्धे तु शब्देनापि तदग्रहात् । अत एव शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वमित्यादिः परेषामुद्घोषः । उपाधिविशेषस्याकिञ्चित्करत्वाद् घटाद्युपहिते शब्दजन्यवृत्त्युपहिते वा सत्त्वग्रहेऽपि शुद्धाविषयत्वसाम्यादिति दिक् ।

यदपि व्यावहारिकसत्त्वपरेयं विश्वसत्त्वश्रुतिः, न च व्यावहारिकसत्त्वे सर्वविप्रतिपत्तेस्तत्प्रतिपादनवैयर्थ्यम्, परलोकानङ्गीकर्तृवाचा विप्रतिपत्त्या स्वर्गादौ सत्यतासंदेहदशायां स्वर्गनरकादिसत्त्वप्रतिपादनेन तत्प्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्त्योरेव प्रयोजनत्वात् । व्यावहारिकत्वञ्च ब्रह्मज्ञानेतराबाध्यत्वम्, न त्वबाध्यत्वम्, मिथ्यात्वबोधकश्रुतिविरोधात् । व्यावहारिकसत्त्वस्य प्रत्यक्षादिसिद्धस्यानुवादद्वारोक्तप्रवृत्त्यादिपरत्वे सम्भवत्यपूर्वस्य बाध्यत्वसामान्याभावस्य विधायकत्वे गौरवादिति ।

न चैवं दृढभ्रान्तिजनकत्वादप्रामाण्यापत्तिः, श्रुतिजन्यभ्रान्तेर्मानान्तरबोधितार्थविषयकत्वेन संवादाद् भ्रमत्वशङ्कानास्पदत्वादिति वाच्यम्; "सुधीः स्वप्नो भूत्वेमं लोकमनुसञ्चरति" इत्यादेः शुद्धस्य परामर्शप्रतिपादनार्थरूपायाः,

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।

समृद्धिं तत्र जानीयाद्" इत्यादेः स्वप्नदर्शनफलप्रतिपादनाप्रतिपादनार्थानुवादरूपाया वा श्रुतेर्यथाप्रामाण्यं तद्वदेव संभवात् ।

एतावानेव विशेषः—तत्प्रातिभासिकम्, प्रकृतं तु व्यावहारिकमिति। तदपि चिन्त्यम्; व्यावहारिकसत्त्वस्य ब्रह्मज्ञानेतराबाध्यत्वरूपस्य पूर्वमसिद्धतया तत्परत्वेन श्रुतेः सावकाशत्वस्य निरस्तत्वात् । श्रुतेर्मिथ्यात्वबोधकत्वस्य[1] प्रत्यक्षसिद्धतायां तदनुवादेन सत्त्वश्रुते[1]र्नेहेत्यादि मित्थात्वबोधकत्वं नास्तीत्यस्यैव साम्प्रतं निरूप्यमाणत्वात् । व्यावहारिकसत्त्वस्य प्रत्यक्षसिद्धतायां तदनुवादेन सत्त्वश्रुतेः प्रवृत्त्यादिपरत्वस्य च शङ्कितुमप्यशक्यत्वात् । सत्त्वमात्रं हि प्रत्यक्षसिद्धम्, तत्रापि मिथ्यात्वस्य श्रौततात्पर्यविषयत्वे सिद्धे प्रत्यक्षगम्यसत्त्वे व्यावहारिकत्वं त्वया स्थापयिष्यते न तु तदपि प्रत्यक्षसिद्धम्, अन्यथा हि सत्त्व इव व्यावहारिकत्वांशेऽपि वादिविप्रतिपत्तिर्न स्यात् । यावत्तु सत्त्वश्रुतिविरोधेन मिथ्यात्वस्य तात्पर्यविषयत्व एव सन्देहस्तावदेव मिथ्यात्वश्रुतिविरोधेन व्यावहारिकसत्त्वानुवादत्वेन च सत्त्वश्रुतिकदर्थनमनोरथो व्यर्थ एवेति दिक् ।

यदपि प्रत्यक्षप्राप्तार्थत्वेन सत्त्वश्रुतेरिव तद्विरुद्धार्थत्वेन मिथ्यात्वश्रुतेरपि स्वार्थपरत्वं[2] न स्यात्, मानान्तरप्राप्तेरिव तद्विरोधस्यापि तात्पर्याभावव्याप्यत्वादिति पक्षमुद्भाव्य दूषणमुक्तम्—प्रत्यक्षापेक्षया चन्द्रादेरधिकपरिमाणबोधकागमस्येव मिथ्यात्वबोधकागमस्य बलवत्त्वेन प्रत्यक्षप्राप्तसत्त्वानुवादिश्रुत्यपेक्षयापि बलवत्त्वात् प्राप्तार्थाप्राप्तार्थयोर्विरोधे प्राप्तार्थस्याप्राप्तविध्यर्थत्वेनान्यशेषत्वानियमादप्राप्तार्थस्यैवा*नन्यशेषत्वेन बलवत्त्वादन्यथोभयोरप्यप्रामाण्यापत्तेः । तदुक्तं **संक्षेपशारीरके**—

"अतत्परा तत्परवेदवाक्यैर्विरुध्यमाना गुणवाद एव" इति । तदप्यसत्; सत्त्वश्रुत्यनुगृहीततत्त्वेतरसत्त्वप्रत्यक्षस्यैव बलवत्त्वात् । अत एव "राजा राजसूयेन यजेत" इत्यत्रार्यावर्तनिवासिनां ब्राह्मणादावपि पालके राजपदप्रयोगात्, द्रविडानां क्षत्रियमात्रे प्रयोगेऽपि प्रत्यन्तदेशवासित्वेन तत्प्रसिद्ध्य-

१–१. चाद्यपर्यन्तमसिद्धत्वादिति विरोधेन–ख । २. मिथ्यात्वं–क ।

* अतः परं ८४ पृष्ठस्थ * चिह्नितांशं यावत् पाठः क पुस्तके लिपिकप्रमादान्नोल्लिखित इति प्रतीयते । ख. पुस्तकेऽपि पत्रकोणे 'अशोध पृष्ठ'....'यावत्' इति लिखितमस्ति ।

पेक्षयार्यावर्त्तप्रसिद्धेः प्राबल्यान्न क्षत्रियमात्रकर्तृकत्वं राजसूयस्येति पूर्वपक्षे स्वरूपतो दुर्बलस्यापि द्रविड़व्यवहारस्य राज्ञः कर्मेत्यर्थे ब्राह्मणादित्वात् तव्यन्नप्रत्ययः पुरोहितादित्वात् यक्-वाचित्वावगमात्। "राजानमभिषेचयेद्" इति श्रुतावपि अभिषेकात्पूर्वं पालकत्वाभावेन तस्योद्देशत्वानुपपत्त्या जातिविशेषस्यैव तथात्वावगमात्। श्रुतिस्मृतिरूपबलवत्प्रमाणानुगृहीतत्वेन तस्या आर्यावर्त्तप्रसिद्ध्यपेक्षयापि बलवत्त्वमिति अवेष्ट्यधिकरणे सिद्धान्तितम्। चन्द्रादिपरिमाणपरयोः प्रत्यक्षागमयोरपेक्षया प्रकृते वैधर्म्यस्य च पूर्वमेव प्रपञ्चितत्वात्। प्राप्तार्थत्वस्याप्युभयत्राविशेष इत्युक्तत्वात्। तत्परत्वस्य च प्रमाणान्तरविरोधादेवापसार्यमाणत्वात् प्राप्तार्थत्वापेक्षया विरुद्धार्थत्वस्य सुतरां तात्पर्यविघटकत्वात्।

एतेन षड्विधतात्पर्यलिङ्गोपेतत्वेन मिथ्यात्वश्रुतेरनन्यपरतया प्राबल्यं वैदिकतात्पर्यविषयस्य चातात्त्विकत्वनियमेन तात्पर्यज्ञापकानामपि लिङ्गानामर्थे तथात्व एव पर्यवसानत्वात् सत्त्वश्रुतिवाक्यस्थपदानां चान्यपरत्वान्न सत्त्वे तात्पर्यलिङ्गशङ्केत्यपि परास्तम्। मानान्तरविरुद्धे मानान्तरस्य तात्पर्याभावनियमात् षड्विधलिङ्गसत्त्वेऽपि तत्पदानां पौर्वापर्यप्रमाणान्तरादिपर्यालोचनया यादृशार्थो युक्तस्तत्रैव तात्पर्यस्य तैर्ग्राहयितुं शक्यत्वात्, अन्यथातिप्रसङ्गस्य दर्शितत्वात्, अबाधितत्वरूपलिङ्गस्यापि तन्मध्ये पठितस्यावश्यमपेक्षणीयत्वात्, बाधविप्रतिपत्तिविषयीभूतार्थे सिद्धवत्तात्पर्यमङ्गीकृत्य तेनैव बाधकप्रमाणबाधस्य वक्तुमशक्यत्वादित्यादेः प्रागेवाभिहितत्वात्। न ह्यद्वैतस्य वेदतात्पर्यविषयत्वमङ्गीकृत्य वादिनस्तत्र प्रत्यवस्थानं संभवति, आस्तिकेन तस्य प्रामाण्याभ्युपगमात्।

इदं चात्र वक्तव्यम्—मिथ्यात्वे तात्पर्यं वेदस्य न वेति वादसमयेऽपि तत्तात्पर्यस्यैव प्राबल्ये हेतुतेति गीर्वेद्या। अपि च निरवकाशत्वतात्पर्यवत्त्वादिना वाद्वैतश्रुतेः प्राबल्यं निषेधवाच्यत्वेन वा? नाद्यः, निरवकाशत्वस्य च सत्त्वश्रुतिसाधारण्याद् व्यावहारिकसत्त्वविषयत्वस्य च बहुशो निराकृतत्वान्मिथ्यात्वसिद्धेः पूर्वमुद्भावयितुमयोग्यत्वात्। तात्पर्यवत्त्वेऽपि मिथ्यात्वविषयत्वस्य तात्पर्ये प्रमाणान्तरेणानवधारितत्वात्। नान्त्यः; "किति च" इति कित्तद्धिते वृद्धिविधायकसूत्रात् "क्ङिति च" इति निषेधसूत्रस्य, "अग्नीषोमीयं पशुमालभेत" इत्यतः "न हिंस्यात् सर्वा भूतानि" इत्यस्य, "सत्यं ज्ञानम्" इत्यादिवाक्याद् "असद्वा इदम्" इत्यादिवाक्यस्य च प्राबल्यापत्तेरुक्तत्वात्।

यत्तु "क्ङिति च" इति निषेध इग्लक्षणयोरेव गुणवृद्धयोः, "क्ङिति च" इति वृद्धिस्तु नेग्लक्षणा। अनिर्दिष्टस्थानिकस्थले हि "इको गुणवृद्धी" इति परिभाषया इक् इति पदोपस्थितिः। अत्र त्वच्पदमेव स्थानिसमर्पकम्। अत एव लैङ्गवायनमित्यादौ "क्ङिति च" इति निषेधो न प्रवर्तत इति सिद्धान्तः। अतस्तदुदाहरणमत्र भ्रान्त्यैवेति, तत्सत्यमेव; परन्तु "क्ङिति च" इत्यस्य सामान्यतो गुणवृद्धिनिषेधकत्वेऽप्यन्यत्र चरितार्थतया "क्ङिति च" इत्यनेन निरवकाशेन बाधसंभवात्तदंशे इग्लक्षणत्वं प्रायशोऽनुपयुक्तमेवेति तदुदाहर्तृ णामाशयः कल्प्यः। "क्ङिति च" इति सूत्रस्थाने "ऋदृशोऽङि गुणः" इत्यादिशास्त्रमेवोदाहर्तव्यं ततश्च वचनद्वयप्रामाण्यान्निषेधस्थलेऽपि विकल्प एव स्यात्, बाधस्यान्याय्यत्वात्। अन्यत्र निरवकाशत्वाद्यनुसरणत्वे तु किं निषेधवाक्यत्वोद्भावनेन "यत्किञ्चित्प्राचीनमग्नीषोमीयाद्" इत्यस्य "मन्द्रीध्वं प्रायणीयायाम्" इत्यनेन बाधदर्शनेन विधिस्थलेऽपि तस्य निर्णायकत्वादित्यास्तां तावत्।

यदपि देवताधिकरणे **वाचस्पत्ये** उक्तम्—लोकानुसारतो द्विविधो हि विषयः शब्दानां द्वारतश्च तात्पर्यतश्च, यथैकस्मिन् वाक्ये पदानां पदार्थद्वारतो वाक्यार्थस्य तात्पर्यतो विषयः। एवं वाक्यद्वयैकवाक्यतायामपि यथेयं देवदत्तीया गौः क्रेतव्येत्येकं वाक्यम्, एषा बहुक्षीरेत्यपरम्। तदस्य बहुक्षीरत्वप्रतिपादनं द्वारम्, तात्पर्यं तु क्रेतव्येति। वाक्यान्तरार्थे तत्र यद्द्वारं तत्प्रमाणान्तरविरोधेऽन्यथा नीयते। यथा विषं भक्षयेति वाक्यं मास्मद्गृहे भुङ्क्ष्वेति वाक्यान्तरार्थपरम्। यत्र तु तात्पर्यं तत्र मानान्तरविरोधे पौरुषेयमप्रमाणमेव भवति, वेदान्तास्तु पौर्वापर्यपर्यालोचनया निरस्तसमस्तभेदप्रपञ्चब्रह्मप्रतिपादनपरा अपौरुषेयाः स्वतःसिद्धतात्त्विकप्रमाणभावाः तात्त्विकप्रमाणभावात् प्रत्यक्षादीन् विप्रच्याव्यसांव्यवहारिके तस्मिन् व्यवस्थापयन्ति, इति, तदपि चिन्त्यम्; प्रमाणतात्पर्यविषयत्वस्य मानान्तराविरुद्धव्याप्यत्वात् व्यापकीभूतमानान्तराविरुद्धव्यावृत्ताद्वैते व्याप्यस्य प्रमाणतात्पर्यविषयत्वस्यापि* व्यावृत्तेः। अपौरुषेयत्वस्य मानान्तरसाधारण्येन वेदान्तवाक्यानामेव स्वतःसिद्धतात्त्विकप्रामाण्यकत्वे बीजाभावात्, पौर्वापर्यस्यैव मानान्तरविरोधविरहस्याप्यपर्यालोचने मानाभावात्, व्यावहारिकप्रामाण्यभेदस्यासिद्धतया तस्मिन् प्रत्यक्षादेर्व्यवस्थापयितुमशक्यत्वाच्चेत्यादि सर्वं संवारणीयम्।

यत्तु अद्वैतश्रुतिस्तात्त्विका, प्रमाणत्वे सत्यज्ञातसप्रयोजनार्थकश्रुतित्वात् तात्त्विकप्रमाणत्वेन पराभ्युपगतश्रुतिवत्, अन्यथा प्रामाण्यानुपपत्तिरनु-

कूलतर्कः। न च विरोधपरिहाराय विश्वसत्त्वश्रुतिर्न तात्त्विकप्रमाणं तात्त्विकनिषेधप्रतियोगिविषयकत्वादित्यनुमानमवश्यमपेक्षणीयम्, तथा चान्योन्याश्रयात् पूर्वानुमानव्यतिरेकेण निषेधतात्त्विकत्वासिद्धेरिति वाच्यम्; विश्वसत्त्वश्रुतेस्तात्त्विकप्रामाण्यनिश्चयाभावादेव पूर्वानुमाने विश्वसत्त्वश्रुतिविरोधानुत्थानात्। विश्वसत्त्वश्रुतौ च तात्त्विकप्रामाण्यनिश्चयो नास्त्येव, अद्वैतश्रुताविव तस्यामपि प्रामाण्यव्यावहारिकत्वाभावनिश्चयाभावेन तत्पूर्वं पूर्वोक्तहेत्वभावात्। अद्वैतश्रुतौ तात्त्विकप्रामाण्यनिश्चयाभावस्तु पूर्वानुमाने साध्यसंशयसंपादको न विरोधी, प्रत्युतानुकूलपक्षताघटकत्वात् पूर्वानुमानेऽप्रामाण्यसंशये सूक्ततर्कमूलकविशेषदर्शनादिना निरसनीय इति नान्योन्याश्रय, इति। तदप्यसत्; अज्ञातेत्यादिविशेष्यासिद्धया हेतोः स्वरूपासिद्धत्वात्, विश्वसत्त्वश्रुतावप्युक्तहेतुसत्त्वाच्च। न च तत्र व्यावहारिकप्रामाण्यविरहनिश्चयः, अनुपपन्नत्वादेकविरोधिसंशये तदन्यविरोधिनिश्चयानुदयाच्च।

यत्तु अद्वैतं यदि प्रातीतिकं व्यावहारिकं वा स्यात्तदादृष्टमव्यवहार्यं वा न स्यादित्युक्तम्, तदपि न; तस्यानुकूलत्वानङ्गीकारात्। एतेन तर्कान्तरमपि परास्तमित्यादि स्वयमूहनीयम्।

यदपि यथा प्रत्यक्षादिप्राप्तहिंसाविषये सावकाशं "न हिंस्याद्" इति वाक्यं निषेध्यसमर्पणायाग्नीषोमीयवाक्यं नापेक्षते, तस्याधर्मापत्तेर्लाघवाच्च, तथा घटादिसत्त्वस्य प्रत्यक्षतया तन्निषेधेन चरितार्था नेहेत्यादिश्रुतिः प्रत्यक्षानवगतधर्मादिसत्त्वबोधिकां विश्वसत्त्वश्रुतिं न बाधेत तत्प्राप्तप्रतियोगिकनिषेधतात्पर्यकत्वाभावादित्याशङ्क्योक्तम्, अग्नीषोमीयवाक्यस्य निषेधविषयन्यूनविषयत्वेनानन्यशेषतया स्वार्थतात्पर्यरहितत्वेन च निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषता। विश्वं सत्यमित्यादेस्तु निषेधविषयसमानविषयत्वेन तात्पर्यरहितत्वेन च निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषतोचितैव। अत एव प्रत्यक्षाप्राप्तधर्माधर्मादिसत्त्वोपस्थापनेन न वाक्यसाफल्यमपि, स्वार्थतात्पर्याराहित्येन च नाग्नीषोमीयवाक्यतुल्यत्वमिति, तदपि चिन्त्यम्; निषेध्यतावच्छेदकरूपावच्छिन्नविषयकत्वेन निषेधविषयसमानविषयस्यापि "षोडशिनं गृह्णाति" इत्यादेस्तच्छेषमात्रत्वाभावात्। स्वार्थतात्पर्यरहितत्वं तु न कथञ्चित्, अवान्तरतात्पर्ये बाधकाभावात्परमतात्पर्यरहितत्वमिति चेन्न; अद्वैतश्रुतीनामप्यखण्ड[1]ब्रह्मण्येव परमतात्पर्यात्। अवान्तरतात्पर्येणैवाद्वैते प्रामाण्यस्य त्वयाभ्युपगमात्। [2]अहो महदाश्चर्यम्? मानान्तरसंवादिनि नावान्तरतात्पर्यं तद्विरुद्धे त्वस्त्येवेत्यभिधानमित्यास्तामनुपयुक्तमेतत्[3]।

१. अद्वैत°—क। २-३. नास्ति—ख।

केचित्तु विश्वं सत्यमित्यादिवाक्यमपि धर्मादिमात्रसत्यत्वविषयकत्वान्नेतीत्यादिश्रुतिनिषेध्यसर्वसादृश्यसत्यत्वाबोधकत्वेन निषेधन्यूनविषयमेवेति वदन्ति। यत्तु नैतद् युक्तम्, नेतीत्यादिश्रुतिर्हि इतिशब्दोपात्तनानाधर्मावच्छिन्नप्रतियोगिताकान् नानानिषेधान्बोधयति इति, विश्वसत्त्ववाक्यं यदि धर्मादेव सत्त्वं बोधयेत्तथापि धर्मादौ सत्यतावच्छिन्नाभावबोधकत्वांशे नेतीत्यादिश्रुतिसमानविषयकमेव, निषेध्यतावच्छेदकरूपावच्छिन्नविषयताकत्वस्यैव समानविषयकत्वस्यापेक्षणीयत्वात्, तावतैव प्रतियोगितावच्छेदकविशिष्टप्रसक्तेर्निर्वाहात्, न हिंस्यादिति वाक्यस्य तु भूतहिंसात्वावच्छेदेन बलवदनिष्टाजनकत्वाभावबोधकत्वेन हिंसात्वावच्छेदेनोक्ताजनकत्वरूपप्रतियोगिप्रसक्तिसापेक्षत्वादग्नीषोमीयवाक्यं तादृशप्रसक्त्यजनकमनपेक्षणीयमेवेति, तच्चिन्त्यम्; हिंसात्वावच्छेदेनोक्ताजनकत्वस्य लोकतोऽपि प्रसक्त्यभावान्न हिंस्यादित्यस्याप्रसक्तप्रतिषेधत्वापत्तेः। अन्ततः स्वहिंसायामेव तस्य दुर्ग्रहत्वात्, "नेह नानास्ति किञ्चन" इति श्रुत्येकवाक्यतया नेतीत्यादावपि आत्मभिन्नस्यैव निषेधप्रतियोगितावच्छेदकताया वेदान्तिभिरभिधेयत्वात्। तत्तद्दृश्यासाधारणनानाधर्माणामेकदोपस्थित्यसम्भवेन तदवच्छिन्नप्रतियोगिताकानां नानानिषेधानां शोधयितुमशक्यत्वात्। तथा च निषेध्यतावच्छेदकरूपावच्छिन्नविषयताकत्वमपि कुतः। तथाचात्मभिन्नत्वावच्छेदेन विश्वसत्त्वश्रुतेः सत्त्वावबोधकत्वादद्वैतश्रुत्यपेक्षितात्मभिन्नत्वावच्छिन्नविशेष्यताकसत्यतात्वरूपप्रतियोगितावच्छेदकविशिष्टप्रसक्त्यनुपपादकत्वात् कथमग्नीषोमीयवाक्यवैषम्यमित्यास्तां तावत्। ब्रह्ममीमांसाद्वितीयाध्यायसूत्रद्वयेन जगतः पारमार्थिकसत्त्वबोधनादद्वैतमते तद्विरोधः।

न चास्य शून्यवादनिरासार्थत्वादसद्वैलक्षण्यमात्रबोधकत्वान्न दोष इति वाच्यम्; असद्वैलक्षण्यं ह्यर्थक्रियाकारित्वरूपमुक्तसूत्रबोध्यं निषेधाप्रतियोगित्वरूपं वा? नाद्यः, शून्यवादिसाधारण्यात्। न द्वितीयः, त्वयाऽपि तदनभ्युपगमात्। सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाद्व्यावहारिकत्वमात्रेण स्वप्नवैलक्षण्यस्य त्वन्मतेऽपि सत्त्वाच्च। तदुक्तं बौद्धैः—

द्वे सत्त्वे समुपाश्रित्य बौद्धानां[1] धर्मदेशना। इति

अत्र **वेदान्तिनः** सूत्रार्थानवबोधमूलकमिदं परवाक्यम्; तथा हि "सद्रूपाद् ब्रह्मणो जगत् सर्वमसद्" इत्यस्य प्रथमाध्यायोक्तत्वात् तत्र सर्वम-

१. बुद्धानां—ख।

सदिति पक्षतावच्छेदकावच्छेदेनानुमित्या ब्रह्मसाधारण्यनिरस्ततायां प्राप्तायां विरोधप्रसङ्गः। तदुक्तम्—

न सन्नासन्न सदसन्न चानुभयतत्त्वकम्।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम्॥ इति।

तथा च न सद्बाधयोग्यत्वात्, नासत्कालादिसम्बन्धात्, न सदसद्विरोधात्, न चानुभयतत्त्वकं सदसद्द्वयोरभाववत्सदसद्भिन्नत्वाभ्यां निर्वक्तुमशक्यत्वात्। विमतपदेन सत्त्वेन प्रतीत्यर्हत्वरूपं पक्षतावच्छेदकं विवक्षितम्, अन्यथा तुच्छे बाधासिद्ध्योः प्रसङ्गात्। अन्त्यसाध्यद्वये तु धीविषयत्वमेव पक्षतावच्छेदकम्, हेतुसाध्यद्वययोस्तु साधारण्यात्। एवं प्राप्ते परिहारसूत्रे "नाभाव उपलब्धेः" इति न शून्यत्वम्, उपलब्धेः सत्त्वेन प्रमाणात्प्रतीतेः। ततश्च ब्रह्म न बाध्यं बाधायोग्यत्वादिति हेतौ तात्पर्यम्। शून्यवादिनापि किञ्चित्परमार्थसदवश्यं स्वीकार्यं बाधस्य बाध्याधिकसत्ताकत्वनियमात्। सर्वस्य बाध्यत्वे च बाधस्य निरवधित्वप्रसङ्गात्। तदुक्तम्—

बाधितोपह्नवो मानैः व्यावहारिकमानता।
मानानां तात्त्विकं किञ्चिद्वस्त्वनाश्रित्य दुर्भणा॥ इति।

मानानामबाधितविषयकत्वरूपप्रामाण्यस्यौत्सर्गिकत्वाद्वस्तूनामपह्नवो बाधो वोचितो न सम्भवति।

ननु बाधकप्रमाणादौत्सर्गिकस्य बाधोऽस्तु? तत्राह—व्यावहारिकेति। बाधितविषयकेत्यर्थः। अनाश्रित्य बाधकविषयत्वेनास्वीकृत्य बाधकज्ञानस्य बाध्यज्ञानापेक्षयाधिकसत्ताकविषयकत्वनियमात्। समसत्ताकविषयकत्वे तुल्यबलत्वेन बाध्यबाधकत्वानुपपत्तेरतस्तात्त्विकविषयधीरेव व्यावहारिकमानबाधकत्वेन वाच्या। अतस्तात्त्विकं किञ्चिदवश्यं वाच्यमिति न सर्वशून्यत्वसिद्धिः। अथवानाश्रित्य साक्षित्वेनास्वीकृत्य साक्षिणोऽपि बाधस्वीकारे तत्साधकं साक्ष्यन्तरमेव वाच्यम्। एवं तद्बाधसाधकमपि साक्ष्यन्तरमेवेतिरीत्या पूर्वपूर्वसाक्षिबाधार्थमुत्तरोत्तरसाक्षिधारास्वीकाराद् दुर्वारानवस्था स्यात्। स्फुरणं नास्तीति बाधानुपलब्धेश्च साक्षिरूपं ब्रह्म तात्त्विकमेव वाच्यमिति भावः। नापि स्वप्नवैधर्म्योक्त्यनुपपत्तिः, उक्तानुमाने बाध्यत्वं प्राभाण्यगम्यत्वं दोषजन्यत्वं वोपाधिरित्येतदर्थत्वात्। बाध्यत्वादेः स्वप्नधर्मस्य ब्रह्मण्यभावदर्शनेन स्वप्नादौ निश्चितसाध्यव्यापकत्वस्य साधनाधिकरणे ब्रह्मणि तदभावेन साधनाव्यापकत्वस्य च दर्शितत्वात्।

एतादृशश्च सूत्रार्थो न प्रपञ्चमिथ्यात्वविरोधी, ब्रह्मणस्तात्त्विकसत्त्वस्थापनेऽपि प्रपञ्चस्य व्यावहारिकसत्वांशे तन्मताद्वैषम्याभावादिति ।

अथापि विज्ञानवादनिराकरणपरं तत्सूत्रम् । तथाहि—रूपादिरहितब्रह्मणो जगदुपादानत्वप्रतिपादकस्य प्रथमाध्यायस्य नीलाद्याकारविज्ञानसाधकेनानुमानेन न विरोधसन्देहः प्राप्तः । नीलाद्यनुभवरूपा धीर्नानुभवत्वशून्यविषयिका स्वस्वरूपसमानसत्ताकनीलादितादात्म्ययुक्ता वा, अनुभवत्वात्, अनुभवविषयकस्वप्नधीवत् । आस्तिकमते नीलादेरनुभवत्वशून्यत्वादौपनिषदमतेऽप्यनुभवनिष्ठव्यावहारिकनीलादितादात्म्यस्य पारमार्थिकानुभवस्वरूपसमसत्ताकत्वाभावान्न सिद्धसाधनम्, स्वाप्नस्यावच्छिन्नानुभवस्य शुद्धानुभवविषयतादात्म्याच्च न दृष्टान्तस्य साध्यवैकल्यम् ।

न च जडस्यापि तादृशानुभवविषयत्वादनुभवत्वशून्यत्वाच्च तद्दोषतादवस्थ्यम्, अनुभवविषयकत्वावच्छेदेनानुभवत्वशून्याविषयकत्वस्य साध्यत्वात्, जडस्य चानुभवत्वशून्यत्वेऽपि यदवच्छेदेन तज्ज्ञानेऽनुभवविषयत्वं तदवच्छेदेन तद्विषयकत्वविरहात् । यद्वा वेदान्तिनं प्रत्यनुभवत्वाश्रय[1]विषयकत्वमेव साध्यम्, [2]चाक्षुषादिरूपस्य विषयत्वात्सिद्धसाधनम् । चाक्षुषानुभवः परं व्यवसायोऽनुव्यवसायो वेत्यन्यदेवेति वाच्यम्, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् । व्यवसायस्यापि पक्षतावच्छेदकावच्छिन्नतया तत्रानुभवत्वाश्रयस्य विषयत्वाभावात् । स्वप्रकाशपक्षेऽपि स्वविषयिण्या एव बुद्धेः स्वविषयव्यापारजनकत्वमेव स्वप्रकाशत्वमित्य**र्वाचीन**मते अनुभवस्याविषयत्वापत्तेः[2] । [3]नीलाद्यनुभवत्वावच्छेदेनानुभवत्वशून्यविषयकत्वाभावस्यास्तिकैरनङ्गीकारात् न सिद्धसाधनम्, योगाचारेण तु एकस्या एव व्यक्तेरनुभवत्वनीलत्वादिस्वीकारेण यदवच्छेदेन नीलत्वाद्याश्रयविषयकत्वं तदवच्छेदेनानुभवविषयकत्वं तद्बुद्धेः स्वीक्रीति न वाच[3] (?) एवं नीलाद्यनुभवः स्वसत्ताकनीलत्वादिसंसर्गयुक्तोऽनुभवत्वाद्, यो यद्विषयकानुभवस्स तद्वृत्त्यसाधारणधर्मस्य स्वसमानसत्ताकसंसर्गवान्, यथाऽनुभवविषयकोऽनुभवोऽनुभववृत्तेरनुभवत्वस्य स्वसमानसत्ताकसंसर्गवानिति समान्यतो व्याप्ति**विज्ञानवादिनो**ऽभिमता ।

न चेदमप्रयोजकम्, बुद्धिविषययोः सहोपलम्भनियमात् । नह्यत्यन्तभिन्नयोस्सहोपलम्भो नियतः, गवाश्वादौ व्यभिचारात् । न च तुच्छानुभवे व्यभिचारः ज्ञानत्वशून्यस्यापि तस्य ज्ञानविषयत्वादिति वाच्यम्; तुच्छ-

१. °श्रयत्वमेव—ख । २–२. नास्ति—ख । ३–३. नास्ति—क ।

विषयकवृत्तेर्विकल्परूपत्वेनानुभवत्वाभावात् तुच्छविलक्षणविषयकज्ञानस्यैवानुभवत्वादिति प्राप्ते, उच्यते; "नाभाव उपलब्धेः" इत्यादि। बाह्यानां नीलादीनां ज्ञानव्यतिरेकेणाभाव इत्यनुमानं न ज्ञानाद्भिन्नत्वेन प्रत्यक्षेणैव गृह्यमाणत्वात्। नीलाद्यर्थो न तद्विज्ञानभिन्नो विज्ञानान्तरानुगतत्वाद्, यो यदन्यत्रानुगतः स ततोऽन्यो, यथा जातिर्व्यक्तेरिति प्रतिरोधाच्च। किन्तु व्यवहारदशाबाध्यार्थक्रियाकारित्वरूपं सत्त्वमेव बाह्यार्थस्य स्वप्नवैधर्म्योक्तिरिति पूर्ववदुपाधिप्रदर्शनार्था। तदुक्तम्—तस्मान्न ज्ञानाकारोऽर्थः। किन्तु बाह्यस्सर्वार्थक्रियाकारित्वसत्त्वोपेतोऽप्यद्वैतश्रुतिवशाद् ब्रह्मणि कल्पितो न परमार्थः सन्निति सिद्धान्तस्य सुगतमताद्भेद इति। तदयं फलितार्थः—

बाधेन सोपाधिकतानुमाने उपायभावेन सहोपलम्भः।
सारूप्यतो बुद्धितदर्थभेदः स्थूलार्थभङ्गे भवतोऽपि तुल्यः॥ इति।

बाध्यत्वाद्युपाधियुक्तमनुमानमिति व्याख्यातप्रायम्। सहोपलम्भनियमस्तु विषयस्य ज्ञानज्ञाने उपायत्वात्। प्रमाया विषयसन्निकृष्टत्वेन रूपग्रहहेतुत्वेऽपि यथा न रूपतादात्म्यं न तथा विषयोपरागेणैव ज्ञानग्रहाद्विषयोऽपि ज्ञानविषयीभवति। विषयनिरूप्यं हि ज्ञानमिति न्यायात्। तथा च सौत्रान्तिकेन पृथिव्यादिचतुष्टयान्यगुणानां स्थूलावयविनश्चानङ्गीकारेऽपि परमाणुसङ्घातरूप एवार्थोऽङ्गीकृतः, अन्यथा ज्ञाने विषयस्य प्रतिबिम्बरूपसारूप्यानुपपत्तेः। एवं च स्थूलबाह्यार्थानङ्गीकारेण विज्ञानवादिनाप्यवश्यं स्वीकार्यम्, सारूप्यशब्दाभिधेयस्य विषयज्ञानयोः साहित्यस्य त्वयाभ्युपगमात्। तस्य भेदं विनानुपपन्नत्वात्। न च स्वसमानसत्ताकं विषयतादात्म्यमेव मन्मते ज्ञाने सारूप्यमिति वाच्यम्; तादात्म्यस्वीकारेऽपि तस्य ज्ञानसमानसत्ताकत्वे मानाभावात्। एकस्मिन् ज्ञानस्वरूपे तात्त्विके सर्वविषयाणां तादात्म्यस्वीकारेणैव वेदान्तिमते निर्वाहात्तन्मतेऽनन्तज्ञानोत्पत्तिकल्पने गौरवात्। न च तन्मतेऽपि विषयाणामनन्तानामुत्पत्तेः साम्यमिति वाच्यम्; अनादिविषयकज्ञानस्थले तद्विषयाणामुत्पत्तेरनुपगमादिति दिक्।

एवमपि न सूत्रविरोधः। व्यावहारिकसत्त्वस्यैवाभ्युपगमात्तस्य च मिथ्यात्वविरोधित्वात्। नापि प्रमाणसिद्धानामेव पदार्थानां मिथ्यात्वस्य बोध्यतया धर्मिग्राहकमानविरोधः, तात्त्विकत्वस्य धर्मिग्राहकमाननिष्ठस्यानुपजीव्यत्वात्। व्यावहारिकप्रामाण्यस्य च मिथ्यात्वबोधकेनाप्यनपसारणादिति। तस्मादुक्तसूत्रविरोधशङ्का मन्दैव परेषामिति स्थितमिति।

अत्रापीदं वक्तव्यम्—किं प्रथमपक्षे साक्षितात्त्विकत्वप्रतिपादनेन शून्यवादनिरासः ? आहोस्विद् व्यावहारिकसत्त्वप्रतिपादनेन ? नाद्यः; साक्षिणस्तात्त्विकतायास्त्वयाप्यनभ्युपगमात्। शुद्धब्रह्मणश्चाबाध्यत्वेन त्वदभिमतस्य साक्षित्वाभावादित्यस्य पूर्वमेवाभिहितत्वात्। रूपान्तरेण तात्त्विकत्वस्य चाकिञ्चित्करत्वाज्ज्ञानपदार्थस्य तैरपि तात्त्विकत्वानभ्युपगमाच्च। नान्त्यः; शून्यवादिनापि तदभ्युपगमात्। वक्ष्यते हि मिथ्यात्वलक्षणे तैरेव **लघुचन्द्रिकायाम्** "अवश्यक्लृप्तेनार्थक्रियाकारित्वेनालीकव्यावृत्तेन सन् घट इत्यादिप्रत्ययोपपत्तेरबाध्यत्वं शून्यभावनानिवर्त्यत्वरूपं माध्यमिकेन न स्वीक्रियते" इति। अतः पारमार्थिकसत्त्वाभिप्रायेणैव तत्सूत्रं प्रवृत्तमित्यवश्यमङ्गीकार्यम्। अतश्च तद्विरोधतिरोधानमद्वैतवादे दुर्लभमेव। एवं विज्ञानवादनिराकरणार्थत्वपक्षेऽपि तैरपि व्यावहारिकसत्त्वाभ्युपगमात्। तदुक्तं **खण्डनटीकाकारैः**—"सांवृतं सत्त्वमसद्वादिभिर्व्यवहारोपपादकमिष्टम्" इति। "बाह्यार्थसत्त्वं योगाचारादेः समानम्" इति च। तन्मतनिरासार्थमर्थक्रियाकारित्वरूपसत्त्वमेवेत्यप्रामाणिकं दोषं दत्त्वा सूत्रार्थकथनस्य दुराग्रहमात्रत्वात्। प्रत्युत यादृशसत्त्वं विज्ञानवादिभिरभ्युपगम्यते तद्विपरीतसत्त्वप्रतिपादन एव सूत्रस्य तात्पर्यम्। नाभाव उपलब्धेरित्यनेन प्रपञ्चसत्ताप्रतिपादनेनैव परमतस्य निराकृतत्वात्। साक्षितात्त्विकत्वस्य सूत्रे तन्मतदूषणत्वेनानुपन्यासात्, परमतदूषणपरस्य सूत्रस्य तन्मतापेक्षया स्वमते वैलक्षण्यमात्रप्रतिपादकत्वेन व्याख्यानस्यात्यन्तमनुचितत्वाच्च। एतेन सम्प्रति वाक्येऽप्यर्थक्रियाकारित्वादिविशेषणं निरस्तम्। सम्मन्तव्यसमायोगक्षेमत्वात्। धर्मिग्राहकमानविरोधपरिहारोपायस्तु पूर्वरीत्यैव सुकरोपाय इतिदिक्।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**श्रुतेर्विद्याद्यतात्पर्यं श्रुतितात्पर्यमङ्क्ष्ये ॥ ३ ॥**



# चतुर्थोऽशः

एवं तावच्छ्रुतिरभिमता यादृशार्था परेषां
कृत्वा तस्या[1]भ्युपगममिदं रीतितस्तन्निरस्तम् ॥
सम्प्रत्यर्थः कथमिव तथा शाब्दमर्यादयासौ,
तद्वाक्येभ्यः स्ववगम इति स्फायतेऽयं विचारः ॥

अभ्युपेत्य ह्यद्वैतबोधनानुगुणत्वं यथोक्तश्रुतीनां प्रत्यक्षादिविरोधेन तत्र तात्पर्यं नास्तीत्युक्तम्—

समर्थ्यमाने शब्दार्थे सत्यप्यर्थः कदर्थ्यते ।
मनोरथोऽयं मिथ्यात्ववादिनां परमार्थतः ॥

तथा हि—**छान्दोग्योपनिषदि** षष्ठप्रपाठके श्रूयते—"श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनो नानूच्य ब्रह्मबन्धुरिव भवतीति ॥ स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तं ह पितोवाच ॥ श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथन्नु भगवः स आदेशो भवतीति ॥ यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यं सोम्य स आदेशो भवतीति ॥ न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवांस्त्वेवमेतद् ब्रवीत्विति तथा सोम्येति होवाच ॥ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सदजायत ॥ कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ तदैक्षत बहु स्याम्प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहुस्याम्प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्वच शोचति स्वेदते वा पुरुष-

१. तस्यां कृत्वा—क-१.

स्तेजस एव तद्ध्यापो जायन्ते ॥ ता आप ऐक्षन्त बह्व्यः स्यां प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते । तेषां खल्वेषां भूतानां त्रीण्येव बीजानि सम्भवन्त्याण्डजं जीवजमुद्भिजमिति ॥ सोऽयं देवदत्तैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ॥ सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ॥ तासां त्रिवृतं त्रिवृतमेकैकामकरोद् यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति यदग्ने रोहितं रूपमित्यादि ।" अस्यार्थः—अनूचानमानी साङ्गवेदाध्येतारमात्मानम्मन्यमानः "अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" **इत्यमरः**। आदेशमुपदेशार्हं तन्मात्रगम्यमिति यावत् । "तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रवणात् । "आचार्यवान्पुरुषो वेद" इति वक्ष्यमाणेन समानार्थं चेदम् । अप्राक्षः स्वगुरुं प्रति त्वं पृष्टवान् । छान्दसत्वाद् "अस्तिसिचोऽपृक्ते" इतीडागमाभावः । एतेनोत्तरजन्यज्ञानस्य शाब्दत्वनियमाच्छब्दादेव ब्रह्मापरोक्षमिति निरस्तम् । विस्तरः पुरस्तात् । तज्ज्ञानस्य वैकल्यात्प्रश्नाभावमाशङ्क्याह—येनेति । येन श्रुतेन मतेन विज्ञातेन च अश्रुतममतमविज्ञातं वस्तु । शब्दानुमानप्रत्यक्षैर्विशिष्यानवगतमपीति यावत् । श्रुतं मतं विज्ञातञ्च भवति तत्फलनिष्पत्तेः । ईश्वरज्ञानस्य सर्वज्ञत्वे हेतुत्वात् । तथा च **योगसूत्रम्**—"ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" इति । ततः ईश्वरप्रणिधानात्प्रत्यगात्माधिगमः । अन्तरायस्य रागादेरप्यभाव इति तदर्थः । **तद्भाष्यकाराश्च** "भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति ज्ञान वैराग्यादिना" इति । अत एव **भगवत्पादै**रुक्तम्—"यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः" इति । एतेन "कस्मिन्नु भगवेति विज्ञाते सर्वमिदं विज्ञातम्भवति" **इत्याथर्वण**श्रुतिरपि व्याख्याता । अत एव **बृहदारण्यके**ऽपि—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इति । व्याख्यातञ्च **टीकाकारैः**—"आत्मनो वै आत्मन एव अरे मैत्रेयि दर्शनेन श्रवणेन मत्या विज्ञानेन साक्षात्कारेण वाक्यार्थज्ञानेन युक्त्यनुचिन्तनेन निदिध्यासनेदं सर्वं यत्किञ्चित्साक्षात्करणीयं वाक्यादवगन्तव्यं युक्त्या चिन्तनीयं निदिध्यासितव्यं निखिलं विदितं साक्षात्कृतं श्रुतं मतं निदिध्यासितं च[1] स्यादिति शेषः" इति । अत्र बाधायां सामानाधिकरण्यमित्यादेश्च

१. वा—क ।

निराकरिष्यमाणत्वात्तथा चात्मतत्त्वज्ञानेन तु तत्तत्पदार्थवृत्त्यसाधारण-धर्मांशे निरवच्छिन्नप्रकारताकतावद्विशेष्यकबोधः सम्भवतीति भावः। एक-ज्ञानेन कथमन्यज्ञानमतो दृष्टान्तमाह—यथा सोम्येति। एकेन मृत्पिण्डेन विज्ञा-तेन यथा मृदन्तरमपि ज्ञायते। परमाण्वादेरप्रत्यक्षत्वात्पृथिवीपदं स्थूलपृथिव्य-र्थकम्, मृत्पदञ्च पृथिवीपरम्। एकपदञ्च येन धर्मेण तद्व्यक्तिप्रत्यक्षं तद्धर्म-प्रकारक एव तद्धर्मावच्छिन्नव्यक्तिमात्रबोधो भवतीति सूचनार्थनिर्धारणार्थ-कत्वपर्यवसानेन तस्य च सजातीयविषयकत्वेन तथा लाभात्। तेन चक्षुः-संयुक्तघटस्य वस्तुतः पृथिवीत्वेऽपि यदा पृथिवीत्वप्रकारकं चाक्षुषं तदा पृथिवीत्वेन सकलपृथिवीग्रहणम्, यदा तु घटत्वेन तत् तदा घटत्वेन यावद्-घटप्रत्यक्षमिति घटत्वप्रकारकचाक्षुषकाले घटाख्यपृथिवीज्ञानस्य यावत्पृथिव्य-विषयकत्वेऽपि न क्षतिः। मृण्मयमित्यत्र पृथिवीपरं मृत्पदं पृथिवीत्वतात्पर्य-ग्राहकम्, मयट् प्राचुर्ये, ततश्च पृथिवीत्वजातेरैक्येन सजातीयव्यक्त्यन्तरसंव-लितत्वरूपप्राचुर्यबाधेन समवेतत्वरूपतदर्थकतया समवायेन यत्र पृथिवीत्वं वर्तते तेषामेव प्रत्यक्षं न तु कालिकेन पृथिवीत्ववतो जलादेरिति भावः। चक्षुः-संयुक्तव्यक्तौ येन सम्बन्धेन यत्सामान्यं गृह्यते तेनैव सम्बन्धेन तत्सामान्यस्य तदाश्रयविशेष्यकस्वप्रकारकप्रत्यक्षहेतुत्वात्।

ननु तत्प्रत्यक्षस्य यावत्तद्व्यक्तिविषयत्वे किं प्रमाणमत आह—वाचा-रम्भणं विकार इति। वाचा घटमानयेत्यादिवाक्येनारम्भणं प्रयत्नस्तद्-रूपो विकारो भवतीति। दृश्यते ह्येकघटे शक्तिज्ञाने देशान्तरीयघटे विशिष्य-शक्तिग्रहशून्यस्यापि घटमानयेत्यादिवाक्यात् तदानयने चेष्टा, तया च तत्र प्रवृत्तिः, तया च तदानयनेच्छेति। तया च तदनुकूलज्ञानमाक्षिप्यते तच्च शाब्दमेव मानान्तरस्य तदानीमनुपस्थितत्वात्. न च तच्छक्तिग्रहं विना। स च तदानीं तदुपायाभावेन कालान्तरीयघटान्तरविषयकशक्तिग्रहकालीन एवेति। अत एव विकारेति यत्नविशेषणं कार्येण स्वाकाङ्क्षितकारणपर-म्पराक्षेपलाभार्थं संगच्छते। न तु तत्र शक्तिभ्रमादेव शाब्दबोधः स्यादत आह—नामधेयं मृत्तिकैव सत्यम् इति। मृतिकेत्येव नामधेयं सत्यं क्व पुनस्तद्विषयकशक्तिग्रहः प्रमेत्यत्र विवादः। तथा च घटत्वादेरविशेषाच्छक्ति-ग्रहविषयीभूतव्यक्तिविषयकशाब्दस्यापि प्रमात्वे बाधकाभावाच्छक्तिग्रहस्यैत-द्विषयकत्वं सिद्धम्। तथा चैतद्घटविषयकशाब्दबोधः स्वविषयविषयक-शक्तिग्रहमूलकः घटविषयकशाब्दबोधत्वात्तद्घटशाब्दबोधवदिति पूर्वोक्ता-नुमानेन शक्तिग्रहसिद्धावौत्सर्गिकत्वाल्लाघवाच्च प्रमात्वमेव तस्येति। तथा

च यथा सामान्यलक्षणप्रत्यासत्त्या एकघटादिज्ञानात्सर्वघटादिज्ञानं तथात्मतत्त्वज्ञानात्सार्वज्ञम्, लौकिकप्रत्यासत्तिमात्रस्य ज्ञाने नापेक्षितत्वात्। क्वचिदलौकिकप्रत्यासत्त्यापि ज्ञानसम्भवादिति हृदयम्। सामान्यलक्षणानङ्गीकारपक्षेऽप्येकघटज्ञानेन सर्वघटज्ञानमस्त्येव। समानप्रकारकत्वस्य नियामकत्वेनैकघटविषयकज्ञानस्य यावद्घटविषयकत्वस्य तत्रानभ्युपगमेऽपि तच्छक्तिग्रहादेवान्यघटशाब्दादौ हेतुत्वोपगमात्, फलस्योभयसाधारणत्वात्। एतत्पक्षे तु मृत्तिकेति नामधेयमन्यव्यक्तेरिति सत्यमेव। अत उभयोरेकधर्माक्रान्ततयैकघटशक्तिग्रहादपि तत्प्रकारीभूतघटत्वप्रकारकघटान्तरशाब्द उपपन्नः। एवमन्यत्रापीति योज्यम्। एवमुत्तरवाक्यद्वयेऽपि। लोहमणिपदं सुवर्णार्थकम्। नखनिःकृन्तनपदश्चायःसामान्यपरमिति परेषामिवास्माकमपि समानमिति विभावनीयम्। तस्माद् ब्रह्मज्ञानसिद्धौ कृतार्थतया पदार्थान्तराणां श्रवणाद्यभावेऽपि तस्य क्षत्यनाधायकतया—

"एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत"।

इति न्यायेनाकिञ्चित्करत्वात्। अत एव राजदर्शने सत्यमात्यादिदर्शनं सिद्धमिति व्यवहारः। तत्पक्षेऽपि गौणत्वावश्यकत्वादिति पुरस्ताद्विस्तरः।

किञ्च परेषामुपादानज्ञानादुपादेयज्ञानमिति प्रतिज्ञानुरोधे नखनिकृन्तनपदस्य लोहपरत्वं लक्षणयावश्यकम्, अन्यथा नखनिकृन्तनस्यान्त्यावयवित्वेनानुपादानतया दृष्टान्तत्वानुपपत्तेः। तार्किकाणां तु तन्मात्रासाधारणरूपेणैव स्वावच्छिन्नव्यक्तिबोधस्य व्याख्यानसम्भवात्तस्य लोहसामान्यपरत्वमनावश्यकमेव। तदुक्तार्थदृष्टान्ततायास्तावतैव निर्वाहादिति रहस्यम्।

यत्तु **भाष्यानुसारि** व्याख्यानं "येनाश्रुतं श्रुतमित्यादि" सामानाधिकरण्यबाधायामश्रुतमन्यत्सर्वं यदभिन्नश्रुतस्वरूपं व्यतिरेकेण नास्तीत्यर्थः। तथा चैकं सर्वस्याधिष्ठानमित्यर्थः प्रतिज्ञातः। तत्र मृत्पिण्डव्यतिरेकेण तद्विकारो यथा नास्तीत्यादिदृष्टान्ता यथा सौम्येत्यादिना प्रतिपाद्यन्ते। मृत्पिण्डपदश्च [1]'मुख्यार्थैकैकपदयोगाद् भूमिरूपपिण्डार्थकम्, पिण्डपदं च स्थौल्यबोधकं मृण्मयपात्रोपादानत्वयोग्यतालाभाय' मृण्मयपदं च भूमिविकारमात्रार्थकम्। तथा च भूमिविकारः सर्वो यथा भूमिं विना नास्तीत्यर्थः। भूमिविकारसत्त्वं च साक्षादेव वृक्षादावक्षतमिति भूमेर्विभक्तपिण्डस्य नानाविकारानुपादानत्वेऽपि न क्षतिः। यद्यपि भूमेर्नोपादानत्वं वेदान्तिनाम्, ब्रह्मण एवोपादानत्वात्, तथाप्यधिष्ठानतावच्छेदकशुक्त्यादिव्यतिरेकेण रूप्यादि

१-१. नास्ति—क।

नास्तीति व्यवहारवद् भूमिविकारादिस्वरूपदशायामाधारतावच्छेदकभूम्यादिव्यतिरेकेण तद्विकारो नास्तीति श्रुत्या तथोक्तम्। एवं च सर्वं मृण्मयमेकमृत्पिण्डभिन्नविज्ञातस्वरूपमित्यपि बाधायां सामानाधिकरण्यम्। तत्र हेतुर्मृत्तिकेत्येव सत्यमिति। मृत्तिका भूरिति गृह्यमाणं यत्तदेव सत्यम्, मृत्तिकास्वरूपस्य सत्यत्वाभावात्। तदवच्छिन्नचिद्रूपस्य दृष्टान्तत्वधीदशायां मृदो विविच्याज्ञानाद् भूमित्वेन ज्ञायमानत्वेन च प्रकारेण सद्रूपलाभार्थमितिशब्दः। मनो ब्रह्मेतीत्यादौ ज्ञायमानत्वस्येतिशब्दार्थत्वात्। आद्यर्थको वेतिशब्दः, "इति हेतुः प्रकरणप्रकारादिसमाप्तिषु" **इत्यमरात्**। तथा च भूमिविकारस्य विचारदशायां तत्स्वरूपमिव भूमिस्वरूपविचारदशायां सापि मिथ्या तत्कारणपञ्चीकृतभूतान्येव सत्यानि। तेषामपि स्वरूपविचारदशायां तान्यपि मिथ्या, तत्कारणमेव सत्यमित्याद्यर्थलाभः। नखनिकृन्तनपदं चायःसामान्यपरम्। लोहमणिपदमपि सुवर्णार्थकम्। तयोर्विशेषणमेकपदश्चैकजातीयकम्। तदुपादानं चैकजातीयत्वे सर्वपदोपादानत्वसंभवलाभाय, इतिशब्दस्तु तत्राप्युक्तरीत्या व्याख्येयः। मृत्तिकेत्येव सत्यमित्यादौ हेतुर्वाचारम्भणं विकारो नामधेयमिति। आरम्भणमत्र समवायिकारणजन्यत्वमुत्पत्तिर्वाचा वाङ्मात्रं विचारासहमिति यावत्। तथा चोत्पत्तिः सतोऽसतो वेति निरूपयितुमशक्यत्वादुत्पन्नसामान्यविचार[२]सहमिति भावः। तावताप्यनाद्यविद्यासाधारण्येन हेत्वलाभादाह—विकारो नामधेयमिति। नाशादिविकृतियुक्तं नाममात्रं विचारासहमिति यावत्। अर्थे नामाभेदासम्भवादसत इत्यादाविव मात्रार्थान्तरभावेन विचारसहत्वलाभः। तथा चोत्पत्त्यादिविकृतेस्तद्युक्तस्य संसर्गदुर्निरूपकत्वादिना विचारासहत्वान्मिथ्यात्वमिति निर्विकारं ब्रह्मैव सत्यमिति दृष्टान्तोपपादकत्वेनोक्तमपि दार्ष्टान्तिकस्याप्युपपादकमिति दिक्।

अत्रेदं वक्तव्यम्—येनाश्रुतं श्रुतमित्यादौ बाधायां सामानाधिकरण्यमित्यत्र मानाभावः। तथाहि भवतां मिथःसाकाङ्क्षसमानविभक्तिकपदत्वरूपं चतुर्द्धा सामानाधिकरण्यम्। अध्यासे भिन्नसत्ताकयोः तादात्म्यबोधकाकाङ्क्षाघटितं यथेदं रजतमित्यादाविदमंशस्य व्यावहारिकी सत्ता रजतस्य तु प्रातिभासिकीति भिन्नसत्ताकत्वम्। बाधायां बाध्यमानतादात्म्योपलक्षिताधिष्ठानस्य बोधकाकाङ्क्षाघटितं यथा स्थाणुः पुमानित्यादौ स्थाणुः पुरुषत्वेन ज्ञात इति स्थाणौ पुरुषतादात्म्यस्य बाधविषयत्वात्. बाध्यमानपुरुषतादात्म्यो-

२. विचारासहं—ख।

पलक्षितस्थाणुरूपाधिष्ठानस्य प्रतीतेः। स्थाणुव्यतिरेकेण पुमान्नास्तीति पुंसो मिथ्यात्वप्रत्ययात्। विशेषणविशेष्यभावे समानसत्ताकयोस्तादात्म्यबोधकाकाङ्क्षाघटितं यथा नीलमुत्पलमित्यादौ गुणगुणिनोर्द्वयोरपि व्यावहारिकसत्तावत्त्वात् समानसत्ताकत्वम्। अभेदेऽखण्डार्थबोधकाकाङ्क्षाघटितं यथा तत्त्वमसीत्यादौ। एवञ्च स्थाणौ पुरुषतादात्म्याभावस्य प्रमाणान्तरसिद्धत्वेन स्थाणुः पुमानित्यादौ बाधायां सामानाधिकरण्याङ्गीकारेऽपि प्रकृते ब्रह्मस्वरूपव्यतिरेकेण प्रपञ्चाभावस्य प्रमाणान्तरादसिद्धतया तदभ्युपगमे किं बीजम्? श्रुतिशब्दादेव मिथ्यात्वं हि संप्रति प्रतिपिपादयिषितम्।

न च प्रकारान्तरेण सम्भवद्व्याख्याका अश्रुतादिशब्दा उक्तसामानाधिकरण्ये पर्यवसाययितुं शक्यन्ते। परिशेषकप्रामाण्यानवतारात् सामानाधिकरण्यान्तरापेक्षया गौरवाच्च। अतः सर्वस्यैकमधिष्ठानमिति रिक्तं वचः। एवं मृत्पिण्डव्यतिरेकेण तद्विकारो यथा नास्तीत्यादिदृष्टान्तपरत्वेन यथा सोम्येत्यादेर्व्याख्यानमप्ययुक्तम्। उभयसंप्रतिपन्नस्यैव दृष्टान्तत्वात्। भवदुक्तार्थस्य च श्वेतकेतुं प्रत्यसिद्धत्वादन्यथोपदेशवैयर्थ्यात्। दृष्टान्तस्यैव पितृवचनप्रामाण्येन प्रतिज्ञाया एव तेनानुमन्तुं शक्यत्वात्। शङ्काकलङ्कस्य तावन्मात्रेण निवृत्त्यसम्भवात्। दृष्टान्तानुसारेणैव प्रतिज्ञाया नेयत्वात्। तदुक्तं **पार्थसारथिमिश्रैः**—"सर्वत्र हि दृष्टान्तोपादानं साध्यप्रतिपादकस्य वाक्यस्य तात्पर्याभिव्यक्त्यर्थम्" इति। मृत्पिण्डपदव्याख्यानमप्ययुक्तम्—भूमिर्हि महापृथिवी वा तज्जातीयमात्रं वा? नाद्यः, अन्त्यावयवित्वेन तद्विकारस्याप्रसिद्धेः। नान्त्यः, एकपदस्य मुख्यार्थत्ववैयर्थ्यात्। घटोपादानपृथिव्यपेक्षया पटोपादानपृथिव्या मुख्यत्वे मानाभावात्। मृण्मयमात्रोपादानत्वयोग्यत्वमपि पिण्डपदव्यतिरेकेणापि सिद्धमेव। पृथिवीत्वस्य तद्योग्यतावच्छेदकत्वेऽस्थूलपृथिव्यामपि तत्सत्त्वात्। कपालत्वादेस्तथात्वे तु स्थूलपृथिवीत्वावच्छेदेनापि तदभावान्मृण्मयपदस्य भूमिविकारार्थत्वमप्यसाधीयः। "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इत्यत्र भाषायामित्युपादानसामर्थ्येन छन्दसि विकारे मयटो दुर्लभत्वात्।

नन्वेवमानन्दमयाधिकरणे आनन्दमयशब्दे "विकारे मयड्" इति **भगवत्पादव्याख्यानमसङ्गतं** स्यात्। अन्नमयप्राणमयमनोमयेषु "द्व्यचश्छन्दसि" इति सूत्रेण विकारार्थे मयट् सम्भवेऽप्यानन्दमयेत्यत्र तदसम्भवात्। अत एव विकारशब्दान्नेति चेन्न; "प्राचुर्यात्" इतिसूत्रयतो **वेदव्यासस्या**प्ययमेवाशयः। उभयसम्भव एव प्रायपाठस्य निर्णायकत्वादिति चेन्न; अत्र **मनोरमाकृतः**

"प्राचुर्ये मयटचपि प्रकृत्यर्थविरोधिनो लेशतोऽनुवृत्तिलाभात्[१] प्रकृते विकारार्थकत्वे पर्यसानम्। यद्वा "नित्यं वृद्धशरादिभ्यः" इत्यनेन मयट्। अत्र भाषायामित्यस्यानुवृत्तौ मानाभावात् सत्येवानित्यत्वे नैवं भाषायामित्यस्यान्वये क्वचिच्छन्दस्यपीत्याशयात्। अत एव शरादिषु मृच्छब्दपाठः सार्थकः, "मृण्मयं गृहम्" इति मन्त्रे दर्शनात्। न च भाषार्थमेव मृच्छब्दपाठः, आरम्भसामर्थ्यादेव सिद्धे नित्यत्वे नित्यग्रहणमन्यत्रापि क्वचिन्नित्यत्वार्थम्। तेन "एकाचो नित्यम्" इत्युक्त्वा त्वङ्मयं वाङ्मयमित्यादेराकरे उदाहृतत्वात्। एवं च मृच्छब्दपाठवैयर्थ्यस्य स्पष्टत्वं तदभिमतत्वात्। यद्वा "हेतुमनुष्येभ्यः" इत्यनुवर्तमाने "मयड् वा" इति सूत्रेण आगतार्थे मयट्, विकार इति त्वार्थिकार्थकथनमेव" इति वदन्ति।

नन्वेवं मृण्मयपदे न काप्यनुपपत्तिरिति चेत्, मैवम्; विधेयेन मयटा सहैव नित्यत्वस्य च भाषाया अप्यन्वयौचित्यात्। अत एव "पुंसि संज्ञायां घः प्रायेण" इत्यत्र प्रायेणेति घप्रत्ययस्यैव विशेषणं न तु सञ्ज्ञाया इति **भाष्यादयः**। न ह्युपाधेरुपाधिर्भवति विशेषणस्य विशेषणमिति तत्रोक्तत्वात्। मृच्छब्दपाठस्तु व्यर्थ एवेति व्याख्यात्रभिमतत्वान्न छन्दोर्थत्वेन तत्सार्थक्यं वक्तुं शक्यम्। मृण्मयमिति छन्दसि प्रयोगस्तु तदुक्तरीत्यैव हेत्वर्थकमयट्प्रत्ययेनापि गतार्थः।

यत्तु तैरुक्तं "श्रीग्रामण्योः" इति सूत्रे छन्दसीत्यंशो **महाभाष्ये** यथा प्रत्याख्यातश्छन्दसि सकलविकल्पानां व्यवस्थितत्वादत एवान्यत्रापि "उऋतः" "नित्यं छन्दसि" इत्यादयोऽपि न्यायसाम्यादित्थमेव ग्रन्थकारैः प्रत्याख्याताः। एवमिहापि भाषायामिति त्याज्यम्। तथा च "द्व्यचश्छन्दसि" "नोत्वद्वर्ध्रबिल्वात्" इत्यादीनि सूत्राण्यपि त्याज्यानि। भाषाग्रहणसत्त्वे हि शरमयं बर्हिरित्यादेः सिद्ध्यर्थे द्व्यच इति, मौञ्जं शिक्यं वार्ध्री रज्जुः बैल्वो यूप इत्यादौ तत्प्रतिषेधार्थं च नोत्वदिति सूत्रमारभ्यते। भाषाग्रहणपरित्यागे तु नेदं प्रयोजनम्। व्यवस्थितविकल्पेनैव सिद्धेः। एषैव च **वेदान्तसूत्रवृत्तिकृताम**पि गतिः। विज्ञानमयशब्दे विकारे मयटस्तैरप्यन्यथोपपादयितुमशक्यत्वादिति। तच्चिन्त्यम्; छन्दोग्रहणस्योक्तरीत्या प्रत्याख्यानसम्भवेऽपि छन्दसि तादृशप्रयोगाभावनिश्चायकभाषाग्रहणस्य प्रत्याख्यातुमशक्यत्वात्। भाषाग्रहणगर्भ-[२]सूत्रविहितकार्याणां वेदे व्यतिरेकस्य निश्चितत्वात्। अत एव द्व्यच इत्यादि सूत्रद्वयमपि सार्थकम्, प्रमाणवतो गौरवस्य[२] न्याय्यत्वात्, हेत्वर्थमयटैव आनन्दविज्ञानमयपदयोर्विकारपरत्वसम्भवाच्चेत्यलं बहुना।

---

१. °वृत्तित्वात्—क। २–२. नास्ति—क।

ननु प्रकृतेऽपि तथैव व्याख्येयमिति चेत्; आस्तां कथञ्चित्। प्रकृतमनुसरामः। भूमिविकारः सर्वो यथा भूमिं विना नास्तीत्यस्य दृष्टान्तार्थत्वे सर्वस्यैकमधिष्ठानमिति प्रतिज्ञायाः कथमुत्पत्तिः ? जलादिविकारेषु जलादेरेवाधिष्ठानत्वपर्यवसानाद् भूमिविकारे भूमेरधिष्ठानत्वोक्तेः, ब्रह्मैव सर्वाधिष्ठानमिति प्रतिज्ञाविरुद्धत्वाच्च। न च भूम्यवच्छिन्नचैतन्यस्यैवाधिष्ठानत्वाद् भूमेर्नाधिष्ठानत्वमपि तु तदवच्छेदकत्वमिति वाच्यम्; अधिष्ठानज्ञानेन तत्कार्यज्ञानप्रतिज्ञाविलयापत्तेः। एतेन यद्यपि भूमिर्नाधिष्ठानमित्यादिकमपि निरस्तम्। अधिष्ठानतावच्छेदकशुक्त्यादिव्यतिरेकेण रूप्यादिविरहस्य कथञ्चित् प्रसिद्धावप्यधिष्ठानतावच्छेदकभूम्यादिव्यतिरेकेण तद्विकारो नास्तीत्यस्य प्रथममनिश्चयादवच्छिन्नब्रह्मोपादानत्वसिद्ध्यनन्तरमेव भूम्यादेरधिष्ठानतावच्छेदकत्वस्य भवद्भिः कल्प्यत्वात्। शब्दस्वारस्येन स्वाभिमतार्थानयनस्यैवेदानीमुपक्रान्तत्वात्। अत एव सर्वं मृण्मयमेकं मृत्पिण्डाभिन्नविज्ञातस्वरूपमित्यपि बाधायां सामानाधिकरण्यमित्ययुक्तम्।

यत्तु मृत्तिका भूमिरिति गृह्यमाणं यत्तदेव सत्यमित्यादि, तदसत्; मृत्तिकात्वेन गृह्यमाणत्वस्य मृत्तिकायामेव संभवेन मृत्तिकास्वरूपस्य सत्यत्वानाक्षेपात्। मृत्तिकास्वरूपस्य सत्यत्वाभावादेव न तथेति चेन्न; तदसत्यत्वासिद्धेः। अत एव दृष्टान्तत्वधीदशायां मृदवच्छिन्नचिद्रूपस्य मृद्विविक्तत्वेनाज्ञानाद् भूमित्वप्रकारकज्ञानविशेष्यत्वरूपेण चिद्रूपलाभार्थमिति शब्द इति सावद्यम्। तथापि मृत्तिकात्वप्रकारकज्ञानविषयत्वं यस्य बोद्धा गृहीतं तन्निष्ठस्यैव सत्यत्वस्य शाब्दबोधविषयत्वात् तादृशरूपेण चिद्रूपं भासत इति तु भवतामेव कल्पनं नोक्तश्रुत्यर्थः, प्रमाणान्तराभावात्पदार्थत्वाभावाच्च। इति शब्दो ज्ञायमानत्वार्थक इत्यप्ययुक्तम्। "मनो ब्रह्मेत्युपासीत" इत्यादौ ज्ञानार्थकपदान्तरसमभिव्याहारेणैव तथात्वात्। "क्रमादमुं नारद इत्यबोधि सः" इत्यादौ तथैव दर्शनात्। ज्ञानाकारपरामर्शकस्येतिशब्दस्य परामर्शनीयज्ञाने स्वरूपवर्त्तिपदजन्यबोधप्रकारकत्वग्राहकत्वात्। आद्यर्थकेतिशब्दाश्रयमूलकव्याख्यानमपि पूर्वोक्तव्याख्यानवदेव सदोषम्। यदपि मृत्तिकेत्येव सत्यमित्यादौ हेतुर्वाचारम्भणमित्यादीति, तन्न; हेतुपूर्वमेव साध्यनिर्देशस्यौत्सर्गिकत्वात् प्रथमं हेतुर्निर्देशस्यानाकाङ्क्षिताभिधानत्वात्। [1]वाङ्मात्रविचारासहमित्यर्थोऽप्ययुक्तः सतोऽसतो वोत्पत्तिरिति पक्षद्वयेऽन्यतरदोषाणामवश्यमाभासत्वस्य पुरःस्थाप्यत्वात्[1]।

१-१. नास्ति—क।

यत्त्वनादिसाधारण्येन मिथ्यात्वलाभार्थं विकारो नामधेयमितीति, तच्चिन्त्यम्, तेनैव साधनादिना दृश्ये मिथ्यात्वसिद्धौ वाचारम्भणमित्यस्योत्पत्तिमद्दृश्यमिथ्याबोधकत्वेन भवद्व्याख्यानस्य वैयर्थ्यापत्तेः। गोबलीवर्दन्यायेन द्वितीयभागोऽनादिमात्रपर इति चेत्, सत्यम्; संकोचस्यागतिकगतित्वात्। मद्व्याख्याने च कस्यचित्पदस्य वैयर्थ्यसङ्कोचादेरभावाद्। वाचेत्यत्र—

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपश्चैव हलन्तानां यथा वाचा निशा दिशा॥"

इति टांशसंभवेऽप्याकारांशस्य प्रयोजनाभावात्। मद्रीत्या तु तृतीयान्तत्वेनाधिकारार्थलाभेन प्रयोजनवत्त्वाद् वैयर्थ्याभावमात्रापेक्षया च तस्याभ्यर्हितत्वात्, बाधवशान्मात्रार्थान्तरभावेऽपि गौरवस्य दुर्वारितत्वात्, अभक्ष इत्यादिवन्मात्रार्थान्तर्भावकल्पकमानान्तरविरहाच्च। एतेन "यो विचारः स वाचारम्भणं वागवलम्बनमुच्यते परं नामधेयं नाममात्रं नार्थः" इति **कल्पतरूक्तमपि** निरस्तम्, उद्देश्यविधेययोर्वैपरीत्याच्चेति दिक्।

यत्तु **भामत्यामुक्तं** "शुक्तौ ज्ञातायां रूप्यं ज्ञातं भवति सा हि तस्य तत्त्वम्, एवं ब्रह्मज्ञानात्सर्वं ज्ञातं तद्धि तस्य तत्त्वमिति", तदपि चिन्त्यम्; शुक्तिज्ञानं हि इदन्त्वेन शुक्तित्वेन वा? नाद्यः, अधिष्ठानत्वप्रयोजकतादृशब्रह्मज्ञानस्येदानीमपि सत्त्वेन सर्वज्ञानापत्तेरिष्टापत्तौ चानुभवविरोधात्। नान्त्यः; तस्य बाधकत्वेनारोप्यज्ञानाननुगुणत्वात्। शुक्तित्वं धर्मितावच्छेदकीकृत्य रजतारोपोपपत्तेः[1]। ब्रह्म सर्वाधिष्ठानमित्यस्य मिथ्यामिथ्यात्वसिद्ध्यधीनत्वाच्च। प्रकृतमनुसरामः। यत्तु **विष्णुपुराणे**—

को भवानिति निर्देशो वाचारम्भो ह्यनर्थकः,
शिविका दारुसङ्घातो रचना स्थितिसंस्थितिः।
अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिविका त्वया,
एवं छत्रशलाकानां पृथग्भावे विमृश्यताम्।
क्व यातं च्छत्रमित्येष न्यायस्त्वयि, तथा मयि॥

इति वाक्ये वाचारम्भणपदमस्मद्व्याख्यान एव समञ्जसम्।

"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागा[1]दग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्"

१. रजतज्ञानानुपपत्तेः—क। १. ऽपगाद°—क।

इत्यादिवाक्येषु त्रिवृत्कृताग्न्यादिस्वरूपस्यात्रिवृत्कृततेजोवत्स्वरूपव्यतिरेकण विचारासहत्वमुक्तं वाचारम्भणमित्यादिशब्दैः, तदप्यस्मद्रीत्यैव संगच्छत इति, तच्चिन्त्यम्; सर्वत्र तच्छब्दानामेकार्थकत्वाभावेऽपि दोषाभावात्, भवद्व्याख्यातार्थस्यापि तत्रानुपपत्तेश्च वाचारम्भणशब्दमात्रेणैव नैरर्थक्यलाभे निरर्थकपदस्य निरर्थकत्वापत्तेः ।

न च तत्तात्पर्यस्फुटीकरणार्थमेव तदिति वाच्यम्; तथापि त्वद्रीत्या भवत्पदार्थस्यैव तव मिथ्यात्वस्य वाच्यतया निर्देशस्य तत्प्रतिपादनानर्हत्वात् निर्देशमिथ्यात्वं प्रतिज्ञाय शिविकादेर्मिथ्यात्वप्रतिपादनस्याभुक्तवान्तत्वापत्तेश्च । किञ्चानर्थकपदे तत्पुरुषो बहुव्रीहिर्वा, नाद्यः; कशब्दस्याधिकत्वापत्तेः । नान्त्यः, तदर्थस्येव मिथ्यात्वप्रतिपादनापत्त्या युक्तनिर्देशस्य तदसिद्धेः । ततश्च वाचारम्भणपदतात्पर्यप्रकाशनार्थत्वस्य भङ्गप्रसङ्गात् यथास्थानञ्च विस्तरस्य वक्ष्यमाणत्वात् ।

वाचारम्भणश्रुत्यर्थः ॥ अपि च "एकमेवाद्वितीयम्" इति श्रुतेः कथं तत्र तात्पर्यम् । ईश्वराख्यं ब्रह्मैकमेव न द्वितीयमित्यर्थकत्वेन **वर्द्धमानोपाध्यायैः** व्याख्यानात् । यत्त्वेकपदेन सजातीयजीवादिभेदनिषेधः तस्य स्वान्यशून्यत्वरूपकैवल्यार्थकत्वेऽपि भेदनिषेधवाक्यान्तरोपादानाद् गोबलीवर्दन्यायेन स्वान्येत्यस्य जीवेश्वरादिरूपस्वान्यपरत्वावधारणादेवकारस्यापि प्रकृते पृथिव्यादिस्वान्यतादात्म्यशून्यबोधकत्वेन विशेषणीभूतस्वगतभेदनिषेधबोधकत्वम् । अद्वितीयपदे तु तत्पुरुषोपगमे द्वितीयभिन्नत्वेन बोधः स्यात्, स चायोग्यः किञ्चिदपेक्षद्वितीयपदस्य तत्रापि सत्त्वात् । तेन न विद्यते द्वितीयं यत्रेति बहुव्रीहिरेवेति द्वितीयपदस्य विजातीयद्वितीयपरतया विजातीयद्वितीयत्वावच्छिन्नप्रतियोगिताकनिषेधेऽर्थात्तादृशद्वितीयस्य भेदनिषेधः । तदुक्तम्—

"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।
वृक्षान्तरात्सजातीयो विजातीयश्शिलादितः ॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।
एवावधारणाद्वैतप्रतिषेधैस्त्रिभिः क्रमाद् ॥" इति ।

द्वितीयपदस्य सजातीयद्वितीयपरत्वे त्वद्वितीयपदस्यैव सत्सजातीयभेदप्रतिषेधकत्वम्, इतरद्भेदद्वयं तु एकपदैवकारयोरेव प्रतिषेध्यम् । यद्वा द्वितीयपदस्यैव भेदत्रयनिषेधकत्वं भेदभेद्य (?) मात्रस्य द्वितीयत्वात्तेनैव दृश्यमात्रस्य निषेधसंभवादेकादिपदद्वयस ङ्कोचश ङ्कानिरासायेति ।

अत्रेदं वक्तव्यम्—भेदत्रयमेव कुतो निर्णीतं सजातीयविजातीयभेदवत् तद्गतधर्मप्रतियोगिभेदान्तराणामपि संभवात्। अथ तद्भेदो भेदत्रय एव कथञ्चिदन्तर्भवति चेत्तर्हि भेदत्रये कः पक्षपातः। भेदनिषेध इत्येवोच्यताम्, अहो पदत्रयसार्थक्याय भेदत्रयमेवोद्भावयतः सत्यमेव मायावादित्वं "सदेव सोम्येदमग्र आसीद्" इत्येतदर्थमेव[1] भेदान्तरं कुतो न कल्पयेः। किञ्च एवकारेण भेदनिषेधो वक्तुमशक्यः। समभिव्याहृतयत्पदार्थस्यैवकारार्थैकदेशेऽन्योन्याभावे प्रतियोगितयान्वयस्तदन्यपदार्थ एव तत्तादात्म्यादिव्यवच्छेदस्यान्वय इति नियमाद् ब्रह्मण एव भेदे प्रतियोगितया व्यवच्छेदे विशेष्यतया चान्वयासम्भवात्। एकशब्दस्य समभिव्याहृतैवकारस्य ब्रह्मैवेत्यन्वयकल्पने गौरवात्। सदेवेत्यत्र सच्छब्दोत्तरमेवकारान्तरस्य श्रूयमाणत्वाच्च।

किञ्च स्वान्यशून्यं ब्रह्मेत्युक्त्वा कथं तद्भेदनिषेधः? न च विशेषणेऽपि निषेधान्वयादिति वाच्यम्; विशेष्यबाध एव तथात्वात्। सविशेषणे हीति न्यायस्य बाधघटितत्वात्। एवं स्वभेदनिषेधस्य स्वस्मिन् सिद्धतया तद्वैयर्थ्यं तद्बोधनेऽप्यस्मत्पक्षाक्षतिश्च। जीवादेः ब्रह्मानाश्रितत्वलाभेऽस्माकमेवेष्टसिद्धिश्च। ब्रह्मप्रतियोगिकभेदवत्त्वेनोपस्थितानां ब्रह्मनिष्ठभेदाप्रतियोगित्वबोधस्य बाधितत्वाच्च। ब्रह्मनिष्ठभेदप्रतियोगित्वस्यापि पूर्वज्ञानेन विषयीकृतत्वात्, तत्प्रतियोगिकभेदवतस्तन्निष्ठभेदप्रतियोगित्वनियमात्।

न च तत्प्रत्ययस्य व्यावहारिकभेदविषयकत्वात् पारमार्थिकभेदनिषेधधीविरोधित्वं नेति वाच्यम्; तात्त्विकत्वातिरिक्तव्यावहारिकत्वस्याद्याप्यसिद्धत्वात्। भेदप्रत्ययस्य व्यावहारिकभेदविषयकत्वे सिद्धे श्रुत्या पारमार्थिकतदभावबोधनं तत्सत्त्वे च भेदप्रत्ययस्य व्यावहारिकभेदविषयक[2]त्वमित्यन्योन्याश्रयात् पारमार्थिकभेदस्य त्वन्मतेऽप्रसिद्धतया तदभावो बोध्यत इति वक्तुमशक्यत्वात्। न च पारमार्थिकत्वेन[2] व्यधिकरणधर्मेणावच्छिन्नप्रतियोगिक एव भेदनिषेधो बोध्यत इति वाच्यम्; पारमार्थिकत्वमुक्तप्रतियोगिताव्यधिकरणधर्म इत्यस्यानीदानीमसिद्धत्वात्। अत एव भेदे पारमार्थिकत्वनिषेधोऽप्यनाशङ्क्यः। शब्दादनुपस्थितस्य पारमार्थिकत्वस्य शाब्दे निषेधप्रतियोगितया चान्वयबोधासम्भवात्तादृशबोधत्वस्यैकादिपदज्ञानजन्यतावच्छेदकतायाः क्वाप्यक्लृप्तत्वात्।

वस्तुतस्तु एकपदेनैवेष्टसिद्धौ पदान्तरवैयर्थ्यापादकं त्वदुक्तं व्याख्यानं न युक्तम्, गोबलीवर्दन्यायेन संकोचो ह्यगतिकगतिः, सङ्कोचस्याबाधविशेष-

१. °मपि—क। २–२. नास्ति—क।

रूपत्वात् सर्वेषामेकादिपदानां पदान्तरवैयर्थ्यानापादकव्याख्यानस्यैव युक्तत्वात्। "एके मुख्यान्यकेवलाः" इत्यमरोक्तेरेकपदस्य मुख्यार्थकत्वात्। विशेषणासङ्गतैवकारस्य [1]अयोगव्यवच्छेदपरतया मुख्यत्वाव्यभिचारित्वलाभः। विशेष्यतावच्छेदकस्यैकव्यक्तिमात्रवृत्तित्वेऽपि क्षतिविरहात्। न हि विशेषणसंगतैवकारस्य[1] विशेष्यतावच्छेदकावच्छेदेन विशेषणायोगव्यवच्छेदबोधकत्वे विशेष्यतावच्छेदकविशिष्टव्यक्तीनां बाहुल्यमपेक्षितम्। गोत्वं गोवृत्त्येवेत्यादौ तदभावात्। मुख्यत्वञ्च ज्ञानादिमत्त्वेन, तच्च जीवसाधारणमित्येवकारः। जीवानाञ्च सुषुप्तिप्रलयादौ ज्ञानव्यभिचारः। एवञ्चार्थाज्ज्ञानस्य नित्यत्वसिद्धिः। अद्वितीयमसहायमदृष्टपरमाण्वाद्यपेक्षायामपि तदन्वयव्यतिरेकाननुविधायिज्ञानादिमत्त्वात्। "असिद्वितीयोऽनुससार पाण्डवम्" इत्यत्र द्वितीयपदं सहायार्थकमिति **महाभाष्यदर्शनात्**, अव्युत्पन्नमेवेति **कैयटेन** व्याख्यानाच्च। अत एव "एकमेवाद्वितीयम्" इत्यादीनां यथाश्रुतार्थत्वं नास्तीत्यभिप्रायेण "तथापि विप्रतिषिद्धार्था भवन्ति। एक एव रुद्रोऽवतस्थे न द्वितीयः" इति **निरुक्तकारैरुक्तम्**। "ब्रह्मैवैकं निर्गुणं निर्विकारम्" इत्युक्त्वा "एको रुद्रो न द्वितीयोऽवतस्थे" इति **काशीखण्डे** उक्तत्वाच्च तयोस्समानार्थकत्वात्। "एक एवाद्वितीयो भगवांस्तत्सदृशः परो नास्ति" इति श्रुत्यन्तर एवंवकारादिपदानां तात्पर्यस्य व्याख्यानाच्च। अन्यथा तत्सादृश्यस्य निषेधप्रतियोगितावच्छेदकत्वेनाभिधानवैयर्थ्यापत्तेः। अत एव **छान्दोग्ये राणायनीयाः** पठन्ति—"ब्रह्मज्येष्ठा वीर्याणि सम्भृतानि ब्रह्माग्नेज्येष्ठं दिवमाततान ब्रह्म भूतानां प्रथमं तु यज्ञे तेनार्हति ब्रह्मणस्पर्धितव्यः" इति। वीर्याणि सृष्ट्यादिरूपाणि, अनन्यसाधारणतया तेषां पराक्रमत्वोक्तिः। ब्रह्मैव ज्येष्ठं कारणं येषां तादृशानि संवृतानि सम्पन्नानि ज्येष्ठं नित्यं दिवं ज्ञानम्, दीव्यतेर्भावे घञर्थे कः। आततानेत्याश्रयत्वपरम्, भूतपदं जन्यमात्रोपलक्षणं भूधातोरुत्पत्त्यर्थकत्वस्यापि स्वीकारात्। घटादावपीश्वरस्य कर्तृ दर्शनार्थं वेदम्। तस्माद् ब्रह्मसदृशं किमपि नास्तीति चतुर्थचरणस्यार्थः। अत एव शाखान्तरे मन्त्रः। "न तस्य कार्यं कारणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" इति। अत एव च "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इति गीतावाक्यव्याख्याने "नान्यो भगवता वासुदेवात्परोऽस्ति, अतः स एव नो गतिः" इत्यादि **भगवत्पादैरुक्तम्**। अन्यथा पौनरुक्त्यापत्तेः। अत एव "सत्यमद्धा नकिरन्यस्त्वावानिति" **ऋङ्मन्त्रेऽपि** तत्सदृशोऽन्यो नास्तीति स्पष्टमुक्तम्। अत एव **सनत्सुजातवाक्यम्**—

१—१. नास्ति—क।

न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्।
मनीषयाथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति ॥

भगवद्गीतासु—

"पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः" ॥ इति।

किञ्च "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यत्रेदमिति स्वप्रत्यक्षविषयस्य ब्रह्मणः सदित्यनेन निर्देशः।

न च त्वन्मते सत्त्वस्य साधारण्यात्कथं सत्पदेन ब्रह्मैव ग्राह्यमिति वाच्यम्; "कथन्नु भगवः स आदेशो भवति" इति तस्यैव श्वेतकेतुना पृष्टत्वात्, अग्रे प्रलयकाल इदं सर्वमासीदित्यन्वयस्य स्पष्टत्वात्। "असदेवेदम्" इत्यादिनासत्त्वेन कारणस्यैव कथयिष्यमाणत्वेन सिद्धान्तेऽपि सत्त्वेन तस्यैव कथनस्य युक्तत्वात्। तत्र त्वन्मतेऽप्यन्यसत्त्वनिषेधो दुर्वचः।

जीवो ब्रह्म विशुद्धा चिद्विभागश्च तयोर्द्वयोः।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥

इति भवदभ्युपगमात्। मन्मते त्वाकाशादीनां नित्यानां तदा सत्त्वस्वीकारात्। अतश्च जन्यद्रव्यसत्त्वमेवैवकारव्यावर्त्यम्। अत एव "आत्मा वा इदमग्र आसीन्नान्यत्किञ्चन मिषदिति" **श्रुत्यन्तरे** एवकारार्थप्रदर्शनपरोत्तरवाक्ये मिषदिति "नाशप्रतियोगिरूपव्यावृत्तिप्रतियोगिदर्शनं मिषदित्यस्याप्यासीद्" इति व्याख्यानं तु **भाष्यादिकृतं** चिन्त्यम्; प्रमाणाभावेऽपि स्वपक्षवासनामात्रविजृम्भितत्वात्। द्वितीयस्यासीदित्यस्य प्रयोजनाभावाच्च।

यत्त्वग्रेऽव्याकृतनामरूपावस्थायामिदं सदन्यत्वरूपेण नासीदिति "सदेवेदमग्र आसीद्" इत्यस्यार्थः, अत एव प्रागुत्पत्तेः कारणात्मनैव कार्यस्य सत्त्वम्। "सदेवेदमग्र आसीद्" इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यादित्यादि **भाष्यादावुक्तम्**। न चैवं सदन्यत्वेनासत्त्वोक्तावपि सदभिन्नत्वेन सत्त्वं स्यादेवेति वाच्यम्; उक्तश्रुत्या सदन्यत्वेनैव रूपेण मिथ्यात्वबोधः। सदभिन्नत्वरूपेण मिथ्यात्वबोधस्तु श्रुत्यन्तरेणानुमानादिना च भविष्यति। दृश्यमात्रस्य केनचिद्रूपेण मिथ्यात्वस्योक्तश्रुत्या सिद्ध्यैवास्माकं कृतार्थत्वादिति, तच्चिन्त्यम्; सदन्यमात्रेऽग्रसत्त्वाभावस्य जीवादिसत्त्वेन बोधयितुमशक्यत्वात्तेषां सदन्यत्वं नेत्युक्तौ चाद्वैतस्य सुतरामेव व्याघातात्। न च कार्यस्यैव सदन्यस्याग्रकालासत्त्वं बोध्यत इति वाच्यम्; अविद्योच्छेदजन्यो-

च्छेदप्रतियोगित्वरूपस्याविद्याकार्यत्वस्यानादिष्वपि भवताभ्युपगमात्, कार्यपदस्यात्राभावात्, दृश्यमात्रेऽपि मिथ्यात्वासिद्धिप्रसङ्गाच्च। वस्तुतः कार्यमात्रेऽग्रकालासत्त्वस्य प्रतिपत्तावपि न मिथ्यात्वसिद्धिः। ध्वंसप्रागभावकाले प्रतियोग्यसत्त्वस्य मयाप्यभ्युपगमात्। प्रतियोगिकालावच्छेदेन निरवच्छिन्नविशेषणतया वा स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वेन तस्यैतावताप्यनिष्पत्तेः।

यत्तूक्तमग्रकालीनासत्त्वं तत्कालीननिषेधप्रतियोगित्वं वा नोक्तशाब्दधीविषयः, किन्त्विदमभिन्नमग्रे यदासीत्तत्सदेकमेवाद्वितीयमित्युद्देश्यविधेयभावः। अग्रे सदनुवादेनाखण्डसद्वितीयादिविधानेनाग्रे सत्त्वेनानूद्यमानस्याखण्डसद्वितीयस्यैव विधेयत्वम्। तथा चावान्तरतात्पर्येणाद्वितीयादिपदैः सदन्यसामान्यमिथ्यात्वबोधः। न चैवमग्रकालावच्छेदेनैव सदन्यसामान्यनिषेधः स्यादिति वाच्यम्; यदग्र इदमभिन्नमासीदित्यत्रैव तदन्वयेऽद्वितीयादिपदबोध्ये सदन्यनिषेधेऽग्रकालानन्वयात्। न चैवमग्र आसीदिदमितिपदानां निषेधवैयर्थ्यम्, सदेकमेवाद्वितीयमित्यत एवाभिमतमिथ्यात्वसिद्धेरिति वाच्यम्; अग्रेऽसदेव कार्यस्य स्वरूपमिति शून्यवादनिषेधार्थत्वात्, सदेकमेवाद्वितीयमित्युक्तेर्घटादेः सत्त्वभ्रमवतां विरोधभ्रमनिरासार्थं तात्पर्याविषयस्याप्यग्रह इत्यादेरुक्तत्वात्। न चैवमप्यद्वितीयाभावस्य[1] कालिकव्याप्यवृत्तित्वालाभान्न मिथ्यात्वसिद्धिः। पूर्वोत्तरकालीनाभावसिद्ध्यैव तत्पर्यवसानादिति वाच्यम्; सद्रूपे प्रतीतस्य द्वितीयाभावस्य परिच्छेदकाकाङ्क्षायां सङ्कोचकमानाभावेन सर्वकालस्यैव परिच्छेदकत्वकल्पनात्, एवकारावृत्त्याद्वितीयाभाववदेवेत्यन्वये यत्र विशेष्यतावच्छेदकं तत्र विशेषणायोगव्यवच्छेद इति दैशिकव्यापकत्वधियः प्रकृतेर्विशेष्यतावच्छेदकविशिष्टव्यक्तेरेकमात्रताया वैयर्थ्यात्। यदा सद्रूपं तदासद्रूपं तदाद्वितीयाभाव इति कालिकव्याप्तिमाश्रित्य वा व्याप्यवृत्तित्वलाभादिति, तदपि चिन्त्यम्; आसीदित्यस्यानुवादवाक्यान्तर्भावेऽपि तदन्तर्भूतस्य सत्पदस्य विधेयसमर्पकवाक्यान्तर्भावस्य कल्पयितुमशक्यत्वात्। यत्तत्पदाध्याहारेण वाक्यद्वयकल्पनस्यापि निर्मूलत्वात्सङ्कोचकमानाभावेनेत्यस्य च प्रत्यक्षश्रुत्यादिरूपसत्त्वग्राह्यनेकप्रमाणसत्त्वेनायुक्तत्वात्। श्रुतावपि प्रवृत्तिप्रतिबन्धकानां तेषां कल्पनां प्रति सुतरां प्रतिबन्धकत्वात्। एवकारस्यावृत्तावपि मानाभावात्, कालिकव्यापकत्वज्ञानस्यैवकारशक्तिज्ञानकार्यतावच्छेदकत्वस्यावलृप्तत्वाच्च। विशेष्यतावच्छेदकस्यैकमात्रव्यक्तिकत्वेऽपि गोत्वं गोवृत्त्यैवेत्यादिवाक्यानां दैशिकव्यापकत्वधीजनकत्वाच्च। अन्यथैकसाध्यकैक-

१. द्वितीयाभावस्य—ख।

हेतुकानुमितीनां सकलसङ्गतानामुच्छेदात्पत्तेः। 'विशेष्यतावच्छेदकसामानाधिकरण्येनाविशेषणायोगव्यवच्छेदबोधकस्य यथोक्तैवकारस्य विशेष्यतावच्छेदकविशिष्टसामानाधिकरण्येन तद्बोधकत्वानुपपत्तेश्च'। शङ्खो घटत्ववानेवेत्यादेरपि योग्यत्वापत्तेश्च। यदा शङ्खस्तदा घटत्वायोगव्यवच्छेदस्याबाधितत्वात्। शुद्धब्रह्मणस्तन्मते कालासम्बन्धित्वात्, उपहिते च दृश्याभावस्य तैरप्यनङ्गीकारात्। यदपि "सदेवेदमग्र आसीद्" इति **ऐतरेयवाक्यस्य भाष्यादौ** व्याख्यानादिदमिति सामानाधिकरण्यं बाधायाम्, अग्र आसीदिति च न विवक्षितम्, अतो न द्वितीयाभावे कालसंसर्गधीस्तथा चाखण्डब्रह्मैव सदेवेत्यादेरर्थ इति, तदपि चिन्त्यम्; स्वोक्तार्थानुरोधेनाविवक्षायामतिप्रसङ्गात्, अद्वितीयादिपदं न विवक्षितमित्यादेर्मयापि वक्तुं शक्यत्वात्। इदमिति जगत्परम्, अस्य बाधायां सामानाधिकरण्यमपेक्ष्य सदित्यनेनाभेदान्वय इव लाघवाच्च, अद्वैतसिद्धेः पूर्वं क्वचिदप्रसिद्धत्वाच्च। प्रकृते तदसिद्धेश्च श्रुतौ शाब्दस्वारस्यं कुत्रार्थ इत्यस्यैव साम्प्रतं विचार्यमाणत्वात्। एतेनाद्वैतवाक्यस्य षड्विधतात्पर्यलिङ्गसहकृततया बलवत्त्वेन सृष्ट्यादिवाक्यानामाविद्यकद्वैतप्रतिपादकत्वम्। अद्वैतवाक्यानां मोक्षरूपफलोपयोगितया फलवत्सन्निधावफलं तदङ्गमिति न्यायेन द्वैतवाक्यानामद्वैतवाक्यशेषत्वादित्यादिकं परास्तम्। अद्वैतार्थकत्वस्यैव निरासेन मूलोच्छेदात् ब्रह्मसाक्षात्कारस्यैव फलवत्तयाद्वैतादेः कारणतावच्छेदकत्वे मानाभावादिति।

एकमेवाऽद्वितीयमिति श्रुत्यर्थः॥ निरुपाख्यस्य हेतुत्वमपाकर्त्तुमुपन्यस्यति—तद्धैक आहुरिति असदेवेति। अभावादेव भावोत्पत्तिः। तथा च तन्मतानुवादकं **न्यायसूत्रम्**—"अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" इति। अनुपमृद्य कारणविनाशं विना कार्यस्य प्रादुर्भावो नास्ति। यतस्तस्मात्प्रादुर्भावाभावादिति यावत्। अत्र प्रादुर्भावस्याभावेऽन्वयं कृत्वा तस्य पञ्चम्यर्थे हेतुत्वान्वय इति सम्प्रदायः।

नन्वत्र प्रादुर्भावपदोत्तरपञ्चम्यर्थे नञर्थाभावस्य नान्वयः, किन्तु नञ्पदोत्तरपञ्चम्यर्थ एव। न च तदुत्तरं पञ्चमीश्रवणापत्तिः। "अव्ययादाप्सुपः" इतिलोपसम्भवात्। न च प्रादुर्भावपदोत्तरपञ्चम्या नान्वयापत्तिः, प्रतियोगित्वस्य तदर्थत्वात्, मैवम्; प्रतियोगित्वस्य संसर्गतयैव लाभात्। अभेदातिरिक्तसम्बन्धेन नामार्थप्रकारतानिरूपितविशेष्यतयान्वयबोधे विशेष्यतया विभक्त्यर्थोपस्थितिः कारणमित्यत्र निपातातिरिक्तत्वेन नाम्नोऽवश्यं विशेष्य-

१–१. नास्ति—क।

त्वादन्यथा घटो नेत्यादावनुपपत्तेः। न च साधुत्वार्थकत्वेन निर्वाहः, अव्ययोत्तरविभक्तेरेव तथात्वौचित्यात्। प्रथमैकवचनमेवाव्ययेभ्य उत्पद्यत इति पक्षस्यैव **महाभाष्यसम्मतत्वेन** नञुत्तरपञ्चम्युत्पत्तौ प्रमाणाभावाच्च। एतेन[१] "तेषां मोहःपापीयान्, नामूढस्येतरोत्पत्तेः" इति सूत्रमपि व्याख्यातमित्यादिकं विभावनीयम्।

न चोपमृद्य प्रादुर्भवतीति प्रयोगानुपपत्तिः, अतीतानागतयोरपि कारकशब्दप्रयोगाद्यथोपमर्दोपमर्दकयोरानन्तर्यं तथैवानयोरपीत्यस्य च गौणतानिमित्तत्वादिति **शून्यवादिनः**। तद्दूषयति–कुतो न्विति। युक्तिमाह–कथमिति। अयं भावः–अनूपचारेण प्रयोगसमर्थनमात्रं न त्वभावात्कार्योत्पत्तिसम्भवः। यथा भविष्यन्नङ्कुरः सम्प्रत्यसन्न बीजमुपमृद्नाति एवं बीजाभावोऽप्यसत् कथमङ्कुरं कुर्यात्।

न च बीजविनाशाङ्कुरोत्पादयोः पौर्वापर्यादस्य बीजविनाशे कार्यत्वमेवेति वाच्यम्; अनन्यप्रयुक्तस्यैव पौर्वापर्यस्य कारणत्वगमकत्वात्। बीजाविनाशस्य पूर्वत्वं तु व्यूहान्तरानन्तर्यप्रयुक्तमिति, तदगमकत्वात्। तथा च **न्यायसूत्रम्**—"व्याहतव्यूहानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद्द्रव्यनिष्पत्तिर्नाभावाद्" इति। न च व्यूहान्तरकार्योऽङ्कुरो विनापि पूर्वव्यूहविनाशं स्यादिति वाच्यम्; तादृशव्यूहस्य बीजविनाशानन्तरमेव सम्पत्तेः। न च बीजावयवव्यूहान्तरस्याङ्कुरोत्पत्तिहेतुत्वेऽङ्कुरार्थिनां बीजोपादानानुपपत्तिरिति वाच्यम्; बीजमनुपादाय तादृशबीजावयवव्यूहस्योपादातुमशक्यत्वात्। शून्यतैव निवर्तत इति त्वयुक्तम्, सर्वशून्यत्वे ख्यातुरभावात्, नीलादिविशेषप्रतिभानानुपपत्तेश्च। यदि नीलाद्यशून्यतया, वृथा तर्हि विवर्त्तरूपकल्पनाश्रयः। अथ तेऽप्यसन्त एवेति चेत्, कोऽर्थः? यदि शून्या एवेति चेत्तर्हि स एव व्यवहारविशेषविलोपप्रसङ्गः। अथ कालदेशविशेषनियतस्तथाप्यसत्त्वव्याघातः। येन रूपेण विवर्त्तते ततोऽन्यरूपेणासन्त इतिचेत्तेन रूपेण सत्त्वापत्तेः। तद्रूपेणैवासन्त, इतिचेत्; न, अन्येन सत्त्वापत्तेः। सर्वथैवासन्त इतिचेत्, न; उक्ताविशेषविलयापत्तेः। अतः शून्यतोपादानस्तद्विवर्त्तो वा न विश्वप्रपञ्च इति सिद्धम्। तस्मात्पूर्वोक्तमेव साधीय इत्याह—सत्त्वे वेति। तु शब्दः पूर्वव्यवच्छेदार्थः।

ननु श्रुत्युक्तस्य कथं पूर्वपक्षत्वम्, युक्तिशास्त्र एव तथात्वात्, श्रुतेश्चाप्तोक्तत्वेन नित्यत्वेन वा सामान्यतः प्रामाण्यनिश्चयादितिचेत्, न; **अत्रोदयना-**

१. अत एव—ख।

**चार्याः**—"यत्र श्रुतौ ग्रन्थान्तररीत्या युक्तितदाभासविवेकेनार्थप्रतिपादनं तत्र पूर्वपक्षादिकमावश्यकम्। अन्यथा कथन्ता ग्रन्थस्य सर्वथैवाप्रसङ्गात्। तेन यथा लोके पूर्वपक्षार्थो हीयते सिद्धान्तार्थश्चोपादीयत इति हानोपादानयोरेव तयोस्तात्पर्यं तथा वेदेऽपि" इति **तात्पर्यपरिशुद्धावाहुः**।

यत्तु **वेदान्तिनः** "सदेव सोम्येदमग्र आसीद्" इति पूर्ववाक्येन वेदान्तिमते यथाधीर्जनिता तथा तदभावधीः "असदेवेदमग्र आसीद्" इत्यनेन दूषणार्थमनूद्यते, इति। तन्न; नञः समस्तत्वेन सदेवेदमग्रे नासीदिति प्रतिषेधासम्भवात्। यदप्युक्तम्—'अमानोना प्रतिषेधवचनात्' इति शाब्दिकोक्तेः "अकारः सम्बोधनाधिक्षेपनिषेधेषु" इति व्याख्यानाच्च स्वतन्त्र एवायमकारो न तु तद्विकारः। अतः "समासानन्तर्गतस्य क्रिययान्वये प्रतिषेधोपपत्तिस्तदभावो नञा प्रतिपाद्यते" इति ग्रन्थस्यात्रैव तात्पर्यमिति; तदप्यसत्; असमस्तसमस्तभेदेन नञो द्वैविध्यमित्यस्यैव तात्पर्यादकारस्य स्वातन्त्र्येण निषेधार्थकत्वे प्रमाणाभावात्। उक्तञ्च **मणिकारैः** "अमानोना इत्यत्र अपदमेव निषेधवाचकम्, समासवाक्यभेदेन नञो द्वैविध्याद्वा तथाभिधानम्" इति। अन्यथा—

आनन्दसिन्धुरतिचापलशालि चित्तं,
सन्दाननैकमदनक्षणमप्यमुक्ता।
या सर्वदैव भवता तदुदन्तचिन्ता,
भ्रान्तिं तनोति तव सम्प्रति धिग्धिगस्मान्॥

इत्यत्र मुक्ता नेति मुक्तत्वं निषेध्यं युक्तम्, तदभावाद् विधेयाविमर्श इति वदद्भिः **काव्यप्रकाशादिभिर्विरोधापत्तेः**। अत एव "यज्ञकर्मण्यजपन्यूङ्खसामसु" सूत्रे जपादिपर्युदासान्मन्त्रेष्वैकश्रुतिविधानम्, अन्यथा प्रसज्यप्रतिषेधत्वेऽमन्त्र ऊहादावप्येकश्रुतिः स्यात्। नचेष्टापत्तिः, "इन्द्रशत्रुर्विवर्धस्व" इत्यत्रेन्द्रशत्रुशब्दस्यानुकार्यस्योहितस्यापि तदापत्तौ तत्पुरुषप्रयुक्तान्तोदात्ते वक्तव्ये प्रमादादाद्युदात्तोक्त्या बहुव्रीह्यर्थलाभादिन्द्र एव वृत्रस्य हिंसकः सम्पन्न इत्यर्थक**महाभाष्यादिग्रन्थ**विरोधात् "यथेन्द्रशत्रुः स्वरतोऽपराधाद्" इति श्रुतिविरोधाच्च। अत एवात्र प्रसज्यप्रतिषेधवादिभिरपि समर्थसमासमाश्रित्याप्यगत्या निषेधो व्याख्येयः, इत्युक्तम्। अत एव **अद्वैतसिद्धावपि** ब्रह्मणो निर्गुणत्वोपपत्तौ "असद्वा इदम्" इत्यत्र नञ्सत्त्वेऽपि नामपदसमभिव्याहृतत्वेन निषेधकत्वाभावादित्युक्तम्। अन्यथा व्यस्तत्वेनैवोपपत्तिप्रसङ्गात्। किञ्चैवं "न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः" इति सूत्रेण चतुरादिभिन्नशब्दस्य कृतनञ्समासस्य ष्यञ्प्रत्य-

यादिनिषेधेऽप्यकारेण समासं कृत्वा चतुरादीनामपि भावे च्व्यत्रादीनामापत्तिः, ततश्च तत्पर्युदासवैयर्थ्यं स्यात्। अपि चैवं समासे नञो नकारलोपविधानमेव व्यर्थं स्यात्। अकारेणैव समासे अघट इत्यादिसिद्धेः। नचाजादावुत्तरपदे नुडागमविधानार्थं तदिति वाच्यम्; अकारादेव तद्विधानसंभवात्। एवं नकारस्याप्यननुबन्धस्य पृथगाम्नानं व्यर्थं स्यात्। अघटोऽनश्व इत्यादीनामुक्तरीत्याकारेणैव सिद्धेः। नैकेत्यादेश्च नञैव सिद्धेः, अजाद्युत्तरपदे केवलाकारश्रवणस्य कदाचिदपेक्षितत्वेऽपि "आद्वा नुडचि" इति न्यासेनोपपत्तेः। "न भ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या" इत्यत्र नाकः सञ्ज्ञायामिति निपातसम्भवात्। किञ्च "सुट् स्त्रीपुंसयोः" इतिवक्तव्ये "सुडनपुंसकस्य" इतिवचनसामर्थ्येऽपि निषेधार्थकनञ्समासानां [1]साधुत्वार्थज्ञापनमिति शाब्दिकैरुक्तम्, भवद्रीत्या तु तत्राप्यकारस्य भिन्नपदत्वेनैव प्रसज्यप्रतिषेधसंभवात् समास एव प्रमाणाभावेन ज्ञापनं दूरापास्तं स्यात्[1]। अदण्डेत्यादिबहुव्रीहौ पूर्वपदप्रकृतिस्वरेणोभयथाप्याद्युदात्तत्वात्। तत्पुरुषादावपि स्वरविशेषस्याकारपुरस्कारेणैव विधातुं शक्यत्वात्। तस्मात्समासव्यतिरेकेणाकारमात्रस्य निषेधार्थे न प्रयोगः। समासे च नञो न प्रयोग इत्यत्र तात्पर्य्यम्। "तृज्वत्क्रोष्टुः" इत्यस्य विभक्तिविशेषावच्छेदेन तृजन्ततुन्नन्तक्रोष्टृक्रोष्टुशब्दप्रयोगनियमार्थत्ववदिति सर्वैकवाक्यतया कल्प्यम्। यत्तु अकस्मादेव भवतीति वाक्यस्याभवननिषेधार्थकत्वपक्षं व्याख्याय समस्यमानेनापि नञा भवतीत्यस्यान्वयादसामर्थ्येऽप्यसूर्यंपश्या इतिवत्समासः, अशब्दस्य वायं समासं विना प्रयोगः "अमानोनाप्रतिषेधवचनाः" इति कोशादिति **कुसुमाञ्जलिवर्द्धमाने** उक्तम्। तत्रापि प्रथम एव तात्पर्यम्, द्वितीये बाधकस्योक्तत्वात्। एतेनायोगव्यवच्छेदार्थेऽस्यात्यन्ताभावस्य योगः प्रतियोगित्वरूप इत्यादि साध्याभाववदवृत्तित्वमित्यत्रापदार्थाभावस्य साध्याभाववदर्थविशेष्यत्वं चेत्यादिकञ्च यथा श्रुतं चिन्त्यम्, इत्यादिकं बह्वनुसन्धेयम्।

सृष्टिप्रकारमाह—तदैक्षतेति। तद् ब्रह्म ऐक्षत इच्छां चकार। इच्छास्वरूपमाह—बहु स्यामिति। बहुत्वविशिष्टः स्यामित्यर्थः। ननु नित्यद्रव्यवृत्तिबहुत्वमादाय प्रलयकालेऽपीश्वरस्य बहुत्वाश्रयत्वमस्त्येवेत्यत आह—प्रजायेयेति। उत्पादितकार्यद्रव्यस्याजन्यद्रव्यवृत्तिबहुत्वाश्रयत्वप्रकारकेच्छाकृतेति तात्पर्यम्। उत्पन्नः स्यामित्यस्य बाधितत्वाद्देवमनुष्यादि-

१–१. साधुत्वापादानं दूरापास्तं स्यात्—क।

प्रजारूपः स्यामिति [1]परैरपि व्याख्यानात्, जाया मे स्यादथ प्रजायेयेत्यत्र प्रजोत्पत्तीच्छापरत्वेन व्याख्यातत्वाच्च। इच्छापरस्येच्छापरत्वं तु बहुस्यामितीच्छा[1]र्थकलिङनुरोधात्। परैरप्युक्तं "न च सकृदीक्षणेनैव निर्वाहे पुनरीक्षणं व्यर्थमिति वाच्यम्; नानाकार्याणां क्रमेण सृष्टौ तादृशेक्षणानां लोके दृष्टत्वात्। आकाशादिपरिणामकाले पूर्वजातेक्षणपरिणामस्य मायायामभावेन पुनरीक्षणं विना तज्जन्यकार्यासंभवादाकाशतादात्म्यतद्विशिष्टब्रह्मरूपकार्यत्रयमादाय पूर्वेक्षणीयानां सिद्धत्वाच्च" इति। इयांस्तु विशेषः तेषामीक्षणं मायावृत्तिविशेषः, अस्माकं त्वीश्वरगुणो नित्यः, स च तत्सहकारिसमवधानकाले तत्तदिच्छात्वेन व्यवह्रियते। अन्यथा सर्वदैव सृष्टिप्रलययौगपद्यापत्त्या शून्यतापत्तेः। अत एव **मिश्राः** "तत्तत्सामग्रीसाहित्यमेव हि तदिच्छायाः सिसृक्षादिवत् सिषाधयिषात्वम्" इति। अत एव तदिच्छाया अतीतत्वादन्वयोऽपि तादृशवैशिष्ट्येन तस्या अतीतत्वात्। तदुक्तं **किरणावल्याम्**—"यद्यपि भगवत इच्छा सर्वदा वर्तमानत्वादेकैव, तथाप्युपाधिभेदात्संजिहीर्ष्येत्यादिकमुच्यते। उत्पत्तिरप्युपाधिरुत्पत्तिरेवेति संहारसृष्टिकारणसमवधानमेवेत्यर्थः" इति **उपायकृतः**।

यत्तु वेदान्तिनः "प्रजायेयेत्यनन्तरं तदाकाशमसृजत्तदा तदाकाशमैच्छत बहुस्यां प्रजायेत्यादि शेषः, वियदधिकरणन्यायात्। तत्र हि आकाशस्य नोत्पत्तिरिति पूर्वतां पक्षयित्वा "एतस्माद्वा आत्मन आकाशः सम्भूतः" इति श्रुत्या तस्याप्युत्पत्तिरिति सिद्धान्तितम्" इति, तत्र वक्ष्यामः; यदप्युक्तमाकाशात्मकं सद्रूपं ब्रह्मैक्षदित्यर्थः एवमग्रेऽपि। ता आप इति तु "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इतिवत्तत्पदस्य विधेयलिङ्गग्राहित्वादिति। दृष्टान्ते हि शैत्यानुवादेन जलप्रकृतित्वस्य विधेयत्वात्तत्पदेन स्त्रीलिङ्गोपादानम्, प्रकृते तु ता आप ऐक्षतेतीक्षणस्यैव विधेयत्वादपां विधेयत्वाभावात्कथं तल्लिङ्गग्रहः स्यात्। यत्तु **वाचस्पत्यादौ** "यदपि ब्रह्मस्वभावचैतन्यं न क्रिया, तथापि तस्यानवच्छिन्नस्य तद्विषयोपधानभेदावच्छेदेन कल्पितभेदस्यानित्यत्वं कार्यत्वं चोत्पद्यत इति सांव्यवहारिकमेव ज्ञातृत्वम्" इत्युक्तम्, तदपि न; न्यायमते ईश्वरधर्मस्येक्षणस्य मुख्यस्यैव सम्भवात्, तयोर्भेदस्य च व्यवस्थापितत्वात्।

यत्तु–नन्वीक्षणाकारणस्याविद्यादेरनादित्वाद्वस्तुगत्या यत्र क्षणे ईक्षणं जायते तत्पूर्वक्षणेष्वपीक्षणापत्तिरितिचेन्न; ईक्षणाश्रयस्य तत्पूर्ववर्तिनो

१–१. नास्ति—क।

वा मन्मतेक्षणस्य कस्यचिदप्रसिद्धेः। ईक्षणोत्पत्त्यनन्तरमेव क्षणादिव्यवहारात्। न चैवं स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपोत्पत्तिरीक्षणस्य कथमितिवाच्यम्; यदीयसमय-सम्बन्धत्वावच्छेदेन यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्ति तस्य तत्समयसम्बन्धरूपाया उत्पत्तेः सम्भवात्; महाप्रलयोत्पत्तिवत्। सामग्रीमत्क्षणोत्तरक्षणत्वं तु कार्यमात्रस्य न व्याप्यम्, किन्त्वीक्षणान्यस्यैव कार्यस्येति।

तदपि चिन्त्यम्; ईक्षणान्यत्वनिवेशे बीजाभावात्। अविद्यायास्तत्र हेतुत्वासम्भवाच्च। कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्वस्यैव कारणत्वात्। एवमीक्षणस्यापि द्वितीयक्षणे कार्यजनकत्वं न स्यात्। अथ कारणत्वादिकमतिरिक्तमेवेत्युद्भाव्यते तथापीक्षणकार्यस्यापीक्षणान्यकार्यत्वात् तदधिकरणक्षणस्य सामग्रीमत्क्षणोत्तरक्षणत्वं न स्यात्। ईक्षणतत्कार्यान्यकार्यस्य तद्व्याप्यमितिचेन्न; ईक्षणकार्यान्यकार्यस्य भवतामप्रसिद्धेः।

किञ्चैवमीक्षणान्तराधिकरणक्षणस्यापि सामग्रीमत्क्षणोत्तरक्षणत्वं न स्यात्। आद्ये क्षणान्यकार्यस्येतिचेन्न; आद्येक्षणस्याप्यप्रसिद्धेः। किञ्च कार्यत्वकारणत्वयो[१]रतिरिक्तत्वेऽपि सामग्रीपदार्थः प्रागभावेतरकादाचित्कयावत्कारणप्रागभावानधिकरणकार्यभावाधिकरणक्षणरूप एव। न च तदनुत्तरसमयस्य कार्याधिकरणत्वसम्भवः, अपि चेक्षणस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपक्षणिकत्वापत्तिः, तदुत्पत्तिसमयस्य क्षणत्वाभावात्। स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वं स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वं वा क्षणिकत्वमित्यत्र सुतरामेव तथात्वात्। अथोत्पत्तिसमयानन्तरक्षणद्वये तदवस्थानं तत्संमतम्, तृतीयक्षण एवेक्षणनाश इति चेत्; तर्हीक्षणस्य हेतुत्वे मानाभावात्। इतीक्षणान्तराणां वैयर्थ्यम्। एवं द्वितीयक्षणे तन्नाशोपगमपक्षेऽपि द्वितीयक्षणस्य वैयर्थ्यमेव।

नचाकाशमादाय पूर्वक्षणविषयस्य सिद्धत्वम्, इच्छाविषयत्वावच्छेदकरूपेण सिद्धेरेवेच्छाविरोधित्वात्। बहु स्यामित्यस्याकाशादिनानाकार्यात्मकः स्याम्, प्रजायेयेत्यस्य देवमनुष्यादिप्रजारूपः स्यामित्यर्थकत्वेन तैरेव व्याख्यातत्वात्। मया चेक्षणान्तराणामीश्वरेच्छाभिन्नपरत्वेन व्याख्येयत्वात्। एवमीक्षणोत्पत्त्यनन्तरक्षणसम्बन्धस्यापीक्षणोत्पत्तित्वापत्तिः, तदीयद्वितीयादिक्षणसम्बन्धत्वावच्छेदेनेक्षणाद्यसमयसम्बन्धानन्तरक्षणवृत्तिध्वंसप्रतियोगि-

१. किञ्चैवमीक्षणान्तराधिकरणत्वयो— क।

त्वाभावसत्त्वात्। न चोत्पत्तिसमयसंवन्धस्य द्वितीयक्षणे नाशान्नैवमिति वाच्यम्; तस्य मूलाविद्यारूपत्वेन भवदभिमततया नाशासंभवात्, तदुपाधेश्च क्षणस्य तदानीमनङ्गीकारात्, ईक्षणस्यापि तदा नाशाभावाच्च। घटादौ तु क्षणत्वेन प्रवेशविरहेऽपि वस्तुतो घटोत्पत्तिक्षणरूपसमयसम्बन्धस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वसत्त्वान्न द्वितीयक्षणसम्बन्धेऽतिव्याप्तिरिति वैषम्यम्। महाप्रलयेऽपि चरमध्वंसरूपकालोपाधित्वस्वीकारात्। तदनन्तरं च कालोपाधेः कस्यचिदनभ्युपगमात्। चरमध्वंसरूपतत्समयातिरिक्तसमयसंबन्धानभ्युपगमान्न दोषः।

अथ **साङ्ख्यपातञ्जलमते** क्षणिकाः सत्त्वादिपरिणामाः **नैयायिकवैशेषिकमते** च परमाणुक्रियाः प्रलये यथा स्वीक्रियन्ते एवमस्मन्मतेऽपि सूक्ष्मा अविद्यावृत्तयः सुषुप्ताविव प्रलयेऽपि स्वीक्रियन्ते। प्रलयकालीनेषु मूल[1]कारणगतास्थिरकार्येषु वादिनामविवादात्। एवं च प्रलयीयपूर्वहेतुकाविद्याचरमवृत्तिरेवेक्षणहेतुः, सैव च क्षणोपाधिरितिचेत्, सत्यम्; आस्तामप्रासङ्गिकमेतत्, प्रकृतमनुसरामः। अत्र वैशेषिकभाष्यम्—"ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्वात्मसमवेतलब्धवृत्त्यदृष्टवदात्मसंयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान्वायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति, तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान्सलिलनिधिः समुत्पन्नः पोप्लूयमानस्समुत्तिष्ठते। तदनन्तरं तस्मिन्नेव पार्थिवेभ्यः परमाणुभ्यस्तेनैव क्रमेणोत्पन्ना महापृथिवी संहतावतिष्ठते। ततस्तस्मिन्नेव महोदधौ तैजसेभ्यः परमाणुभ्यः द्व्यणुकादिक्रमेणोत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति। एवं समुत्पन्नेषु चतुर्ष्वपि महाभूतेषु महेश्वराभिध्यानमात्रात्तैजसेभ्यो द्व्यणुकेभ्यः पार्थिवाणुसहितेभ्यो महदण्डमारभ्यते। तस्मिन् चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे नियुङ्क्ते। स च महेश्वरेण विनियुक्तो ब्रह्मा निरतिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपभोगान् सुतान् प्रजापतिमनूदेवर्षिगणान् सर्वानपि ततो मुखबाहूरुपादेभ्यश्चतुरो वर्णानन्यानपि चोच्चावचानि भूतानि सृष्ट्वाशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति" इति। तदनुसारेण तत्तेजोऽसृजतेत्यस्मात्पूर्वं वायुसृष्टिर्बोध्या। परैरपि आकाशवायूत्पत्त्यनन्तरमेव तेजस उत्पत्त्यभ्युपगमात्। "एतस्माद्वा आत्मन आकाशः सम्भूतः आकाशाद्वायुर्वा-

१. पूर्व°—क।

योरग्निरग्नेरापोऽद्भ्यः पृथिवी" इति तैत्तिरीयश्रुत्योपसंहारेण मध्ये तादृशवाक्यकल्पनात्। [१]छान्दोग्ये हि तेजसः प्राथम्यं न श्रौतं किन्तु प्रथमश्रवणात्स्थानाख्यप्रमाणगम्यं वायोरग्निरिति श्रुत्यपेक्षया च तस्य दौर्बल्यम्। तेजःप्राथम्यस्य श्रौतत्वेऽपि सक्रमाया आकाशोत्पत्तेर्बोधापेक्षया तेजःप्राथम्यस्य धर्मस्यैव बाधौचित्यादित्यस्य तैर्निरूपितत्वात्[१]। अन्नपदश्चात्र पृथिवीपरम्, निरूपितं हि **ब्रह्ममीमांसायां** द्वितीय-तृतीये "ता अन्नमसृजन्त" इति। अद्भ्यः पृथिवीति श्रुत्योः पृथिव्या ओषधयः ओषधीभ्योऽन्नमिति श्रुत्या विरोधेऽन्नपदं व्रीहियवादिपरम् "यत्र क्वचिद्वर्षति तदेव भूयिष्ठमन्नं भवतीति" वाक्यशेषगतलिङ्गात्, न तु भूतप्रकरणात्पृथिवीपरम्, तस्य लिङ्गापेक्षया दौर्बल्यात्, इति पूर्वपक्षे सूत्रम्। पृथिव्यधिकाररूपशब्दान्तरेभ्य इत्यन्नपदं पृथिवीपरमेव, भूताधिकारात्। यत्कृष्णं यदन्नस्ये[२]ति तद्यो[३]गप्राथम्याभ्यां व्याप्तिलाभे कृष्णरूपवत्त्वावच्छेदेन पृथिवीत्वस्य विवक्षितत्वात्। व्रीह्यादिमात्रपरत्वं त्वनुपपन्नम्, तद्भिन्नघटादिरूपपृथिव्यामपि कृष्णरूपदर्शनात्। अद्भ्यः पृथिवी, तच्च अपां रसः, सा पृथिवीत्यभ्यासरूपाच्छब्दान्तराच्च लिङ्गस्य च पृथिवी साधारण्यात्, व्रीह्यादेरपि पृथिवीत्वात्। तथा च पृथिवीपरिग्रहेऽन्नश्रुतिलिङ्गयोर्नात्यन्तं बाधः[४]। तल्लभ्यार्थापरित्यागेन तादृशपृथिवीपरत्वात्। व्रीह्यादिमात्रपरिग्रहे तु पृथिवीलिङ्गप्रकरणस्थानानामत्यन्तं बाधः, पृथिव्यैकदेशस्य घटादेः परित्यागादितिपृथिव्येव प्रकृतेऽन्नपदार्थ इति।

अयं तु विशेषः। यदस्मन्मते वायुतेजोजलपृथिवीपदानि जन्यतत्पराणि, परमाणूनां नित्यत्वाभ्युपगमादिति। तथा हि पृथिवीत्वादिकं नित्यवृत्ति, द्रव्यसाक्षाद्विभाजकोपाधित्वादात्मत्ववत्। न चाप्रयोजकम्, आकाशत्वादिकमनित्यवृत्ति, उक्तहेतोरित्यादेरप्यापत्तेरितिवाच्यम्; आगमस्यानुकूलतर्कत्वात्। **मोक्षधर्मे** हि नारदासितसंवादे स्मर्यते—

येभ्यः सृजति भूतानि कालो भावप्रचोदितः।
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः॥
तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः।
एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम्॥
विद्धि नारद पञ्चैतान् शाश्वतानचलान् ध्रुवान्।
महतस्तेजसोराशीन् कालषष्ठान् स्वभावतः॥

१–१. नास्ति–क। २. यदन्नस्ये–क। ३. यद्योगं–क। ४. नात्यन्ताभावः–ख।

आपश्चैवान्तरीक्षं च पृथिवी वायुपावकौ
नासीच्चापरमेतेभ्यो भूतेभ्यो मुक्तसंशयम्।
नोपपत्या न चायुक्त्या त्वसद्ब्रूयादसंशयम्।

पृथिवीजलतेजोवायुसम्बन्धिनां परमाणूनां त्रुटीनां वाकाशस्य चात्र नित्यत्वं प्रतिपाद्यम्। पावकपदं चैतद्वृत्ति तेजस्त्वजातिमत्परम्। परमाणुषु सत्तान्यद्रव्यत्वसाक्षाद्व्याप्यजातेरेव स्वीकारेण सिद्धान्ते वह्नित्वादेरनभ्युपगमात्। न चाकाशस्य द्रव्यानारम्भकत्वात्पञ्चानां कथमुपादानत्वमिति वाच्यम्; न ह्युपादानत्वं पञ्चम्यर्थः, अग्रे निराकरिष्यमाणत्वात्। अर्थतो योग्यहेतुत्वपर्यवसानात्। न च "तान्याहुर्भूतचिन्तकाः" इत्यभिधानान्नेदं स्वमतमिति वाच्यम्; "विद्धि नारद पञ्चैतान्" इत्यादि विरोधात्। भूतपदस्य यथार्थवाचकतया तत्त्वचिन्तका इत्यर्थकत्वात्। कालपदमीश्वरपरम्। "आत्मप्रचोदितो जीवो दृष्टोद्बोधसहकृतः"। एतेभ्यः परमेतत्प्रागभावाधिकरणकालवृत्तिपदार्थं यो ब्रूयात्सोऽसद्ब्रूयात्। एतत्प्रागभावाधिकरणकालस्यैवाप्रसिद्धिरिति भावः। नासीच्चापरमित्युपादानान्तरव्यवच्छेदः, भूतानि प्रक्रम्योक्तत्वात्। शाश्वतमिति प्रागभावप्रतियोगित्वस्याचलानिति ध्वंसप्रतियोगित्वस्य च निषेधः। ध्रुवानिति तदर्थसिद्धिनित्यत्वोक्तिः। अस्य रचनास्तुत्यादौ तात्पर्यशङ्कापि तत्त्वाख्यानायैव प्रवृत्तत्वात्। असदिति मूलप्रकृतेर्ग्रहणम्, शाश्वत ध्रुवपदाभ्यां प्रवाहरूपेणानित्यत्वं स्वभावतो मूलप्रकृतेर्जातान् विद्धीति तद्व्याख्यानस्य च पदस्वरसविरुद्धत्वात्।

न चैवं जलादीनां सृष्टिश्रवणविरोधापत्तिः, जन्यजलादिपरत्वेन तु तदुपपत्तेः। न च तथाप्याकाशस्य जन्याजन्यभेदेन द्वैविध्याभावात् सृष्टिश्रुतिविरोधो दुर्वार इति वाच्यम्; **ब्रह्ममीमांसा**द्वितीयाध्यायतृतीयपादारम्भगतपूर्वपक्षसूत्ररीत्यैव समाधानसम्भवात्। गौण्यसम्भवादिति सूत्रस्य हि "आत्मन आकाशः संभूतः" इति श्रुतिर्गौणी। आकाशमुत्पत्तिहीनं निःस्पर्शत्वादित्यनुमानविरोधेन मुख्यत्वासम्भवादित्यर्थः। नन्वप्रयोजकमेतत्, अनुमानमात्रेण श्रुतिबाधाभावादित्याशङ्क्य सूत्रान्तरं "शब्दाच्च" इति। "अन्तरिक्षं चैतदमृतम्" इति "यथानन्तोऽयमाकाश एवमनन्त आत्मा" इति। "आकाशवत्सर्वगतश्च नित्यः" इत्यादि श्रुतिसत्त्वान्न प्रयोजकत्वम्। चकारादुत्पत्त्यादिकल्पने गौरवात्। वस्तुतः उक्तस्मृतिरेव चकारसमुच्चया।

नन्वेवं संभूतपदस्याकाशांशे गौणार्थत्वं वाय्वाद्यंशे च मुख्यत्वं कथम्? अतस्तृतीयसूत्रम् "स्याच्चैकस्य ब्रह्मशब्दवदिति"। यथा **तैत्तिरीयकशाखाया-**

मेव "अन्नं ब्रह्म" इत्यादौ ब्रह्मशब्दो गौणः "आनन्दो ब्रह्म" इत्यादौ च मुख्यः तथा प्रकृतेऽपीत्यर्थः।

न च तत्र भिन्नवाक्यत्वात्तथेति वाच्यम्; अत्रापि संभूतपदानुषङ्गेण भिन्नवाक्यत्वस्योभयसिद्धत्वात्। इदं चाभ्युपगम्योक्तम्-वाय्वादिपदानामपि नित्यतदर्थकत्वमादाय संभूतशब्दस्य सर्वत्रैव गौणत्वसंभवात्। आकाशपदस्याप्यवच्छिन्नाकाशपरत्वमाश्रित्य विशेषणांशस्य जन्यतामादाय सर्वत्रैव मुख्यत्वरक्षणाद्वा, "आनर्थक्यप्रतिहतानां विपरीतबलाबलम्" इति न्यायेन स्मृत्यनुरोधेनापि श्रुतेरन्यथानपनयनस्य सर्वसम्मतत्वात्। प्रकृते च श्रुतीनामपि संकोचकल्पिकानां सत्त्वात्। अस्पष्टार्थकैकप्रमाणानुरोधेन स्पष्टार्थकैक[1]प्रमाणोपमर्दस्य वक्तुमशक्यत्वात्। नचातोऽन्यदार्त्तमिति श्रुतिविरोधः, तस्याविशिष्यसिद्धनित्यताकभिन्नपरत्वात्। सामान्यस्य विरुद्धार्थाविरुद्धविशेषपरतायाः सर्वसिद्धत्वात्। श्रुत्यन्तराणामत्यन्तभेदापेक्षया[2]त्र सङ्कोचरूपबाधस्यैवाभ्यर्हितत्वात्। अन्यथैव तदर्थस्य व्यवस्थापयिष्यमाणत्वाच्च। अत एव **भारतवाक्**येनोपपत्त्येत्यनेन यावद्विकारं विभागो लोकवदिति न्यायेनाविद्यादिषडन्यत्वं ब्रह्मकार्यतावच्छेदकमित्यस्य निरासः। न वा युक्त्येत्यनेन तु निश्चयार्थकवैशब्दस्य "एचोऽयवायावः" इत्यायादेशे कृते लोपः शाकल्यस्येति लोपस्य वैकल्पिकतया यकारलोपाभावे च उक्त्येति पदच्छेदात् "आकाशः सम्भूतः" इत्यादिवचनानां यथाश्रुतार्थमात्रं पुरस्कृत्याकाशादेरुत्पत्त्यादिकं नाङ्गीकर्त्तव्यम्। एषां नित्यत्वस्यानेकप्रमाणसिद्धत्वादिति स्पष्टमुक्तम्।

न च वायुः संभूत इत्यनेन वायुत्वावच्छेदेनोत्पत्तिबोधान्न तन्नित्यत्वमपीति वाच्यम्; घट उत्पन्न इत्यादौ घटत्वावच्छेदेनोत्पत्त्यनवबोधात्, सम्भवनियमयोः मानान्तरानुरोधमूलकत्वाच्च। अत एव "वायुश्चान्तरिक्षं चैतदमृतं सैषानस्तमिता देवता वायुः" इत्यादिकं सङ्गच्छते। ईक्षणञ्च भूतानां कार्योन्मुखत्वमेव, मुख्ये बाधस्य स्पष्टत्वात्। यत्तु तेज आद्यात्मकं सद्रूपं ब्रह्मैक्षतेत्यर्थं इति, तन्न; ब्रह्मणस्तेज आदि तादात्म्यासिद्धेः, बाधायामध्यासे वा सामानाधिकरण्यकल्पने गौरवात्। "ता आप ऐक्षन्त" इत्यत्र तथाप्यनिर्वाहाच्च कार्यतादात्म्यापन्ने ब्रह्मण्यपीक्षणस्य गौणत्वाच्च। अत एवानन्दमयाधिकरणे **भामत्याम्**—

"गौणप्रवाहपातेऽपि युज्यते मुख्यमीक्षणम्।
मुख्यत्वे तूभयोस्तुल्ये प्रायदृष्टिर्विशेषिका"॥ इति।

---

१. °कानेक°—क। २. बाधापेक्षया—ख।

"अवादिगौणेक्षणप्रवाहपातेऽपि जगत्कारणे मुख्यमीक्षणमिति युज्यते । मुख्यसम्भवे गौणस्यानवकाशाद्" इति **कल्पतरू**क्तेश्चेति दिक् ।

सेयं ब्रह्मरूपा देवता [ईश्वर एव] नैयायिकमते ईश्वरस्य ब्रह्मपदार्थत्वात् । तदुक्त**माचार्यैः**—'परब्रह्मणि चेश्वरादन्यस्मिन्मानाभावाद्" इति । तिस्रस्तेजोजलपृथिवीरूपा देवताः सामर्थ्यविशेषवत्त्वात् । अनेन जीवेनात्मना हिरण्यगर्भरूपेणानुप्रवेशस्तत्कार्योत्पत्त्यनुकूलोपादानप्रत्यक्षादिस्तद्विषयीकृत्य तमनुप्रविष्टहृदयेयमित्यादिवन्मुख्यप्रवेशस्य सर्वैरपि परित्यागात् । "येऽसंकल्पितफलकर्मकर्त्तारः साकारोपासनापरिवासितचेतसो यतयस्ते हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्ते इत्यागमः । यद्वा ईश्वर एव कार्यवशाद्गृहीतदेहो ब्रह्माद्यवस्थामापद्यते" इति पक्षद्वयं प्रसिद्धं **किरणावल्यादौ** । श्रुतिरपि—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

एतेनात्मनेत्युक्त्या जीवब्रह्मणोरभेद इति निरस्तम् । जीवस्याप्यात्मत्वजातिमत्तया तन्निर्देशोपपत्तेः । नहि जीवात्मना घटो ज्ञायत इत्युक्ते घटस्य जीवाभेदलाभः । न चानुप्रविश्य व्याकरवाणीत्यनुप्रवेशव्याकरणयोः समानकर्तृकत्वाभावात् क्त्वाप्रत्ययानुपपत्तिः, तृतीयायाः करणार्थत्वसंभवात् ।

"द्वाभ्यां द्वाभ्यां भुजाभ्यां मृधभुवि युगपन्मत्तदिग्दन्तिदन्तान्
रुध्वा दोर्भिश्चतुर्भिःसरभसपतितान् दिक्पतीनप्यरौत्सम्" ॥

इत्यादिवत् । नहि जीवस्य कर्तृत्वं वक्तुं शक्यम्; व्याकरवाणीति कर्तृलकारेण कर्तुरभिहितत्वादनभिहिताधिकारीयतृतीयानुपपत्तेः । न च तेन व्याकरणक्रियानिरूपितमेव तदभिहितं नत्वनुप्रवेशक्रियानिरूपितमित्यतः तन्निरूप्ये कर्तरि तृतीयेति वाच्यम्; प्रधानक्रियाकर्त्रभिधाने गुणीभूतक्रियाकर्तुरप्यधीनत्वनियमात् । उक्तं हि **हरिणा**—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥

इति गुणे क्त्वाप्रत्ययप्रकृत्यर्थक्रिया या अनुक्तापि कर्तृप्रत्ययस्य स्वप्रकृत्यर्थक्रियानिरूपितकारकशक्तिमात्रप्रतिपादकत्वेनान्यधात्वर्थक्रियाकारकशक्त्यानभिधायित्वादनुक्तापि—'तद्वदुक्तवत्' । प्रधानविरोधेन पृथक् स्वाभिधानप्रयुक्तकार्याप्रवर्त्तकत्वादित्यर्थः । अत्र एव मैत्रेण भुक्त्वा चैत्रो गच्छतीति

न प्रयोगः । किन्तु चैत्रो भुक्त्वा गच्छतीत्येव । यत्त्वेवं सत्योदनं भुक्त्वा शास्त्रं पठ्यते "श्रुत्याप्यर्थं नानुमतस्तेन सोऽर्थकबुद्धिना" इत्यादिप्रयोगानुपपत्तिरिति, तन्न; तत्र धर्मिभेदादेकधर्मिनिष्ठशक्तेरेवोभयत्राप्येकेनाभिधानात्। अर्थमित्यत्रापि नानुपपत्तिः स्थितेनेत्यध्याहारात् । यद्वा यत्पदोपस्थाप्यकारकनिष्ठशक्त्यभिधानं प्रत्ययेन तत्पदोपस्थाप्यकारकनिष्ठक्रियान्तरसाधनशक्तेरेवाभिधानम् । अत्र च पदभेदान्न दोषः । अत एव क्त्वाप्रत्ययस्य भावार्थत्वे पक्त्वौदनं भुङ्क्ते देवदत्तः । पक्त्वौदनं भुज्यते देवदत्तेनेति प्रत्ययेन कर्तृकर्मणोरनभिधानात् पाकापेक्षया तृतीयाद्वितीयापत्तिमुद्भाव्य तृतीये **कैयटेनोक्तम्**-"आख्यातादिपदवाच्या क्रिया विशेष्यत्वात्प्रधानं विशेषणभूता त्वप्रधानम्। तत्क्रियासाधनीभूतयोरपि शक्त्योस्तद्द्वारको गुणप्रधानभावः । तत्र प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशते । प्रधानानुरोधाद्गुणानाम्। तन्मुखप्रेक्षितत्वात्पृथक्तद्विरुद्धस्वकार्यारम्भाभावात्" इति ।

न चात्रापि व्याकरवाणीत्युत्तमपुरुषाक्षिप्ताहंपदस्य जीवेनेति पदस्य च भेदाज्जीवेनेत्यत्र तृतीयोपपत्तिरिति वाच्यम्; समानकर्तृकत्वाभावेन क्त्वाप्रत्ययस्यैवानुपपत्तेः । तथा च "वृद्धिमिच्छतो मूलनाश" इति न्यायापातः । यत्तु जीवस्यैव प्रवेशान्वयो नामरूपव्याकर्तृत्वान्वयस्तु त्रिवृत्कुर्वत ईशस्यैव । अयोग्यत्वेन तत्र जीवस्यानन्वयात् । जीवानुप्रवेशकथनफलं तु व्याकरणस्य जीवभोगार्थत्वप्रदर्शनमेव । तयोरभेदाच्च समानकर्तृकत्वार्थं क्त्वाप्रत्यय इति, तदसत्; कर्तृत्वावच्छेदकरूपैक्यस्यैव तन्त्रत्वात्, वास्तवाभेदस्याप्रयोजकत्वात् । व्याकरवाणीत्यत्र यो व्यापारः प्रतीयते तस्यैवानुप्रवेशसमानकर्तृकत्वप्रत्ययाच्च । अत एव "रात्रादुदवसाय पृष्ठसवनीयेन ज्योतिष्टोमेन यजेत" इत्यत्र यजेरनित्ये तद्विधेयव्यापारस्यैवोदवसानसमानकर्तृत्वावगमादार्त्विज्यस्य तदभावात् पृष्ठसवनीये ज्योतिष्टोमेऽपि च ऋत्विक्त्वम् न तु सत्र इव यजमानानामेवेति सिद्धान्तः ।

वस्तुतस्तु क्त्वाप्रत्ययप्रकृतिभूतधात्वर्थक्रियानिरूप्यस्य कर्तुर्वाचकशब्दः पृथक् न प्रयुज्यत एव, समानकर्तृकत्वस्य तादृशस्थले व्यभिचारविरहेण तदुपादाने बीजाभावात्, प्रयोगादर्शनाच्च । कर्मैक्यस्य तु तत्रानावश्यकत्वात् क्वचित् स्पष्टार्थं कर्मणः पृथक् प्रयोगेऽप्युक्तरीत्या क्षतिविरहात् । अत एव समानकर्तृकत्वस्य क्त्वाप्रत्ययार्थपक्षेऽपि कर्तृत्वस्य तेनाभिधानान्न कर्तृवाचकपदस्य तृतीयान्तत्वम्, कर्मणस्तु तेनाभिधानात्तस्य पृथक्प्रयोगे द्वितीयाप्यविरुद्धा । इत्यास्तां विस्तरः ।

प्रकृतमनुसरामः—नामरूपपदं शब्दार्थरूपप्रपञ्चपरं व्याकरणं जननं ज्ञापनं च यथासंभवं योज्यम्। त्रिभिः सह इति त्रिवृत् परस्परसंयुक्तत्वमर्थः। तथा च वायवीयतेजसाप्यपार्थिवदेहानां तदवयवैरारम्भः। शरीरमात्रे तदवयवानां यथायोगं निमित्तत्वोपादानत्वोभयस्वीकारात्। एवं सुवर्णादावन्यत्रापि यथायथमूहनीयम्। त्रित्वञ्च निर्देशापेक्षं, परैरपि तथैव वाच्यत्वात्। त्रेधाकरणं तु त्रिवृत्पदस्य नार्थः योगस्य रुढेर्वा विरहात्। "त्रिवृद्रसना त्रिवृद्रज्जुः कार्पासमुपवीतं स्याद्विप्रस्योर्ध्वधृतं त्रिवृत्" इत्यादौ त्रैगुण्यार्थस्यैव प्रसिद्धेः। न च यथा लौकिकप्रसिद्धिमुल्लङ्घ्यापि त्रिवृद्बहिःपवमानमित्यादौ-स्तोत्रीयानवकवाचित्वमपि त्रिवृच्छब्दस्याङ्गीकृतं तथैव त्रेधाकरणार्थत्वमप्यङ्गीक्रियतामिति वाच्यम्; तत्र, "उपास्मै गायता नरः" इत्यादितृचत्रयानुक्रमणात्। "नवभिः स्तुवन्ति" इति श्रुत्यन्तरदर्शनाच्च। तथात्वेऽप्यत्र कल्पकप्रमाणाभावेन वैषम्यात्।

न च "यदग्ने रोहितं रूपम्" इत्यादेरत्रापि प्रमाणत्वमिति वाच्यम्; अनुपदमेव निरस्यमानत्वात्। तथा हि "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्॥ यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यस्यादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्॥ यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्॥ यद् विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्॥ इत्येतद् ह स्म वै तद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुर्यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदाञ्चक्रुः यच्छुक्लमिवाभूदित्यपां रूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य तद्रूपमिति तद्विदाञ्चक्रुः॥ यदविज्ञातमिवाभूदित्येतासामेव देवतानां समास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति॥ अन्नमशितमित्यादि"।

अस्यार्थः—रोहितपदं शुक्लभास्वरार्थकम्। न च रोहितपदस्य कोशप्रयोगादौ रक्तार्थकत्वप्रसिद्धेः कथमेवमिति वाच्यम्; तेजसो रक्तरूपवत्त्वानुपपत्तेः। अत एव "तस्य हैतस्य पुरुषस्य रूपं यथा महारजतं वासो

यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा विद्युत्तम्" इत्यादि **बृहदारण्यकवाक्ये** "अग्न्यर्चिरग्नेर्दीप्तिः सितभास्वरा" इति तद्व्याख्यातृभिर्व्याख्यातम्। "एवमेतद्वै तदक्षरं गार्गि ब्राह्मणाभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमित्यत्राप्यस्थूलादिचतुष्टयेन परिमाणमात्रनिषेधेऽपि तद्रहितानां रूपादिगुणानामात्मस्वरूपत्वशङ्कावारणार्थत्वेनालोहितम्" इत्याद्यवतार्य तैरेवोक्तम्–"अनेन पार्थिवगुणमात्रस्य निषेधः। यद्यपि रोहितंरूपं मग्नेस्तथापि तदिन्धनसम्पर्क एवोपलभ्यते स्वभावतस्तु सितभास्वरम्। अतो रोहितं रूपमग्नेरविरुद्धं गैरिकादीनां पार्थिवत्वाल्लोहितत्वं न विरुद्धम्" इति। **उदयनाचार्यै**रप्युक्तम्—"पच्यमानेन्धनरूपसन्निधिकृतस्तु लोहिताद्युपलम्भस्तद्विरहे चन्द्रतारकादिमहसि शुक्लस्यैवोपलम्भात्" इति।

न च **बृहदारण्यकव्याख्यातृभि**राद्यपक्षः परमताभिप्रायेणैवोक्तः, गैरिकादीनां वेति द्वितीयस्तु स्वाभिप्रायेणेति वाच्यम्; पूर्वोक्तवाक्ये तथाप्यनिस्तारात्। अन्यथा चन्द्रेऽपि लौहित्यप्रत्ययापत्तेः। न च जलरूपेण तदभिभवस्तस्य रूपान्तरानभिभावकत्वात्, अन्यथा जलार्द्रपटादिरूपग्रहानुपपत्तेः। न च रोहितरूपस्य श्रुत्यनूदितस्य प्रत्यक्षग्राह्यस्य च कथं युक्तिमात्रेण तेजोगुणत्वनिरास इति वाच्यम्; न हि बाधितमर्थमित्यादेः। अन्यथा यदादित्यस्य रोहितं रूपं यच्चन्द्रमसो रोहितं रूपञ्च विद्युतो लोहितं रूपमित्यादेरनुपपत्तेः। चन्द्रादौ रक्तरूपस्य केनाप्यग्रहात्। न च मन्मते स्थूलभूतमात्रस्य सूक्ष्मभूततयावयवसमारब्धत्वनियमाच्चन्द्रादितेजस्यपि जलावयवत्वात्तद्रूपस्यैव शुक्लस्य ग्रहः, शुक्लस्यापि तेजोगुणत्वादिति वाच्यम्; इदं तेज इयं पृथिवीत्यादिव्यवहारानुरोधेन चन्द्रादौ तेजोवयवबाहुल्यस्य त्वयापि स्वीकारेण तत्र रक्तरूपग्रहस्य दुर्वारत्वात्। अन्यथाऽग्नेरपि त्वन्मते भूतत्रयात्मकत्वेन शैत्यग्रहापत्तेः। नचैवं पृथिव्या इव तेजसोऽप्यनियतरूपत्वं शङ्क्यम्; नियतसम्मते तस्यानुपादेयत्वात्। अन्यथा वह्नावादित्यादौ च लोहितं रूपमित्यादिप्रकृतश्रुतिविरोधाच्च।

प्रकृतमनुसरामः। यच्छुक्लं तदपाम्, विजातीयशुक्लरूपस्य जलमात्रवृत्तित्वात्। यत्कृष्णं तदन्नस्य, कृष्णरूपस्य पृथिवीमात्रवृत्तित्वेन निश्चितत्वात्कालिन्दीजलेऽपि वियति विक्षिप्ते श्वैत्यस्यैवोपलम्भादिति। न त्वेतदुभयत्राग्नेरित्यस्यान्वये मानाभावात्, अनुषङ्गं विनैवोपपत्तेश्च। न च त्वद्रीत्या यच्छुक्लमित्यादेः पुनरुपादानवैयर्थ्यमितिवाच्यम्; तात्पर्यग्राहकत्वेन तदभ्यासस्योपयोगात्। अत एव "अन्धकारस्य परमार्थतो रूपवत्त्वे श्यामत्वेन

पृथिवीत्वापत्तिः । यदेतच्छ्यामं रूपं तत्पृथिव्या इति श्रुतेः" इति **नयसारकारै**-रुक्तम् । अत एव च "यदेतच्छ्यामं तदन्नस्येत्यागममुपन्यस्यान्नशब्देन मृदोऽभिधानात्" इति **तात्पर्यटीकायाम्** ।

न च तथापि यदग्नेरित्यत्र तेजस्त्वव्याप्यधर्मावछिन्नसम्बन्धित्वेन रूपविशेषं निर्दिश्य यथा तत्र तेजोमात्रसम्बन्धित्वविधानं तथा जलपृथिव्योरपि स्यात् । न तु निःप्रतियोगिकमेव रूपविशेषं निर्दिश्य तत्र द्रव्यसाक्षाद्विभाजक-जलत्वपृथिवीत्वावच्छिन्नसम्बन्धित्वविधानमितिवाच्यम् , अप्रयोजकत्वात् । तेजसो दिव्यभौमभेदेन द्वैविध्यदर्शनायाग्नित्वसूर्यत्वादिरूपेण पृथग् विधानाच्च । अत एव भास्वरशुक्लरूपवत्त्वेऽग्नित्वमनवच्छेदकत्वादविव-क्षितमिति स्वयमेवाह—अपागादग्नेरग्नित्वमिति । एवमादित्यादावपि व्याख्येयम् । वाचारम्भणमित्यादेस्तु पूर्वोक्त एवार्थः । यद्वा विकारस्तत्तत्तेजोरूपं वाचारम्भणं भिन्नधर्मावच्छिन्नतया पदान्तरप्रयोगविषयः । त्रीणि रूपाणी-त्येव सत्यम्, तत्तद्धर्मावच्छिन्नयावद्व्यक्तिवृत्तिव्यापकीभूतजातिमत्त्वेनानुगतत्वात् । परमते तु त्रीणि रूपाणीत्येव सत्यमित्यनुपपन्नम्, अत्रिवृत्कृत-भूतानामेव त्रिवृत्कृतभूतापेक्षया सत्यत्वस्य वक्तव्यत्वात् । रूपाणां सत्यत्वा-भिधानानर्हत्वात् ।

न च रूपवति लक्षणा, तस्या एव दोषत्वात् । रूपं वस्त्रमित्यादि-लक्षणाया अनङ्गीकाराच्च । "काश्चिन्नैवाप्रयोगतः"[१] इति **भट्टोक्तेः** । न च गुणगुणिनोरभेदात्तथा त्वत्सिद्धान्ते भेदाभेदवादानभ्युपगमात् तत्पक्षेऽपि गुणिपरत्वे लक्षणाभ्युपगमाच्च रूपत्वस्य त्रिवृत्कार्यतावच्छेदकत्वात् तेजस्त्वा-देरेव त्रिवृत्कार्यतावच्छेदकत्वेन तद्रीत्यापि प्रतीयमानत्वादग्न्याद्यधिष्ठान-तानवच्छेदकत्वाच्चाधिष्ठानतावच्छेदकरूपस्वीकारेण सत्यत्वोक्तेरनुपयो-गादित्यादिकं विभावनीयम् । अत एवाग्नेरग्नित्वादिकमपहायैवाभिप्रायं स्पष्टयति—यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति विदाञ्चक्रुरित्यादि । इवशब्दस्त्वावान्तरजाति[२]पुरस्कारेण सादृश्याभिप्रायः । मिथ्यात्वेऽस्य तात्पर्य-मिति तु भ्रान्तिः । "यथा खलु सोम्येमास्तिस्रो देवतास्त्रिवृदेकैका भवति तन्मे विजानीहि"—इत्युपक्रम्य यदग्नेरित्यादेरभिहितत्वात् । प्रतिज्ञातातिरिक्तार्थ-परत्वेन तद्व्याख्यानस्य निर्युक्तिकत्वात् ।

न च त्वद्व्याख्यानेऽपि तथैव दोषः, इतरेतरसंयोगेन कार्यजनकत्वस्य यदग्नेरित्यादिनानभिधानादिति वाच्यम्; अग्नेः पार्थिवेन्धनत्वेन तेजोऽवय-

१. कश्चिन्नैवाप्रयोजकः—क । २. वैजात्य—क ।

वानां समवायित्वेन पृथिव्याश्च निमित्तत्वस्यादित्यादेश्चाबिन्धनत्वेन तत्र जलावयवानां निमित्तत्वस्य तेजोऽवयवानां समवायित्वस्य च स्पष्टतरं प्रत्यायितत्वात्। एवं तेजोमात्रोत्पत्तौ पवनो निमित्तमित्यस्याचार्योक्तरीत्या तेजस्त्वस्य वायुकार्यतावच्छेदकत्वे वायोर्निमित्तत्वं विद्युदन्तेषु बोध्यम्। नित्यसाधारणतया तेजस्त्वं न वायुकार्यतावच्छेदकमपितु वह्नित्वमेवेति पक्षे त्वग्न्यंश एव तस्य सौलभ्यम्। अत एव तेजसः पूर्वं वायूत्पत्तेराक्षेप इति प्राग्व्याख्यातं संगच्छते। तस्मात्पृथिव्यादीनामनेकभूतात्मकत्वमप्रमाणम्। अत एव विजातीयारम्भकत्वं **किरणावल्यादौ** निरस्तमित्यास्तां तावत्।

ननु एतदुत्तरमेव "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः॥ आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः॥ तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः स वाक्॥ अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच"॥ इत्यत्र भागकरणस्यैव त्रिवृत्करणपदार्थत्वात्पूर्वत्रापि तथैवेति चेत्; त्रेधा विधीयत इति शब्दानुरोधादत्र तथात्वेऽपि पूर्वत्र मानाभावात्। लोकेऽर्थान्तरे निरूढत्वेनात्र शक्तिकल्पनानुपपत्तेः, "निरूढन्तु न स्वार्थादपनीयते" इति न्यायात्। प्राणादीनामन्नादिमयत्वं तु पानाशनव्यतिरेकेण प्राणादीनां स्वस्वकार्यशक्तिहानेरौपचारिकतया ज्ञेयम्।

न च तत्र मानाभावः, श्रुत्यैव तथा नीतत्वात्, उक्तवाक्यानन्तरमेव हि **छान्दोग्ये** पठ्यते—"दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवत्येवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सः प्राणो भवति। तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सः वाग्भवति॥ अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति। तथा सोम्येति होवाच॥ षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यत इति॥ स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूंषि सामानीति स होवाच नवैमा प्रतिभान्ति भो इति॥ तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकाङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवं सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति॥ स हाशाथ हैनमुपससाद तं ह यत्किञ्च पप्रच्छ सर्वं ह प्रतिपेदे॥ तं होवाच

यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्ततोऽपि बहु दहेत्॥ एवं सोम्य ते षोडशानां कलानामेका कलातिशिष्टाभूत्सान्नेनोपसमाहिता प्राज्वालीत्तयैर्तार्हि वेदाननुभवस्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति।" अत्र ह्यशनव्यतिरेकेण वेदप्रतिभानव्यतिरेकस्य तदन्वये च तदन्वयस्याभिधानेन तादृशमेव तन्मयत्वं न तु तज्जन्यत्वमिति स्पष्टमेव शङ्कोत्तराभ्यां प्रतिपादितम्। अत एवाङ्गारस्य विशिष्टदाहासामर्थ्यं ज्वलदग्नेस्तु तदिति दृष्टान्तोऽपि संगच्छते, सर्वांशसाम्यस्य केनाप्यनङ्गीकार्यत्वात्। अत एव तत्रैव पूर्वं दाल्भ्यशालवत्यसंवादे "का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरिति आप इति होवाच" इत्यादि पठ्यते। गतिः कारणं गानरूपस्य साम्नः स्वरसाध्यत्वात् प्राणव्यापारेण स्वरोत्पत्तेः। अन्नव्यतिरेकेण प्राणव्यापारव्यतिरेकादन्नस्य तद्गतित्वमिति तत्र स्पष्टत्वात्।

न च श्रुत्यैव विवृतेऽर्थे तर्काः प्रसरन्ति। उक्तं हि वृद्धैः—

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्॥

गौणं श्येनादिशब्दस्य यागविशेषादिरूपं "यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यम्" इत्याद्यर्थवादोक्तम्। लाक्षणिकं "पुरोडाशानलं कुरु" इत्यादौ पुरोडाशशब्दस्य धानाः करम्भः पुरोडाशः परिवापः पयस्ये[१]तिसवनीयहविःपञ्चकरूपं वाक्यभेदेन "आश्ववालः प्रस्तरः" इत्यादौ काशानामश्ववालशब्दवाच्यत्वं प्रस्तरकार्ये विधानञ्चेति दिक्।

यदग्नेरितिश्रुत्यर्थः॥ तदुत्तरं च तत्रैव समामनन्ति "उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति॥ स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मन इति॥ अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्य-

१. पयस्येति—ख

तीति ।। तस्य क्व मूलं स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापोमूल-मन्विच्छद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूल-मन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।। अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति ।। तस्य क्व मूलं स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः, यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तम्-पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ।। स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ।। यथा सोम्य मधुकृतो निस्तिष्ठन्ति नानात्यानां वृक्षाणां रसान्समवहारमेकतां रसं गमयन्ति ।। ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति ।। त इह व्याघ्रो वा सिंहो वा वृको वा बराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ।। स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव भा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ।। इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्तास्समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति । एवमेव खलु सोम्येमाः प्रजाः सर्वाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वाराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ।। स य एषोऽणिमैतदाम्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ।। अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत् स एष जीवेनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ।। अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति । एवमेव खलु सोम्य विद्धीति होवाच ।। जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति

होवाच ॥ न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ॥ तं होवाच यं वै सोम्यै-तमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एव महान्न्यग्रोधस्ति-ष्ठति श्रद्धत्स्व सोम्येति ॥ स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ यथा विलीनमेवाङ्गस्यां तदाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभि-प्राश्यैतदथमोपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते तं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एवं मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाधराङ् वा प्रत्यङ् वा प्रध्मायीता-भिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धा-रानेवोपसंपद्यतैवमेवाहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमो-क्ष्येऽथ संपत्स्य इति ॥ स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ पुरुषं सोम्योतोपतापिन ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ अथ यदास्य वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ स य एषोऽणिमैतदा-त्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवा-न्विज्ञापयत्विति तथा सोम्येति होवाच ॥ पुरुषं सोम्योत हस्तगृहीतमान-यन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथमुच्यते ॥ स यथा तत्र नादाह्यैतैतदात्म्यमिदं

सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ।। षष्ठः प्रपाठकः समाप्तः ।।

इह तावत्स्वपिति वाक्ये परेषामेवं व्याख्यानं, तथाच "स्वाप्ययात्इतिसूत्रावतारिकायां भामत्यां-"यदि स्वशब्द आत्मवचनस्तथापि चेतनस्य पुरुषस्य चेतनप्रधानस्वत्वानुपपत्तिः। अथात्मीयवचनस्तथाप्यचेतने पुरुषार्थतयात्मीयेऽपि चेतनस्य प्रलयानुपपत्तिः । नहि मृदात्मा घट आत्मीयेऽपि पाथसि प्रलीयते, किन्त्वात्मभूतायां मृद्येव । नच रजतमनात्मभूते हस्तिनि प्रलीयते किन्त्वात्मभूतायां शुक्तावेव" इति । तथा **भगवत्पादभाष्यम्**—"एषा श्रुतिः स्वपितीत्येतत्पुरुषस्य लोकप्रसिद्धं नाम निर्वक्ति······प्रभवाप्ययावित्युत्पत्तिप्रलययोः प्रयोगदर्शनात् । मनः प्रचारोपाधिविशेषसम्बन्धादिन्द्रियार्थान् गृह्णंस्तद्विशेषापन्नो जीवो जागर्त्ति, तद्वासनाविशिष्टस्वप्नान्पश्यन्मनःशब्दवाच्यो भवति । स उपाधिद्वयोपरमे सुषुप्तावस्थायामुपाधिकृतविशेषाभावात्स्वात्मनि प्रलीन इवेति 'स्वं ह्यपीतो भवति' इत्युच्यते । यथा हृदयशब्दनिबन्धनं श्रुत्या दर्शितं 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति' इति । यथा वाशनायोदन्याशब्दप्रवृत्तिमूलं दर्शयति श्रुतिः 'आप एव तदशितं नयन्ते, तेज एव तत्पीतं नयते' इति च । एवं स्वमात्मानं सच्छब्दवाच्यमपीतो भवतीतीममर्थं स्वपिति नाम निर्वचनेन दर्शयति ।···तथा च श्रुत्यन्तरं 'प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्' इति सुषुप्तावस्थायां चेतनेऽप्ययं दर्शयति" इत्यादि । तत्**कल्पतरु**रपि "मनः शब्दवाच्यो भवति लक्ष्यो भवति । एवमेव खलु सौम्य तन्मनः इति स्वप्नोपन्यासवाक्येऽर्थवादस्यापि स्वपितिनामनिर्वचनस्य यथार्थत्वाय हृदयान्निरुक्त्युदाहरणं तस्य हृदयशब्दस्यैतन्निरुक्तं निर्वचनम्, अशनायापिपासे सोम्य विजानीहीत्युपक्रम्याशितस्यान्नस्य द्रवीकरणेन नयनाद्द्रवीकरणादापोऽशनायाः एकवचनं छान्दसः, द्रावकोदकापनयनाच्छोषणादुदन्यं तेजः । आकारश्छान्दसः" इति । अत्रेदं वक्तव्यम्—स्वपदस्य सुषुप्त्यस्वरूपपरत्वेऽपि तत्प्रथमान्तं द्वितीयान्तं वा ? नाद्यः, अनुपयोगादनन्वयापत्तेश्च । नान्त्यः, अप्ययशब्दस्य नाशार्थकत्वे कमणोऽनन्वितत्वापत्तेः । नाशार्थकधातूनामकमकत्वात् । स च त्वन्मते संस्कारावस्थाप्राप्तिरित्येव विशेषः । घटो नश्यतीत्यादेरकर्मकत्वस्य च सर्वाभिमतत्वात् कर्त्तुरनभिहितत्वेन तृतीयापत्तेश्च । एतेन तत्रस्थौपाधिकलयरूपस्याप्ययस्य कथनादित्यपास्तम् । द्वितीयायाः सप्तम्यर्थत्वानुपपत्तेः छान्दसत्वाश्रये च गौरवात्प्रमाणाभावाच्च । एतेन स्वमपीतो भवतीत्येकवाक्यतया सति सम्पद्यामह इत्यस्य "स्वात्मनि सति सम्पद्यामहे इत्यर्थः" इत्यप्यपा-

स्तम्। [1]नाप्यपिशब्दपूर्वकस्य इणो नाशार्थकत्वनियमः "देवो भूत्वा देवानप्येति" इति **बृहदारण्यक**वाक्ये अप्येति अपि गच्छतीति विवृतत्वात् स देवानपि गच्छति स ऊर्जमुपजीवतीति वाक्ये अपि गच्छति सम्प्राप्नोतीति तद्व्याख्यानाच्च। यथा "वितरः पुराणो मा स्पृष्टो नु चित्तो मयैव तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गलोकमितो विमुक्ताः" इति वाक्येन ब्रह्मात्मनो ज्ञानमार्गेऽपि धीराः कृतसंन्यासाः अपियन्ति यथाहं जनः तथा तेऽपियन्ति" इत्यादि तैर्व्याख्यातम्। इत्यलमनेन।

यत्तु उपसर्गप्रकृतिप्रत्ययपर्यालोचनया लब्धस्वरूपप्राप्तिस्वरूपार्थस्याभेदे पर्यवसानमिति, तच्चिन्त्यम्; "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्य**मरा**दिपर्यालोचनया, आत्मान्यस्वरूपस्य स्वशब्दार्थत्वे मानाभावात्, आत्मीयपरत्वे तु तस्य सप्रतियोग्यनुयोगित्वेन तत्साकाङ्क्षतया तदनिर्देशेनासङ्गत्यापत्तेश्च। स्वमात्मानं प्राप्तो भवतीत्यर्थस्त्वस्माकमविरुद्धः। स्वतादात्म्यस्य स्वस्मिन् सर्वदैव सत्त्वादर्थवशात्प्रतिपक्षविशेषगुणव्यावृत्तिः, अपीत इत्यत्र "गत्यर्थाकर्मक" इतिसूत्रेण कर्त्तरि क्तः। इदञ्च वस्तुगत्योक्तं लीन इव भवतीत्यर्थेऽपि तान्येवानुविनश्यतीति वाक्ये वक्ष्यमाणरीत्या प्रपञ्चविलयाभावेऽपि तत्सम्बन्धाभावस्य संभवान्नास्माकं क्षतिः। लयो हि जीवस्य श्रौतः, स चौपाधिक एवेत्युभयं प्रतिपन्नम्। उपाधिः पदं तन्मते प्रपञ्चोऽस्मन्मते तु तत्सम्बन्ध इति विशेषः। विस्तरः पुरस्तात्। प्राज्ञेनात्मनेत्यादि श्रुतिस्तु व्याख्यास्यते। अत एव **बृहदारण्यक** एव श्रूयते—"तौ ह पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहत्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनापेषं बोधयाञ्चकार, स होत्तस्थौ।। स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः" इति। अयमर्थः—करणव्युत्पत्त्या विज्ञानेन मनसा सहैषां प्राणानामिन्द्रियाणां विज्ञानं ज्ञानसामर्थ्यं फलोपधानरूपमादाय तेभ्यो निर्वर्त्य य एष हृदयाभ्यन्तरे प्रसिद्ध आकाशः पुरीतदवच्छिन्नस्तस्मिञ्छेते मनस इन्द्रियत्वेऽपि प्राधान्याद्बहिरभिधानम्। यद्वा इन्द्रियाणां ज्ञानशक्तिमादाय विज्ञानेन मनसा सह पुरीतति शेते तदानीं मनसः पुरीतत्यवस्था-

१—१. नास्ति क.

नात् त्वङ्मनोयोगाभावेन ज्ञानसामान्यानुदयाच्छयनोपचारस्तदेव स्पष्टयति-तानीन्द्रियाणि यदा गृह्णाति स्वाधीनानि करोति ज्ञानरहितानि करोतीति यावत्' तदा स्वपिति नाम भवतीति सुपुप्त्यवस्थाविशिष्ट इत्युच्यते । **छान्दोग्य-**निर्वचनेन समानार्थतानीत्यनेनोक्तार्थशृङ्ग्ग्राहिकया प्राह—तद् गृहीत एव प्राणो भवतीत्यादि । प्राणपदं घ्राणपरम्' इन्द्रियान्तराणामप्येतदुपलक्षणम्' तैरपि तथैव व्याख्यास्यमानत्वात् । परैरपि हि व्याख्यातम्—एषामिन्द्रियाणां प्राणानां प्राणशब्दाभिधेयानां विज्ञानेनान्तःकरणेन वृत्तिमता सह विज्ञानपर्यालोचनादिन्द्रियव्यापारमात्रं सविषयं कर्मभूतमादाय स्वप्नजागरणादृष्टोपरमे शरीरप्राणव्यतिरिक्तं कार्यकारणजातमविद्यायामात्मावरणरूपायां संस्कार-शेषमवतिष्ठते । यावत्स्वप्नजागरणयोरन्यतरादृष्टागमनमज्ञश्चादृष्टस्य कर्त्रा अतस्तस्य कर्तृत्वं सान्तःकरणानामिन्द्रियाणां सव्यापाराणां कर्मत्वमादायावि-द्याप्रधानं च कर्तृत्वं यतस्ततः करणत्वञ्चाविद्याया अनुक्तमपि द्रष्टव्यम् । तेन विज्ञानमयोऽप्यविद्यावृत्तिप्रधानोऽविद्याकार्यं सान्तःकरणं गृहीत्वा यः प्रसिद्ध-श्रुत्यन्तरे एषोऽत्र वक्ष्यमाणो ब्रह्मविद्भिः साक्षात्क्रियमाणश्चान्तर्हृदये हृद-यस्य मध्ये हृदयोपलक्षितायां बुद्धौ साक्षित्वेन वर्त्तमानः प्रत्यग्भूत आकाश-नामरूपकर्मभ्योऽन्यश्चिदानन्दैकरसः सर्वत्रानुस्यूतः आकाशवदाकाशशब्दा-भिधेयस्तस्मिंश्चिदानन्दैकरसे आकाशे ब्रह्मज्ञानात्प्रागविद्यासंस्कारैर्विभिन्न इव तद्रूपस्तस्मिन्नाधार इव स्वयमाधेय इव शेते । विक्षेपं विस्मृत्यावरणं चाविद्य-मानसमं कृत्वा सच्चिदानन्दैकरस उपसम्पन्नो भवति । इदानीं नामनिरुक्त्यापि स्वात्मसम्पत्तिः सुपुप्तौ भवतीत्याह—तान्युक्तानीन्द्रियाणि यदा गृह्णाति । स्पष्टमथ तदाह—प्रसिद्धो विज्ञानमय एतत्पुरुषः स्वपिति नामयुक्तः पुरुष एतन्नामा एतदभिधानं प्रतिपद्यत इति शेषः । किं स्वपिति स्वात्मानं चिदेक-रसं बुद्धिसाक्षिणमप्येत्याधिगच्छति यदा स्वपिति नाम प्रतिपद्यते तदा गृहीत एव प्राणो भवति । जनेनाविद्यावृत्त्या प्राणो घ्राणं गृहीत एवावि-द्यायां स्थापित एव भवति । यथा प्राणस्तथा गृहीता वाग्गृहीतं श्रोत्रं गृहीतं मनः. मनोऽन्तःकरणं शेषं सुगमम् । त्वग्रसपाणिपादपायूपस्थाख्यान्यनुक्तान्यपि गृहीतानीत्यवगन्तव्यमिति । अत्रेदं विभाव्यम्—विज्ञानेनेति सहार्थे तृतीया, प्राणा इन्द्रियाणि शेरते गौणत्वञ्चेत्युभयमत्रापि तुल्यं परन्तु हृदयशब्दस्य बुद्धौ, आकाशपदस्य च ब्रह्मणि विलक्षणा तेषामतिरिक्ता । न च "सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते" इत्यादावाकाशपदस्य ब्रह्मण्यपि शक्तिरिति शङ्क्यम्, तदधिकरणे **वाचस्पत्यादावेव** निराकृतत्वात् । सर्वविषयमिति शेषस्य च स्वेच्छा[illegible]त्वात्, सुपुप्तौ विषयनाशे

प्रमाणाभावस्य प्रपञ्चयिष्यमाणत्वात्, एवमन्यत्रापि सुधीभिरूहनीयम्। तत्सिद्धं सुषुप्तौ प्रपञ्चलयो न श्रुत्यर्थ इति।

प्रकृतमनुसरामः। तत्त्वमसीति वाक्यार्थोपयुक्तत्वेन जीवेश्वरौ व्यवस्थापयिष्यन् प्रथमं विप्रतिपन्नं प्रति जीवात्मानमेव निर्णयन्नाह—स्वप्नान्तमिति। स्वप्नपदमत्र सुषुप्तिस्वप्नोभयपरम्, जाग्रदवस्थायाः प्रत्यक्षसिद्धत्वादनुपन्यासः, अन्यथा स यथा शकुनिरिति स्वप्नस्वरूपोपन्यासविरोधात्। प्रथमं सुषुप्त्युपन्यासस्तु विज्ञानमेवात्मेति मतनिरासार्थम्, तदा ज्ञानाभावेन नैरात्म्यापत्तेः। ज्ञानस्य सविषयकत्वनियमेन तदानीं निर्विषयकज्ञानाभ्युपगमानुपपत्तेरिति युक्तेरभिमतत्वात्। सता निरुपधीच्छाविषयत्वरूपप्राशस्त्यवता दुःखाभावेन सम्पन्नो भवति। एषास्य परमा संपदिति, वक्ष्यमाण**बृहदारण्यक**वाक्यस्वारस्यात्। एकीभावेऽपि सम्पद्यतेः शक्त्यभावात् स्वमपीत इत्यादिकं व्याख्यातम्। जीवस्याशनायापिपासावत्त्वात् परमात्मनश्च तदभावात् भेद इति हृदि निध्यायाह—अशनायेत्यादि। यद्यप्यशनायापदार्थ आपः उदन्यपदार्थश्च तेज इत्येवात्र प्रतिपाद्यं तथाप्यशिशिषति-पिपासतीत्यनयोस्तावदुक्तत्वान्नासङ्गतिः। पदार्थस्तत्र पररीत्यैव व्याख्येयः। अन्नपदं चात्र व्रीह्यादिपरमेव, शुङ्गकार्यमपां वृष्टिद्वारा यज्ञजन्यत्वात्, यज्ञस्य च व्रीह्यादिसाध्यत्वात्, एवमन्नकारणत्वेनापामनुमानम्; यत्र क्वचिद् वर्षति तदेवमन्नं भूयिष्ठमन्नं भवतीति पूर्वोक्तलिङ्गात्। न च प्रत्यक्षसिद्धत्वादनुमानवैयर्थ्यम्, कार्येण कारणानुमानप्रकारस्य परमात्मानुमानतात्पर्यकत्वात्। अनुमित्युत्पत्तिपर्यन्तं तात्पर्याभावात्। अद्भिः सोम्य शुङ्गेन कार्येण तेजोरूपं मूलमन्विच्छ "आदित्याज्जायते वृष्टिः" इति स्मृतेः। तेजसा आदित्यादिरूपेण कार्येण सन्मूलमीश्वररूपं हेतुमनुमाहि। आदित्यादेश्च सोत्पत्तिनिमित्तत्वेन व्यापारनिमित्तत्वेन चेश्वरसाधकत्वं "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति श्रुतेः, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचद्रमसौ विधृतौ तिष्ठतः" इति **बृहदारण्यकाच्च**। उक्तञ्च तद्व्याख्यायाम्—यदीदं सूर्यादिकं स्वतन्त्रं स्यात्तदानियतां प्रवृत्तिं विपरीतां प्रवृत्तेरुपरमं वा कुर्याद्राजादिवत्। न करोति तदस्मादिदमस्वतन्त्रं भृत्यादिवदिति। जलादिमूलत्वेनान्नादेरभिधानञ्च सूर्यादेर्मूलत्वेन साध्यमान ईश्वरोपादानकारणत्वेन शङ्काविषयो यथा न स्यात्किन्तु निमित्तकारणत्वेनैव यथा निश्चितः स्यादित्येवमर्थः। एतेन हि द्वितीयपर्यायोऽपि व्याख्यातः। तत्र जलमारभ्यानुमानमिति विशेषः। सूर्यादिपदं नोपलक्षणं कार्यजातस्येत्याह—"सन्मूला सोम्येमाः

सर्वाः प्रजाः" इति । प्रजायन्त इति व्युत्पत्त्या प्रजापदं कार्यमात्रपरं, न केवलं जन्यजातस्योत्पत्तावेवेश्वरापेक्षा किन्तु स्थितौ संहारेऽपि चेत्याह—"सदायतनाः सत्प्रतिष्ठाः" इति । अत एव—

"कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥"

इति **कुसुमाञ्जलावाचार्याः** । धृतिः गुरुत्ववतां पतनाभावः । पतनप्रतिबन्धकसंयोगो वा । ब्रह्माण्डादिः प्रयत्नप्रतिबद्धपतनकः, धृतिमत्त्वात्, वियति विहङ्गमशरीरवत् । आदिपदान्नाशसंग्रहः । ब्रह्माण्डनाशः प्रयत्नजन्यः नाशत्वात् पाट्यमानपटनाशवत् । एवं जीवस्यान्याधीनज्ञानत्वमपीत्याह—"यथा नु खलु सोम्य" इत्यादि । तच्च प्रागेव व्याख्यातम् । अस्य सोम्य पुरुषस्य प्रयतो म्रियमाणस्य वाङ् मनसि संपद्यते इच्छामात्रविषयीभवति वक्तुमशक्यत्वात् । मनःप्राणे संपद्यते प्राणस्थाने हृदय एवावतिष्ठते व्यापारराहित्यात् । "स एतांस्तेजोमयान् समभ्याददानो हृदयमेवान्ववक्रामति" इत्यादि **बृहदारण्यक**दर्शनात् । अङ्गान्तरेभ्यो निष्क्रम्य प्राणादीनां हृदयमात्रे स्थितानां तदोपलम्भात् । प्राणस्तेजस्यदृष्टे सम्पद्यते । जीवनादृष्टं विलयकाले जीवनयोनियत्नस्य नाशे सति श्वासोच्छ्वासराहित्यात् तेजस्तददृष्टं च परस्यां देवतायां जीवात्मनि संपद्यते नश्यतीति यावत् । परेषामप्यत्र यथाश्रुतपदानां सामञ्जस्यात् । न ह्ययं देवताभिप्रायेण लयः । "यत्रास्य पुरुषस्य मृतस्याग्निर्वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी शरीरम्" इत्यादावार्त्तभागब्राह्मणेऽन्यथा तदभिधानात् । नाप्युपादानाभिप्रायेण ।

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥

इत्यादि स्मृत्योपादेयस्योपादाने क्रमेण लय इत्यस्य "विपर्ययेण तु क्रमोऽत उपपद्यते च" इति सूत्रे तेषां व्यवस्थितत्वाद् "वाङ्मनसि दर्शनाच्छब्दाच्च" इति सूत्रे उत्क्रान्तिसमये वागिन्द्रियं मनसि वर्त्तते न तु लीयते, स्वप्रकृतावेव वस्तुनो लयदर्शनात् । अत्र वृत्तिरहितसंसर्गस्यैव सम्पद्यर्थत्वादिति व्यवस्थापितत्वाच्चेत्यादिस्वयमूहनीयम् । एवं परमात्मानं जीवात्मानञ्च भिन्नतया व्यवस्थाप्य मोक्षहेतुज्ञानार्थं प्रकृतमनुसरन् मिथ्यात्वमेव निरस्यति—स य एषोऽणिमेति । अणोर्भावोऽणिमा सूक्ष्मो दुर्विज्ञेय इति यावत् । "भावभवित्रोरभेदोपचारः" इति **कल्पतरोरुक्तत्वात्** । इदं सर्वं प्रपञ्चमात्रमेतदात्म्य

एतस्यात्मनः कर्मजीवभोगार्थं परमात्मना सृष्टिनिर्माणात्। कर्मधारयव्युत्पत्त्या एतदात्मशब्दात् कर्मणि ष्यञ्। यत्तु एतदात्मना यस्य तदेतदात्म तस्य भाव ऐतदात्म्यम्। सामानाधिकरण्यञ्च स्वार्थकत्वात् भावभवित्रोरभेदोपचाराद्वा 'यो वै भूमा तत्सुखम्' इतिवदिति, तन्न; कर्मधारयापेक्षया बहुव्रीहौ गौरवात्। स्वार्थकत्वे प्रत्ययवैयर्थ्यपर्यवसानाच्च। सोम्यमित्यादौ स्वार्थकत्वोपगमेऽप्यत्र पक्षद्वयतारतम्यविचारे स्वार्थकत्वस्य जघन्यत्वात्। अभेदोपचारेऽपि तस्यैव दोषत्वात्। क्वचिदगत्या तदुपगमेऽपि प्रकृते तस्य दोषत्वादन्यथा बहुविप्लवप्रसङ्गात्। अत एव—

संद्रष्टा चैव संहर्त्ता नियन्ता रक्षिता हरिः।
तेन व्याप्तमिदं सर्वमेतदात्मविदो[1] विदुः॥ इति स्मृतिः।

यत्त्वेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाविरोधान्नेयं स्मृतिर्युक्तेति, तन्न; स्मृत्युक्तव्याख्यानापेक्षया तदुक्तव्याख्यानस्य दौर्बल्यात्। स्मार्तव्याख्यानानुसारेणैव येनाश्रुतमित्यादेर्व्याख्यातुमुचितत्वात्। न च स्मृतिरियं निर्मूलेति वाच्यम्; इदं सर्वमिति **बृहदारण्यक**वाक्यव्याख्यानोदाहर्तव्य**भारतादि**समानार्थकत्वात्। भवतु। आत्मजन्यं जगत्तदापि मिथ्येति भ्रान्तिनिरासार्थमाह—तत्सत्यमिति। तत्सत्यं न तु मिथ्या, तेन केषाञ्चिद् विनाशेऽपि न क्षतिः।

यत्तु तत्त्वमसीति वाक्ये तत्सत्यमित्यत्र नपुंसकशब्दनिर्दिष्टब्रह्मण एव नपुंसकतत्पदेन निर्देशः। नहि तत्सत्यमित्यत्र सर्वं सत्यमित्यर्थः। असत्कारणनिरासाय सत्येव सोम्येत्यादिनोक्तस्य कारणसत्त्वस्य तत्र परामर्शात्स आत्मेति कारणवाचितत्पदसमभिव्याहाराच्चेति। तच्चिन्त्यम्; ऐतदात्म्यपदोपात्तजन्यपरित्यागेन दूरस्थब्रह्मग्रहे प्रमाणाभावात्। स आत्मेत्यस्य च पाश्चात्यत्वात्, सर्वनाम्नश्च तच्छब्दस्य पूर्वोक्तपरामर्शकत्वात्, नपुंसकत्वानुपपत्तेश्च। नपुंसकपदोपात्तसन्निहितैव तादात्म्यस्यैव तच्छब्देन गृहीतुं युक्तत्वात्। स पूर्वोक्त आत्मा। तथा चात्मा निमित्तं, प्रपञ्चश्च कार्यं, न तु तयोरुपादानोपादेयभाव इति भावः। तदात्मरूपस्त्वमसि मुखचन्द्र इत्यादिवत् तत्पदस्य तत्सदृशे लक्षणया तत्तुल्यश्च त्वमसीत्यर्थः, इति नैयायिकाः। न च स एव दोषः, बाधकस्योक्तत्वात् परेषामपि तत्पदस्य सर्वज्ञत्वादिविशिष्टपरतया त्वम्पदस्य च किञ्चिज्ज्ञत्वादिविशिष्टपरतया विरुद्धांशस्य त्यागाय लक्षणाद्वयस्यावश्यकत्वात्। विशिष्टयोरैक्यायोगाल्लक्ष्यता-

१. °मतो—ख।

वच्छेदकमन्तरेणैव तत्र लक्षणा निर्विकल्पकरूपा। निर्विकल्पकरूपाया एव पदार्थोपस्थितेः तादृशशब्दानुकूलत्वात्। भिन्नरूपेण स्वार्थस्मृतिद्वारैकमात्रप्रातिपदिकार्थानुभावकनानानामत्वस्याखण्डार्थत्वादित्यादेस्तैरभ्युपगमात्।

यत्त्वभेदतात्पर्यावधारणे तन्निर्वाहकलक्षणाबाहुल्यं न दोषः, न हि लक्षणैक्यानुरोधेन तात्पर्यपरित्यागः, तदुक्तं **न्यायचिन्तामणौ** "तात्पर्याद्धि वृत्तिर्नतु वृत्तेस्तात्पर्यम्" इति, तदसत्; अभेदे तात्पर्यावधारकप्रमाणपदस्य वक्तव्यत्वापत्तेः। तस्य च दुर्बलत्वात्तत्त्वमसीत्यभ्यासस्याभेदतात्पर्यग्राहकत्वेनैव तदभिमतत्वात्। वेदतात्पर्यस्य न्यायानुसारित्वनियमाच्च।

वस्तुतस्तु तत्पदस्य क्लीबत्वं नोद्देश्यलिङ्गोपादानेन, स आत्मेति पुंस्त्वेनैव तदुपक्रमात्। नापि विधेयलिङ्गोपादानेन, त्वंशब्दस्य लिङ्गत्रयेऽप्येकरूपेण तस्य क्लीबत्वाभावात्, अन्यथा दशमस्त्वमसीत्यादौ पुंस्त्वस्यानुपपत्तेः।

न च तादात्म्यस्वरूपमित्यादि कल्प्यम्, मानाभावात्। तदयमर्थः–तस्मादीश्वरात्त्वमन्योऽसि, इति। यदि भिन्नपदत्वे आग्रहस्तदा तदिति हेतावव्ययम्। यत्तदिति हेतावित्यव्ययप्रकरणे पाठात्। तस्मादुक्तरीत्या ब्रह्मजगतोरुपादानोपादेयत्वं प्रमाणशून्यम्, तस्मादसीति त्वमर्थकमव्ययम्। वेत्स्यतीति। "पदमङ्गाद्" इति स्वसूत्रे **वामनेन** 'वेत्सि असि त्वं वेत्सीत्यर्थः' व्याख्याय स्पष्टमेव तथोक्तत्वात्। त्वच्छब्दोऽन्यपर्यायः सर्वादिगणे प्रसिद्धः।

उत त्वः पश्यन्न ददर्श वाचम् उत त्वः पश्यन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः॥

इत्यत्र **वेदभाष्यादौ** सर्वत्र व्याख्यातः। अव्ययविशेषणत्वाच्च क्लीबत्वम्। असीत्यौत्सर्गिकोऽध्याहारः। ब्रह्मजगतोर्भेदः पूर्वमुक्तः ब्रह्मजीवयोस्त्वत्रेति विवेकः।

न च भेदस्य लोकप्रसिद्धत्वान्न तत्र वेदतात्पर्यमिति वाच्यम्; जीवब्रह्मभेदस्य प्रत्यक्षसिद्धत्वाभावात्। प्रतियोगियोग्यत्वस्य भेदप्रत्यक्षानपेक्षितत्वेऽपि प्रसिद्धेरपेक्षितत्वात्, अन्यथा तद्विरोधेनाप्यभेदधीबाधापत्तेः। भवदीयानुमानादिना तदभावस्यापि तथात्वादप्रामाण्यशङ्कानिरासार्थत्वस्याप्युभयत्र साम्यादित्यादेः पूर्वमेव निरूपितत्वाच्च। परमार्थतस्तु तत्पदमाचारक्विबन्तात्तच्छब्दात्कर्त्तरि क्विबन्तम्। स इवाचरतीति तद्, इदमादिभ्योऽप्याचारक्विपः उदाहृतत्वात् अस्यान्वर्थसञ्ज्ञाकरणेन सर्वनामसंज्ञाविरहात् संज्ञाकार्यमन्तर्गणकार्यं च न भवतीति "तदोः सः" इति सत्वं सतत्पदाद्यत्वं च न भवतीति तत्सादृश्यमेवात्र तच्छब्दार्थ इति सूक्ष्ममीक्षणीयम्।

न चात्रापि क्विबनुसन्धानादावेव गौरवमिति वाच्यम्; तथापि शब्दत्व[१]-रलक्षणाल्लक्षणापक्षादस्याभ्यर्हितत्वात्। अन्यथा सलिल एको द्रष्टेत्यत्र सलिलपदस्य पुंस्त्वनिर्वाहाय क्लृप्तप्रकाराणां विलयापत्तेः।

भेदवाद्यन्तरप्रोक्ता अर्था साक्षेपदूषणाः।
विचार्यन्ते चमत्कारप्राचुर्याय विपश्चिताम्॥

तथाहि तच्छब्दोत्तरतृतीयादेः "सुपां सुलुग्" इत्यादिना प्रथमैक-वचनादेः सोर्लुग्वा। तथा च तेन त्वं तिष्ठतीत्यर्थः। "अनेन जीवेनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति" इति वाक्यशेषात्।

ननु तिष्ठतीत्यस्य सत्तावदर्थकतया ब्रह्मप्रयुक्तसत्ताकत्वलाभादध्यस्त-त्वमेव जीवस्य स्यात्, अधिष्ठानसत्ताप्रयुक्तसत्ताकत्वस्याध्यस्तत्वव्याप्यत्वा-दितिचेत्, तर्हि, ततः सञ्जात इत्यर्थोऽस्तु। "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" इति वाक्यशेषात्। अथ जीवस्य नित्यत्वादौपाधिकस्यैव जन्यत्वस्य वाच्यत्वा-ज्जीवस्वरूपानिर्णयः। तथा च तज्ज्ञानान्मोक्षो न स्यादिति शङ्क्यते, तर्हि, तस्य त्वमिति षष्ठी व्याख्येया। यद्यत्रापि सम्बन्धविशेषानवधारणमुद्भाव्यते तर्हि तस्मिंस्त्वमित्यस्तु।

नन्वेवं लक्षणैवेति चेत्, न; प्रातिपदिकद्वये लक्षणाद्वयमपेक्ष्य विभक्ता-वेकस्या लक्षणाया न्याय्यत्वात्। अत एव "उत यत्सुन्वन्ति सामिधेनीस्त-दन्वाहुः" इत्यत्र प्रथमान्तयत्तच्छब्दयोः सप्तम्यर्थत्वमङ्गीकृतम्। हविर्द्धाना-ख्यग्रहे दक्षिणोत्तरदेशयोः सोमाख्यहविर्धारणार्थं हविर्धानाख्यं शकटद्वयं स्थाप्यते। तयोर्मध्ये यत्र दक्षिणहविर्धाने सोमाभिषवः क्रियते तत्समीपे सामिधेनीरनुब्रूयादित्यर्थात्।

यत्तु "प्रैतु होतुश्चमसः प्रब्रह्मणः प्रयजमानस्य प्रोद्गातॄणाम्" इत्यत्र चमसाध्वर्यून्प्रत्यध्वर्युप्रैषे उद्गानशब्दस्योद्गीथाख्यद्वितीयसामभक्ति-वाचकत्वात्तद्गातुश्चैकत्वात्पाशानित्यत्रेव बहुत्वं ज्ञेयम्। यद्वा पाशबहुत्वस्य प्रकरणे कथमप्यसम्भवादस्तु तद्बाधः, उद्गातृशब्दस्य त्वजहत्स्वार्थलक्षणयौ-द्गात्रप्रवचनसम्बन्धरूपावान्तरसामान्येनोद्गातृप्रस्तोतृप्रतिहर्तृ सुब्रह्मण्यपर-त्वाच्चतुर्णामुद्गातृचमसभक्षकत्वमिति प्राप्ते सदोमण्डपसन्निधानस्यैकस्तोत्र-सम्बन्धस्य च पूर्वोक्तसामान्यादप्यवान्तरसामान्यत्वात्तद्रूपेणैव लक्षणौचित्या-



१. शब्दार्थत्व—क

त्तस्य च सुब्रह्मण्यव्यावृत्तत्वात् सुब्रह्मण्यभिन्नानां त्रयाणामेव तदिति तृतीयपञ्चमे स्थितम्। तथा च विभक्त्यपेक्षया प्रातिपदिक एव लक्षणाश्रितेति कथमत्र प्रातिपदिकस्वारस्यरक्षणाय विभक्तौ लक्षणाग्रह इति, तच्चिन्त्यम्; "त्यजेदेकं कुलस्यार्थे" इति न्यायेन प्रातिपदिकद्वये लक्षणातः एकविभक्तावेव तदौचित्यात्। प्रातिपदिकलक्षणापेक्षया विभक्तिलक्षणायाश्चानुशासनिकत्वात् संख्याप्रतिपादकत्वेन च विभक्तेः सावकाशत्वाच्च।

न च विशेष्यांशमादाय प्रातिपदिकस्यापि सावकाशत्वमिति वाच्यम्; शक्यत्वपर्याप्त्यधिकरणपरत्वनिर्वाहितदभावाभ्यां विशेषस्य दुरपह्नवत्वात्। एकवचनत्वावच्छिन्नायां शक्ततायामेकत्वस्यैव शक्यत्वपर्याप्त्यधिकरणत्वात्। प्रातिपदिकांशे तु विशिष्टस्यैव तथात्वेन विशेष्यांशमात्रमादाय सावकाशत्वस्य जघन्यत्वाद्विभक्त्यर्थैकत्वस्य प्रातिपदिकार्थविशेषणत्वेन विशेष्यवाचकत्वेन प्रातिपदिकस्य प्राधान्याच्च। अत एव पाशाधिकरणे विशेष्यभूतप्रातिपदिकार्थस्याग्नीषोमीयेऽपि सत्त्वाद्विशेषणीभूतबहुत्ववाचिबहुवचनस्य गुणत्वाल्लक्षणया तदवयवपरत्वं सिद्धान्तितम्। तदुक्तम्—गुणत्वे त्वन्याय्यकल्पनेति।

यत्तु प्रकृतिप्रत्ययौ स्वार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति **कात्यायनो**क्त्या प्रत्ययार्थस्यैव प्राधान्यात्प्रत्ययस्यैव प्रकृत्यपेक्षया प्राबल्यमिति, तच्चिन्त्यम्; प्रत्ययार्थत्वावच्छेदेन प्रकृत्यर्थापेक्षया प्राधान्यस्यैतदर्थत्वाभावात्। अन्यथा घटावित्यादौ द्वित्वादेः नामार्थविशेषणत्वानापत्तेः, शाब्दिकमते तिङन्तस्थले धात्वर्थभावनाया एव विशेष्यत्वाच्च। अत एव भगवान् **पाणिनि**रसूत्रयत् "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वाद्" इति। अस्यार्थः—अशिष्यमिति पूर्वसूत्रादनुवर्तते। प्रधानप्रत्ययार्थवचनं प्रत्ययार्थः प्रधानमित्येवं रूपम्। अशिष्यमनारम्भणीयं तत्र हेतुरर्थस्यान्यप्रमाणत्वादिति विशेष्यविशेषणभावस्य लोकानुभव[1]मूलकत्वात्। प्रकृतिप्रत्ययार्थयोश्च विशेष्यविशेषणभावनियमस्यानुभवविरोधाद्वचनेन व्यवस्थापयितुमशक्यत्वात्। क्वचित्प्रत्ययार्थप्रकारकप्रकृत्यर्थविशेष्यकस्य क्वचिच्च प्रकृत्यर्थप्रकारकप्रत्ययार्थविशेष्यकस्य बोधस्य सर्वानुभवसिद्धत्वादिति।

ननु तथापि द्वितीयाद्यर्थसंख्याया नामार्थविशेषणत्वेऽपि नामार्थस्य द्वितीयाद्यकर्मत्वादिविशेषणत्वात् कथं प्रातिपदिकस्यैव प्राधान्यमिति चेत्, सत्यम्; प्रथमायाः संख्यातिरिक्तार्थाभावेन तदर्थस्य प्रकृत्यर्थनिष्ठविशेषणत्वप्रतियोगिकविशेष्यत्वविरहात्, प्रकृतसङ्गतिसम्पत्तेः।

१. °नुबोधस्य—क।

ननु प्रथमायाः कर्त्रादिकारकवाचित्वात्तत्र च नामार्थस्य विशेषण-त्वात्तस्या एव प्राधान्यं युक्तमिति चेत्, न; प्रातिपदिकार्थसूत्रेण नियतोपस्थिति-कार्थं एव तद्विधानात् प्रथमायास्तात्पर्यमात्रग्राहकत्वात्। चैत्रः पचतीत्या-दावाख्यातेनैव कर्त्रादेरभिहितत्वादनन्यलभ्यस्य च शब्दार्थत्वात्।

न चैवमनभिहिताधिकारवैयर्थ्यं बहुपटव इत्यादौ बहुनोक्तार्थत्वात् कल्पबादीनामिवाख्यातादिना कर्माद्यभिधाने द्वितीयादीनामुक्तार्थानामप्रयोग इति न्यायेनैव वारणसम्भवादितिवाच्यम्; संख्याया विभक्त्यर्थत्वपक्षे "कर्मणि द्वितीया" "द्वयेकयोर्द्विवचनैकवचने" इत्यादेरेकवाक्यतया कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्याद्यर्थस्य वाच्यतया कटः कृत इत्यादौ कर्मादेरभिधानेऽपि कृत्प्रत्ययेनैकत्वानभिधानात्तेन द्वितीयाप्रसक्तौ तद्वा-रणार्थत्वात्।

न च "विप्रषेधात्प्रथमाभावः" इति वार्त्तिकोक्तरीत्या परत्वात्प्रथमैव भविष्यतीति वाच्यम्; कर्त्तव्यः कट इत्यत्र "कर्तृकर्मणोः कृति" इति षष्ठी-प्रसङ्गात् तस्याः प्रथमातोऽपि परत्वात्। कर्मादीनां विभक्त्यर्थत्वपक्षे तु तदधिकारो व्यर्थ एव। तदुक्तं **महाभाष्ये** "कृद्योगे तु परत्वात्षष्ठी प्राप्नोति तत्प्रतिषेधार्थमनभिहिताधिकारः कर्त्तव्यः—कर्त्तव्यः कट इति। सः कथं कर्त्तव्यो यद्येकत्वादयो विभक्त्यर्थाः। अथ हि कर्मादयो विभक्त्यर्थाः नार्थोऽनभिहिताधिकारेण" इति।

यत्तु "तिङ्समानाधिकरणे प्रथमा" इति वार्त्तिकवचनात्प्रथमायाः कर्त्रादौ शक्तिः। आख्यातादिना प्रातिपदिकसमानाधिकरणेनोक्तार्थे प्रथमेति तद-र्थात्। न च कर्त्तव्यो घट इत्यत्र परत्वात्कृद्योगलक्षणषष्ठीप्रसङ्गः, प्रकरणा-न्तेऽन्योक्तप्रथमेति सूत्रणीयमित्याशयात्। अत एव प्रथमाया एव कारकवि-भक्तित्वात्तदन्तादेकशब्दाच्छस्प्रत्यये एकशः इतिसूत्रस्य प्रयोगः।

न च वस्तुगत्या कारकात् शसादिविधानमिति वाच्यम; नटस्य श्रवणं मातुः स्मरणमित्यादौ "गतिकारकोपपदानाम्" इति नित्यसमासस्य गतिकार-कोपपदात् कृदिति प्रकृतिस्वरस्य चापत्तेरिति, तच्चिन्त्यम; देवदत्तः पचतीत्यादौ पचत्यादिसमानाधिकरणे देवदत्तादिशब्दे प्रथमेत्येव वार्त्तिकार्थात्। तिङर्थ एव कर्त्रादौ प्रथमेति व्याख्याने बीजाभावात्। तिङ्सामानाधिकरण्यस्य तत्प्र-तिपाद्यार्थप्रतिपादकत्वरूपस्य देवदत्तादिरूपनामन्येव सत्त्वात्। प्रतिपादनं च तिङा कर्तृत्वादिसामान्यरूपेण नाम्ना च देवदत्तत्वादिविशेषरूपेणेति

 


विशेषः। अत एव कैयटः "प्रासाद आस्त इत्यादौ वैयधिकरण्यात्प्रथमाया अभावः" इति। आस्त इत्याख्यातोक्तकर्तृविशेषप्रतिपादकत्वविरहात् प्रासादशब्दे न प्रथमेति तस्यार्थः। अपि च तिङ्समानाधिकरणे प्रथमेति न्यासारम्भे देवदत्तः पच् लडिति स्थिते यावत्तिङुत्पत्तिर्नास्ति तावत्तिङ्समानाधिकरणत्वाभावेन प्रथमैवेति नियमस्याभावाद्देवदत्तशब्दादविशेषविहिताः सर्वे स्वादयः स्थिता इत्यप्रथमासामानाधिकरण्यसत्त्वाच्छतृशानचावेव स्याताम्। नचेष्टापत्तिः, देवदत्तः पचतीति वाक्यविलोपापत्तेः। न च कर्मण्येव द्वितीयेत्यादिविभक्तिनियमाश्रयणान्न द्वितीयादिकमपीति वाच्यम्; कर्मणि द्वितीयैवेत्यर्थनियमपक्षे तदापत्तेः, शेषत्वेन षष्ठ्याः सम्भवाच्च।

न च तिङ्विधिसामर्थ्यात्तिबादयो भविष्यन्तीति वाच्यम्; लडादौ तिङ्विधेः सावकाशात्। अत एव प्रथमाविधेरपि न सामर्थ्यम्, लड्भिन्नलकारस्थल एव सावकाशत्वात्। न च प्रथमासामानाधिकरण्ये शतृशानचोर्निषिद्धत्वादत्र च तस्यापि सत्वान्न शतृशानचोरापत्तिरिति वाच्यम्; असमर्थसमासस्य वाक्यभेदस्य चाश्रये गौरवात्। विभक्तिनियमपक्षं प्रसज्यप्रतिषेधं चाश्रित्य समाधानस्योक्तावप्युक्तरीत्या तिङ्समानाधिकरणे प्रथमेत्यस्य प्रत्याख्यान एव **भाष्य**तात्पर्यावधारणात्।

यत्तु तथा सति "लटः शतृशानचौ" इत्येतावतैव निर्वाहेऽप्रथमासमानाधिकरण इत्यस्य व्यर्थतापत्त्या तत्सामर्थ्येन प्रथमाया अपि लट्प्रयोगेऽनुमानात्तस्याश्च स्वप्रयोजकतिङ्सामानाधिकरण्यं विनानुपपत्तेः, तादृशस्थले तिबादयो भविष्यन्तीति, तत्तुच्छम्; तिङ्सामाधिकरण्यस्य प्रथमाप्रयोजकत्व एवोक्तदोषापन्यासे प्रथमान्यथानुपपत्त्या तिङुत्पत्तेर्दुर्वचत्वात्तदतिरिक्तस्यैव प्रथमाप्रयोजकस्य कल्पयितुं युक्तत्वात्।

यत्तु कर्तव्यो घट इत्यादौ परत्वात्षष्ठीप्रसङ्गमाशङ्क्योक्तं प्रकरणान्तेऽन्योक्ते प्रथमेति सूत्रणीयमिति, तदपि चिन्त्यम्; तिङ्समानाधिकरणे प्रथमेति वचनं यथास्थानमेव कृत्वा तद्वचनं कार्यम्, उत तत्रैव? नाद्यः, वचनद्वयारम्भगौरवात्। नान्त्यः, अभिहितानभिहिते प्रथमाभाव इत्यादिना प्रासाद आस्त इत्यत्र सदिति क्रियाद्वयसाधनाधिकरणशक्तिद्वयसमानाधिकरणशक्तिद्वयसद्भावादेकस्याः शक्तेरभिहितत्वात्प्रथमा स्यादित्याकर एव तल्लक्षणस्य दूषितत्वात्।

यत्तु तिङ्निपाताभिहितकर्तृत्वकर्मत्वयोरेव प्रथमार्थत्वम्, प्रासाद इत्यत्र तु घञाधिकरणत्वाभिधानान्न तदापत्तिः। एवमेव भुक्तमित्यादावपीति

कैश्चिदुत्प्रेक्षितम्, तदसत्; चैत्रः पाचको भुङ्क्ते इत्यादौ कृत्प्रत्ययस्थलेऽतिप्रसङ्गात्। न चानभिहित इत्यस्य स्वान्वयिभिः कृदादिभिरनभिहित इत्यर्थकत्वादत्र च कृदादिना कर्तृत्वादेरभिधानान्न तृतीयाद्यापत्तिरिति वाच्यम्; कर्मादीनां विभक्त्यर्थत्वपक्षेऽनभिहिताधिकारप्रत्याख्यानात्संख्यायाश्च कृद्भिरभिधानात्। गोदोहनी स्थालीत्यादौ सप्तम्यनुत्पत्तेर्दुर्वारत्वाच्चेति दिङ्मात्रम्।

[1]यत्तु एकश इत्यादि, तन्न; संख्यैकवचनाच्च वीप्सायामित्यनेनैव तत्र शस्प्रत्ययोत्पत्तेः। अत एव वीप्सायाः प्रत्ययेनोक्तत्वात् तत्र द्विवचनाभावः। न च तत्रापि पूर्वसूत्रात्कारकादित्यनुवर्तते, अत एव द्वयोर्द्वयोः स्वामीत्यत्र तदभाव इति वाच्यम्; एकश एकवचनादिसंज्ञानि स्युरिति व्याख्यानादेकशशब्दार्थस्यास्तिक्रियां प्रति कर्तृत्वादेव तदुपपत्त्या कारकवाचिविभक्त्यन्तत्वस्यानुपयुक्तत्वात्, यन्निष्ठं कर्तृत्वाद्याख्यातप्रतिपाद्यं तदर्थकत्वस्यैवात्र पदार्थत्वात्, कर्त्रादिवाचकप्रत्ययान्तत्वस्य तत्त्वे पचतीत्यादावाख्यातान्तेऽपि कारकव्यवहारप्रसङ्गात्। न चेष्टापत्तिः, "स्वतन्त्रः कर्त्ता" इत्यादि विशेषलक्षणानाक्रान्तत्वेन तद्विशेषत्वाभावात्, व्याप्यधर्माभावे व्यापकधर्माभावस्याप्यार्थिकत्वात् क्रियानिमित्तत्वाभावेन कारकशब्दस्य तत्रानन्वयात्। नापि कारकाधिकारविहितविभक्तिमत्त्वम्, तदप्रसिद्धेः। किन्तु कारकाधिकारीयसंज्ञानिमित्तविभक्तिमत्त्वमेव कारकशब्दत्वं तच्च प्रथमायाः कर्तृवाचकत्वं विनाप्युपपन्नमेवेति दिक्।

नटस्येत्यादिकं तु सावद्यम्। न हि "गतिकारकोपपदानाम्" इति समासविधायकं "कुगतिप्रादयः" "कर्तृकरणे कृता बहुलम्" "उपपदमतिङ्" इत्यादेरेव तथात्वात्, किन्तु गत्यादीनां सुबन्तादीनां सुबुत्पत्तेः पूर्वमेव कृदन्तेन सह समास इत्येव तस्यार्थः। तेन व्याघ्रीत्यत्र वि आघ्र इति घ्रशब्दोत्तरं विभक्तावनुत्पन्नायामेव सुबन्तयोर्गति-शब्दयोः समासे "जातेरस्त्रीविषयाद्" इति ङीष् सिद्धः, अन्यथा "स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमाद्बोध" इति प्रक्रियामाश्रित्य सुबुत्पत्तेः पूर्वमेव स्त्रीत्वसामान्यप्रयुक्ते टापि कृते तदन्ताद् घ्रशब्दात् सुपि ततो गतिसमासे च कृतेऽदन्तत्वाभावेन ङीष् न स्यात्। एवम् अश्वक्रीतीत्यत्राश्वशब्देन तृतीयान्तेन समासेऽपि क्रीतशब्दात्सुबनुत्पत्तावेव। अन्यथा तस्मात्पूर्वमेव क्रीतशब्दात्सुबुत्पत्तौ

१—१. नास्ति—क।

ततः समासे "क्रीतात्करणपूर्वाद्" इति ङीष् न स्यात्। एवं कच्छपीत्यत्र तृतीयान्तस्य सप्तम्यन्तस्य वा कच्छशब्दस्य "सुपि स्थः" इति योगविभागेन विहितकप्रत्ययान्तस्थशब्देन समासे ततो 'जातेरिति विमू इदं च अतिङ्' इत्यस्य "कुगतिप्रादयः" उपपदमित्युभयशेषत्वेन व्याख्यानाद्बहुलग्रहणाच्च सिद्धम्। प्रकृते तु मातुः स्मरणमित्यत्र किं कृद्योगलक्षणषष्ठ्यन्तत्वेन समास आपद्यते उत शेषषष्ठ्यन्तत्वेन ? नाद्यः, इष्टापत्तेः। हरिस्मरणमित्यादेः सर्वसंमतत्वात्। नान्त्यः, "प्रतिपदविधाना षष्ठी न समस्यते" इति वार्त्तिकात् ज्ञो विदर्थस्येत्याद्यष्टसूत्र्याः शेषत्वेन विवक्षिते कर्मादौ सामान्यवचनादेव षष्ठीसिद्धौ समास-निवृत्ति[1]तात्पर्यकत्वाच्च। तदुक्तं हरिणा—

कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥

इति कर्मषष्ठ्या समासे कारकपूर्वपदत्वात्कृदुत्तरपदप्रकृतिस्वरः। [1]शेषषष्ठ्या समासे त्वन्तोदात्तत्वप्रतिपत्तिरिति च तत्र विशेषः। एतेन गति-कारकोपपदादिति स्वरापादानमपि परास्तम्[1]। शेषषष्ठ्या समास-स्यैवात्राभावात्।

वस्तुतः कारकत्वस्याकिञ्चित्करत्वात्समास एव तत्स्वरविधानात् "तत्पुरुषे शालायां नपुंसकम्" इति सूत्रात्तत्पुरुषग्रहणस्य तत्रानुवृत्तेः। कर्मषष्ठी-समासे तु तत्स्वरस्यैवेष्टत्वाद्। अपि च [2]प्रातिपदिकान्यतिरिक्तविषयाणि प्राह प्रथमाशब्दितविभक्त्या भगवान् पाणिनिरतः सकलतर्कसमुपज्ञो वक्ष्टिवाचोरन-तिरिक्तविषयत्वम्।

एवं तावदखण्डवस्तुविषये शब्दान्वयो दर्शितः,
लोके दृष्टनयेन पाणिनिवचोऽप्यस्यैव संसूचकम्।
येनास्ति प्रकृत्यभिहिते वृक्षादिके केवले,
तन्मात्रे प्रथमेति सूत्रवचसैवाद्यां विभक्तिं विदुः॥

अखण्डार्थवादे लिखद्भिरौपनिषदैः प्रथमायाः कारणवाचकत्वस्य सुतरामेव वक्तुमनर्हत्वादिति दिक्[2]।

इदञ्च वस्तुगतिमनुरुद्ध्योक्तम्। प्रथमायाः कारकवाचित्वेऽपि तत्त्वम-सीत्यत्र मध्यमपुरुषप्रयोगेण युष्मदर्थस्यैव तच्छब्दार्थविशेष्यत्वाद्विशेषणी-

१—१. नास्ति—क। २—२. नास्ति—क।

भूतार्थपरत्वच्छब्दोत्तरप्रथमायाः कर्तृवाचित्वे मानं नास्त्येव। एतेन संख्यावाचकत्वमपि व्याख्यातम्। अतो विभक्तावेव लक्षणा युक्ता। यदपि प्रातिपदिकानेकत्वं न स्वारस्ये तन्त्रम्, गभीरायां नद्यां घोष इत्यादौ तदनेकत्वेऽप्यस्वारस्यदर्शनात्तात्पर्यानुरोधस्यात्रापि तुल्यत्वादिति, तन्न; अत्र तात्पर्यग्राहकान्तराभावेन वैषम्याभावात् स्वस्यैव स्वतात्पर्यग्राहकत्वानुपपत्तेः, उपक्रमादेरप्यन्यथैव व्याख्यातत्वात्, सर्वशब्दैवकारानुरोधेन "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति वाक्ये आकाशशब्दस्यैव गौणार्थकत्वमित्यस्योपनिषद्भिरेव स्वीकाराच्च। "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इत्यत्र समाहारद्वन्द्वे पदद्वयस्यापि लाक्षणिकत्वापत्त्या पूर्वपदमात्रलाक्षणिकषष्ठीसमासस्यैवाश्रितत्वाच्च। "चरसमयाः सवनीयाः पुरोडाशाः" इत्यत्र पुरोडाशशब्दलक्षितपुरोडाशकार्योद्देशेन मांसविधिः सवनीयपदं च सृष्टिन्यायेन सवनीयासवनीयपुरोडाशपरमनुवाद इति प्राप्ते पदद्वयस्यापि लाक्षणिकत्वापेक्षया सवनीयपदमुख्यार्थयागविशेषोद्देशेन तदीयधानादिहविःपञ्चकबाधेन मांसं विधीयते। पुरोडाशपदं तु पुरोडाशधानादिहविःसम्बन्धित्वेन रूपेण सवनीयलक्षकमनुवाद इत्यभ्युपगमाच्च।

यदप्युक्तं "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्र प्रयाजशेषं हविः प्रक्षिपतीति तृतीयायाः "सक्तून् जुहोति" इत्यादौ च सक्तुभिरिति द्वितीयाया अस्वारस्यमाश्रितम्, तदगत्या। आद्ये, उपयुक्तसंस्कारव्यतिरेकेण गत्यन्तराभावात्। शेषशब्दश्रवणेन प्रतिपत्तेराकाङ्क्षितत्वात् प्रयाजशेषस्य प्रतिपत्तिरूपप्रयुक्तसंस्कारो विवक्षितः। हविषामुपयोक्ष्यमाणसंस्कारे त्वदृष्टकल्पनापत्तेर्विभक्तिलक्षणाया एवाश्रितत्वात्। सक्तूनाञ्च भूतभाव्युपयोगाभावेन संस्कार्यत्वयोगात्। तदुक्तम्—

भूतभाव्युपयोगे हि द्रव्यं संस्कार्यमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥ इति।

तदपि न; विभक्तिस्वारस्यावश्यकत्वे संस्कारविध्यन्यथानुपपत्त्या सक्तूनामुपयोग[1]कल्पनस्यापि सम्भवे तदभावात्। अथ विनियोगभङ्गे[2]नैवोपपत्तौ गौरवाद्विनियोगान्तरं[3] न कल्प्यत इति चेत्, सत्यम्; इहापि विभक्तिलक्षणयैवोपपत्तौ नामद्वये लक्षणा न कल्पते, इत्यस्य तुल्यत्वात्। एतेन तस्य त्वं तत्त्वमिति समस्तं पदमिति पक्षमुद्भाव्य यदुक्तम्—असमासे-

१. विपरियोग°—क। २. विनियोगेनैवोप°—क। ३. उपयोगान्तरं—ख।

नैव षष्ठ्यर्थलक्षणादिगौरवरहितेनोपपत्तौ षष्ठीसमासो न न्याय्योऽन्यथा स्थपत्यधिकरणविरोधादिति, तत् परास्तम्। लक्षणाद्वयकल्पने गौरवस्य प्रथमोपस्थितत्वेन तद्वैषम्यात्। अपूर्वविद्याकल्पनगौरवस्य तत्र पश्चादुत्थाने फलमुखत्वात्।

यत्तु प्रथमाविभक्त्योर्नामोत्तरस्थयोस्तदर्थाभेदबोधानुकूलत्वमेव स्वारस्यमिति, तन्न; पदोपात्तधर्मावच्छिन्नयोरभेदबोधानुकूलत्वस्यैवान्यत्र स्वारस्यत्वेन कल्पितत्वात् तस्य च तन्मतेऽप्यरक्षणात्।

यत्तु तात्पर्याद्धि वृत्तिरित्यस्य प्रकृतस्वमताभिप्रायेण व्याख्यातम्—तात्पर्यादुपक्रमोपसंहारादिनिर्णीततात्पर्यात् वृत्तेर्वृत्तिलाघवात्, उपक्रमादिबहूनामबाधाय (मैक्याय ?) वृत्तिलाघवं त्यज्यतेऽन्यथार्थवादादावपि लक्षणा न स्यात्। उपक्रमोपसंहारादिप्रतीतैकवाक्यतां त्यक्त्वार्थवादस्य नानापदमुख्यत्वायोपासीतेत्यादिपदाध्याहारापत्तेः। अत एवोपक्रममात्रानुरोधेन ऋगादिपदे "उच्चैः ऋचा क्रियते" इत्यादिविधिस्थलेऽपि लक्षणाश्रिता। यत्र तूपक्रमादिकमपि निर्णायकं तत्र तात्पर्यनिर्णायकत्वेन वृत्तिलाघवमप्याद्रियते यथा निषादस्थपत्यधिकरणे इति, तदपि चिन्त्यम्; उपक्रमादीनां तादृशार्थपरत्वे बाधकतदभावाभ्यां वैषम्यात्, उपक्रमादेरद्वैतपरत्वस्यापि निराकृतत्वात्। "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि" इत्युपसंहारः, तस्यैव नवकृत्वोवचनमभ्यास इति परैरभ्युपगमात्। उपसंहारानुरोधेन तत्त्वमसीत्यत्राप्यभेदे तात्पर्यमित्युक्तेरसंगतत्वात्। एतेन "स आत्मा तत्त्वमसि" इत्यत्र तच्छब्दात् पूर्वमकारप्रश्लेषात्तद्भिन्नस्त्वमसीत्यादिकमपि व्याख्यातमिति दिक्।

अत एव स्पष्टमेवमुक्तौ जीवस्य परमात्मना सादृश्यं श्रूयते—

"यदा पश्यति रुक्मवर्णं कर्त्तारमीशमममृतं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विहाय निरञ्जनः परमं साम्यमेति"॥ इति।

परमपदेन भेदगर्भसादृश्यस्यैवोक्तत्वात् भेदनिर्मुक्तसादृश्यस्य परमसादृश्यपदार्थत्वानुपपत्तेः भेदाऽगर्भसादृश्यपरत्वभ्रमनिरासार्थतया च तदुपादानात्। अत एव **भगवद्गीतायाम्**—

बहवो ज्ञानतपसा पूता मद्भावमागताः।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः॥ इति।

तथा—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥

तथा—

भोक्तारं यज्ञतपसां सर्व एव महेश्वरः ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

मद्भावपदस्य तादात्म्यपरत्वभ्रमनिरासार्थं साधर्म्यप्राप्तेः स्पष्टतयाभिहितत्वात् । एतेन मत्स्वरूपतां प्राप्ताः न तु समानधर्मताम्, पूर्वकालावच्छिन्नक्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमादिति निरस्तम् । अनभ्युपगमे बीजाभावात् ।

"यो देवानां प्रत्यबुद्धयत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति **बृहदारण्यक**श्रुतावपि तदभवदित्यस्य च्विप्रत्ययान्तत्वेन तद्भिन्नस्य तदभावप्राप्तेः सादृश्य एव पर्यवसानाच्च । न च शुक्लीभवति घट इत्यादौ समवायावच्छिन्नप्रतियोगिताकशुक्लाभावं पूर्वकालावच्छिन्नविशेषणतया धर्मितावच्छेदकीकृत्य समवायेन शुक्लत्वस्य विधेयत्वप्रतीत्या धर्मितावच्छेदकीभूताभावप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिमत्त्वबोधत्वस्य च्विप्रत्ययशक्तिज्ञानकार्यतावच्छेदकत्वकल्पनात्तादात्म्यावच्छिन्नप्रतियोगिताकाभावस्य भेदत्वेन ब्रह्मभेदाभावधर्मितावच्छेदकतादात्म्यसंसर्गकब्रह्मप्रकारकबोध एव स्यादिति वाच्यम्; अत्यन्ताभावस्य धर्मितावच्छेदकत्व एव तथा बोधात् । भेदस्य तथात्वे तु तत्सादृश्यस्यैव विधेयत्वेनावगमात् ।

"यत्रैकयालीकनलीकृतालीकण्ठे मृषा भीमभवीभवत्या ।
तादृक्पथे दौहदिकोपनीता शालीनमाधायि मधूकमाला" ॥

इत्यादौ तथैव बोधस्य सर्वानुभवसिद्धत्वात् । अलीकमृषापदे पुनस्तत्र भ्रमस्याहार्यत्वद्योतनार्थे' इत्यन्यदेतत् । तादृशाभेदबोधस्य भ्रमत्वनियमाच्च । भेदप्रतियोगितायास्तादात्म्यावच्छिन्नत्वस्य नव्यैरनङ्गीकाराच्च । अथापि तदभवदिति पदद्वयमेवेत्याग्रहः, तर्हि पूर्वोक्तरीत्यैव तस्य साम्यपरत्वम् । एवं "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति" इति **कठवल्ली**वाक्येऽपि स्पष्टमेवायमर्थः । एतेन जलक्षिप्तजलदृष्टान्तेन ब्रह्मात्म्यैक्यज्ञानेनात्मनो ब्रह्मत्वोक्तिरिति परास्तम् । ईश्वरज्ञानेन जीवस्येश्वरसाम्यप्राप्तिरेव शब्दार्थत्वात् । एवं च—

"स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इति **मुण्डकोपनिषद्वाक्येऽपि** ब्रह्मसादृश्यमेवार्थः। अभेदपरत्वे साम्यश्रुतीनां कथञ्चिदपि नेतुमशक्यत्वात्। तत्र सादृश्ये लक्षणाया आवश्यकत्वात्। वस्तुतः एवकारस्तत्रोपमार्थ एव। "एवौपम्येऽवधारणे" इति **विश्वोक्तेः**। एवञ्च स एव तदभवदित्यत्रापि भिन्नक्रमत्वेन तदेवाभवदित्यन्वयः। एवकारस्तु सादृश्यार्थ एव। ब्रह्मैव भवतीत्येकवाक्यतया तदेवेत्यन्वयस्य त्वयापि वाच्यत्वात्। यत्तु तद्व्याख्यातारः अन्येऽपि "यद्यपि ब्रह्मैव तथापि तेषामविद्याबलाज्ज्ञानवतश्चाविद्याया नाशितत्वात्। अतः स एव ज्ञानवानेव तद् ब्रह्म अभवत्स्पष्टम्। अभवदेवेति वा योजना"इति। तत्राद्ये एवकारवैयर्थ्यं ब्रह्मज्ञानवतो[१] ब्रह्मभावप्राप्तिरित्यस्यैव प्रकृतत्वात्। द्वितीये भिन्नक्रमत्वमेवेति स्पष्टम्। अस्मदुक्तान्वयेऽन्वयप्रतियोगिनोरव्यवहितोपस्थितत्वात्तदुक्तान्वये च तच्छब्देन व्यवहितत्वाच्च। यद्योगादिनैव व्याप्तिलाभादेवकारवैयर्थ्याच्चोक्तरीत्या **आथर्वणश्रुत्ये**कवाक्यतया त्वस्येव न्याय्यत्वात्। एवञ्च ब्रह्मविद् ब्रह्मैव भवतीति सिद्धवदर्थवादावगतस्य ब्रह्मभवनस्य नियोज्य विशेषाकाङ्क्षायां ब्रह्मबुभूषे[षा] नियोज्यविशेषस्य रात्रिसत्रन्यायेन प्रतिलम्भ इत्यादि **वाचस्पत्योक्तं** परास्तम्, ब्रह्मसादृश्यप्राप्तेरेवार्थवादार्थत्वात्[२]। अत एव **मुण्डके** एवं मन्त्रवर्णाः—

यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परमं साम्यमेति ॥ इति।

मन्त्रान्तरमपि—

समाने वृक्षे पुरुषो निमग्नोऽनीषया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥

"न कस्यचित्समर्थोऽहं दीन इति सम्भावना अनीषा" इति **कल्पतरुकृतः**। शोचति जन्ममरणाद्यनेकविधक्लेशाननुभवति, जुष्टं श्रवणादिना सेवितं, अन्यं जीवाद्भिन्नम् ईशं परमात्मानं यदा पश्यति तदा वीतशोकः सर्वदुःखहीनः सन् अस्य ईशस्य महिमानमिति प्राप्नोति। छान्दसत्वाद्गुणाभावः। स्वपितिवाक्ये स्वमप्येतिव्याख्यानस्य सर्वसम्मतत्वात्। तत्र गुणं कृत्वा छान्दसत्वात्पूर्वरूपकल्पनापेक्षया विनैव गुणं तत्कल्पनौचित्यात्।

यत्तु जुष्टमनेकैर्योगमार्गैः सेवितमन्यं प्रपञ्चविलक्षणमीशं यदा पश्यति प्रपञ्चमहिमानं विभूतिं मायामयीमस्यैवेति यदा पश्यति तदा

१. ज्ञानश्रीव[?] ... २. ...मात्रार्थत्वात्—क।

वीतशोको भवतीति। यदापि देहेन्द्रियादिजुष्टं संसारिभिः सेव्यमानमस्येशस्य महिमानमेतदधिष्ठानत्वेन एतत्सत्तया लब्धसत्ताकत्वादियुक्तं पश्यति मिथ्यात्वादियुक्तं पश्यतीति यावत्। ईशस्वरूपं च ततोऽन्यद्विलक्षणं सत्यत्वाद्युपलक्षितं पश्यति यः स वीतशोक इत्यर्थ इति, तच्चिन्त्यम्; पश्यत्यावृत्तौ भवत्यध्याहारे च गौरवात्। "अस्तिर्भवन्ती परः" इति **कात्यायनो**क्त्याः भवत्यध्याहार औत्सर्गिक इति चेत्, तथापि श्रूयमाणक्रियासम्भवे तस्य जघन्यत्वात्। अन्यपदार्थेऽपि वैलक्षण्ये प्रपञ्चस्य प्रतियोगित्वेनान्वयानुपपत्तेश्च। महिमपदस्य तद्विशेषणतयापि कल्प्यत्वात्, पूर्वोपात्तपुरुषपदार्थजीवस्यैव तत्प्रतियोगित्वौचित्याच्च। भिन्नवाक्यस्थत्वस्यापि तुल्यत्वाज्जुष्टपदस्य महिमपदार्थविशेषणार्थकत्वे व्यवधानाच्च। [1]तस्मादभेदो निर्मूलः, मुक्तौ ब्रह्मसादृश्यमेव जीवस्य प्रामाणिकम्। अयं तु विशेषः मोक्षहेतुज्ञानविषयः सादृश्यं विभुत्वाविनाशित्वेनैव न त्वदेहभिन्नत्वादिधर्मेण तथैव नैयायिकानां लेखदर्शनात्। फलीभूतं तु शोकाभाववत्त्वेनेति सिद्धम्। तथा च श्रुत्यन्तराणि—"आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन। अभयं वै जनक प्राप्तोऽसि तत्र को मोहः कः शोकः एकत्वमनुपश्यतः" इत्याद्यानि। न बिभेतीत्यत्र शोकमात्रस्य निषेध्यत्वात्, अभयमित्यत्राप्यविषयीभावेन भयाभावस्य फलत्वेनाभिधानात्। तथाहि बृहदारण्यकेऽपि[1]—"अथेह जनको वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्मास्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन् वेद यत्र गमिष्यामीति, अथ वै तेऽहन्तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवान्" इति प्रक्रम्य मध्ये जीवपरमात्मानौ प्रतिपाद्य "अभयं वै जनक प्राप्तोऽसि" इति श्रूयते। तस्यायमर्थः—जनकस्य मोक्षस्वरूपज्ञानं कर्त्तुर्याज्ञवल्क्यस्य प्रश्नः। इतो विमुच्यमानः क्व गमिष्यसीति। सन्ति हि वादिनां विप्रतिपत्तयः। केचिद् ब्रह्मस्वरूपेणावस्थानं मोक्ष इति समाचक्षते, अपरे च दुःखध्वंसविशेष इत्यादि। तत्र जीवब्रह्मणोर्विभेदप्रतिपादनेनाद्यपक्षं निरस्य द्वितीयाभिप्रायेणानुमतिमाह—"अभयं वै जनकप्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्याभयं त्वा गच्छताद्यो नो भगवन्नभयं वेदयस इमे विदेहा अयमहमस्मीति"।

---



१—१. नास्ति—क।

यत्तु व्याख्यातम् "अभयमविद्यातत्कार्यं गन्धरहितं तदभावेनाप्यसंसृष्टम्" इत्यादि, तच्चिन्त्यम्; पदार्थत्वाभावादभयपदे बहुव्रीहौ गौरवाच्च, नपुंसकत्वानुपपत्तेश्च। "स एष नेति नेत्यात्मा" इति पुंस्त्वेनैवात्मनः प्रक्रान्तत्वात्। ब्रह्मादिविशेष्यवाचिपदकल्पने गौरवात्। नचाभयं प्राप्तोऽसीत्यत्र प्रथमान्तत्वध्रौव्यात् सप्तद्वीपदक्षिणाप्यत्र तुच्छेति मन्वानः आत्मना सममन्यदपश्यन् गुरुणा दत्तमभयरूपमात्मानं स्वयं गुरुदक्षिणार्थं तमाशीर्वादेन गुरवे दत्तवानित्याहेति स्वयमेव व्याख्यानाच्च। अतोऽभयं त्वा गच्छतादित्यत्रैव भयाभावपरत्वप्रत्याशापि निरस्ता। एकत्वमनुपश्यत इत्यत्रापि भेदं पश्यत इत्येवार्थः।

"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समाने च संख्यायां च प्रयुज्यते॥" इत्युक्तेः।

अस्तु वा केषाञ्चिदर्थानामत्र शक्यत्वाभावस्तथाप्यन्यार्थत्वमनपह्नवनीयमेव। "ष्णान्ताः षट्" इति सूत्रे एकास्ता इत्यत्र "षड्भ्यो लुग्" इत्यस्य प्रवृत्तिमाशङ्क्य "तद्योऽन्यार्थे वर्त्तते तस्येदमिति" **महाभाष्य**दर्शनात्, "एके मुख्यान्यकेवलाः" **इत्यमराच्च**। तथा च भेदज्ञानहेतुको मोहशोकभाव इत्यर्थः। "यत्र सर्वाणि भूतानि आत्मैवाभूद्विजानत" इति पूर्वार्द्धेऽप्येवकारः साम्यार्थः। नचाऽभूदित्येकत्वानुपपत्तिः, त्वयापि छान्दसत्वस्यैव वाच्यत्वात्। भूतानामेककर्त्तृत्वस्य वाच्यत्वादन्यथात्र ह्येते सर्व एकं भवन्तीत्यादौ गत्यभावात्। **मोक्षधर्मेऽपि**—

तज्ज्ञात्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः।
गुणेष्वेवं प्रकाशन्तो निर्गुणत्वात्ततः परम्॥

गुणेषु गुणमध्ये निर्गुणत्वात् विशेषगुणसामान्याभावात्। तेन घटसंयोगादिगुणानां मुक्तात्मनि सत्त्वेऽपि न क्षतिः, परिमाणस्य विशेषगुणत्वाभावात्। इत्यास्तां पल्लवः।

प्रकृतमनुसरामः। मोक्षेऽपिजीवानां ब्रह्मभेद एव न तु तदैक्यमित्येवाभ्यासेन दर्शयति-यथासौम्येत्यादिना। नहि वृक्षरसानामेकत्र समाहारे तदवयवानां वस्तुतस्तादात्म्यमस्ति, किन्तु विविच्यज्ञानाभाव एव। अत एव ते यथा तत्र न विवेकं लभन्ते इत्युक्तम्, विवेकं न लभन्त इत्यस्य भेदनिषेधपरत्वभ्रमनिरासायाह—अमुख्येत्यादि। यद्यप्येतादृशज्ञानाभावः समाहारात्पूर्वमस्ति तेषामचेतनत्वात्, तथापि दार्ष्टान्तिकानां जीवानां वस्तुतो भिन्नानामपि मुक्तावस्थायां ज्ञानाभाव इति प्रतिपादनार्थं दृष्टान्तेऽपि ज्ञानमारोप्य तदभाव उक्तः। यद्यप्यन्यविषयज्ञानाभावेनापि तत्सिद्धिः, तथापि जीवपरयोर्भेदस्य वास्तवत्व-

लाभाय निषेधप्रतियोगिभूतज्ञानविषयत्वेन भेदस्यैवोक्तिः। सति ब्रह्मणि सम्पद्य साम्यं प्राप्यैकीभावेऽपि सम्पद्यतेः शक्त्यभावात्, स्वमपीतो भवतीत्यस्य च व्याख्याततत्वात्। परं ज्योतिः स्वरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यत इत्यत्रापि ब्रह्मविषयकज्ञानस्यैवार्थत्वेनैक्यस्य तदर्थत्वाभावात्। जीवानां प्रथमं नानाशरीरावच्छिन्नत्वेऽपि मुक्तौ तदभाव इत्याह—तदुहेति। प्रथममुक्तं यद्यदनेकशरीरावच्छिन्नजीवास्ते तत्त्वज्ञाने सति तद्ब्रह्म आभवन्ति ईषत्तत्स्वरूपा भवन्ति, शोकाभावत्वेन तत्सादृश्यं न त्वत्यन्ताभेद इत्याकारस्यार्थः। "ईषदर्थे क्रियायोगे" इत्यादौ आङ ईषदर्थत्वप्रसिद्धेः। एवमुक्तौ भेदमुक्त्वा पूर्वमुत्पत्तावपि भेद एवकारमात्रस्य ब्रह्मापेक्ष्य इत्याह—इमाः सोम्येति। प्राक् प्रत्येकस्पन्दनेन भिन्नस्वभावत्वमुक्तं दार्ष्टान्तिके भेदलाभार्थं समुद्रादागम्य समुद्रमेव प्राप्नुवन्ति। स इति। समुद्रलिङ्गोपादाने एवकारः सादृश्यार्थः समुद्रपदस्य तत्सदृशे लक्षणेति विधेयलिङ्गोपादानम्।

ननु समुद्रप्राप्त्यनन्तरं तासां परस्परं समुद्रेण वा सह भेदाभावः, तदाह—ता यथेति। भेदसत्त्व एव भेदेन विदुरिति स्पष्टोऽर्थः। जीवस्य स्वरूपपरित्यागाभावं दर्शयन्नेव जीवब्रह्मणोरभेदं प्रत्याचष्टे—अस्य सोम्येति। पदार्थः स्पष्टः। वावेति निश्चये निपातः जीवापेतमदृष्टविशेषघटितसम्बन्धहीनमिदं शरीरं म्रियते न तु जीवस्तस्य सर्वदैकरूपत्वात्। अतोऽविद्यानिवृत्त्यनन्तरं ब्रह्मभाव इति न शङ्क्यमितिभावः। तत्त्वज्ञानात्पूर्वमीश्वरस्य लौकिकप्रत्यक्षाभाव इति दर्शयन्नेवेश्वरो निमित्तमेव कार्यजातस्य न तु समवायीत्यप्याह—न्यग्रोधफलमिति। अतः वृक्षादाहर आनयेदं भगवः, इति श्वेतकेतोरुक्तिः। इदमानीतं भगवो भगवन्नित्यर्थः, "मतुबसो रु सम्बुद्धौ छन्दसि" इति रुत्वम्। उत्तरत्राप्येवं स्पष्टार्थम्। यं वै सोम्यैतमणिमानं परमाणुं त्रुटिं च न निभालयसे न चाक्षुषविषयकं करोषि। एतस्येति परमाणुत्वेनैक्यं, तथा चैतत्समुदायेन द्व्यणुकादिपरम्परया महतो न्यग्रोधस्यारम्भः, अतस्तेषामेव समवायित्वं न त्वीश्वरस्य। तस्य तु निमित्तत्वमेव। न चात्राप्यणिमपदमीश्वरार्थम्, एतमणिमानमित्यनेन स्थूलावयवभङ्गोत्तरावस्थसूक्ष्मावयवस्यैव प्रक्रान्तत्वेन परामृष्टत्वात्। यत्तु न्यग्रोधमात्रस्येशजन्यत्वोक्तिर्यथा (?) श्रद्धत्स्वेत्यप्यसंगतम्, तत्रासंभावनाविरहात्, इति तन्न; उदाहरणमात्रत्वेन तदुक्तिसार्थक्यात्। दृश्यावयवान्यावयवसद्भावाभिप्रायेण च श्रद्धत्स्वेत्यस्योपपत्तेः। यदपि यमणिमानं निभालयसे। एषोऽणिमा एव न्यग्रोधः दृश्यमानन्यग्रोधसदृश[illegible]स्य नानारूपस्याणिम्नस्तिष्ठति तादृशाणिमनि तिष्ठति।

ननु सूक्ष्मधानामध्ये महान्यग्रोधाभिन्नाणिमा कथं तिष्ठति ? तत्राह–श्रद्धत्स्वेति। संस्काररूपाणिमावस्थायाः सूक्ष्मायामपि धानायां स्थितिः सम्भवतीति, तदपि न; अणिमपदस्य धानापरत्वे मानाभावात्। न निभालयस इत्युक्तिविरोधाच्च। किमत्र पश्यसीत्यादिना तस्यादृश्यत्वोक्तेः। एतत्पदस्य न्यग्रोधपरत्वे बाधकाभावात्। अणिम्न इति तत्सम्बन्धित्वेन तद्भिन्नस्यैव निर्देशौचित्यात्। तादृशाणिमनीति विभक्तिव्यत्ययकल्पने च गौरवात्। संस्काररूपावस्थाया इत्यादिकञ्च तद्धेदं तर्हि अव्याकृतमासीदिति **बृहदारण्यक**व्याख्याने निराकरिष्यामः। एतेन—

"मृदादयो हि दृष्टान्ताः प्रतिज्ञामनुरुन्धते।
धानास्तामनुरुन्धाना भक्तिमार्गं प्रपेदिरे॥"

एकविज्ञानात्सर्वविज्ञानं प्रतिज्ञातं प्रधानम्। तच्च सतः परमाणूनां वा कारणत्वेन विकल्प्येत, अतो न किंचनेत्यनभिव्यक्तिरणिम्न इति सूक्ष्मता चोक्तेति परास्तम्। प्रतिज्ञायाः पूर्वभेदपरत्वेनैव नीतत्वात्, प्रथमाणिमपदेन ब्रह्मणः परामर्शे च बाधकस्योक्तत्वात्। सन्नपि जीवब्रह्मणोर्भेदो मुक्तौ नोपलभ्यत इति सूचयन्नेव संसारिदशायां ब्रह्मणो दुर्ज्ञेयमित्यत्रान्यं दृष्टान्तमाह—लवणमेतदिति। तदेव स्पष्टयति "अत्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति" स्पष्टमेतत्। अत एव स यथा सैन्धवखिल्य इत्यादि **बृहदारण्यके**ऽपि स्पष्ट एव तथार्थ इति पुरस्ताद् व्याख्येयम्। अत्यन्तापरिज्ञातस्यापि ज्ञानमुपायाद्भवत्येवेत्यभिसन्धायाह—यथा सोम्य पुरुष इति। अभिनहनं तु अक्षिबन्धनम्। दृष्टान्तार्थं सङ्गमयति–एवमेवेहेति। आचार्यवत्त्वं सम्बन्धविशेषेण तदुपदेशेन बोध्यम्। अत एव मातृमान् पितृमानाचार्यवानिति ब्रूयादिति **बृहदारण्यक**वाक्ये मातृपित्राचार्यैरनुशिष्ट इति व्याख्यातम्। यावदित्यादिकं तु व्याचक्षते। अस्योत्पन्नतत्त्वज्ञानस्य तावदेव चिरं विलम्बो यावदुत्पन्नेन भुज्यमानेन भोक्ष्यमाणेन वा कर्मणा न विमोक्ष्ये न विमोक्ष्यते, भोगेनेति शेषः। न च तत्र मानाभावः; तत्त्वज्ञानिनां हिरण्यगर्भमनूद्दालकप्रभृतीनां चिरकालावस्थानश्रुतेरेव मानत्वात्। न च तत्त्वज्ञानात् भोगं विनैव कर्मक्षयः।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" इति श्रुतेः।
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा॥

# पंचमोंऽशः

बृहदारण्यके समामनन्ति—"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपमिति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदं रूपमिति स एष इह प्रविष्टः। आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्त्यकृत्स्नो हि सः प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यञ्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव। स योऽत एकैकमुपास्ते न वेदासकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति। तदेतत्पदनियमस्य सर्वस्य यदायमात्मानेन ह्येतत्सर्वं वेद। यथा ह वै पदेनाऽनुविन्देदेवं कीर्त्ति श्लोकं विन्दते य एवं वेद॥ तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति॥ तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेद्यस्मात्सर्वमभवदिति॥ ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत्तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाऽभूत्या ईशते। आत्मा ह्येषां स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः" इति।

अस्यार्थः—ह प्रसिद्धं तर्हि प्रलयकाले तदिदं कार्यजातमव्याकृतं प्रागभावप्रतियोग्यासीत्। तत्कालीनप्रागभावक इति यावत्। व्याकृतपदस्योत्पत्त्यर्थकत्वात्, कार्यत्वेन चोत्पत्तिलाभात्। उक्तं च "सन्यङोः" इति सूत्रे **महाभाष्ये** "करोतिरयमभूतप्रभूतप्रादुर्भावे दृष्टः" इति। **वैयाकरणभूषणेऽपि**—

कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते।
किन्तूत्पातममेवातः कर्मवत्स्याद्यगाद्यपि।
कर्मकर्त्तर्यन्यथा तु न भवेत्तद्दृशेरिव॥ इति।

बोध्यम्। "सत्येन तप्तपरशुं गृह्णतो मोक्षवत् सत्यब्रह्मज्ञानान्मोक्ष उक्त" इति **कल्पतरुकृतः**। "अनृताभिसन्धत्वप्रयुक्तबद्धत्वसाधर्म्येण स्तेनः संसारिणां सत्याभिसन्धत्वप्रयुक्तमुक्तिरूपसाधर्म्येणास्तेन ऐक्यज्ञानिनां दृष्टान्तः" इति **चन्द्रिकाकृतः**। सत्यब्रह्मज्ञानं त्वस्मन्मतेऽद्वैतविषयकं नेत्येव विशेष इति दिक्। तत्तस्मादस्योद्दालकस्योपदेशाद्विजज्ञौ ब्रह्मज्ञानवान् श्वेतकेतुः। अभ्यासः प्रकरणसमाप्तिबोधक इति बोध्यम्। यत्र तत्त्वमसीति वाक्योपदेशादेव ब्रह्मसाक्षात्कार इति वेदान्तिनः, तत्र वक्ष्यामः।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**वाचारम्भेत्यादितत्त्वमस्यन्तश्रुतिरूपणम्॥**

—:*:—

# पंचमोऽशः

बृहदारण्यके समामनन्ति—"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूपमिति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदं रूपमिति स एष इह प्रविष्टः। आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्त्यकृत्स्नो हि सः प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव। स योऽत एकैकमुपास्ते न वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति। तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद। यथा ह वै पदेनाऽनुविन्देदेवं कीर्त्तिं श्लोकं विन्दते य एवं वेद॥ तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति॥ तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेद्यस्मात्सर्वमभवदिति॥ ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत्तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाऽभूत्या ईशते। आत्मा ह्येषां स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः" इति।

अस्यार्थः—ह प्रसिद्धं तर्हि प्रलयकाले तदिदं कार्यजातमव्याकृतं प्रागभावप्रतियोग्यासीत्। तत्कालीनप्रागभावक इति यावत्। व्याकृतपदस्योत्पत्त्यर्थकत्वात्, कार्यत्वेन चोत्पत्तिलाभात्। उक्तं च "सन्यङोः" इति सूत्रे **महाभाष्ये** "करोतिरयमभूतप्रभूतप्रादुर्भावे दृष्टः" इति। **वैयाकरणभूषणेऽपि**—

> कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते।
> किन्तूत्पातममेवातः कर्मवत्स्याद्यगाद्यपि।
> कर्मकर्त्तर्यन्यथा तु न भवेत्तद्दृशेरिव॥ इति।

अस्यार्थः—सकर्मकत्वानुरोधेन कृञ उत्पत्त्यर्थकत्वम्, अत एव क्रियते कटः स्वयमेवेति कर्मकर्त्तरि यक्। यत्नमात्रार्थकत्वे तु[1] दृश्यते घटः स्वयमेवेतिवन्न स्यात्। यत्नस्य कर्मस्थत्वाभावाद्। दृशेः सकर्मकत्वेन कर्मस्थफलवाचित्वेऽपि प्राप्ये कर्मणि कर्मवद्भावानङ्गीकारात्। तदुक्तम्—

निवर्त्ये च विकार्ये च कर्मवद्भाव इष्यते।
न तु प्राप्ये कर्मणी*ति सिद्धान्तो हि व्यवस्थितः॥ इति।

प्राप्यत्वञ्च क्रियाकृतविशेषेणानुपलभ्यमानत्वम्। घटं करोति सोमं सुनोतीत्यादौ निवर्त्त्ये विकार्ये च कर्मणि तद्दर्शनेनायं घटः केनचित्कृतः, अयं सोमः केनचित्संस्कृत इति यथायथं ज्ञानात्। देवदत्तेन दृष्टे गते च ग्रामे दृष्टेऽप्ययं ग्रामः केनचिद् गतो दृष्टो वेति विज्ञानानुदयात्। तदुक्तं **वाक्यपदीये**—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥ इति।

यत्र क्रियाकृतो विशेषो दृश्यते, यथा छिन्ने काष्ठादौ, तत्र कर्मस्था क्रिया, अन्यत्र तु कर्त्तृस्थैवेति भावः। तस्मात्कर्मस्थक्रियाणामेव कर्मवद्भाव इति।

ननु नैयायिकमते यत्न एव कृञर्थः, यत्नार्थककरोतिना विवरणेनाख्यातस्य यत्ने शक्तिस्वीकारात्।

भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः॥

इति **कुसुमाञ्जल्यादौ** दर्शनादिति चेत्; किं ततः; प्रमाणसत्त्वे उत्पत्तावपि शक्तिस्वीकारे बाधकाभावात्। अत एव रत्नकोशकृद्भिरुत्पत्तिरेवाख्यातकृञोऽर्थ उक्तः। आख्यातस्थले तु शक्यतावच्छेदकलाघवेन यत्नवाचित्वं स्वीकृतमिति वैषम्यमित्यास्तामप्रासङ्गिकम्। तन्नामरूपाभ्यामेव व्याक्रियत उदपाद्यत शब्दविशेषवाच्यत्वसंस्थानविशेषादिविशिष्टत्वेन परस्परव्यावृत्तत्वेनोपपाद्यतेति यावत्। तदेव स्पष्टयति–असौ नामायमिदं रूपमिति। इदंरूपपदं समस्तमिति विशेषः। तदिदमित्यादि स्पष्टम्।

यत्तु तत्सत्त्वेनासत्त्वेन स दृष्टत्वेन च चिदेकरसादसंगात्मनोऽद्वितीयाद्भेदेन चानिर्वाच्यं हृ प्रसिद्धं शुक्तिरजताद्युपादानत्वेन लोकेऽस्मिन्नज्ञातं हिरण्यगर्भस्य विराट् पटस्थचित्रम्। व्याकृतनामरूपं नामरूपकर्मा-

१. ऽपि–ख। * एतावदेव एशियाटिक-सोसाइटीस्थो ग्रन्थः, ख. संज्ञया योऽस्माभिष्टिप्पण्यां व्यवहृतः।

त्मकं निखिलं जगत् तर्हि सूत्रभूतहिरण्यगर्भमूर्त्युत्पत्तेः प्राक्कालेऽव्याकृतं स हिरण्यगर्भविराट् स्पष्टनामोपलक्षितमनादीदं जायमानं जीवमज्ञानं वटबीजोपमं चिदेकरसासङ्गात्मनि वर्तमानमात्मविषयमहमज्ञ इति प्रत्येकं प्राणिभिरनुभूयमानमासीत्। स्पष्टं तत्। आत्मस्थमज्ञानं कारणरूपं हिरण्यगर्भादिकार्य्यात्मना नामरूपाभ्यां [ ग्रा ] ह्यादिनाम्ना ज्ञानक्रिया-शक्त्यादिरूपेण च वर्णितं तेन निखिलं जगदनुपमृद्य प्रागवस्थं स्रजि सर्पवत्। अव्याकृतवटबीजावस्थो वट इव नामरूपात्मना व्याक्रियते, तथैवमुभयत्र संबध्यते तदेव नामरूपाभ्यामेव न त्वन्यथा व्याक्रियत विविधं नाना नामरू-पात्मना समंतादक्रियत, इत्यादि, तच्चिन्त्यम्; स्वकल्पितपदार्थमूलकत्वेन श्रौतशब्दानूह्यत्वात्। अव्याकृतपदस्य जन्यजातसूक्ष्मावस्थारूपज्ञानपरत्वस्य क्वचिदप्यक्लृप्तत्वात्, उपसर्गप्रकृत्यर्थत्वाभावाच्च।

ननु कार्याणां स्थूलावस्था सूक्ष्मावस्था चावश्यमङ्गीकार्या। तत्राद्या मुद्गरपातादिना द्वितीया त्वात्मतत्त्वज्ञानेनैव निवर्त्तत इति चेत्; अत्र वक्ष्यामः।

ननु पूर्वघटादेः सूक्ष्मावस्थानङ्गीकारे तस्यासीदिति कर्तृत्वानुपपत्तिः। एवं "भूतग्रामः स एवायं भूत्वा भूत्वा विलीयते" इत्यादि स्मृतावपीति चेत्, अत्रोच्यते; शब्दप्रयोगस्य प्रयोक्त्रा तस्य बुद्धिस्थीकृतत्वेनैवोपपत्तेः। अङ्कुरो जायत इत्यादौ तथैव शाब्दिकैः समर्थितत्वात्, कारणत्वस्य च स्वस्य स्वं प्रत्यनङ्गीकारात्। किञ्च त्वन्मतेऽपि पूर्वं घटो नासीदित्यत्र घटपदं न सूक्ष्मा-वस्थापरं व्याघातात्। न स्थूलावस्थापरं व्याघातादेव। पूर्वं तदसत्त्वस्य त्वयाभ्युपगमात्। न चैकरूपेण पूर्वसत्त्वमन्येन चासत्त्वमेकस्यैवास्ति, तावतैव त्वत्तो विशेषः, त्वया सर्वात्मनैव पूर्वमसत्त्वाङ्गीकारादिति वाच्यम्; अप्रयो-जकत्वात्। कर्तृत्वस्य पूर्वासत्येव रूपे विश्रामात्। रूपान्तरेण पूर्वसत्त्वाङ्गी-कारस्य पाटच्चरपरिलुण्ठितेऽपि वेश्मनि यामिकजागरणवृत्तान्तानुहारित्वात्। सूक्ष्मरूपावच्छिन्नस्य कर्तृत्वे विलीयत इत्यत्रानन्वयापत्तेः। सूक्ष्मरूपेण घटस्य ब्रह्मसाक्षात्कारात्पूर्वं त्वया विलयानङ्गीकारात्। "रात्र्यागमेऽत्रशः पार्थ प्रभवत्यहरागमे" इत्युत्तरार्धे उत्पत्त्यभिधानविरोधाच्च। अविद्यारूपपूर्वा-वस्थाया अनादित्वात् स एवायमित्यस्य तु तज्जातीय इत्येवार्थः। त्वन्मते-ऽप्युत्पत्तिविलयप्रतियोगिन्याः स्थूलावस्थाया भेदेन तथैव वाच्यत्वात्। अत एव भारतादौ—

यथर्त्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥

इति दृष्टान्तेन तथैव स्पष्टीकृतम्।

किञ्च घटो भविष्यतीत्यत्र घटस्य स्थूलावस्थां प्रति सूक्ष्मरूपेण कर्तृत्वस्वीकारेऽपि ब्रह्मज्ञानानन्तरमविद्यासहकार्येण न भविष्यतीत्यत्राविद्यायास्तत्कार्याणाञ्च कथं कर्तृत्वनिर्वाहः। तदुत्तरं त्वया घटादेः सूक्ष्मावस्थाया अप्यनङ्गीकारात्तादृशरीत्यैव पूर्वमव्याकृतमासीदित्यादावपि निर्वाहो युक्त इति। तिष्ठतु तावत्।

सृष्टेः जीवभोगार्थत्वं वदन्नेव शरीरमधिकृत्याह—स एष इति। जीव इह शरीरे प्रविष्टः, व्यापकत्वेऽप्यदृष्टविशेषघटितसम्बन्धस्य तत्रैव सत्त्वात्। आनखाग्रेभ्य इति। मर्यादायामाङ्, तेषां शरीरबहिर्भावात्तस्य त्वगवसानात्। तथापि दुर्ज्ञेय इत्याह—यथा क्षुर इति। "क्षुराधाने" इत्यधिकरणे ल्युट्, पुरुषकृत्यनधीनमपि स्थलं दृष्टान्तयति—विश्वम्भरो वेति। विश्वस्याशनपानादिना भरणादग्निः कुलाये तृणारणिमण्यादाविति लोकदृष्टो दृष्टान्तः।

ननु सर्वोऽप्यात्मानं जानात्यहमस्मीति तत्कथमुक्तं तन्न पश्यन्तीत्यत आह—अकृत्स्नो हि स इति। हि यतः स उक्तज्ञानविषयीभूतः, अकृत्स्नो मिथ्याज्ञानोच्छेदशक्तिहीनः देहाद्यतिरिक्तत्वेन तज्ज्ञानस्यात्मानवगाहितत्वात्। अत एव **बौद्धाधिकारे** "नैसर्गिकमात्मज्ञानमतत्त्वज्ञानमेव" इति।

स्वयमिन्द्रियादीनामात्मत्वाभावमाह—प्राणन्नेवेति। प्राणव्यापारं कुर्वन्नेव प्राणो भवति प्राण एवात्मेति मन्दैर्गृह्यते। तथा च **वैशेषिकसूत्रं** "प्राणापाननिमेषोन्मेषे" इत्यादि प्रक्रम्य "आत्मनो लिङ्गम्" इति प्रयोगस्तु शरीरे विकृतो वायुर्भोक्तृप्रयत्नवत्प्रेरितः, असति संमूर्च्छने विकृतक्रियवायुत्वात्, भस्त्रावायुवत्, वायोस्तिर्यग्गतेरेव स्वाभाविकत्वेन ऊर्ध्वाधोगतेर्विकृतित्वम्। एवमुत्तरत्राप्यूह्यम्। अस्यात्मनो यानि कर्माणि तदधीनान्येतानि नामानि न त्वेतदर्थानामात्मत्वम्। स यः कश्चित्ततः प्राणादीनां मध्ये एकैकमात्मत्वेनोपास्ते, स न वेद प्रमात्मकज्ञानविरहात् ज्ञानाभावोक्तिः। अस्य ज्ञानं नास्तीत्यादौ तथैव स्वीकारात्।........।

अकृत्स्नो ह्येष इत्युक्तार्थः। यद्वा एष प्राणादिरकृत्स्नः भूतत्वेन ज्ञानवदात्मकार्यसाधनासमर्थः वागादिराहित्येऽपि ज्ञानोदयाच्च। एवं चक्षुराद्येकैकेन्द्रियाभावेऽपि यथासम्भवं योज्यं तदाह—अत एकैकेन भवति इति। अकृत्स्नो भवतीत्यन्वयः। कीदृशं तर्ह्यात्मज्ञानं मुक्तिहेतुरत आह—आत्मेत्येवो-

पासीतेति। एवकारेण प्राणाद्यभेदेन ज्ञानस्य व्यावृत्तेः। अत्र ह्यात्मन्येते सर्वे प्राणादय एकं भवन्ति। स्वस्वव्यापारेण तद्गुणज्ञानाद्युत्पत्तावुपयुज्यन्ते। यद्वा अत्रात्मनि सर्वे एते प्राणादय एकं भवन्ति, आत्मनिष्ठतादात्म्यप्रतियोगित्वेन ज्ञायन्ते। तथा चोक्तान्यतरौपाधिकमेकत्वमितिभावः। अतस्ते आत्मत्वेन नोपास्याः।

यत्त्वात्मैवेत्येवमात्मस्वरूपमात्रमत्र श्रवणादिसाक्षात्कारपर्यन्तायामुपासनायां सत्यां सर्वे पृथिव्याद्यर्था एकं केवलं स्वकालपूर्वकालवर्त्ति यत् ज्ञातात्मस्वरूपं तदात्मका भवन्ति। चरमज्ञानविषयत्वविशिष्टात्मनो दृश्यकालपूर्ववर्त्यन्यत्वादिति। तच्चिन्त्यम्; तादृशव्युत्पत्तेरसिद्धत्वात्। एतेन सर्व इत्यनेन प्रकृतपरामर्शेऽपि प्रपञ्चमात्रस्य परामर्शासम्भवात्, नामरूपापेक्षया प्राणादीनामेव सन्निहितत्वाच्च। ज्ञानाकारपरामर्शकेतिशब्दोत्तरवर्त्तिनैवकारेणात्मत्वान्यप्रकारकत्वस्यैव ज्ञाने व्यवच्छेत्तुं शक्यतया आत्मभिन्नस्य व्यवच्छेदबोधासम्भवाच्च। घट इत्येव ज्ञानमित्यादौ तथैव व्युत्पत्तेः। घट एवेत्यस्य ज्ञानमित्यादौ त्ववघटान्यव्यवच्छेदबोधस्य प्रतीतावपि ज्ञानविशेषणतयैव घटान्यव्यवच्छेदस्य प्रतीयमानतया घटान्यस्य मिथ्यात्वप्रत्ययाभावाच्च। ज्ञानावच्छेदकतया प्रत्ययस्य सत्तानिश्चयानात्मकत्वात्। अतो भिन्नक्रमत्वकल्पनयापि न निस्तारः, मुक्तिहेतुज्ञानस्यात्मान्यविषयकत्वप्रतिपादनमात्रे तात्पर्येणात्मान्यस्यासत्त्वे तात्पर्यविरहात्। साधकाभावाद्बाधकसद्भावाच्च, शब्दमर्यादयापि तत्प्रत्ययाभावाच्च, इतिदिक्। अपि च हिशब्दोपबन्धादेकं भवन्तीत्यस्य मानान्तरसिद्धार्थानुवादकत्वान्नाद्वैते प्रामाण्यम्। अत एवोक्तं भट्टैः "अनुवादश्च यथा विज्ञातस्य भवति, अतः शब्देनैवाभ्यनुज्ञातं यादृशं वयमत्र कारणत्वं सूर्ये पश्यामस्तादृशमिदं सङ्कीर्त्यत इति" इति। अतश्च स्वकालेत्याद्यर्थकल्पनं न युक्तम्। न च निश्चयार्थमेवायं हि-शब्द इति वाच्यम्; हेत्वर्थत्वाभावे नियामकाभावात्। तथापि भवदिष्टासिद्धेश्च।

वस्तुतस्त्वत्रात्मसाक्षात्कारे सति सर्व एवेति ते जीवा एकं केवलं विशेषगुणरहितं यथा स्यात्तथा भवन्ति विद्यन्ते। एतेन—

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥

इति **आथर्वणश्रुति**रपि व्याख्याता।

न च विशेषगुणव्यावृत्तेरेकपदतात्पर्यविषयत्वे प्रमाणाभावः "दुःखेनान [तो] विमुक्तश्चरति शरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इत्याद्यनेकप्रमाणानां सत्त्वात्। त्वदुक्तार्थे च तदभावात्। तदर्थकत्वाभिमत-श्रुत्यन्तरादावप्यर्थस्यान्यथैव वाच्यत्वात्। दुखःनिवृत्तेश्च मोक्षे सर्ववादिसम्मतत्वात्। तदुक्तमाचार्यैः—

"न हि मुक्तस्य दुःखं प्रत्यापद्यत इति कश्चिदुपैति" इति। दुःखादयः सांख्यमते प्रकृतेः वेदान्तिमते चान्तःकरणस्य धर्माः, इत्यन्यदेतत्। यद्वा **आथर्वणश्रुतौ** परोऽव्ययः इति परमात्मनोऽपि निर्देशात्। एकपदस्य सदृश एवार्थः परमात्मसदृशो भवन्तीत्यर्थः। दुःखाभाववत्त्वेन च परमात्मसादृश्यं पूर्वमसिद्धमेव तत्त्वज्ञानोत्तरं भवतीति च्विप्रत्ययसङ्गतिः। एवञ्च तदेक-वाक्यतया एकं भवन्तीत्यत्रापि तथैवार्थः। क्रियाविषेणत्वं परमत्र विशेषः, तादात्म्यप्रतियोगित्वेन परमात्मना परैरप्येकत्वान्वयस्य वाच्यत्वात्।

यत्तु तेनैकदिगित्यादावेकशब्दस्य सदृशे न शक्तिः, **अमरादावनुक्तत्वात्**, किन्तु लक्षणैवेति, तन्न; सर्वनामसंज्ञासूत्रस्य **कौस्तुभादिविरोधात्**। **अमरस्य** प्रदर्शनमात्रपरत्वाच्च। अन्यथा संख्यायामप्येकशब्दस्य शक्त्यनापत्तेः। न चेष्टापत्तिः; षट्संज्ञासूत्रीय**महाभाष्य**विरोधात्। न च केवलपदेन तत्संग्रहः, अन्यत्र पृथगेव तदर्थोल्लेखात्, परोक्तार्थरूपकैवल्येऽपि शक्त्यभावाच्च। नहि भूतले केवलं देवदत्त इत्यादौ देवदत्तभिन्नत्वावच्छिन्नव्यवच्छेदप्रतीतिः। भूतलत्वद्रव्यत्वतद्रूपादीनां सत्त्वात्। तत्र संकोचकप्रमाणमस्ति, न त्वत्रेति चेन्न; प्रत्यक्षादेः बहुशः प्रमाणस्य दर्शितत्वात्। प्रत्युत भवदुक्तार्थ एव कुत्रचित्प्रयोगविरहात्। यद्वा, एकं केवलत्वं भवन्ति लभन्ते। भूप्राप्तावात्मने-पदीति पाठात्। णिजभावपक्षेऽप्यात्मनेपदविकल्पस्य सर्वसम्मतत्वात्। अर्थः प्राग्वत्। न च धर्ममात्रपरत्वे लक्षणादोषः परोक्तलक्षणापेक्षयाभ्यर्हित-त्वादित्यास्तां विस्तरः।

तदेतदात्मतत्त्वं सर्वस्यापादनीयं ज्ञातुमर्हम्। "गत्यर्था धातवो ये ये ज्ञानार्थास्तेऽपि कीर्त्तिताः" इति न्यायात्। तेन सर्वस्येति नासङ्गतम्। फलोपधानस्य विशिष्टशरीरपरिग्रहसाध्यत्वेऽपि योग्यतायाः कीटादावप्यन-पायात्। अनेन हि परमार्थतो ज्ञातेनैतत्सर्वं प्राणादिकं वेद यत् तद्व्यापार-हेतुतयादृष्टद्वारा जन्यतया वेतिभावः। अत एवाह—यथा ह वै पदेनानु-विन्देतेति। पदेन दृष्टेन यथा तत्सम्बन्धी गवादिरनुमीयते स्मर्यते वा

तद्वत्कार्येण कारणानुमानम्, प्राणन्नेवेत्यादिवाक्ये व्याख्यातार्थस्य निगमनञ्चैतत्। अत एव तादात्म्यशङ्कापि निरस्ता।

यत्तु कारणज्ञानेन तत्कार्यज्ञानं प्रसिद्धं तत्परित्यज्य प्रौढिमाश्रित्य दृष्टान्तमाह—यथेति। पदेन मार्गेण गवादेः प्रतिविम्बितेन खुरेण गवादिपदार्थं नष्टं खुरादत्यन्तभिन्नमनुगच्छन् प्राप्त्यर्थमनुविन्देत्प्राप्नुयात् इत्यादि, तच्चिन्त्यम्; स्वकल्पितस्य वास्तवत्वे श्रौतस्य चार्थस्य प्रौढित्वे प्रमाणाभावात्। गुणफलमप्याह–कीर्त्तिं श्लोकं विन्दते य एवं वेदेति। कीर्त्तिःख्यातिः श्लोक इष्टसंयोग इति व्याख्यातारः।

ननु मोक्षे प्रवृत्तिर्न युक्ता दुखःवत्सुखस्याप्युच्छेदादत आह—तदेतदिति। वक्ष्यमाण**मैत्रेयीब्राह्मण**वाक्यवद्व्याख्या। तदेव द्रढयति—स योऽन्यमिति। यो विरक्तो रागी आत्मनो व्यतिरिक्तः प्रिय इति ब्रुवाणं वादिनमन्यं वा ब्रूयात्कथयेत्, किं कथयेत्प्रियमिष्टं वस्तु रोत्स्यति नङ्क्ष्यति तवेति शेषः। वाक्यमात्रं व्यावर्त्तयति–तथैव स्यात् फलोपहितमेव तद्वाक्यं स्यात्। तस्मादात्मभिन्नस्य प्रियत्वं स्वप्नेऽपि नाशङ्क्यम्। तस्मादात्मानमेव प्रियमुपासीत। तस्य फलमप्याह—न हास्येति। प्रमायुकं नश्वरं वित्तादिरूपस्य प्रियस्य नश्वरत्वाज्जीवात्मरूपस्य च प्रियस्यानुच्छेदादिति भावः। जीवस्यैव ब्रह्मत्वाविर्भावो मोक्ष इति मतं प्रत्याह—तदाहुरिति। ब्रह्मविद्यया ब्रह्मसाक्षात्कारेण सर्वं भविष्यन्तः सर्वाभिन्नब्रह्मतादात्म्यं प्राप्स्याम इति मन्यमाना मनुष्या अद्वैतवादिनो मन्यन्ते मननं कुर्वन्ति श्रवणनिदिध्यासनयोरप्युपलक्षणम्। यदिति तन्मतानुवादः। दूषयति—किमु तद्ब्रह्मावेत्। किमु इत्याक्षेपे, कीदृशं ब्रह्म संज्ञातवान्, विदज्ञाने इत्यादि गणपठितस्य लङि रूपम्। यस्माद् ब्रह्मज्ञानात्तत्सर्वं सर्वाभिन्नब्रह्मात्मकमभवत्। पूर्वोक्तरीत्या श्रवणादौ प्रवृत्तस्य यत्सर्वाभिन्नब्रह्मतादात्म्यप्राप्तिरिति मन्यन्ते तेषां ज्ञेयं ब्रह्म कीदृशमद्वैतस्याप्रामाणिकत्वात् ब्रह्मज्ञानमेव तेषां नास्ति। अद्वैतांशविषयकत्वेन विशिष्टज्ञानस्य भ्रमत्वादिति वाक्यार्थस्याहुरित्यत्र कर्मत्वम्। आहुर्विचारशालिनो वृद्धा इति भावः। तर्हि का गतिर्ब्रह्मैवेदं सर्वमित्यादिवाक्यानामत आह—ब्रह्म वा, इति। अग्रे सृष्टिपूर्वकाले ब्रह्म आसीत्स्पष्टम्। तद् ब्रह्म आत्मानमेवावेत् व्यजानात् सृष्टिकर्त्तृत्वेनेति भावः। तदेव दर्शयितुं ज्ञानस्वरूपमाह—अहं ब्रह्मास्मीति। बृंहयति प्रजा वर्द्धयतीति व्युत्पत्तेः, तस्मात्सर्वकर्त्तृत्वात्तद् ब्रह्म सर्वतादात्म्यादित्यर्थः। अत एव **भारतम्**—

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः ।
सर्वस्य च सदा ज्ञानात्सर्वमेनं प्रचक्षते ।। इति ।

एतद्व्याख्यानञ्च **मैत्रेयीब्राह्मणव्याख्यायां** पल्लवयिष्यामः । एवमुक्तस्यापि ब्रह्मसादृश्यमेव न तु ब्रह्मभेदद्वारकं सर्वतादात्म्यमिति स्पष्टयति–तद्यो देवानामिति । व्याख्यातमेतत् । न केवलं देवानामेव ब्रह्मज्ञानाधिकारोऽपि त्वन्येषामपीत्याह––तथर्षीणां तथा मनुष्याणामिति । तेषां मध्ये यो ब्रह्मसाक्षात्कारवान् स एव ब्रह्मसादृश्यं प्राप्तवानित्यर्थः । तथर्षीणामित्यंशं विशिष्य दर्शयति––तद्धैतदिति । ह प्रसिद्धं तदेतदुक्तं ब्रह्म पश्यन् साक्षात्कुर्वन् वामदेवनामा ऋषिः प्रतिपेदे प्रतिपन्नः । प्रतिपत्तिस्वरूपमाह—अहं मनुरभवं सूर्यश्चेति । यथा मनुसूर्यौ ब्रह्मसाक्षात्कारवन्तौ तथाहमपि । उक्तञ्च **भगवद्गीतायाम्**—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् प्राह मनवे मनुरिक्ष्वाकवेऽब्रवीत् ।। इत्यादि ।

परमतेऽपि वामदेवस्यात्मनि ब्रह्माभेदमभिप्रेत्यैव स्वस्य मनुतादात्म्योक्तिरिति वाच्यत्वात्, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति सूत्रे तथैव दर्शनाच्च । अभवदित्युपलक्षणं भवति । भविष्यन्ति चेत्याह––तदिदमिति । अपिशब्दो भिन्नक्रमः । "एतर्हि संप्रतीदानीम्" **इत्यमरः** । अहं ब्रह्मास्मीत्येवं यो वेद जानाति स इदं सर्वं पूर्वोक्तं भवति, ब्रह्मसदृशो भवतीति यावत् । अपुनरावृत्तिमाह–तस्य हेति । देवाश्चन देवा अपि तस्य मुक्तस्याभूत्यै उक्तब्रह्मीभावस्य व्यावृत्तये न ईदृशं तेन समर्था भवन्ति । कुत इत्यत आह–हि यतः तेषां देवानां आत्मा भवतीति हेत्वथवादः । देवास्तर्हि कुत्र विघ्नं कुर्वन्ति इत्यत आह–अथ योऽन्यामिति । यो ब्रह्मभिन्नामिन्द्रादिदेवतामुपास्ते स न वेद स न जानाति । यागादिप्रवृत्तिर्धर्मपरत्वेन समीचीनज्ञानाभावात् । यद्यप्यहमित्यात्मानं जानाति तथापि तावन्मात्रं पशुसाधारणमित्यत आह–यथा पशुरिति । अन्योऽसावन्योऽहमिति ज्ञानस्य पशावपि सत्त्वादहमिति ज्ञानमात्रेण न निस्तारः । असावित्यत्र यत्किञ्चिदर्थपरत्वं न तु देवतापरत्वमेव । अन्य इति पुंलिङ्गानन्वयापत्तेः । अत्र भेदज्ञाननिन्दायां न तात्पर्यं किन्त्वहमिति ज्ञानस्य पशुसाधारण्यदर्शन एव । न हि त्वन्मतेऽपि यत्किञ्चिद्भेदज्ञानं निन्द्यं किन्तु जीवब्रह्मभेदज्ञानमेव । नचात्र तल्लभ्यम्, एवमेव सोऽनात्मज्ञः पुरुषो देवानां पशुः यज्ञादिद्वारा तत्तृप्तिहेतुत्वात् । पशुत्वमुपपादयति–यथेति । बहवो गवाद्याः पशवो यथा मनुष्यं भुज्युर्दुग्धादिना पालयेयुः, एवमेकैकः पुरुषो

देवान् भुनक्ति यागादिना तर्पयति । अतो मुक्तिप्रवृत्तस्य देवा विघ्नं कुर्वन्तीत्यत आह—एकस्मिन्नेवेति । एवकारोऽप्यर्थे । पशावादीयमाने चौरादिभिर्गृह्यमाणेऽप्रियं भवति पशुस्वामिनः बहुषु तु ह्रियमाणेषु किमु वक्तव्यम् । एवं देवपशौ मनुष्येऽपि मुच्यमाने देवानां तत्कृतोपकारहानेः । तस्मान्मनुष्या एतदात्मतत्त्वं विद्युरिति यत्तद्देवानां प्रियं न भवति । अतस्तत्र प्रतिबन्धे प्रवर्त्तते । तथा च **भाल्लविब्राह्मणे** श्रूयते–

मुक्तेर्हि बिभ्यतो देवा मोहेनापि दधुर्नरान् ।
तेन ते कर्मसूद्युक्ताः प्रावर्त्तंत दिवानिशम् ॥ इति ।

एतन्मूलकमेव **पाद्मे** स्मर्यते–

नित्याग्निहोत्रिणो विप्रास्सन्ति ये गृहमेधिनः ।
त एव सर्वफलदाः सुराणां कामधेनवः ॥
भक्ष्यं भोज्यं च पेयञ्च यद्यदिष्टं सुपर्वणाम् ।
अग्नौ हुतेन हविषा तत्सर्वं लभ्यते दिवि ॥
नान्यदस्ति सुरेशानामिष्टसिद्धिप्रदं दिवि ।
दोग्ध्री धेनुर्यथा नीता दुःखदा गृहमेधिनाम् ।
तथैव ज्ञानवान्विप्रो देवानां दुःखदो भवेत् ॥ इत्यादि ।

ततश्च मुक्तिपूर्वमेव देवानां विघ्नसामर्थ्यं न तु तत्सिद्धाविति निर्भयएवायं पदविशेषः । अतो नरेश्वरेभ्यः स्वर्गादिभ्यो मनो व्यावर्त्त्य मुक्त्यर्थमेव यतनीयमिति भावः ।

यत्तु व्याख्यातं तत्प्रसिद्धं वक्ष्यमाणमाहुः कथयन्ति विचारं कुर्वन्तो ब्राह्मणाः । यत्सार्वात्म्यं मन्यन्त इत्यनेन योज्यम् । मननप्रकारमाह—ब्रह्मविद्यया ब्रह्मणः सत्यज्ञानादिलक्षणस्य विप्रस्य तादात्म्यलक्षणेन साक्षात्कारेण सर्वं निखिलं भविष्यन्तो भविष्यामः । मनुष्याः मनुजोपलक्षिता अधिकारिणः मन्यन्ते मननं कुर्वते ; इतिशब्दाध्याहारेण योजना । अधिकारिणो ब्रह्मविद्यया सार्वात्म्यं गमयिष्यामः, इति मन्यन्ते तद्दुर्घटमित्याहुर्विचारकाः । दुर्घटमितीति बहिः । दौघटचे कारणमाहुः—स किमु उ अपि किं प्रश्ने, आक्षेपे वा, तत् सत्यज्ञानादिलक्षणसर्वाभिन्नं किं ब्रह्म बृंहत्यर्थरूपं किं स्वात्मनो भिन्नं अवेत् ज्ञातवत् द्वितीयाभावात्, किमुत ब्रह्मेति तन्त्रेणोच्चारितं द्रष्टव्यम् । ततः किमुत ब्रह्मासीत्यपरः प्रश्नः । यद्यपि सत्यज्ञानादिलक्षणं प्रसिद्धं ब्रह्म तथापि ब्रह्मविद्यया सर्वात्मभावं प्राप्तमप्रसिद्धं यस्मात्स्वात्मनो भिन्नस्याभिन्नस्य ज्ञानात्तद्ब्रह्म सर्वमभवत्सर्वतादात्म्यमगमत् । विनापि ज्ञानेन चेत्तत्सर्वमभव-

त्किमधिकारिणां तन्मूषकभक्षितमित्यभिप्राय:। सिद्धे धर्मिणि धर्म इति न्यायात्। किमु तद्ब्रह्मापीति विचारकारणं प्रश्नं हृदि निधाय श्रुतिरुत्तरमाह–ब्रह्मैव सत्यज्ञानलक्षणं प्रसिद्धमेव। प्रसिद्धिमुपपादयति–इदं नानाप्रत्ययविषयभूतं विश्वमग्रे विश्वोत्पत्तेः पूर्वमासीत् अभूत् तदेव न विश्वमित्यर्थः। अतो ब्रह्मविद् यथा सर्वात्मभावं प्राप्त यत्सर्वात्मरूपं स्वभावतो न तस्मादन्यत्तत्। यद्यपि भिन्ने ज्ञानेऽस्त्येव दोषः, तथापि नाभिन्न इति मन्वानाः। तत्किमवैदित्यस्योत्तरमाह––तद् ब्रह्म सर्वात्मभूतं स्वभावतः। अविद्यया असार्वात्म्यमिव प्राप्तः आत्मानमेव स्वरूपं सत्यज्ञानादिलक्षणं नान्यत्। अवेत् ज्ञातवत् तस्मादात्मज्ञानाद्विनाधिकारिणामपि न सर्वात्म्यमित्यनेनैवोत्तरं द्रष्टव्यम्। आत्मज्ञानानुकरणमहं चिदेकरसं ब्रह्म शब्दलक्ष्यं ब्रह्म ब्रह्मास्मीति तस्मात्सर्वमभवत् तस्मादात्मज्ञानात्पूर्वं सर्वमेव सत्; यदविद्यया सर्वमिवाभूत् सुगममन्यदिति। तत्सर्वं चिन्त्यम्; ब्रह्मणोऽपि ब्रह्मज्ञानेन सर्वतादात्म्यमित्यत्र प्रमाणाभावात्। तत्राध्याहारादिष्टकल्पनप्राचुर्यदुष्टत्वाच्च। अद्वैतदूषणपरत्वेन तदाहुरित्यादिवाक्यस्यास्मदुक्तरीत्योपपत्तेः स्पष्टत्वात्। तस्मान्न ब्रह्मणः सार्वात्म्यं प्रागेव तु तज्ज्ञात्वेति फलितार्थः। ब्रह्मैव पूर्वमासीन्नान्यदितो मिथ्यात्वलाभविरहाच्चापूर्वोत्तरकालयोः कार्यात्यन्ताभावस्य मयापि स्वीकारात्। प्रतियोगिदेशकालावच्छेदेन तदत्यन्ताभावस्य परैर्मिथ्यात्वघटकेनाभिमतस्य चात्रानवगमादग्रपदस्य निषेधानन्वये च बीजाभावादित्येषा दिक्। अन्यत्तु सूरिभिरूहनीयम्।

यत्तु स एव इह प्रविष्ट इत्यनेन ब्रह्मणः कार्योपाधिप्रतिबिम्बरूपेण प्रवेशमुक्त्वा तन्न पश्यन्त्यकृत्स्नो हि स इत्यनेन संसारदशायां दृश्यमानस्य प्राणनवदनादिक्रियाविशिष्टस्यात्मनः परिच्छिन्नत्वेन तद्दर्शनस्यात्मस्वरूपदर्शनाभावमुक्त्वा आत्मेत्येवोपासीतेत्यनेन शुद्धात्मनोऽपरिच्छिन्नस्योपासनमुक्त्वा 'अत्र ह्येते सर्व एकं भवन्ति' इत्यनेन तस्य सर्वाधिष्ठानत्वेन तत्र सर्वमेकतां प्रतिपद्यत इत्युक्त्वा कृत्स्नत्वरूपमपरिच्छिन्नत्वमुपपाद्य "तदेत्यदनीयमस्य सर्वस्यानेन ह्येतत्सर्वं वेद" इत्यनेनोक्तात्मज्ञानेन सर्वज्ञानादात्मैव ज्ञेयो नान्यः इत्युक्तमिति, तच्चिन्त्यम्; आत्मेत्येवोपासीतेत्यत्र शुद्धात्मनो ज्ञेयत्वे नावगम इत्युक्तत्वात्। अत्र ह्येत इत्यादेरप्यन्यथैव व्याख्यातत्वात्। बाधकाभावस्य चास्मत्पक्षे विनिगमकत्वात्।

केचित्तु आत्मेत्येवोपासीतेत्यनेनात्मभिन्नत्वेनेश्वरोपासनं विधीयते। अन्यां देवतामुपास्त इत्यनेन भेदघटितोपासनानिन्दाद्वारेण तत्स्तूयते।

उपक्रमप्राबल्याच्च य एवं वेदेत्यादिवाक्यस्थं वेदेत्यादिपदमुपासनपरमेव। असर्वभावनिवृतिश्च तत्फलमित्याहुः।

यत्त्वत्र दूषयन्ति-"अनेन ह्येतत्सर्वं वेदेत्येकविज्ञानेन सर्वं विज्ञानम्" प्रतिज्ञानुरोधादुपसंहारस्यैवात्र प्राबल्यम्। नवानेन ह्येतदिति वाक्येनात्मोपासनया सर्वोपासनाफलाप्त्या तया सर्वमुपासितमित्युपचर्य इति वाच्यम्; उच्चरितस्यार्थस्यायुक्तत्वात्। आत्मनः सर्वस्वरूपत्वेन तज्ज्ञानात्सर्वज्ञानरूपस्यार्थस्य मुख्यत्वात्। वस्तुतस्तु न पश्यन्तीत्यस्यैवोपक्रमत्वेनोपक्रममात्रप्राबल्याश्रयणेऽपि क्षतेरभावादिति। तन्न; तद्रीत्यापि सर्वज्ञानस्यौपचारिकत्वाननिवृत्तेः। तथाहि तत्सर्वं वेदेत्यस्य घटादिप्रपञ्चमात्रपरताया वक्तव्यत्वाद् घटत्वप्रकारकज्ञानं मुख्य उक्तवाक्यार्थः। अन्यथा प्रमेयत्वेन ज्ञानस्यापि वस्तुतो यावत्प्रमेयविषयकत्वेन तादृशघटज्ञानादुक्तब्रह्मज्ञानस्य वैलक्षण्यानुपपत्तेः। घटत्वाद्यंशेऽन्याप्रकारकज्ञानस्यैव सर्वज्ञत्वोपयोगात्। घटं जानातीति समभिव्याहारस्य घटत्वप्रकारकघटविशेष्यकज्ञानाश्रयत्वबोधे हेतुत्वस्य क्लृप्तत्वाच्च। ब्रह्मनिर्विकल्पके च किं घटत्वादिप्रातिस्विकरूपेण घटादीनां विषयत्वमुत तस्य घटत्वादिप्रकारकज्ञानजनकत्वम्? नाद्यः, स्वयमप्यनभ्युपगमात्। अत एव नान्त्यः, विनापि शुद्धब्रह्मज्ञानं तस्य जायमानत्वाच्च। अत एव ब्रह्मनिर्विकल्पकस्य विशकलिततत्तत्पदार्थविषयकत्वेन तदंशेऽपि निर्विकल्पकत्वमेवेत्यप्यनाशङ्क्यं ब्रह्मान्याविषयकज्ञानस्यैव मोक्षहेतुतायास्तैरभ्युपगमाच्च। समूहालम्बननिर्विकल्पके घटादिविषयकनिर्विकल्पकांशे ब्रह्मविषयकनिर्विकल्पकस्य जनकतायाः सर्वथैवानुपपत्तेश्च।

न च ब्रह्मनिर्विकल्पकानन्तरं तन्निर्विकल्पकानन्तरं तन्निर्विकल्पकं जायत, इतिवाच्यम्; मानाभावात्प्रयोजनाभावाच्च। अतो ब्रह्मणः सर्वाधिष्ठानतया तज्ज्ञानेन कारणात्मना सर्वं ज्ञातमेव भवतीत्यस्य भवदभिमतपर्यवसितार्थस्य गौणत्वं दुर्वारमेव। अत एव द्वितीयाध्याये "तदन्यत्वमारम्भणशब्दादिभ्यः" इतिसूत्रे च **भामत्यामुक्तम्** "तस्माद्घटशरावोदञ्चनादीनां तत्त्वं मृदेव, तेन मृदा विज्ञाताः"। एतेन "कस्मिन्नपि भगवो विज्ञातं भवति" **इत्याथर्वणश्रुति**रपि व्याख्याता। एवं "येनाश्रुतं श्रुतं भवति" इत्यादि **छान्दोग्यम्**। "आत्मनि वा रे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति **वृहदारण्यकं** चेत्यवधेयम्। अत एवोक्तं तत्तात्पर्यं **पार्थसारथिमिश्रैः** "यद्यप्याविर्भावतिरोभावधर्मा नानाभूतविकारशरावादेर्मृत्तिका च सर्वत्रानपायिनी तेषां कारणभूता कार्यकारणयोश्चावस्थामात्रभेदात्स्वरूपभेदाभावाच्च कारण-

ज्ञानेन सर्वं कार्यजातमवस्थाभेदेनाज्ञातमपि धर्मिरूपेण ज्ञातं भवति। तथा प्रपञ्चोऽप्याविर्भावतिरोभावधर्मावस्थायीति तत्कारणं चात्मा सद्रूपः सर्वानुयायी नापायधर्मा, तद्विज्ञानेन तादात्म्यकं सर्वमविज्ञातमपि व्यासरूपेण समासरूपेण ज्ञातं भवति" इत्यादि।

किञ्च आदानज्ञानादुपादेयज्ञानमित्यत्र प्रमाणाभावः, कपालादिप्रत्यक्षाभाववतामपि घटादिप्रत्यक्षस्य जायमानत्वात्। द्व्यणुकातीन्द्रियत्वेऽपि त्रुटिप्रत्यक्षस्य सर्वसिद्धत्वात्। आकाशातीन्द्रियत्वं शब्दप्रत्यक्षयोः सर्वसम्मतत्वाच्च। तिष्ठतु तावत्।

यत्तु तन्न पश्यन्तीत्यादि; तदकिञ्चित्करम्, वाक्यान्तरगतोपक्रमस्याप्रयोजकत्वात्। विध्यर्थवादयोरेव परस्परमेकवाक्यत्वस्यान्तरङ्गतया तद्गतप्रत्यासत्तेरेव निर्णायकत्वौचित्यात्। अन्यथा तन्न पश्यन्तीत्यस्मादप्युत्तरे प्राणन्नेवेत्यादिवाक्ये "स योऽत एकैकमुपास्ते" इत्यत्रैवोपास्तेरेव सन्निहितोपक्रमस्थत्वमिति परेणापि वक्तुं शक्यत्वात्। य एवं वेदेत्यस्मादप्यनन्तरमात्मानमेव प्रियमुपासीत। "स य आत्मानमेव प्रियमुपास्ते" इति श्रवणाच्च। "वामदेवः प्रतिपेदे" इत्यस्मादप्यनन्तरम् "अथ योऽन्यां देवतामुपास्ते" इत्यादेः पाठाच्च। मनुष्या विद्युरित्येतदुत्तरमपि कतिपयवाक्यव्यवधानेन "आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्त इति श्रूयमाणाच्च" इत्युक्तम्।

अत एवं मृत्पिण्डादिदृष्टान्तोऽपि सङ्गच्छते। न ह्येकमृत्पिण्डज्ञाने सति तज्ज्ञानस्य घटत्वादिरूपेण यावत्पृथिवीविकारघटादिविषयकत्वम्, सर्वानुभवविरोधात्. भूतले मृत्पिण्डज्ञानस्य घटाभावज्ञानं प्रत्यविरोधित्वानुभवाच्च। नापि तज्ज्ञानोत्तरं घटत्वादिप्रकारकज्ञानोत्पत्तिर्नैयत्यम्। क्वचित् तादृशज्ञानस्यान्यत्र क्लृप्तकारणेनैवोपपत्तेः। घटत्वपटत्वाद्यनन्तधर्मकप्रकारकज्ञानानां जन्मसहस्रेणाप्यसंभवाच्च। नापि निर्विकल्पात्मकमेव घटत्वपटत्वादिज्ञानं जायत इति वाच्यम्; घटत्वादेः पृथिवीविकारत्वाभावात्।

न च घटपटादीनामेव तज्जायत इति वाच्यम्; तथाप्येकैकघटादिव्यक्तीनामेवानन्तेन तदुक्तिसम्भवाभावात्। यत्किञ्चिद् घटादिनिर्विकल्पकेऽपि मानाभावाच्च। "नाध्यक्षं निश्चयाद्विना" इति न्यायादिति श्रुत्यर्थः।

यत्त्वत्र "सर्वमात्मैवाभूद्" इतिश्रुतिरपि नाऽद्वैते मानम्। तथाहि यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते, ... होद्ग्रहणाय एव स्याद्,

यतोयतस्त्वाददीत लवणमेवं वा अर इदं महद्भूतमनन्तं विज्ञानमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञावतीत्यपरे ब्रवीमीति होवाच याज्ञवल्क्यः" इति प्रथमं पठ्यते। अस्यार्थः— "ईश्वरतत्त्वज्ञानाज्जीवस्य मोक्षः सैन्धवोदकदृष्टान्तेन तयोर्वास्तवभेदश्च मोक्षे स्वरूपापेक्षायाञ्च विज्ञानघनो ज्ञानशक्तिमानेव एतेभ्यो भूतेभ्यः समुत्थाय शरीरसम्बन्धशून्यो मुक्त इति यावत्। तान्येवानुविनश्यति भूतेन्द्रियविनाशादात्मापि प्रमाणागोचरतामापन्नो विनष्ट इव भवति" इति **पार्थसारथिमिश्राः**। तथा च **मोक्षधर्मे पञ्चशिखवाक्यम्**—

यथार्णवगता नद्यो व्यक्तीर्जहति नाम च।
न वै स्वतां नियच्छन्ति तादृशः सत्त्वसंक्षयः॥
एवं सति कुतः संज्ञा प्रेत्यभावे कथं भवेत्।
प्रतिसम्मिश्रिते जीवे गृह्यमाणे च सर्वतः॥

सत्त्वजीवात्मनः संक्षयस्तादृशः स्वविषयकज्ञानाभावोपाधिकत्वादौपचारिक इत्यर्थः। अत एव फलितार्थं याज्ञवल्क्य आह–न प्रेत्यसञ्ज्ञास्तीति। एतेन विशेषगुणोच्छेदो मोक्ष इत्युक्तम्, तदविज्ञायतात्मनाशो मोक्ष इत्याशङ्क्य मैत्रेयीप्रश्नः। अत्रैव मा भगवानमूमुहदित्यात्मनाशस्य पुरुषार्थत्वानुपपत्तेरिति भावः। **मिश्रास्तु** "विज्ञानघन इति न प्रेत्यसंज्ञास्तीत्यनयोर्विरोधान्मोहः" इत्याहुः। तदुत्तरं याज्ञवल्क्येनोक्तम्। "न वाऽरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानायाविनाशी वा अरे यमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति"। अविनाशीत्यनेन यथोक्त**नास्तिक**मतनिरासः। अविद्यमाना उच्छित्तिर्जीवरूपत्यागेन रूपान्तरप्राप्तिर्यस्यासावनुच्छित्तिस्तादृशो धर्मो यस्येति जीवब्रह्मणोराविद्यको भेदोऽविद्यानिवृत्तिश्च मोक्ष इति वेदान्तिमतं निरस्तम्।

न चास्यानाशङ्कितोद्धारत्वं संज्ञाविषयमिश्रितं ज्ञानं वृत्त्यात्मकं नास्ति किन्तु शुद्धमेव चैतन्यम्, तथा च चित्स्वरूपब्रह्मस्वरूपेणावस्थानं मोक्ष इति शङ्कोपपत्तेः। यद्वानुगता स्वाभाविकी विच्छित्तिर्भेदो धर्मा स्वभावो यस्येत्यर्थः। दृष्टान्तेन भेदलाभेऽप्यत्यन्तभेदांशे साम्यं न विवक्षितमित्याशङ्कानिरासार्थश्चेदम्। त्वन्मते त्वनुच्छित्तिधर्मेति व्यर्थं स्यात्।

न चाविक्रियार्थत्वेन **भाष्यकारोक्तेन** निर्वाहः, अविनाशीति पदवैयर्थ्यात्। नाशस्यापि विकारत्वात्। जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीति षड् भावविकारा इत्याह भगवान् **वार्यायणिरिति निरुक्तकारोक्तेः**। गोबली-

वर्दन्यायेन सङ्कोचस्य वानन्यगतित्वात्। न च उच्छित्तिरत्यन्तोच्छेदो धर्मः। प्रतियोगितासम्बन्धेन यत्रास्त्युच्छित्तिधर्मा तद्भिन्नस्य नञ्समासेन लाभाद् यथा सन्निवेशे न वैयर्थ्यमिति वाच्यम्; न विद्यते उच्छेदो यस्येत्यत एव वैयर्थ्याभावेऽपि प्रयोजनाभावादस्मत्पक्षप्रातिकूल्यविरहाच्च।

यत्तु न विद्यते उच्छित्तिर्विशेषणगुणोच्छेदरूपो धर्मो यत्रेति विग्रहः। अविनाशीति नास्तिकमतनिरासः। अनुच्छित्तिधर्मेत्यनेन वैशेषिकमतनिरासः। धर्मपदं चात्मनो निर्धर्मकत्वेन तत्रोक्तगुणोच्छेदरूपो धर्मो नास्तीति सूचनार्थम्। आत्मवृत्त्यभावप्रतियोगितावच्छेदकीभूतधर्मत्वावच्छिन्नत्वेन यथोक्तोच्छेदस्योपस्थितौ तस्यात्मन्यभावबोधनसम्भवादिति। तन्न; धर्मपदसार्थक्यानुपपादनाच्चाधिकरणातिरिक्ताभावानभ्युपगमेन तन्मतेऽभावरूपधर्माश्रयत्वस्यापि ब्रह्मणि स्वीकारात्, निर्धर्मकत्वस्याद्याप्यसिद्धेश्च।

वस्तुतस्तु "धर्मादनिच् केवलाद्" इत्यत्र केवलपदं न त्रिपदबहुव्रीहिवारणार्थम्, पूर्वपदाक्षेपतात्पर्यग्राहकत्वेनैव तदुपयोगात्। पूर्वपदशब्दस्य च समासप्रथमावयवरूढत्वेन मध्यमपदव्यावृत्तेः। स्वयमप्यस्यैवानुसृतत्वाच्च। ततश्च न विद्यते उच्छित्तिरूपो धर्मो यस्येति त्रिपदबहुव्रीहिविग्रहोपन्यासो न युक्तः। न उच्छित्तिरनुवृत्तिः अनुच्छित्तिर्धर्मो यस्येत्यर्थे तु नेष्टसिद्धिर्धर्मवत्त्वापत्तिश्च। उच्छित्तिश्चासौ धर्मश्च उच्छित्तिधर्मः स न विद्यते यस्येत्यपि नार्थः। धर्मपदस्य बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वाभावात्। उच्छित्तिशब्देन व्यवधानात्। कैवल्यं धर्मपदस्यापि विशेषणमिति पक्षे तु एतदर्थस्यातिस्पष्टत्वात्। अत एव सन्दिग्धसाध्यधर्मेत्यादौ पूर्वपदे कर्मधारयं कृत्वैव बहुव्रीहिः, नतूत्तरपदे इति स्पष्टमेव शाब्दिकैरुक्तम्, इत्यास्तां तावत्।

यदि तान्येवानुविनश्यतीत्यनेनात्मज्ञानप्रयुक्तद्वैतनिवृत्तौ न प्रेत्य सञ्ज्ञास्तीति रूपादिविज्ञानाभावे चोक्ते सामान्यविज्ञानमात्रस्य मोक्षत्वं लब्धम्। लोकरूपादिविषयज्ञानजन्यसुखस्यैव पुरुषार्थत्वदर्शनात्। तस्यापुरुषार्थत्वशङ्कायां यत्र हीत्यादिना विषयसुखमभिधाय तस्य च हेयतामर्थसिद्धामभिप्रेत्य यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्याद्युक्तम्। तेन च निरतिशयात्मरूपसुखस्य परमपुरुषार्थत्वं द्वितीयाभावेन निर्भयत्वञ्च सूचितमिति। तदप्यसत्; रूपादिविज्ञानानामपि तद्रीत्या द्वैतनिवृत्त्यैव निवृत्त्युक्तिसिद्धेः। पुनस्तदुक्तिवैयर्थ्यात्। न प्रेत्य सञ्ज्ञास्तीत्यस्यैव मोक्षस्वरूपाभिधायकत्वाच्च। शब्देनानुक्तार्थगम्यस्य मोक्षत्वमिति परमकारुणिकेन वक्तुमयुक्तत्वात्।

अत एव हि "न वा अरेऽहं मोहं ब्रवीम्यलं वाऽरेदं विज्ञायेत्युक्तम्।" तस्मादस्मदुक्तरीत्याद्वैतमतं दूषयित्वा तत्र युक्तिमप्याह—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति" इत्यादि। यत्र त्वस्येत्यादि च। अयमर्थः—अद्वैतवादिनापि सर्वसिद्धज्ञेयज्ञातृभावोपपत्त्यर्थमाविद्यकं द्वैतमङ्गीक्रियते। अत उभयसिद्धं द्वैतमेवोपगम्यतामलमप्रामाणिकेनाद्वैतेनेति। तत्सूचनार्थं च इव शब्द इति सूक्ष्ममीक्षणीयम्। **मिश्रास्तु** "द्वैतमिव भवतीत्यत्र द्वैतावभासस्य भ्रान्तित्ववचनमौपचारिकम्। यथा खलु स्वप्नप्रपञ्चे इन्द्रजालादयः कियन्तंचित्कालं दृष्टिपथमापन्नाः सुखदुःखजननयोग्यतामापन्नाः पश्चाद्विलीयन्ते तथाऽयं शरीरेन्द्रियविषयरूपः प्रपञ्चोऽप्यात्मनः कियन्तंचित्कालमुपभोग्यः सन् पश्चाद्विनाशादनुभोग्यो भवतीत्यनेन सादृश्येन भ्रान्तिरित्युपचारेणोच्यते, पुरुषाणां विषयभोगेष्वास्थानिवर्त्तनेन मुक्तावभिरुचिं जनयितुम्। यदपि यत्र त्वस्य सर्वमात्मैवाभूदिति मुक्तावात्मनोऽद्वितीयत्ववचनं, तदपि न; प्रपञ्चस्वरूपनिषेधार्थमस्येतिवचनात्। न ह्यत्रैतावदुच्यते यत्र सर्वमात्मैवाभूदिति। किन्तर्हि यत्र त्वस्य सर्वमात्मैवाभूदिति। तेनायमर्थः। यत्र यस्यामवस्थायां मुक्तावित्यर्थः, अस्यात्मनो दृश्यत्वेन दर्शनसाधनत्वेन दर्शनायतनत्वेन किञ्चिदन्यत्सम्बन्धि विद्यते। किन्त्वात्मैवास्य सर्वं नान्यत्किञ्चित् तदा केन किं पश्येदिति, यथा लोके यस्य न किञ्चिद् बान्धवो वित्तं वा विद्यते स वदति न किञ्चिन्मेऽस्त्यहमेव सर्वमिति। तत्र न सम्बन्ध्यन्तरं किञ्चिदस्तीत्येतावदेव विवक्षितम्। एवं मुक्तावप्यात्मैवात्मनः सर्वमिति सम्बन्ध्यन्तराभावमात्रविवक्षितं न स्वरूपाभावः। तस्मान्न प्रपञ्चविलयो मोक्षः किन्तु प्रपञ्चसम्बन्धविलयः" इत्याहुः। एतेन त्वदुक्तार्थेइव शब्दवैयर्थ्यमित्यपास्तम्। **इदञ्चारण्य पर्वण्यपि** स्पष्टम्।

बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा।
ज्ञानदग्धैस्तथाक्लेशैर्नात्मा संयुज्यते पुनः॥ इति।

अत एव प्रथमचतुर्थे "सम्भवादिति काशकृत्स्नः" इति सूत्रे यत्र हि द्वैतमिवेति इवकारेण द्वैतवैतथ्योपक्रमाच्चेति **कल्पतरूक्त**मप्यपास्तमित्यास्तां विस्तरः। इति यत्रत्वस्येति श्रुत्यर्थः॥

**वृहदारण्यके** श्रूयते—"जनकं ह वैदेहं याज्ञवल्क्यो जगाम—समे नेनवदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदातेतस्मै ह याज्ञ-

वल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददौ तं ह सम्राडेव पूर्वं पप्रच्छ॥ याज्ञवल्क्य किं ज्योतिरयं पुरुष इत्यादित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ अस्तमित आदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुष इति चन्द्रज्योतिः सम्राडिति होवाच चन्द्रेणैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किं ज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवायं पुरुष इति वाग्ज्योतिः सम्राडिति होवाच वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवाऽयं पुरुष इत्यात्मज्योतिः सम्राडितिहोवाचात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति॥ कतम आत्मेति योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिः स समानः सन्नुभौ लोकौ सञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि॥ सवायं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति मृत्यो रूपाणि॥ तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः इदञ्च परलोकस्थानञ्च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन् उभे स्थाने पश्यतीदं च परलोकस्थानञ्च। अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मनश्चानन्दांश्च पश्यति स यत्र प्रस्वपितीत्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीत्यत्रायं पुरुषस्स्वयं ज्योतिर्भवति॥ न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते न तत्रानन्दाः मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः पुष्करिण्यो भवन्त्यथवेशान्ताः स्रवन्त्यो पुष्करिण्यः सृजते स हि कर्त्ता। तदप्येते श्लोकाः—

स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति।
शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः॥
प्राणेन रक्षन्नवरं कुलायं बहिः कुलायादमृतश्चरित्वा।

स ईयते अमृतो यत्रकार्यं हिरण्मयः पुरुष एकहंसः ॥
स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।
उतेव स्त्रीभिः सह मोदमानो जक्षदुते वापि भयानि पश्यन् ॥

आराममस्य पश्यन्ति न तं कश्चन पश्यतीति तन्नायतं बोधयेदित्याहुः । दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहुर्जागरितदेश एवास्यैष यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिः भवतीत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवतो सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्ता एव स यत्तत्रकिञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एत उभावेतावनुसञ्चरति स्वप्नान्त बुद्धान्तं चेत्यादि ॥

अयमर्थः—याज्ञवल्क्यस्तु प्रथमं बुद्धिपरीक्षार्थं चक्षुरादीनामप्यात्मत्वमनुपन्यस्य ज्योतिःशब्दस्य लौकिकमेवार्थमादायोत्तरमाह—आदित्यज्योतिरिति । हेतुमाह—आदित्येनैवेत्यादिना । आस्ते कण्टकवृश्चिकादिरहितं भूभागमालोक्य तत्रोपविशति । पल्ययते परि समन्तादयते गच्छति "उपसर्गस्यायतौ" इति लत्वं कर्महानोपादानादिलक्षणं कुरुते विपर्येति गृहादिकं प्रत्यागच्छति इति । यद्यपि चाक्षुषज्ञान एवादित्यप्रकाश उपयोगी न तु त्वाचादौ; उक्तं चोपवेशनादित्वाचज्ञानेनापि निर्वहत्येवेति वक्तुमर्हं तथापि चाक्षुषमात्रेऽप्यादित्यस्य व्यभिचार इत्यभिप्रायवान् जनक आह—अस्तमित आदित्ये याज्ञवल्क्येति । एवमग्न्यादि वाक्ये व्याख्येयम् । अन्यत्पूर्ववत् । अग्नेः सूर्यचन्द्रवत्कालविशेषावच्छेदेनास्तनियमाभावेऽपीन्धनादिसामग्रीव्यतिरेकप्रयुक्तं दौर्लभ्यमिति तु विशेषः । वाचो ज्योतिष्ट्वं च व्यवहारजनकत्वमेवेत्याह—तस्माद्वै सम्राडिति । यत्रान्धकारादौ स्वपाणिरपि न निर्ज्ञायते तत्र यः कश्चिच्छब्दः श्रूयते तदनुमितदिगभिमुखमेव गच्छन्तीत्यर्थः । वाचोऽपि व्यभिचारित्वान्नैवमित्यभिप्रायेण राजा पृच्छति—अस्तमित इत्यादि । याज्ञवल्क्यो राजाभिप्रेतप्रश्नस्योत्तरमाह—आत्मज्योतिरिति । आत्मनः सामान्यतोऽहंप्रत्ययासिद्धत्वेऽपि तद्विषयः किमित्यत्र सन्ति वादिनां विप्रतिपत्तयः । तत्र विषयविशेषनिर्णयार्थं पृच्छति—कतम आत्मेति । तत्र ज्ञानमेवेत्यात्मेति सौगताः । न च ज्ञानस्य गुणत्वेन तदाश्रयद्रव्यमनुमेयं ज्ञानादीनां गुणत्वे मानाभावात् । तदुक्तम्—

सिद्धे ज्ञानसुखादीनां गुणत्वे गुणिकल्पना ।
न तु तत्सिद्धमस्माकं तावन्मात्रोपपत्तितः ॥ इति ।

तदपास्यति—विज्ञानमय इति । हेतौ मयट्, हेतुत्वञ्च ज्ञापकत्वम् । तथा च ज्ञानाश्रयस्यैवात्मत्वं न तु ज्ञानस्य, अहं जानामीत्यादौ ज्ञानाश्रयत्वस्यैव विषयीक्रियमाणत्वात्, ज्ञानात्पृथगेवाहमर्थोल्लेखाच्च । एवं ज्ञानस्य क्षणद्वयावस्थायित्वेन पूर्वानुभूतस्यान्येन स्मरणं न स्यात् । अन्यथा च चैत्रानुभूतस्यापि मैत्रेण स्मरणं स्यात् । न च ज्ञानसन्तानस्वीकारादुपादानोपादेयभावो नियामकः सुषुप्तौ विज्ञानसन्तानविच्छेदस्यावश्यकत्वात्तदुत्तरमस्मरणापत्तेः ।

न च तदाप्यलयाविज्ञानरूपा निर्विषया चित्सन्ततिरनुवर्त्तते, इति वाच्यम् ; चितां सविषयकत्वनियमात्, साकारचित्सन्तत्या निराकारचित्सन्ततेरुत्पादयितुमशक्यत्वाच्च ।

किञ्चैवमपि सुखादीनां न ज्ञानोपादेयत्वसंभवः तैस्सजातीयस्यैवोपादानत्वोपगमात् । न च सुखमपि ज्ञानमेव, अहं सुखी अहं जाने इति विलक्षणबुद्धिवेद्यत्वात् । अथ शरीरमेव ज्ञानाद्याश्रयोऽस्तु शरीरस्य निमित्तकारणतया समवायित्वमात्रकल्पनात् । न च भूतत्वेन घटादिवत्तस्य ज्ञानाभावोऽनुमेयः, आकारविशेषपरिणतानां चैतन्यसम्भवात् । प्रत्येकममादकानामपि गुणाद्यवयवानां सुराकारपरिणतानां मादकत्वमिति **चार्वाकाः** । तन्निराकरोति—पुरुष इति । पुरि शरीरे शेते इति व्युत्पत्त्या शरीराधिष्ठातृत्वात्तद्भिन्न इति भावः । तदुक्त**माचार्यैः**—

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरम् ॥ इति ।

**अयमर्थः**—एवं सति बालशरीरेणानुभूतस्य युवशरीरेण स्मरणं न स्यात्, अन्यथा चातिप्रसङ्गः । न च बाल्ययौवनयोरेकं शरीरम्, अपक्रमात्पूर्वशरीरस्य नाशात् । तद्व्यतिरेकेण पूर्वशरीरसमवेतपरिमाणनाशानुपपत्त्या तत्र परिणामान्तरोत्पत्त्यनुपपत्तेः । न च कारणवासनायाः कार्ये संक्रमान्न दोष इति वाच्यम् ; मात्रनुभूतस्यापि पुत्रेण स्मरणापत्तेः । न चोपादानवासनैवोपादेये संक्रामतीति नातिप्रसङ्ग इति वाच्यम् ; स्थिरपक्षे पुञ्जात्पुञ्जानुपपत्तेः, पूर्वशरीरस्योत्तरशरीरं प्रत्यनुपादानतया पूर्वशरीरावयवानामेवोत्तरशरीरोपादानत्वात् । तथा च करावच्छेदेनानुभूतस्य करच्छेदानन्तरं खण्डशरीरेण स्मरणं न स्यात्, छिन्नावयवस्य खण्डशरीरं प्रत्यनुपादानत्वादिति ।

इन्द्रियाणामात्मत्वं निरस्यति—प्राणेष्वतज्ज्योतिरिति। इन्द्रियाणां ज्ञानहेतुत्वनिर्वाहक इति यावत्। अन्यथा तेषामेव ज्ञानसमवायित्वेऽन्धबधिरादीनां ज्ञानोदयो न स्यात्। योऽहमद्राक्षं सोऽहं स्पृशामीति प्रतिसन्धानञ्च न भवेत्। अन्धादिदशायां च पूर्वानुभूतस्मरणं न स्यात्। चक्षुरादीनामप्यनेकत्वाच्च। एतेन समुदितानामपीन्द्रियाणामात्मत्वं निरस्तम्।

तदाह—सधीः स्वप्नो भूत्वेमं लोकमतिक्रामतीति। स्वप्नावस्थापन्नो भूत्वा सधीर्ज्ञानसहितः इमं लोकमिन्द्रियसहितं रूपमतिक्रामत्युल्लङ्घयति। इन्द्रियव्यापारं विनैव स्वप्ने ज्ञानोत्पत्तिदर्शनात्। न तेषां ज्ञानाश्रयत्वं स्वरूपसतामेव तेषां तथात्वे तु ज्ञाताज्ञातव्यवस्थानुपपत्तिरिति भावः। तर्हि मन एव ज्ञानाश्रयोऽस्तु नित्यत्वादात्मसमानशीलत्वे दोषाभावादित्यत आह—हृद्यन्तर्ज्योतिरिति। मनसोऽपि ज्ञानहेतुत्वनिर्वाहकः। अयमर्थः—मनोऽपि न मानान्तरेण सिद्धम्। तत्र यदि ज्ञानाश्रयत्वेनैव मनोऽनुमीयते तदा तस्य ज्ञाने कर्त्तृत्वमेव स्यान्न तु करणत्वम्, मानाभावात्। तथा चानेकविषयेन्द्रियसन्निकर्षे ज्ञानयौगपद्यं स्यात्। एकदैकक्रियामात्राभिनिर्वर्त्तकत्वं हि करणस्यैव स्वभावो न तु कर्त्तुः, व्यासङ्गासङ्गतिप्रसङ्गात्।

न च तदर्थकरणान्तरमनुमेयमिति वाच्यम्; नाम्नि विवादो न तु वस्तुनीत्येतदापत्तेः। न च पूर्वं करणत्वेनैव मनोऽनुमाय पश्चात्तत्र ज्ञानकर्त्तृत्वमनुमेयमिति वाच्यम्; चैतन्याश्रये कर्त्तरि सिद्धे हि तद्व्यापारविषयत्वरूपकरणत्वेन न मनोऽनुमेयम्। तथा च न तत्र ज्ञानाश्रयत्वानुमानसम्भवो धर्मिग्राहकमानबाधादिति।

एवं सिद्धे देहाद्यतिरिक्ते आत्मनि यागस्वर्गादेरपि सामानाधिकरण्यमुपपद्यते। अन्यथा कृतहानाकृताभ्यागमप्रसङ्गादित्यत आह—स इति। समान एकः सन् उभौ लोकौ सञ्चरति। अवच्छेदकशरीरभेदेऽपि कर्त्तुर्भोक्तुरात्मन एकत्वादिति भावः।

इच्छादीनामप्यात्मगुणत्वं व्यवस्थापयति—ध्यायतीव लेलायतीवेति। "ध्यानं चिन्ता हिताप्राप्तेः सन्तापादिकरी मता" इति साम्प्रदायिकरीत्या दृष्टानवाप्तिः। कृतचिन्तायाः ध्यानपदार्थत्वमत्र, तेन चेच्छानामात्मगुणत्वलाभः। लेलायतीवेत्यस्य च दीप्यत इवेत्यर्थः। लेला दीप्तावित्यस्य कण्ड्वादिगणे पठ्यमानत्वात्। ब्रह्मणः कथं संसार इत्याशङ्क्य समानो बुद्धचा सदृश उभौ लोकौ सञ्चरतीत्युक्त्वा बुद्धौ ध्यायन्त्याचलन्तीति च परव्याख्याने चाने-

कार्थत्वस्यैव शरणीकर्त्तव्यत्वात्, सादृश्ये प्रतियोगित्वेन बुद्ध्यन्वयस्य शब्दानुह्यत्वाच्च । तेन च चिन्ताकृतसन्तापो दुःखसंज्ञो लभ्यते । तदुक्तम्—

विभावा यत्र दारिद्र्यमैश्वर्यभ्रंशनं तथा ।
दृष्टार्थापहतिश्चास्यां श्वासोच्छ्वासावधोमुखम् ॥
सन्तापः स्मरणञ्चैव कार्श्यं देहानुपस्कृतिः ।
अधृतिश्चानुभावाः स्युः सा चिन्ता परिकीर्त्तिता ॥ इत्यादि ।

धर्माधर्मयोरात्मगुणत्वं च समानस्सन्नुभौ लोकौ सञ्चरतीत्यत्रैवोक्तम् । न च दीप्यत इवेत्यत्र इवशब्दस्य दुःखाख्यगौणतापपरत्वेनोपपत्तावपि त्वन्मते ध्यायतीवेत्यत्र इव शब्दानुपपत्तिः । चिन्तायास्त्वया वस्तुत एवात्मधर्मत्वाभ्युपगमादिति वाच्यम्; गुणान्तराक्षेपलाघवानुरोधेन सपरिकराया एव चिन्ताया अत्र विवक्षिततया कार्कश्यादीनां तदनुभावानां देहनिष्ठत्वेनात्मनिष्ठत्वाभावादहं कृश इत्यादि प्रत्ययाभिप्रायेण तदुपपत्तेः । यद्वा दीप्तेर्मुखप्रसादादिरूपाया ग्रहणात्तदाक्षिप्तसुखस्य लेलायतीत्यनेन लाभः; दुःखस्य ध्यानपदेनैव लाभसम्भवात् । एवञ्चार्थादात्मविशेषगुणानां बुद्ध्यादिसंस्कारान्तानां सिद्धिः । ध्यानकार्यस्मृत्या संस्कारस्याप्याक्षेपात् । इदञ्चोत्तरब्राह्मणे स्पष्टं वक्ष्यति । सधीरित्यादिव्याख्यानं—यद्वार्थः पूर्ववत् । यथा दृश्यशरीरस्य व्यापारविरमेऽपि मनःसहकारेण स्वप्नदर्शनं तथैव परलोकेऽपि शुभाशुभकर्मणा चरति । अत उभौ लोकावित्यत्र परलोकांशे विप्रतिपत्तिर्न कार्येति तात्पर्यम् । यद्वा इन्द्रियसंयोगेन यथा स्वप्ने संसारस्तथा जन्मान्तरेऽपि । अतो देहेन्द्रियसम्बन्धस्यैवानर्थहेतुत्वम् तथा च **मोक्षधर्मे** मनुबृहस्पतिसम्वादे—

यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम् ।
ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ ॥

"व्यक्तं शरीरं, ज्ञानं जीवः, इन्द्रियसंयुक्तात्मा जन्मजन्मान्तरेऽपि कर्माण्येव करोतीति नात्मदर्शनमित्यर्थः" इति **विद्यासागरः** । एतेन ध्यायतीवेत्यादिना आत्मनोऽकर्त्तृत्वमुक्तमिति वेदान्तिवचनं निरस्तम् । तथा बुद्ध्यादिभावाष्टकसम्पन्ना प्रकृतिरेवेति साङ्ख्यमतमपि । तदुक्त**माचार्यैः**—

कर्तृ धर्मा नियन्तारश्चेति''' च एव नः ।
अन्यथा नापवर्गःस्यादसंसारोऽथवा ध्रुवम् ॥ इत्यग्रे विस्तरः ।

यत्पुनस्तैरुक्तमात्मनः कर्त्तृत्वस्य स्वाभाविकत्वे मोक्षो न स्यात् । तदुक्तं **वार्त्तिके**—

आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ।
नहि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेः ।। इति ।

तदसत्; नहि स्वाभाविकत्वं नित्यत्वं ब्रूमो येन तन्निवृत्तिर्न स्यात् । किन्तु साक्षात्सम्बन्धेन तद्वृत्तित्वं तस्य च निवृत्तावविरोधित्वात् । घटादिरूपस्य स्वाभाविकस्यापि निवृत्तिदर्शनात् । तथा च यदि नित्यत्वरूपं स्वाभाविकत्वमनिवृत्त्यापादकं तदा स्वरूपासिद्धिः । अथोक्तरूपं तदा घटरूपादौ व्यभिचारः ।

नन्वेवं घटस्य घटत्वमपि व्यावर्त्तेतेति चेन्न; नाशस्य नित्यत्वेनापादयितुमशक्यत्वात्, सम्बन्धनिवृत्तेश्च दृष्टत्वात् । उक्तं हि **दीधितिटीकाकारैः** "अतीतघटादौ ज्ञायमानघटादिसामान्यस्य विरहेण तद्रूपप्रत्यासत्तेर्व्यभिचारित्वात्, सामान्यज्ञानस्य प्रत्यासत्तित्वस्वीकारात् इति । औष्ण्यस्यापि सूर्यनाशे निवृत्तिस्वीकारात् । आत्मन्यात्मत्वं तु न निवर्त्तते द्वयोरपि नित्यत्वादिति । न किञ्चिदेतत् ।

यदप्युक्तं समानाधिकरणविशेषगुणप्रागभावासमानकालीनो विशेषगुणध्वंस आश्रयनाशजन्य एवेति नियमे घटरूपादिव्यभिचारो दुर्वचः । आश्रयनाशाजन्यरूपादिनाशस्य समानाधिकरणविशेषगुणप्रागभावसमानकालीनत्वादिति, तदपि चिन्त्यम्; एतादृशधर्मस्य कार्यतानवच्छेदकत्वात् । किन्तु नव्यमते स्ववृत्तिप्रागभावप्रतियोगित्वं स्वप्रतियोगिसमवेतत्वं कालिकविशेषणता वेत्येतत्त्रितयसंबन्धेन नाशवान् यस्तद्वृत्तिप्रतियोगितासम्बन्धेननाशं प्रति स्वप्रतियोगित्वसमवेतत्वसम्बधेन नाशो हेतुरित्येव कार्यकारणभावस्वीकारात् । सुखादौ चोक्तसम्बन्धेन नाशानुत्पत्तेः ।

यत्तु—

'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते" ।

इतिस्मृतिविरोधोद्भावनं तद्बालप्रतारणमात्रम् ।।

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।

इतिपूर्वार्द्धपर्यालोचनयैव तस्य ईश्वरत्वात् । तथा हि श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।।

क्षेत्रं पूर्वकर्म, भोगोत्तरकर्मारम्भहेतुत्वात् । एतद्यो वेत्ति जानाति ममेदं शरीरमिति, अन्यथा शरीरान्तरचाक्षुषवतो मैत्रादेरपि प्रसङ्गात् ।

तं क्षेत्रज्ञपदेन निर्दिशन्ति तज्ज्ञाः। अतो देह एवात्मेतिभावः। एवञ्च वेत्तीति ज्ञानाश्रयत्वमात्मन उपक्रान्तम्। शब्दमर्यादागम्यत्वात्तेनज्ञानरूपत्वं ज्ञानस्य बुद्धिगुणत्वं च निरस्तम्।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥

इतिप्रागुक्तम्, तच्च **कुसुमाञ्जलौ** व्याख्यातम्। अत्रोत्तमत्वमसंसारित्वं सर्वज्ञत्वादि च, परमत्वं सर्वोपास्यता, लोकत्रयमिति सर्वोपलक्षणम्। आवेशो ज्ञानचिकीर्षाप्रयत्नवतस्संयोगः, भरणं धारणम्, अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम्, ऐश्वर्यं संकल्पाप्रतिघात इति। एतेन कर्मादिविषया अप्यागमा व्याख्याताः।.........इत्यस्य प्रपञ्चमाह—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥

क्षेत्रपदमात्मशरीरपरम्, तस्यैव तद्व्यवहारविषयत्वात्। तच्चोत्तरार्द्धेनैव स्पष्टीकृतम्। अतः क्षेत्रपदस्य साहचर्यलक्षणासम्बन्धेन क्षेत्रक्षेत्रज्ञोभयपरत्वेऽपि न क्षतिः। तथा च परात्मगुणानां परायोग्यतया जीवस्य जीवमात्रशरीरमात्रगोचरसाक्षात्कारविरहात् सर्वविषयकज्ञानवानहं परमेश्वरः। क्षेत्रक्षेत्रज्ञमात्रविषयकं यज्ज्ञानं तज्ज्ञानं ममेश्वरस्य न तु जीवनामितियोजना। तथा चाहमेव तत्तत्कर्मानुरूपैर्भोगैः जीवान् संयोजयामीतिभावः। विवेकार्थमाह—

तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥

यद्यत्स्वरूपं यादृक् यत्कारणकं यद्विकारि यत्कार्यकं यतश्च यत्कार्यमुत्पद्यते, इति वाक्यशेष इति **भाष्यकाराः**।

वस्तुतो यतो हेतोर्यन्नश्वरम्, इणः शतृप्रत्यये यणादेशे च व्युत्पत्तेः। ततश्च यथा देहसम्बन्धो न भवति तदपि वक्ष्यामीतिभावः। स क्षेत्रज्ञो जीवश्च यो यत्स्वरूपो यत्प्रभावो यद्गुणकश्चेत्यर्थः। एतेन प्रभावा उपाधिकृताः शक्तयो यस्येति पदान्तरप्रक्षेपपूर्वकं व्याख्यानमपास्तम्।

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥

क्षेत्र-क्षेत्रज्ञयाथात्म्यविशेषणान्येतानि प्ररोचनार्थानि। ऋषिभिर्वशिष्ठादिभिः बहुधा तात्पर्यनिश्चायकलिङ्गोपन्यासपूर्वं छन्दोभिरृग्गादिमन्त्रैः ब्रह्मसूत्रपदैरुपनिषद्भिः हेतुमद्भिरिति वेदप्रामाण्यानङ्गीकर्तृनिरासार्थम्। अत एव विनिश्चितैर्विशिष्टाप्रामाण्यज्ञानानास्कन्दितं निश्चितं निश्चयो येभ्यस्तैः भावार्थकनिष्ठानिश्चितशब्देन पञ्चमीबहुव्रीहिः।

एवमभिमुखीकृत्यार्जुनमुपदिशति—

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः॥
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम्॥

महाभूतानि पृथिव्यप्तेजोवाय्वाकाशाः। अहङ्कारो मिथ्याज्ञानं सवासनं मोहोऽहङ्कार इति **वार्तिक**दर्शनात्। "अविद्याहंमतिर्भ्रमः" इति **कोषाच्च**। बुद्धिर्ज्ञानं षडिन्द्रियजन्यम्, अव्यक्तं धर्माधर्मौ। सांख्योक्तस्य प्रधानरूपस्याव्यक्तस्य वेदान्तिभिरप्यनङ्गीकारात्। "महतः परमव्यक्तम्" इति **काठक**वाक्ये "शरीरं रथमेव तु" इति वाक्यानुसारेण शरीरस्यैवाव्यक्तपदेन ग्रहणमिति तैर्व्यवस्थापितत्वेऽपि तस्य तैरप्यनुपादानात्। वाक्पाणिपादपायूपस्थानां न्यायमते इन्द्रियत्वाऽभावेपि वचनादिनियतत्वेन परैः कर्मेन्द्रियत्वस्वीकारादिन्द्रियत्वोक्तिः। वाचः शरीरकार्यत्वात् पाण्यादीनां चावयवत्वेन तत्कारणत्वात्तल्लाभार्थतया न वैयर्थ्यम्। पञ्च गन्धरसरूपस्पर्शशब्दाः, मनोविषयाणामिच्छादीनां पृथगेवाभिहितत्वात्। इच्छाद्वेषसुखदुःखानि प्रसिद्धानि। चेतना सविषयत्वसाधर्म्येण संस्कारः। धृतिः प्रयत्नः। अत्र च प्रत्येकं षण्णामिन्द्रियविषयबुद्धीनां सुखदुःखशरीराणां चैकविंशतिदुःखात्मकत्वेनोपादानं महाभूतदेहानां च यथायोगं देहहेतुत्वेनेत्यादिज्ञेयः। अत्र च शरीरस्यावच्छेदकतया ज्ञानादिहेतुत्वात्तज्जन्यत्वमात्मन एव तत्समवायित्वात्। एवञ्च हेयत्वेन कार्यकारणसहितमेव शरीरमत्र क्षेत्रपदार्थत्वेनोक्तम्। जीवस्वरूपं तु ज्ञानाश्रयत्वेन पूर्वमेवोक्तम्। अत्र तु ज्ञानेच्छादिगुणप्रतिपादनद्वयविस्पष्टा तदुक्तिरिति विशिष्टाभिप्रायेण "स च यो यत्प्रभावश्च" इति नानुपपन्नमिति बोध्यम्।

एतादृशदेहप्रवाहस्योच्छेदोपायमुपादेक्ष्यन् तत्साधनान्याह—

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।
आचार्योपासनं शौचस्थैर्यमात्मविनिग्रहः॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ।।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमितिप्रोक्तमज्ञानं यदतोऽन्यथा ।। इति ।

ज्ञायतेऽनेनेति करणे ल्युट्, पदार्थो भाष्यादौ स्पष्टः । एषां यद्विषयकज्ञाने उपयोगस्तमाह—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न तत्सन्नासदुच्यते ।।

प्रवक्ष्यामि प्रकर्षेण कथयिष्यामि । कथनञ्च तद्विषयकज्ञानजनकशब्दप्रयोगः । प्रकर्षश्च तद्वति तत्प्रकारकत्वरूपो ज्ञानान्वयी । यद्वा कथनं शब्दप्रयोग एव । व्यापारानुबन्धिनीं विषयतामादाय च कर्मान्वयः । प्रकर्षश्च प्रमाजनकत्वरूपः शब्द एवान्वेति । सर्वथापि शब्दगम्यानां धर्माणां ब्रह्मणि पारमार्थिकत्वपर्यवसानम् । तज्ज्ञानस्य फलमाह—यज्ज्ञात्वेति । अमृतं मोक्षमश्नुते प्राप्नोति । आदिरस्यास्तीत्यादिमत्तद्भिन्नमनादिमत् । प्रागभावस्याप्येतादृशत्वादाह—परमिति । अन्तहीनमित्यर्थः । आकाशादीनामप्येवं विधत्वादाह—ब्रह्मेति । बृंहयति वर्द्धयति प्रजा इति ब्रह्म सङ्कोचकमानाभावेन जन्यमात्रकारणत्वलाभः ।

ननु कारणत्वमन्वयव्यतिरेकगम्यमीश्वरस्य च कालिकसम्बन्धेन हेतुत्वं वाच्यम्, तादृशश्च व्यतिरेकोऽप्रसिद्धः, नित्यत्वात् । कारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्यैव व्यतिरेकस्य कारणत्वग्रहोपयोगित्वात् । तत्कथं जगत्कारणत्वमित्याह—न सत्तन्नासदुच्यते इति । सदन्वयि असद् व्यतिरेकि नोच्यते । यद्यप्यन्वयीत्युच्यते तथापि व्यतिरेकविशिष्टान्वयानङ्गीकारादन्वयस्यापि निषेधः । ततश्च नान्वयव्यतिरेकविशिष्टप्रत्यक्षगम्यमीश्वरस्य कारणत्वम्, येनोक्तानुपपत्तिः प्ररोहेत्, किन्तु शब्दादिमानमात्रगम्यं तच्च व्यतिरेकं विनापि धर्मिग्राहकमानस्य तदुपादायैव पर्यवसानात् । अन्यथा कारणत्वभावानुमानस्य तर्कस्य वाश्रयसिद्धिप्रसङ्गः । तदुक्त**माचार्यैः**—

पूर्वभावा हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा नहि ॥

यत्तु ब्रह्म न सदसदादिशब्देन [उच्यते] इति वाच्यम्; जातिरहितत्वात् । नापि गुणशब्देन निर्गुणत्वात् । नापि क्रियाशब्देन निःक्रियत्वात् । "निःकलं निष्क्रियं शान्तम्" इति श्रुतेः । नापि गोमानित्यादिवत्सम्बन्धिशब्देन एकत्वाद्द्वयत्वादविषयत्वादात्मत्वाच्चेति । न केनचिच्छब्देनोच्यते । "यतो वाचो निवर्त्तन्ते" इत्यादि श्रवणाच्चेति । तच्चिन्त्यम्; निर्गुणत्वे मानाभावात् । "सत्यं विज्ञानमानन्दं ब्रह्म" इत्यादि श्रुतेरभेदस्य च दूषयिष्यमाणत्वात् । निःक्रियत्वं तु यदि परिस्पन्दशून्यत्वं तदनुमन्यामहे । विभुत्वेनात्मनि कर्मानङ्गीकारात् । अथ धात्वर्थशून्यत्वम्, तन्न; ज्ञानादेरपि तथात्वेन निषेधानुपपत्तेः । एकत्वं तु किं साङ्ख्ययोगित्वमुत द्वितीयनिष्ठात्यन्ताभावप्रतियोगिधर्मत्वम्, उत स्वान्यशून्यत्वम्? नाद्यौ, आकाशादेस्तादृशस्थायिपदगम्यत्वोपगमात् । न तृतीयः; असिद्धेः । एतेनाद्वयत्वादित्यपि निरस्तम् । "ज्ञेयं यत्तत्प्रवक्ष्यामि" इतिस्मृत्याद्यनेकमानविरुद्धत्वादविषयत्वमप्यसिद्धमित्यादि स्वयं योजनीयम्? केचित्तु अनादिपदे बहुव्रीहिः । मत्परम् अहं वासुदेवाख्या पराशक्तिर्यस्य तन्मत्परम्, अन्यथा बहुव्रीहिणैवोक्तार्थत्वान्मतुपोऽनुपपत्तिरिति व्याचख्युः ।

यत्तु सर्वविशेषप्रतिषेधेनैवात्र ब्रह्मजिज्ञापयिषितु "न सत्तन्नासदुच्यते" इति विशिष्टशक्तिप्रदर्शनं विशिष्टप्रतिषेधश्चेति व्याहतम्, अतः श्लोकपूरणार्थं मतुबिति, तच्चिन्त्यम्; अद्वैतवादिकृततादृशव्याख्याया व्याहतत्वेऽप्यन्यदीयतादृशव्याख्यायां व्याघातानवतारात् । यादृशं ब्रह्मप्रमाणशब्दात्प्रतीयते तादृशं न प्रतिपिपादयिषितमपि तु अन्यादृशमेवेत्युक्तेरसंगतत्वात् । परन्तु कर्मधारयप्रकृतिभिर्मत्वर्थीयैरभिधानं तादृशं माभूदित्यादि **महाभाष्य**पर्यालोचनया कर्मधारयोत्तरमेव मत्वर्थीयो न भवति । पदद्वये बहुव्रीहिं कृत्वेव शब्दलाघवेन मत्वर्थलाभात् । अत्र त्वादिपदान्मतुप् ततो नञ्स[मास] इति न काप्यनुपपत्तिः । अत एव न कर्मधारयान्मत्वर्थीय इत्येव लिखन्तीत्यलमनेन । किञ्च—

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति ॥ अयं श्लोकः—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ।

इतिमन्त्रार्थसंवादी। स चाचार्यैर्व्याख्यातः। तद्यथा—सर्वज्ञत्वसर्ववक्तृत्वसर्वसहकारित्वव्यापकत्वानि पूर्वोक्तविशेषणचतुष्टयार्थः। चक्षुर्मुखबाहुपदशब्दानां दृष्टिवाक्सहायप्राप्त्युपलक्षकत्वात्। बाहुभ्यां धर्माधर्माभ्यां लोकयात्रावहनहेतुत्वात्। पतत्रैः परमाणुभिः गतिशीलत्वात्पतन्तीति व्युत्पत्तेः। द्यावित्यूर्ध्वसप्तलोकोपलक्षणम्। भूमीत्यधस्तात्। एक इत्यनादित्वम्। सञ्जनयन्नुत्पादयन्। सन्धमति संयोजयति "व्यवहिताश्च" इति छन्दसि व्यवधानेऽप्युपसर्गसञ्ज्ञेति। तात्पर्यन्त्वस्य व्यापकत्वे। तदेव दर्शयति—एवमावृत्य तिष्ठतीति। यद्वा लीलाविग्रहपरमेतत्। तदुक्तमाचार्यैः—"शरीरान्वयव्यतिरेकानुविधायिनि कार्ये शरीरस्यापि ग्रहणात् गृह्णाति हीश्वरोऽपि कार्यवशाच्छरीरमन्तरान्तरा च दर्शयति विभूतीः" इति। सर्वत इति बहुत्वमात्रपरमेकावच्छेदेन पाणिपादादिनानावयवानां बाधितत्वात्।

स्वभावमाह—

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च।

सर्वेन्द्रियगुणैश्चाक्षुषादिभिराभासते तत्प्रकारकज्ञानविषयो भवतीति सर्वेन्द्रियगुणाभासः, नित्यत्वेनेश्वरज्ञानस्य चक्षुरादिजन्यतावच्छेदकधर्मविरहेऽपि तत्र चाक्षुषादिकमुपचर्यते।

"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादि श्रुतिषु। "अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुश्च शृणोम्यकर्णः" इत्यादिस्मृतिषु चेति भावः। तत्रैव हेतुमाह—सर्वेन्द्रियविवर्जितमिति। धर्मिग्राहकमानेन नित्यज्ञानवत्तयैव सिद्धेरिति भावः। असक्तं रागद्वेषादिहीनं सर्वभृत्तत्तत्कर्मानुरूपेण नाशोत्पत्तिसुखदुःखादिभिर्भूतग्रामं संयोजयत्। निर्गुणं प्रधानमन्यदीयेच्छान्वयव्यतिरेकाननुविधायितत्त्वत्वात्। एतेन "साक्षी चेता केवलो निर्गुणश्च" इत्यादिकं नैर्गुण्यप्रतिपादकं वाक्यजातं व्याख्यातम्। गुणानां भोक्त्रनुभवितृत्वेनातीन्द्रियविषयकसाक्षात्कारलाभः। अतीन्द्रियाणां गुणानामपि सत्त्वात्। किञ्च—

बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥

बहिष्ठवमन्तस्त्वञ्च देहमपेक्ष्योक्तम्। ततश्चावधिभूतदेहावच्छेदेन न स्यादित्याशङ्कायामचरं चरमेव चेति। यदि सर्वत्रास्ति तर्हि सर्वैरप्युपलभ्यते

अतः सूक्ष्मत्वादिति । अतीन्द्रियत्वादित्यर्थः । फलितं व्यापकत्वमाह—दूरस्थं चान्तिके न तदिति । तथा च मन्त्रवर्णाः—

"तदेजति तन्नैजति तद्दूरे तद्वदन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥"

विद्वदभिप्रायेणान्तिकदूरस्थत्वोक्तिरित्येतदुभयव्याख्यातारः ।

किञ्च—

अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ इति ।

भूतेषु कार्येष्वविभक्तमेकं यावत्कार्यनिरूपितकारणताश्रयत्वात् । यद्वा भूतेषु मूर्त्तेष्वविभक्तं सर्वतत्संयोगित्वात् । अथ च विभक्तमिव स्थितं तत्संयोगस्य वृत्तिनियामकत्वाभावेनेश्वरस्य केवलान्वय्यत्यन्ताभावप्रतियोगित्वाद् भूतानां कार्याणां भर्त्तृ स्वेच्छया नियोजकं च तदेव ग्रसिष्णु प्रभविष्णु चेति ।

नन्वस्मदादीनां तत्साक्षात्काराभावेऽप्यतीन्द्रियपरमाण्वादिदर्शिनां देवादीनां तत्प्रत्यक्षं स्यादत आह—

ज्योतिषामपि यज्ज्योतिस्तमसः पर उच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥

ज्योतिषां सूर्यादीनामपि ज्योतिः प्रकाशकम् ।

न तत्र सूर्यो भाति न चन्द्रतारा नेमाः विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं बिभाति ॥

"येन सूर्यस्तपति तेजसेद्धा" इत्यादि च । स्मृतिरपि—

यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

तथा च सूर्यादीनां नात्मप्रकाशकत्वं चाक्षुषमायोपयोगित्वात् । किन्तु आत्मन एव सूर्यादिप्रकाशकत्वमुत्पत्यादिनियामकत्वादित्यर्थः । तमसः अज्ञानात्परं दूरमुच्यते । मिथ्याज्ञानप्रतिबध्यसाक्षात्कारकत्वमेव दूरस्थत्वमितिभावः । यद्वा तमसः तदभाववति तत्प्रकारकत्वरूपभ्रमज्ञानात्परं तद्रहितत्वात्, भ्रमस्य दोषजन्यत्वनियमेनेश्वरज्ञाने भ्रमत्वाभावात् । ज्ञायतेऽने-

नेति ज्ञानमस्मदादिज्ञानस्येश्वरजन्यत्वात्, ज्ञानगम्यमस्मदादिज्ञानविषयः, सर्वस्य हृदि विशेषेणान्तर्यामितया स्थितम्। तथा च **कौषीतकिब्राह्मणम्**—

'एष ह्येवैनं साधुकर्म कारयति यमुन्निनीषति एष उ एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सते'' इति। एतज्ज्ञेयं यत्तत्पूर्वं प्रवक्ष्यामीति च यत्प्रतिज्ञातं तदिह परमात्मस्वरूपमुक्तमित्यर्थः ॥ १७ ॥

उपसंहरति—

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥

ज्ञानपदे करणकर्तृव्युत्पन्नयोर्ज्ञानशब्दयोः ''नपुंसकमनपुंसकेन'' इति एकशेषैकवद्भावौ। मद्भावाय मत्सादृश्यप्राप्तये रीतेरुक्तत्वात् ॥ १८ ॥

प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥

प्रकृतिः पुरुषपदार्थश्च सप्तमाध्याये उक्तः—

भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च ॥
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
जीवभूतां महाबाहो ययेदं धार्यते जगत्।
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥
अहं कृत्स्नस्य जगतः प्रभवःप्रलयस्तथा।

आकाशान्तानामिन्द्रियप्रकृतित्वं दुःखहेतुदेहजनकत्वं च, मनसो ज्ञानादावसमवायिसंयोगप्रतियोगित्वेन निमित्तत्वम्, बुद्धिपदं सविषयत्वसाधर्म्येण प्रवृत्तिपरम्, अहंकारो मोह इत्यष्टकं जगदारम्भहेतुत्वात् प्रकृतिः। अपरेयमित्युत्तरश्लोकाद्यभागः पूर्वश्लोकान्वयी। इयमष्टविधा प्रकृतिरपराऽनुत्कृष्टा अचेतनत्वात्। मिथ्याज्ञानाद्धि दोषो रागाद्यात्मकः। ततः प्रवृत्तिः, ततो धर्माधर्मद्वारा जन्म देहसम्बन्धरूपम्, ततो दुःखमित्यनादिरयं प्रवाहः। तथा च मिथ्याज्ञानोच्छेदे सति दोषादिसमुच्छेदपरम्परया दुःखोच्छेदः स्यात्। तथा च न्यायसूत्रम्—''दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'' इति। इदानीं यद्भोगार्थमेतज्जीवमाह—इतस्त्वन्यमित्यादि। परामुत्कृष्टां सर्वस्य चेतनाभोगार्थतया तस्यैव प्राधान्यात्। मे इति स्वसम्बन्धोल्लेखस्तु स्वीयकारणतानिरूपितं कार्यसहकारित्वाद् भोक्त्र-

भावे सृष्टयनुपपत्त्या किंनिष्ठकार्यतानिरूपितं कारणत्वनिरूपितमीश्वरः स्यात्, तदाह—ययेदमिति। धार्यते यद्भोक्तृत्वेनोक्तप्रकृतिसम्बन्धादेव जीवस्य संसार इत्याह–

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥

प्रकृतिस्थो देहादिसम्बन्धः। तज्जनितान् गुणान् स्वसमवेतान् ज्ञानेच्छादीन् भुङ्क्ते गुणस्य धर्माधर्मरूपस्य सम्बन्धः। सदसतीषु ब्राह्मणचाण्डालाद्यासु योनिषु यज्जन्म देहान्तरसम्बन्धः। तत्कारणमतो देहोच्छेदे सत्येव कैवल्यं स्यान्न त्वन्यथेति भावः।

उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पूरुषः परः ॥

उपद्रष्टा तत्कर्मसाक्षात्कारित्वादनुमन्ता तत्कार्ये सहकारित्वात्। भर्त्ता-कर्मानुरूपफलदातृत्वात्। भोक्ता तत्सुखादिसाक्षात्कारवत्त्वात्। यद्वा जन्यमात्रस्थितिहेतुत्वेन पालकत्वात्। महेश्वरः स्वेच्छाधीनयावत्पदार्थकत्वात् परमात्मा इत्यनेन प्रकारेण उक्तः। देहेऽस्मिन् पुरुषो जीवस्तु परोऽन्य एव सन्निधानादीश्वरस्यैवान्योन्याभावप्रतियोगित्वलाभः। किञ्चिद्विषयकज्ञानादिमान् जीव ईश्वराद्भिन्नइति भावः ॥२१॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।
सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥

पुरुषं जीवं प्रकृतिं पृथिव्यादिगुणैर्ज्ञानादिभिः सह वेद एषां विवेकं जानाति स सर्वथा स्वेच्छया वर्त्तमानोऽपि देहान्तरं न गृह्णाति किं पुनः स्ववृत्तस्थ इति भावः ॥ २२ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे।

केचिद् ध्यानेन निदिध्यासनेन। आत्मानमात्मनात्मनि पश्यन्ति वाह्यवृत्तेभ्यो व्यावृत्तस्य मनसो ध्येयैकग्राहकत्वं ध्यानं तद्विषयकप्रत्ययप्रवाह इति यावत्। सत्त्वरजस्तमसां गुणानां साम्यावस्था प्रकृतिः। पुरुषः कूटस्थनित्यस्तद्विलक्षणमिति ज्ञानम्। साङ्ख्ययोगः कर्मयोगः, ईश्वरार्पणबुद्ध्या कर्मानुष्ठानम्।

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्यु श्रुतिपरायणाः ॥

अन्ये त्वेवं विजानन्त अन्येभ्यः आचार्येभ्यः श्रुत्वा एवंचिन्तयतेत्युक्त्वा उपासते । श्रुतिः श्रवणमेव परमयनं मोक्षमार्गप्रवृत्तिसाधनं येषान्ते केवलपरोपदेशप्रमाणाः स्वयं विवेकहीनाः अपि मृत्युं तरन्ति सुतरां तु विवेकिन इतिभावः । एतद्योनीनि सर्वाणीत्यस्य प्रपञ्चमाह—

यावत्सञ्जायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥

क्षेत्रक्षेत्रज्ञसंयोगो भोक्तृभावलक्षणः सम्बन्धः, तेन कार्यमात्रोत्पत्तिः बीजप्रयोजनव्यतिरेकेण कस्यचिदनुत्पत्तेः ।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥

विनश्यत्सु सर्वप्राणिषु समं रागद्वेषराहित्येन वर्त्तमानमविनश्यन्तं नित्यं परमेश्वरं यः पश्यति साक्षात्करोति स पश्यति तत्त्वज्ञानवत्त्वात् । दर्शनान्तरस्य निष्फलत्वात् । अश्वैर्यानमित्यस्य यानान्तरनिन्दाद्वाराश्वयानप्रशंसायां तात्पर्यसम्भवात् ।

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥

समं सर्वत्र समवस्थितमिति व्याख्यातम् । ईश्वरं पश्यन् साक्षात्कुर्वन् समत्वादीनां स्वरूपकथनमात्रत्वम्, न तु मोक्षजनकज्ञाने प्रकारत्वपर्यन्तं मानाभावात् । न हिनस्तीति । जन्ममृत्युसम्बन्धाभावात् । तत ईश्वरसाक्षात्कारात्परां गतिं मोक्षं प्राप्नोति ।

एवमात्मनःकर्तृत्वमुक्त्वा वादिनां मतमाह—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥

प्रकृत्यैव च क्रियमाणानि कर्माणि महदादीनि यः पश्यति मन्यते स औपनिषदः साङ्ख्यो वा आत्मानमकर्त्तारं पश्यति ।

तत्त्वविदस्तु "अहं कृत्स्नस्य जगतः" "द्यावाभूमी जनयन्देव एकः" इत्याद्यनेकश्रुतिस्मृतिभिरीश्वरमकर्त्तारमेव मन्यन्ते, तद्भिन्नञ्च जीवमपि तच्छरीरेषु भिन्नं स्वकृतेनेह कर्मणेत्यादिस्मृत्या धर्ममयोऽधर्ममय

इत्यादिश्रुत्या बहुविधया तत्सहकृततर्कैश्च कर्तारं भोक्तारं च मन्यन्ते इत्यभिप्रायः ॥ तदेव स्पष्टयति—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥

भूतानां जीवानां घटादीनां च पृथग्भावं भेदमेकस्थं मुख्यपक्षस्थं यदानुपश्यत्युक्तन्यायादिपर्यालोचनानन्तरं निश्चिनोति तत आत्मन एव च विस्तारं सृष्टिं जानाति, कर्त्तारमेवात्मानं वेत्तीति यावत् । तदा ब्रह्म संपद्यते, शोकराहित्येन तत्साद्दश्यात् ॥

सर्वतः पाणिपादं तदित्यत्र लीलया शरीरपरिग्रहः परमेश्वरस्योक्तः तेन जीववदीश्वरस्यापि बन्धः स्यादित्याशङ्कां निराचष्टे—

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥

न विद्यते आदिः शरीरपरिग्रहहेतुः स्वनिष्ठो धर्मादिर्यस्येति तादृशत्वात् । तस्यैवार्थो निर्गुणत्वादिति । अत एव "अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम्" इति **कुसुमाञ्जलौ** व्याख्यातम् । अत एव न व्येति स्वकर्मोपार्जितशरीरोपग्रहपरित्यागाभ्यां विविधत्वं न एतीत्यव्ययः । ईश्वरस्य कर्तृत्वेऽपि तत्फलसम्बन्धिविरहान्न करोतीत्युक्तम् । तदेवाह—न लिप्यत इति । स्पष्टमन्यत् । जीवकर्मानुरोधेन तत्कर्मभिरेवेश्वरः शरीरं गृह्णाति न तु स्वकर्मभिः, तेषामलीकत्वात् । अतस्तच्छरीरावच्छेदेन कर्मोत्पत्तावपि मिथ्याज्ञानसहकारविरहेण तददृष्टानुत्पत्त्या न तत्फलसम्बन्ध इतिभावः ॥

दृष्टान्तमप्याह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥

जीववत्परमात्मनोऽप्यनेकत्वं स्यादित्यत आह—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥

क्षेत्रमस्यास्ति जन्यत्वज्ञेयत्वान्यतरसम्बन्धेनेति क्षेत्री परमात्मा ॥

अध्यायार्थमुपसंहरति—

क्षेत्रक्षेत्रज्ञयोरेतदन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥

अन्तरं भेदं ज्ञानं विचारस्तन्मयेन चक्षुषा परिच्छेदसाधनेन भूतानां प्रकृतिरष्टधा उक्ता। मोक्षो दुःखप्रागभावासमानकालीनदुःखध्वंसः। द्वन्द्वैकवद्भावः। यद्वा भूतानामपि द्वन्द्वः। प्रकृतिपदं तदन्यपरं गोबलीवर्दन्यायात्। ये जानन्ति परां गतिं मोक्षलक्षणां लभन्ते। एवञ्च भेदस्य पारमार्थिकत्वमेव। तथा च तत्प्रतियोग्यनुयोगिनामपीति भगवतो भावः॥ इति त्रयोदशोऽध्यायः॥

चतुर्दशकेऽपि श्लोकाः व्याख्यायन्ते—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत॥

मम सहकारिणी योनिः सर्वोत्पत्तिमन्निमित्तत्वाददृष्टरूपा। तदुक्तमाचार्यैः—

"इत्येषा सहकारिशक्तिरतुला माया दुरुन्नीतितो
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता॥" इति।

अत एव महत्त्वं ब्रह्म बृं (हण)त्वात्प्रवाहरूपेणाविच्छेदाद् गर्भं तत्प्रायामिच्छां दधामि। सर्गेच्छया तेषां वृत्त्युद्बोधं करोमीत्यर्थः। तत उक्तादृष्टवज्जीवपरमाणुसंयोगादिक्रमेण द्व्यणुकाद्युत्पत्त्या सर्वभूतोत्पत्तिः। भूतपदं जन्यपरम्, उत्पत्त्यर्थकभूधातोर्गत्यर्थाकर्मकेत्यादिसूत्रेण कर्त्तरि क्तप्रत्ययः। एतेन "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति प्रवाहणवाक्यस्थं "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति चाक्रायणवाक्यीयं छान्दोग्यम्। "यतो वा इमानि भूतानि जायन्ते आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादि च श्रुतिजातम्।

यत्तु जन्यत्वं न कार्यतावच्छेदकं तत्तदवच्छेदकाभिन्नत्वेन सर्वकार्याननुगतत्वात्। न च प्रागभावप्रतियोगित्वं प्रागभावे मानाभावात्। नापि कालिकविशेषणतानुयोगित्वमविद्यादिरूपकालवृत्तित्वात्। अन्यथा विद्याया जगदाधारत्वस्य श्रुत्यादौ श्रुतस्यानुपपत्तेः। अनादिसाधारणस्य जगतः कालिकसम्बन्धेनैवाविद्यावृत्तित्वस्य वाच्यत्वादिति, तन्न; ध्वंसप्रतियोगित्वस्य जन्यतावच्छेदकत्वोपपत्तेः। ध्वंससाधारण्यविरहेऽपि क्षतिविरहात्। प्रतियोग्यनुयोगित्वान्यतरसम्बन्धेन ध्वंसवत्त्वं वा जन्यतावच्छेदकम्। भूतपदस्योत्पत्तिमदर्थतयोक्तरूपस्यैव यथावल्लाभात्।

यदपीमानि भूतानीत्यस्य जीव ईशस्तयोर्भेदोऽविद्या तत्सम्बन्धश्चेति पञ्चकपरतया भूतानीत्यस्य प्राप्तार्थकस्य शुद्धचित्प्राप्तदृश्यपरतया श्रुतियुक्तिसिद्धानादिताकेभ्य उक्तपञ्चभ्यो भिन्नं यद्दृश्यं तत्त्वं ब्रह्मकार्यतावच्छेदकम्, आकाशादेः कार्यत्वपरश्रुत्यनुग्रहाच्च प्रागभावे च मानाभावादिति, तदसत्; इमानीत्यस्य भूतविशेषणत्वेनानुपक्रान्तोक्तपञ्चकपरत्वे बीजाभावात्। तत्पञ्चकस्य ततो लाभेऽपि तद्भेदस्य कथमप्यलाभाच्च। भूतपदस्य प्राप्त्यर्थकत्वे कर्माकाङ्क्षाप्रसङ्गेनोत्पन्नत्वार्थस्यैव सम्यक्त्वात्प्राप्तिकर्मत्वेन शुद्धचिदन्वयस्यापि शब्दानुग्राह्यत्वादविद्यादेरद्याप्यसिद्धत्वात्। आकाशादिकार्यत्वे च श्रुत्यनुग्रहस्य बहुशो निरस्तत्वात्।

वस्तुत इमानि भूतानीत्येतदेव नाश्यतावच्छेदकस्यापि समर्पकं वाच्यम्। उक्तरूपं च न तथा भेदप्रतियोगित्वेन कार्यतावच्छेदके निवेशितानामप्यविद्यादीनामपि ब्रह्मज्ञानेन नाशस्य परैरभ्युपगमात्। किञ्च यथा परेषामनादिषडन्यत्वं कार्यतावच्छेदकं तथास्माकमप्यनादित्वमेवास्तु, षट्संख्यानिवेशे बीजाभावात्। अनादिसाधारण्येन दृश्यत्वस्य तन्मते जन्यतावच्छेदकत्वात्। तथा च पर्यवसितं विवादेन। अनादित्वं तेषां षड्वृत्ति, अस्माकन्त्वनेकवृत्ति, इतित्वन्यदेतत्। नित्यभिन्नत्वं तु नास्माकं प्रागभावसाधारण्यात्। तदनभ्युपग(मेऽ)पि ध्वंससाधारण्याभावाज्जन्यत्वं स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेति। नव्यमतानुसारेण तु न काप्यनुपपत्तिरित्यास्तां विस्तरः।

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥

तत्तत्कार्यहेतोरदृष्टविशेषस्यैव सत्त्वादिसञ्ज्ञा। "गुणातीतोऽपीशस्त्रिगुणसचिवः" इति मूलव्याख्यायां यद्यपि विरोधतत्परिहारौ न सत्त्वादिकं गुणमादाय तेषामस्माभिरनङ्गीकारात्, तथापि सृष्ट्यादिहेतुरदृष्टमेव तत्पदाभिधेयमिति **मिश्रटीकाकारै**रुक्तत्वात्। प्रकृतिसम्भवा आत्मनः स्वाभाविका एव, तेन बुद्धिगुणत्वं निरस्तम्।

यत्तु **भगवत्पादै**रुक्तम्—"ननु देही न लिप्यत इत्युक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यते, परिहृतमस्माभिरिवशब्देन निबध्नन्तीव इति" तच्चिन्त्यम्; इवाध्याहारे गौरवान्मानाभावाच्च। न लिप्यत इत्यस्य च परमात्मपरत्वात्। एतेन "इवकारानुबन्धेन नितरां निबध्नन्ति स्वविकारवत्तत्रोपदर्शयन्ति" इत्या**नन्दगिरि**व्याख्यानमप्यपास्तम्। स्पष्टञ्चेदम्—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥

इत्यादिना समनन्तरमेवोक्तम्।

यत्तु तथापि विषयभूतस्य सुखस्य विषयाण्यात्मनि संश्लेषापादानं मृषैव सुखे संजनं सैषा अविद्यैव। न हि विषयधर्मो विषयिणो भवति। इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्मः, इत्यादि तत्सर्वं पूर्वोक्तरीत्या परिहृतं बोध्यम्।

नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति॥

गुणेभ्योऽन्यं गुणत्वावच्छिन्नप्रतियोगिताकभेदवन्तं गुणवद्भिन्नमिति यावत्। यद्यप्येवं गुणस्यैव प्रतियोगितावच्छेदकत्वं गुणत्वस्य तु प्रतियोगितावच्छेदतावच्छेदकत्वमेव, तथापि स्वाश्रयनिष्ठावच्छेदकत्वसम्बन्धेन गुणत्वस्य तदवच्छेदकत्वं बोध्यम्। न वह्निभिन्नमित्यादितो वह्नित्वावच्छिन्नप्रतियोगिताक एव भेदः प्रतीयते, न तु वह्न्यवच्छिन्नप्रतियोगिताकः। तादृशधीसत्त्वेऽपि वह्निमानिति ज्ञानोदयादिति वाच्यम्, अत्र बाधकसत्त्वे न वैषम्याद् बहुत्वस्य च विनिगमकत्वाभावात्।

पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम्।
कर्त्तारमकृतं विष्णुं भूतानां प्रभवाव्ययम्॥

इत्यादि **भारतदर्शनाच्च**। अथवा गुणेभ्यो हेतुभ्यः कर्त्तारमात्मानं पश्यन्ति न त्वन्यम्। गुणसहकारेणैव तस्य कर्त्तृत्वं नान्यथा। अतः आत्मा कर्त्तादिरूपश्चेत्यादिकं निरवकाशम्। गुणेभ्यश्च परमिति भेदस्य वास्तवत्वसूचनम्, तेन निर्द्धर्मत्वमपि निरस्तम्। यद्वा नान्यमिति नैकेत्यादिवत्समासः। गुणाधीनकर्त्तृत्वाश्रयमिति स्वरूपोक्तिः। नान्यं केवलं साक्षात्करोतीति मोक्षहेतुज्ञानोक्तिः। यद्वा गुणेभ्य इति पञ्चम्याः प्रतियोगित्वमर्थ इत्युभयसिद्धं ततश्च नान्यमविरुद्धं तथा च गुणवन्तमित्यर्थः। "स एवान्यो जातः सखि परिचिताः कस्य पुरुषाः" इत्यादि दर्शनात्। "नमन्तामित्येके समे" इति वैदिकप्रयोगाच्च। अत एव **मोक्षधर्मे** वार्ष्णेये आध्यात्म्ये—

नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम्।
व्याप्य शेते महात्मा यस्तस्मात्पुरुष उच्यते॥ इत्युपक्रम्य

सोऽत्र वेदयते वेद्यं स शृणोति स पश्यति ।
कारणं तस्य देहोऽयं स कर्त्ता सर्वकर्मणाम् ॥

कारणं कर्मकरणे सहकारि । तथा मनुबृहस्पतिसंवादे मनुरुवाच—

यदा तैः पञ्चभिः पञ्च युक्तानि मनसा सह ।
अथ तद्द्रक्षते ब्रह्म मणौ सूत्रमिवार्पितम् ॥
तदेव तु यथा सूत्रं सुवर्णे वर्त्तते पुनः ।
मुक्तास्वथ प्रवालेषु तदेव राजते तथा ॥
तद्वद्गोऽश्वमनुष्येषु तद्वद्धस्तिमृगादिषु ।
तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ॥
येन येन शरीरेण यद्यत्कर्म करोत्ययम् ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ॥

ज्ञानाद्युपधानेन नैव जीवप्रत्यक्ष इति ब्रह्मेत्यन्तः एवार्थः । स चैक एव स्वकर्मभोगाय नानाशरीरसम्बन्धी पर्यायेण भवतीत्याह—मणावित्यादि स्वकर्मभिरित्यन्तेन । एकस्यैव ब्रह्मणो जीवरूपेण नानाशरीरसम्बन्धस्तु नोक्तवाक्यार्थः । पुनः शब्दगर्भदृष्टान्तानुसारेण · स्य · · क्रमेण नानादेहसम्बन्धस्यैव दार्ष्टान्तिकार्थत्वादित्यास्तां विस्तरः ।

प्रकृतमनुसरामः । इन्द्रियादीनां सर्वथानुपयोगशङ्कां परिहरति—स वा अयमिति । स्वाधिकरणसमवायध्वंसानधिकरणसमयसम्बन्धरूपाया उत्पत्तेरात्मन्यसम्भवाज्जायमान इत्यस्य व्याख्यामाह–शरीरमभिसम्पद्यमान इति । अपूर्वदेहेन्द्रियसम्बन्ध एवात्मनो जायमानत्वमिति भावः । पाप्मभिः पाप्मशब्दस्य दृष्टमात्रपरतया तत्साधनैर्देहेन्द्रियादिभिः संसृज्यते सम्बध्यते । "संसृज्यते सरसिजैररुणांशुभिन्नैः" इत्यादिदर्शनादकर्मकत्वम् । उत्क्रामन्नित्यत्रापि निर्गमनस्य विभौ बाधितत्वाद् व्याचष्टे—म्रियमाण इति ।

न च मरणमप्यात्मनो नास्ति "न जायते म्रियते वा कदाचिद्" इत्यादि विरोधादिति वाच्यम्; ज्ञानजनकमनःसंयोगाजनकस्पन्दजन्यविभागजन्यज्ञानजनकमनःसंयोगध्वंसरूपस्य मरणस्यात्मनि स्वीकारात् । स्पष्टञ्चेदं **द्रव्योपायविवरणादौ** । देहेन्द्रियसम्बन्धस्यैवानर्थमूलत्वं दर्शयति–मृत्यो रूपाणीति । संसारकारणानीत्यर्थः । उभौ लोकावित्युक्तं तौ विशेष्य दर्शयति—तस्मिन् सन्ध्ये इत्यादिना । स्पष्टोऽर्थः । एतज्जन्मानुभूतमेतदुत्तरं प्राप्स्यमानञ्च देवदेहादि तच्छरीरत्यागसूचकं वा प्रेतालिङ्गनादि पश्यति ।

मध्ये वयसि कार्कश्यात् कारणानामिहादितः ।
प्रायेण वीक्ष्यते स्वप्नवासनाः कर्मणो वशात् ॥

यियासुः परलोकं तु कर्मविद्यादिसंभृतम् ।
भाविनो जन्मनो रूपं स्वप्न आत्मा प्रपश्यति ॥

**मोक्षधर्मेऽपि वार्ष्णेयाध्यात्म्ये** स्वप्नप्रस्तावे—

गुणानामपि यद्यत्तत्कर्म जानात्युपस्थितिम् ।
तत्तच्छंसति भूतञ्च मनो यद्भावि तत्तथा ॥

गुणानां सत्त्वादीनां कर्म सुखदुःखमोहात्मकमुपस्थितं जानाति स्वप्नेऽप्यनुभवतीत्यर्थः । यद्भावि यद्भविष्यत्कर्म तत्तच्छंसतीति, इत्यादि । इदमेव स्पष्टयति–अथ यथाक्रमोऽमित्यादिना । अथैतच्छरीरारम्भककर्मणः किञ्चिदेवावशिष्टत्वे यथाक्रमः । एतच्छरीरपाताव्यवहितोत्तरभाविशरीरावच्छेदेन यादृशसुखदुःखजनकादृष्टवान् भवति तादृशं शरीरादिकमाश्रित्योभयान् धर्माधर्मफलभूतान् पाप्मनो दुःखान्यानन्दान् सुखानि पश्यति । चकारोऽनुक्ततत्कारणसमुच्चयार्थः । प्रासङ्गिकमुक्त्वा प्रकृतां स्वप्नावस्थां विशिष्य निर्णेतुमाह—स यत्रायं प्रस्वपितीति । यत्र यदालोकस्य चक्षुरादेः बाह्येन्द्रियजातस्य जाग्रत्यपि किञ्चिदिन्द्रियस्य ज्ञानाजनकत्वादाह—सर्वावत इति । सर्वस्येत्यर्थः । न च जाग्रदवस्थायामपि मानसज्ञानकाले यावद् बाह्येन्द्रियजन्यज्ञानाभावोऽस्त्येवेति वाच्यम्; अवस्थाविभाजकोपाध्यवच्छेदेन ज्ञानजनकत्वाभावस्य विवक्षितत्वात् । तस्य च जाग्रदव्यावृत्तत्वाल्लोकस्य शरीरस्य सर्वावतः सर्ववतः तच्चादृष्टकारित्वेन । मात्रां ज्ञानेन्द्रियाद्येकदेशमपादायापछिद्येति व्याख्यातारः । मात्रां करणव्युत्पत्त्या ज्ञानानुकूलां शक्तिमपादाय फलानुपहितां कृत्वा । तदा दर्शयति–स्वयं विहत्येति । तेन चाक्षुषादियोग्यतायास्तदानीं चक्षुरादौ सत्यपि न क्षतिः । स्वयं निर्माय विलक्षणज्ञानसामग्रीं सम्पाद्य क्रियाकारकफलानि कृत्वेति कर्मणः परैरध्याहारात्कथं जागरविघटनं स्वप्नसामग्रीसम्पादनं चात्मना क्रियत इत्याशङ्क्याह–स्वेन भासा स्वेन ज्योतिषेति । स्वप्नभोगजनकादृष्टवशाद् · ·बोधः । भा इति अदृष्टं ज्योतिरिति च संस्कारः साधर्म्याद् ग्राह्यः । स्पष्टञ्चेदं **पद्मपुराणे**—

जाग्रत्कर्मक्षयवशात्स्वप्नभोग उपस्थिते ।
बोधावस्थां तिरोधाय देहाद्याश्रयलक्षणम् ॥ इति ।

कर्मोद्भावितसंस्कारस्तत्र स्वप्नरिरंसया ।
अवस्थां च प्रयात्यन्यां मायावी मायया वृतः ।

प्रस्वपितीति प्रतीकोपादानं पूर्वोक्तस्य प्रस्वपितीत्यस्यायं ग्रन्थो विवरणार्थ इति सूचनार्थम् । अन्यथा सुषुप्त्यवस्थापरत्वभ्रान्तिः स्यादिति व्याख्यातारः । अत्र स्वप्नावस्थायामयं पुरुषो जीवः स्वयंज्योतिर्भवति । अन्यनैरपेक्ष्येणैव ज्ञानादिमान् भवति ।

न च मनसोऽपेक्षणान्नैवमिति वाच्यम् ; ज्ञानत्वव्याप्यधर्मावच्छिन्नकार्यत्वप्रतियोगिककारणताश्रयापेक्षाया एव व्यवच्छेद्यत्वाद्व्याप्यत्वं भेदगर्भम् । मनसश्च ज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्व··· तदपेक्षाया अतथात्वात् । न च तथापि स्मृतित्वावच्छिन्नकार्यत्वनिरूपितकारणताश्रयस्य संस्कारस्यापेक्षणाद्दोषतादवस्थ्यम्, अनुभवविभाजकोपाधिसाक्षाद्व्याप्येत्यादेरुक्तत्वात् । तेन त्वङ्मनोयोगादेरपेक्षणेऽपि न क्षतिः । स्वप्नेऽपि चाक्षुषादिकं न भवत्येव, किन्तु मानसज्ञान एव चाक्षुषत्वादिकमारोप्यते । न च तथापि तादृशानुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयस्य परामर्शादेरपेक्षणाद्दोष इति वाच्यम् ; स्वप्नत्वं मानसत्वव्याप्यजातिविशेषः । अनुमितित्वादिकमपि संस्काराख्यदोषवशादेवारोप्यते, इत्यभ्युपगमात् । स्मरणं विनैवादृष्टोद्बोधितसहकारकृतेन मनसा स्वप्नज्ञानोत्पत्तेः । न चैवं संस्कारस्य प्रमाणत्वापत्तिः, यदसाधारणं सहकार्याद्यमनोबहिर्विषयकप्रमां जनयति तस्यैव तथात्वादिति वाच्यम् ; प्रत्यक्षप्रमाण एवान्तर्भावादिष्टापत्तेः ।

वस्तुतस्तु स्वाप्नमहंसुखी, अहं शय्यायां सुप्तः इत्यादि ज्ञानमपि भ्रम एव । न च विषयाबाधात्कथं भ्रमत्वमतिप्रसङ्गादिति वाच्यम्; लाघवेन स्वप्नवहनाडीमनःसंयोगस्यैव दोषत्वकल्पनाद् भ्रमस्य संभृतसामग्रीकत्वात् । उक्तज्ञानेऽपि सुखान्तरशय्यान्तरादेरेव विषयत्वकल्पनात् । अतः स्वप्नज्ञानत्वावच्छेदेनैव भ्रमत्वम् । स्वीकृतं चेदं "संशयस्वप्नौ तु न प्रमे" इति **मणिवाक्य**व्याख्यायां साम्प्रदायिकैः । एवञ्च विषयतासम्बन्धावच्छिन्नप्रत्यक्षनिष्ठकार्यतानिरूपिततादात्म्यावच्छिन्नकारणताकस्य विषयस्यैव स्वयं ज्योतिष्ट्वे न व्यवच्छेदः । अत एव स्वयमेव व्यवच्छेद्यं प्रकाशयन्नाह—न तत्र रथा इत्यादि । रथयोगाः अश्ववृषभादयः, आनन्दाः कामिनीस्पर्शादिजन्याः, मुदः पुत्रादिलाभजाः, प्रमुदो विद्यादिसम्पन्नपुत्रादिदर्शनजाः । अल्पोदकाः वेशन्ताः, अगाधनीराः पुष्करिण्यः, स्रवन्त्यो नद्यः । प्रपञ्चो बाह्य आभ्यन्तरश्च । आद्यो द्विविधः कठिन-द्रवभेदात् । तच्च रथवेशन्तोक्त्योक्तम् । तेजस्यपि सुवर्णादौ काठिन्यसत्त्वात्, साक्षात्स-

म्बन्धस्याविवक्षितत्वाद् बाधादेश्च प्रत्यक्षाभावेनात्र तदनभिधानादान्तरसुखादि तच्चानन्दाद्युक्त्योक्तम्। एवञ्च स्वाप्नज्ञानमात्रं भ्रम इत्युक्तम्। सृजत इति तु विषयित्वासम्बन्धस्य कार्यतावच्छेदकत्वेन सङ्गमनीयम्। रथादीन् जानातीत्यर्थः। स्वप्नज्ञानमपि परम्परया बाह्यनिमित्तकमिति टीकादिदर्शनात्। अतः स्वप्ने सृष्टयन्तरमेवेत्यपास्तम्।

न च सृजते इत्यत एव तल्लाभोऽन्यथा घटादेरप्युत्पत्तिर्न स्यात्। घटो जात इत्यादीनामभिव्यक्त्युत्पत्तिपरत्वेनैवान्यथासिद्धेरिति वाच्यम्; तदुत्पादकक्लृप्तसामग्र्यास्तदा विरहात्। सामग्र्यन्तरकल्पने च तवैव गौरवात्। तदेवाह–स हि कर्त्तेति। हि यस्मात्स जीवो ज्ञानादीनामेव कर्त्ता। न तु स्वप्ने दृश्यमानस्य नानाविधस्य कार्यस्य तदुपादानविषयकप्रत्यक्षानुपपत्त्या तत्तदुपादानाभावेन चैकस्य जीवस्य तत्कर्तृत्वानुपपत्तेः। तदप्येते श्लोकाः। स्वप्नज्ञानस्य विषयाजन्यत्व एते मन्त्राः उपन्यस्यन्त इत्यर्थः। स्वप्नेन तदवस्थया शारीरं चक्षुरादिबाह्येन्द्रियमभिप्रहत्य स्वस्वविषयाद्विमुखीकृत्य, असुप्तः ज्ञानसामान्याभावशून्यः। तदेवाह—सुप्तान् विशेष्यनिष्ठात्यन्ताभावप्रतियोगिनः पदार्थान्। अवाचाकशीति जानाति। सुप्तान् वासनाफलरूपानित्यादि गौणार्थस्य परैरपि वाच्यत्वात्। शुक्रं प्रकाशकमिन्द्रियगणमादाय तत्सम्बन्धीभूय स्वसंयुक्तमनःप्रतियोगिकसंयोगाश्रयत्वं सम्बन्धः। पुनः स्थानं जागरावस्थामेति प्राप्नोति हिरण्मयः प्रकाशप्रचुरः पौरुषः पुरुष एव एक एव हन्ति गच्छति जाग्रदाद्यवस्थां लोकान्तरं चेत्येकः सः॥

कदाचिच्च भावितस्यैव स्वप्ने दर्शनमित्याह–प्राणेनेति। अवरं बीभत्सं कुलायं शरीरमात्मनोऽहंसत्त्वेन रूपितत्वात् कुलायात्तदानीं परिगृहीतशरीराद्बहिश्चारित्वात्, शरीरान्तरस्यापि स्वप्ने परिग्रहदर्शनात्। अमृतः पूर्वशरीरसम्बन्धवानेव यत्र कामं यत्र विषये कामोद्भवस्तम्, इयत प्राप्नोत्यत एव **मोक्षधर्मे**—

अत्राह कोऽन्वयं भावः स्वप्ने विषयवानिव।
प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव॥

अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः।
तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः॥

इन्द्रियाणां श्रमात्स्वप्नमाहुः सर्वगतं बुधाः।
मनसस्त्वप्रलीनत्वात्तत्तदाहुर्निदर्शनम्॥

कार्ये व्यासक्तमनसः संकल्पो जाग्रतो ह्यपि ।
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम् ॥
संसाराणामनन्तानां कामात्मा तदवाप्नुयात् ।
मनस्यन्तर्हितं सर्वं वेद सोत्तमपूरुषः ॥

अत्राहेति पूर्वपक्षावतारः। देहवानिव विषयवानिव वर्त्तते। इन्द्रियव्यापारभावेऽपि तद्वद्ग्राह्यविषयकज्ञानं यत्स्वप्ने भवति तत्र को हेतुः। एवमतीतानागतादिदर्शनमपि कथं देहवानिवेत्यत्र सिंहादिशरीरं ग्राह्यम्। मनुष्यादिशरीरावच्छिन्नोऽपि विजातीयशरीरावच्छिन्नमात्मानुमन्यतेऽत इवशब्दः। अत्रोच्यते इति परिहारोपक्रमः। प्रामाण्यार्थमाह—यथाप्येतदित्यादि, महर्षय इत्यन्तम्। इन्द्रियाणां चक्षुरादीनां श्रमाज्जाग्रदवस्थायां विषयव्यापारजनितायासात् स्वप्नं स्वाप्नज्ञानमाहुः सर्वविषयमात्रं गतं ज्ञानं यत्र। तथा च चक्षुरादिव्यापाराभावेन तदसाधारणविषयाणां ज्ञानासम्भवाद् व्यक्तं भ्रमत्वमितिभावः। मनसस्तु प्रलीनत्वाज्ज्ञानसहकारिसम्पन्नत्वात्तत्तन्निदर्शनं तस्य तस्यार्थनिश्चयेन दर्शनमाहुः। दृष्टान्तेनाप्याह—कार्ये इति। कार्ये कामिनीराज्यैश्वर्यविशेषादावासक्तमभिनिविष्टं मनो यस्य। यथा जाग्रद्दशायां संकल्पदशायां संकल्पवशादुपस्थितपदार्थानां संसर्गकल्पनया तत्तद्विषयलाभस्तथा स्वप्नेऽपि। तथा च सिद्धं भ्रमत्वम्।

नन्वेतज्जन्मन्यनुभूतानामप्यर्थानां कथं स्वप्ने दर्शनमतःसंसाराणामिति। जन्मान्तरानुभूतं पश्यन्तीत्यर्थः। यद्व्यतिरेकेण जीवनमनुपपन्नं तदतिरिक्तस्य जन्मान्तरानुभूतस्याप्येतज्जन्मनि न स्मरणम्। तथा च स्वप्नेऽपि तत्संस्कारोद्बोधो न स्यात्, अतः मनसीति। संस्कारेऽन्तर्हितं विषयतापन्नमतीन्द्रियत्वात्संस्कारस्यान्तर्हितत्वोक्तिः। जाग्रद्दशायां तथात्वेऽपि स्वप्ने फलबलाददृष्टविशेषेण तदुद्बोधकः कल्प्यते, इति भावः। केचिच्च विषय उदासीना दृश्यन्त इत्याह—

ततस्तमुपवर्त्तन्ते गुणा राजसतामसाः।
सात्विको वा यथायोगमानन्तर्यफलोदयः॥
ततः पश्यत्यसम्बन्धान्वातपित्तकफोत्तरान्।
ततस्तमोगतैर्भावैस्तदप्याहुर्दुरन्वयम् ॥
प्रसन्नैरिन्द्रियैर्यद्यत्संकल्पयति मानसम्।
ततत्स्वप्नेऽप्युपरते मनोदृष्टिर्निरीक्षते॥

व्यापकं सर्वभूतेषु वर्त्तते प्रतिपद्य तम् ।
आत्मप्रभावात्तं विद्यात्सर्वा ह्यात्मनि देवताः ॥
मनस्यन्तर्हितं द्वारं देहमास्थाय मानुषम् ।
यद्यत्सदसद्व्यक्तं स्वपित्यस्मिन्निदर्शनम् ॥

अयमर्थः—यथायोगं यथाकर्मानन्तर्यफलोदयः व्यवधानेनाव्यवधानेन वानन्तरं भाविफलोदयो यस्य केषाञ्चित्स्वप्नानां निष्फलत्वदर्शनार्थं ततः पश्यतीत्यादि। असम्बन्धान्निष्फलत्वाद्वातोत्तरा आकाशगमनादयः, पित्तोत्तरा अग्निदर्शनादयः, कफोत्तरा जलदर्शनादयः केचित्स्वप्नाः प्रतिबुद्धेन विशिष्य कथयितुमशक्या भवन्तीत्याह–रज इत्यादि। विकारैर्दुरन्वयं दुर्निरूपितमिदमेव स्वप्नसुषुप्तिरित्याहुः। स्वप्नपूर्वकाले स्वस्थचित्तो यत्स्वप्ने पश्यति तत्फलतयेवेत्याह--प्रसन्नैरिति। उपसंहरति--व्यापकमिति। सभूतेषु चक्षुरादिषु व्यापकं तज्जन्यज्ञानसहकारित्वादत एवाप्रतिपद्यं ज्ञानमात्रोपयोगित्वेनाप्रतिहतत्वाच्चक्षुरादीनां च भिन्नेन्द्रियजन्यज्ञानेऽनुपयोगादात्मप्रभावादात्मसंयोगात्तु नानाविधं पदार्थं विद्याज्जानीयात्। रूपादीनां कथं मनसा ग्रहण इत्यत आह—सर्वा हीति। देवता इन्द्रियाणि स्वजन्यज्ञानजन्यसंस्कारद्वारेण सर्वेन्द्रियाण्यात्मनि वर्त्तन्तेऽतस्तत्सहकारेण मनसा तत्तद्विषयकं ज्ञानमिति भावः। अन्तर्हितं द्वारं ज्ञानसाधनमिन्द्रियादि यत्रेति। तद्विशेषणं मरणव्यावर्त्तनायाह–मनसीति। ज्ञानाभिमुखे सतीत्यर्थः। मानुषमिति प्राधान्याभिप्रायम्। सदेतज्जन्मानुभूतमसदन्यजन्मानुभूतमव्यक्तं संस्कारविषयीभूतं निदर्शनविषयोऽस्मिन्स्वप्नाख्ये दशाविशेषे भवतीति शेषः। स्वपितीति। स्वप्नपदार्थस्य सपरिकरस्येदं निरूपणमित्यर्थः।

यद्वा देहमास्थायावक्तव्यमात्मा स्वपितीत्यन्वयः। सदसन्निदर्शनमुक्तरूपसदसद्विषयकं दर्शनमस्मिन्निहैवावस्थाभेदे भवतीत्यर्थः। तेन देहवानिवेति यदुक्तं तदप्युत्तरितम्। देहान्तरप्राप्तिज्ञानस्य भ्रमत्वोक्तेरिति बोध्यम्। तदेवाह--स्वप्नान्त इति। अन्तोऽवस्था उच्चावचं देवमनुष्यादिशरीरम्। दृश्यमान इति दैवादिकस्य कर्त्तरि रूपम्। देव उद्भूतज्ञानशक्तिः। बहूनि रूपाणि ज्ञानानि रूप्यन्ते विषया येभिरितिव्युत्पत्तेः। सात्त्विकादिभेदेन त्रैविध्यमाह—उतैवेति। स्त्रीभिः सह क्रीडन्निव जक्षदिव हसन्निव "जक्षभक्षहसनयोः" "जक्षित्यादयः षड्" इत्यभ्यस्तसंज्ञात्वात् "नाभ्यस्ताच्छतुः" इति नुमभावः। भयानि पश्यन्तीत्यत्रापीवशब्दः, स च सर्वत्रोक्तज्ञानस्य भ्रमत्वसूचनार्थः। अतश्च स्वप्नेऽपि न प्रपञ्चसम्बन्धाभाव इत्याह--आराम-

मिति । स्वप्ने आत्मन इन्द्रियसम्बन्धो नास्तीति स्फुटयन्नाह–तदिति । आयतं दीर्घं शयानमिति यावत् । न बोधयेदकस्मादुच्छिन्ननिद्रं न कुर्यादित्याहुः। शयानं न प्रबोधयेदित्यादिदृष्टार्थनिषेधसत्त्वेऽपि प्रकृतोपयुक्तदृष्टमेव हेतुमाह— दुर्भिषज्यमिति । यदेवेन्द्रियमकस्मादुच्छिन्ननिद्र आत्मानं प्रतिपद्यते । तद्दुश्चिकित्स्यं भवति । तदिन्द्रियविकल्पो भवतीतिभावः ॥

स्वप्ने सृष्टयन्तरमेवेतिदुःख······न्नाह—अथो इति । खलु निश्चयेन आहुः वृद्धाः । तथाचास्य सिद्धान्तस्य सूचनम् । अस्यात्मनः एषोऽवस्थाभेदो जागरितदेश एव जागरावस्थायाम् । ये विषयाः सन्ति परम्परया तद्विषयकमेव स्वप्नज्ञानं न त्वन्यविषयकम् । हेतुमाह—यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति । स्पष्टम् । अतः स्वप्ने विषयान्तरसृष्टयङ्गीकारो व्यर्थो निर्युक्तिकश्चेति भावः ॥

स्वप्नानन्तरं कदाचि सुषुप्तिसत्त्वेऽपि तां बहुवक्तव्यतयोल्लङ्घ्य लोकसिद्धं जागरमेव प्रक्रम्याह– स वा एष रत्वा क्रीडित्वा चरित्वा बहून्विषयाननुभूय पुण्यपापपदं तत्कार्यपरम् । नितरामानायो न्यायः । अयतेघञ् प्रतिन्यायं प्रतिकूलमित्यर्थः । प्रतियोनि यथास्थानमा द्रवति बुधानामेव प्रबुद्धो भवतीत्यर्थः । अत्र स्वप्ने यत्किञ्चित्पश्यति सदसद्वा तेनानन्वागतोऽसम्बन्धो भवति, स्वप्ने ब्राह्मणचाण्डालादिदर्शने धर्माधर्मानुत्पत्तेः । अवस्थाद्वयफलभोक्तृत्वं जीवस्य दर्शयति—तद्यथेति । स्पष्टोऽर्थः ।

तदुत्तरं च पठति—"यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति, यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति । शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्त्तमिव पतति यदेव जाग्रदभयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूपम् । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं शारीरमात्मा प्रज्ञानेनात्मनाभिसंवृत्तो न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं लोकान्तरम् ॥ अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा यज्ञा अयज्ञा स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणः

तापसोऽतापसोऽनन्वागतं पुण्यं पुण्येनानन्वागतं पापं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ।। यद्वै तन्न एष पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति नहि द्रष्टुर्दृष्टे विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ।। यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति नहि घ्रातुर्घ्राते विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ।। यद्वै तन्न रसयति रसयन्वै तद्रसं न रसयति नहि रसयितू रसाद्विपरिलोपो वर्ततेऽविनाशित्वान्न तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ।। यद्वै तन्न वदति वदन्वै तन्न वदति वक्तुर्वक्ते विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ।। यद्वै तन्न शृणोति शृण्वन्वै तच्छ्रोतव्यं न शृणोति नहि श्रोतुः श्रुते विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ।। यद्वै तन्न मनुते मन्वानो वै तन्मतं वा न मनुते नहि मन्तुर्मते विपरिलोपो विद्यतेऽविनाशित्वान्नहि तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ।। यद्वै तन्न स्पृशति स्पृशन्वै तत्स्प्रष्टव्यं न स्पृशति नहि स्प्रष्टुः स्पृष्टे विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ।। यद्वै तन्न विजानाति विजानन्वै तद्विज्ञेयं न विजानाति नहि विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ।। सलिल एको द्रष्टाद्वैतो भवति एष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्यः । एषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति" । **मैत्रेयीब्राह्मणे** मात्रासंसर्गस्त्वस्य भवतीत्युक्त्वा "यद्वै तन्न पश्यन्तीत्यादीनि विजानीयादित्यन्तानि" वाक्यानि पठित्वा "यत्र वा अन्यदिव स स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यद्रसयेदन्योऽन्यदभिवदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं जिघ्रेत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत् तत्केन कं विजानीयात् येनेदं सर्वं विजानाति तं केन कं विजानीयाद्वि ज्ञातारमरे केन विजानीयाद्" इत्युक्त्वा "शासनासि मैत्रेय्येतावदरे खलु मृजत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज" इति पठ्यते ।

अयमर्थः—श्येनः शशादो बृहच्छरीरः सुपर्णः कपोतादः श्येनाल्लघुशरीरः क्षिप्रगामी । संलयः सम्यग्नीडः, लीयतेऽस्मिन्निति व्युत्पत्तेः । ध्रियते गच्छति । दार्ष्टान्तिकमाह—एवमयं पुरुषो जीवः । एतस्मै प्रसिद्धाय-

सुषुप्तिरूपायान्तायावस्थाविशेषाय धावति गच्छति। तदनुकूलं यन्मनः-संयोगराहित्यं तद्वान्भवति। सुषुप्तावस्थास्वरूपमाह—यत्र सुप्त इति। सुप्तो निद्रामुपागतः। सिद्धा[ख्य ?]नाडिमनःसंयोगो निद्रामिद्धात्वं च पुरीततसाधारणे नाडीवृत्तिजातिविशेष इत्यङ्गीकारात्। सुषुप्तावपि निद्रातीति प्रयोगोपगमात्। जाग्रद्वैलक्षण्यमाह—न कञ्चनेति। काम योषित्पुत्रक्षेत्रादिरूपं विषयं न कामयते नेच्छति। स्वप्नवैलक्षण्यमाह-न कञ्चनेति। स्वप्नं तदवगम्यमर्थम्।

प्राणेन रक्षन्नपरं कुलायं बहिःकुलायादमृतं चरित्वा।
स ईयते अमृतो यत्र कामं हिरण्मयः पौरुष एकहंसः॥

इति श्रुत्या जाग्रद्दशायामुत्कटेच्छाविषयीभूतानामेव पदार्थानां प्रायशः स्वप्ने दर्शनात्। न कञ्चन कामं कामयते। इत्येतत्कार्यदर्शनव्यतिरेकमुखेनैव स्वप्नवैलक्षण्योक्तेः। इयमवस्था कदाचिद्भवतीत्यत आह—ता वा अस्यैता इत्यादि। हितसंज्ञा नाड्यः केशसहस्रांशवदल्पतरपरिमाणास्तिष्ठन्ति। तथा च पूर्वं गार्ग्यं प्रत्यजातशत्रुणोक्तम्—

"अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृत्य पुरीतति शेते" इति। हिता इति। विविधा दृष्टान्नादिरसवहनेन सर्वेभ्यः प्राणिभ्यो जनन्य इव हितकारिण्यः। पद्माकारो मांसपिण्डः पञ्चच्छिद्रः सनालो हृदयम्, तस्मादेकाधिकं शतं कुलनाड्यः शाखान्तरोक्ताः शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैकेति छान्दोग्यदर्शनात्। तासामेकस्य कुलशतं नाड्यः तासां एकस्या कुलं द्वासप्ततिसहस्राणि एवमन्यासामपि सुषुम्णाञ्च वर्जयित्वा। तत्रोपलक्षणन्यायेनैककुलमुररीकृत्योक्तं रविस्थानीया निर्गताः वहिर्मुखास्ताभिश्चाश्वत्थपर्णराजिभिरिव सर्वं शरीरं व्याप्तमिति तद्विवृत्या सारेणार्थः। अत एव **पद्मपुराणे**—

कदम्बकुसुमोद्भूतकेसरा इव सर्वतः।
प्रसृता हृदयात्तस्माद् याभिर्व्याप्तं शरीरकम्॥
हितं बलं प्रयच्छन्ति यस्मात्तेन हिताः स्मृताः।
द्वासप्ततिसहस्रैस्ताः संख्याता योगवित्तमैः॥
हृदयात्तास्तु निष्क्रान्ता यथार्काद्रश्मयस्तथा।
एकोत्तरं शतं तासु मुख्या विष्वग्विनिर्गताः॥

प्रतीन्द्रियं दश दश निर्गता विषयोन्मुखाः ।
नाडचः कर्मादिहेतुत्वात्स्वप्नादिफलभुक्तये ॥
वहन्त्यपो यथा नद्यो नाडचः कर्मफलं तथा ।
अनन्तैकोर्ध्वगा नाडी मूर्द्धपर्यन्तमञ्जसा ॥
सुषुम्णेति समादिष्टा तया गच्छन्विमुच्यते ।

इति प्रत्यवसृप्य ज्ञानादिविशेषगुणोत्पत्तिप्रातिकूल्येन पुरीततसंयुक्तमनोऽवच्छिन्ने भूयेत्यर्थः । शुक्लः श्लेष्माधिक्ये, नीलः कृष्णः पिङ्गलः पीतः पित्ताधिक्ये, हरितः श्यामो दूर्वादलाभः कृष्णश्चाञ्जनाभः वाताधिक्ये, एते च तन्नाडीगतानामन्नरसानां वर्णाः । स्वप्नाद्वैलक्षण्यं स्फुटयितुं स्वप्नस्वरूपमाह—अथेत्यादि । यत्र स्वप्नावस्थायाम् । जिनन्तीति । "ज्या वयोहानौ" इत्यस्य रूपं विच्छाययति पलायनं कारयति । उपलक्षणञ्चैतदित्याह—यदेवेति । जाग्रदवस्थायां यद्देव भयं पश्यति तदेवात्र स्वप्नावस्थायामविद्यया मन्यते । अविद्ययेत्यभेदस्तृतीयार्थः । मतिरूपधात्वर्थस्तदन्वयादिभयमिति द्वितीयार्थो विषयत्वं "अविद्याहंमतिर्भ्रमः" इत्यमरः । भ्रमाभिन्नज्ञानविषयं करोतीत्यर्थः । स्वप्नज्ञानमात्रस्य भ्रमत्वाल्लाघवेन स्वप्नवहनाड़ीसंयोगस्यैव दोषत्वकल्पनात् । एतेन भयानि पश्यन्तीति पूर्वोक्तं व्याख्यातम् । एवं स्वाप्नं दुःखमुक्त्वा सुखमप्याह—अथ यत्रेति । सुखमात्रस्येदमुपलक्षणम् । एवं पापपुण्याभ्यां स्वप्नद्वैविध्यमभिधाय प्रकृतमनुसरन् पूर्वोक्तं सुषुप्तिस्वरूपमनुवदति—अथ यत्र सुप्त इति । तदवस्थाया उत्कर्षमाह—तद्वा अस्यैतमिति । अतिच्छन्दः कामातीतमपहतपाप्मः पापपुण्यकार्यैः सुखदुःखराहित्यात् । अत एवाभयमिष्टवियोगानिष्टसंयोगचिन्ताशून्यत्वादस्य जीवस्य रूपं तत्कालीनं स्वरूपम् । तत्र दृष्टान्तं यथा कश्चन कामी प्रियया स्त्रियात्यन्तं स्वेष्टया युवत्या सम्परिष्वक्तः सम्यगालिङ्गितः बाह्यः चक्षुःश्रोत्रादिकमान्तरं पुत्रादिकं स्वसंयुक्तं नष्टादिव न जानात्ययं शारीर आत्मा जीवः प्राज्ञसञ्ज्ञेन स्वात्मना: संपरिष्वक्तस्तादात्म्यं प्राप्तः जाग्रत्स्वप्नसुषुप्त्यवस्थासु विश्वतैजसप्राज्ञसञ्ज्ञानां जीवस्यैव नैयायिकैः स्वीकार्यत्वात् । तेन प्राज्ञसंज्ञाप्रयोजकावस्थापन्न इति यावत् । बाह्यं घटादिकमान्तरं बुद्धिसुखादिकं च न जानाति तेन ज्ञानसामान्यशून्यत्वलाभः । बाह्याभ्यन्तरविषयकज्ञानातिरिक्तज्ञानस्यालीकत्वत् । आत्मैव कामो यस्य कामान्तरराहित्यमेवार्थः । तदेवाह—अकाममिति । अथ कथं तत्र सुखप्रसिद्धिः सुषुप्तौ जीवस्य विशेषगुणसामान्यशून्यत्वोक्तेः सुखस्यापि तद्विशेषगुणत्वात् ।

यत्किञ्चिद्विशेषसत्त्वस्यैव सामान्याभावविरोधित्वादत आह—शोकरूपच्छिद्र-रहितं शोकावकाशरहितं वा। तथा च शोकाभावमेवमेव सुखत्वेन व्यवहरन्तीत्यर्थः। क्वचिच्छाखायां शोकान्तरमिति पाठः। तत्रापि शोकस्यान्तरमिति व्युत्पत्त्या शोकाभावत्वमेवार्थः। तत्सामग्र्यभावमेव वक्तुमाह—अत्र पितेत्यादि।

वस्तुतस्तु पिता पितृत्वप्रकारकज्ञानविषयत्वाभावः नियतो भवति, तेन जाग्रदादिसाधारण्यं पितृमातृपदं पुत्रादिसम्बन्धानामप्युपलक्षणम्। मानुषशरीरस्य सर्वोत्पत्तिर्मन्निमित्तादृष्टजनकत्वात्प्रथमं पितृमात्रोर्निर्देशः। तद्भोग्यं प्रकृत्याह—लोका अलोका इति। लोकाः कर्मफलानि सुखदुःखानि सुखस्य यागादिजन्यत्वात्, दुःखस्य च निषिद्धाचरणमूलत्वात्। आह—देवाऽदेवा इति। विहिते यागादौ उद्देश्यत्वेन निषिद्धे च तदुल्लङ्घनादौ प्रत्यवायसाधनीभूताभावप्रतियोगियागाद्युद्देश्यत्वसम्बन्धेन तेषां घटकत्वात्। तत्प्रमापकत्वेनाह—वेदा अवेदा इति। कर्म कृतविशेषमभिप्रेत्याह—अत्र स्तेन इत्यादि। स्तेनश्चोरः, चौरत्वप्रकारकज्ञानाविषयो भवति। भ्रूणो गर्भः श्रोत्रियो वा। तथा च **हेमाद्रौ देवलः**—

सोऽनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः॥

कर्म कृतविशेषस्य ज्ञानाभावमित्युक्त्वा वाच्यात्मकविशेषस्यापि तमाह—चाण्डाल इति। ब्राह्मण्यां शूद्राज्जातः चाण्डालः, क्षत्रियायां शूद्राज्जातः पुल्कसः, स एव पौल्कसः स्वार्थिकस्तद्धितः। आश्रमविशेषस्य ज्ञानाभावमाह—श्रमण इति। संन्यासीत्यर्थः। तापसो वानप्रस्थः भवतीत्यस्य सर्वत्रानुषङ्गः। एवं सुखहेतूनामेतज्ज्ञानाविरहाच्छोकाभावोपपत्तिः।

ननु तदानीं ज्ञानापत्तिरेव कथमित्यत आह—अनन्वागतमिति। स्वरूपस्य विशेष्यत्वात् क्लीबत्वं तदीयकर्मणां युगपद्वृत्तिनिरोधादत एव **कुसुमाञ्जलौ** प्रलयप्रस्तावे उक्तम्—"वृत्तिसंरोधः सुषुप्तिवत्" इति। तदवस्थायां शोकराहित्यं यदुक्तं तन्निर्गमयन्नुपसंहरति—तीर्णो हीति। हि निश्चयेन तीर्णो भवति शोकरहितो भवतीति यावत्।

ननु त्वद्व्याख्याने हृदयस्येति पदं व्यर्थमतः संसारावस्थायामपि शोकादेरात्मधर्मत्वं निषेद्धुं बुद्ध्यर्थकहृदयपदं बुद्धिसम्बन्धिनः शोकान् त्यजतीति व्याख्यानमेव युक्तमिति चेत्, सत्यम्; बुद्धिसम्बन्धिशोकराहित्यस्य संसारावस्थायामपि सत्त्वेन तद्वैलक्षण्यानुपपत्तेः। नहि स्फटिके लौहित्यारो-

पेऽपि वस्तुतस्तस्य लौहित्यराहित्यं नास्तीति। न च परम्परासम्बन्धाभाव एवात्र प्रतिपाद्यः दुःखाभावलक्षणाया उभयत्र साम्येऽपि मम समवाय-सम्बन्धस्य प्रतियोगितावच्छेदकत्वं तव तु दुःखाश्रयान्तःकरणतादात्म्या-रोपविशेष्यतासम्बन्धस्य तथेति महद्गौरवम्। अथ हृदयपदसार्थक्याय तदपि सोढव्यमिति चेन्न; असमवायिकारणसंयोगप्रतियोगित्वसम्बन्धेन मनसि शोक-सम्बन्धस्य प्रसङ्गेन प्रतिपाद्यत्वात्। न च तद्वैयर्थ्यं पुरीतन्मनःसंयोगदशायां त्वक्संयुक्तमनःप्रतियोगिकसंयोगिविरहेण ज्ञानादेरनुत्पत्तिरिति, प्रकृतिसङ्गत्य-र्थत्वात्। शोकपदस्य फलतो विशेषगुणमात्रपरत्वमिति सूचयति—सर्वानिति। "बाधनालक्षणं दुःखम्" इति **न्यायसूत्रे** सुखादीनामपि दुःखानुबन्धित्वेन दुःखत्वमित्यस्य व्यवस्थापितत्वात्। सङ्क्षेपस्तु प्रसङ्गेन—"यथा षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखदुःखौ शरीरञ्चैकविंशति। अत्र शरीरं दुःखा-यतनतया, इन्द्रियविषयबुद्ध्योर्दुःखसाधनतया सुखञ्च दुःखहेत्वनुषङ्गात् दुःखञ्च स्वरूपेणैव दुःखमिति व्यवहारविषयः" इति **वार्तिकादयः**। सुखानुषङ्गित्वेन दुःखहेतवो यथासाधनपारतन्त्र्यं क्षयित्वं कामश्चेति। पारत-न्त्र्यस्य दुःखहेतुत्वं "सर्वं परवशं दुःखम्" इत्यादि सर्वसिद्धम्। इष्टवियोगे दुःखवियोगस्यानुभविकत्वस्यापि तथात्वम्। काम इच्छा, सा चोद्देश्यत्वेन सुखस्य रागेण च सुखस्य साधनस्य व्यापिका। सुखं तत्साधनं वानिच्छतः सुखानुदयात्। सुखसाधनञ्च द्वेधा—सुलभं दुर्लभञ्च। तत्राप्यन्ता दुःखफलैव। अन्त्यापि द्विविधा साधनस्यानिषिद्धत्वनिषिद्धत्वभेदात्। तत्रान्त्या स्वरूपतः कार्यतोऽधर्मजननद्वारा च दुःखहेतुः। आद्यापि शरीरपाटवाभावे दुःखहेतुः तत्सत्त्वेऽपि सविघ्ना निर्विघ्ना च। आद्या दुःखहेतुरेव। द्वितीया द्विविधा अनिष्टसंभिन्नविषया तद्विपरीता च। प्रथमा मधुविषसम्पृक्तान्नभोजनेच्छादि-रूपा स्पष्टं दुःखहेतुः, द्वितीयापि साफल्यवैफल्याभ्यां द्वेधा। तत्रान्त्या सुतरां दुःखहेतुः। प्रथमापि तथैव, विषयस्य परिणतिविरसत्वेन दुःखस्याग्रेऽवश्य-जनयिष्यामाणत्वात्। व्यामोहविशेषाद्विषयमात्रभग्नस्यापि तदिच्छाधाराज-ननात्। इच्छान्तरस्य दुःखसंभिन्नविषयत्वदुःखावश्यकत्वाद् धारान्तर्गत-कतिपयेच्छानां फलोपधानेऽपि मध्येऽन्ते च दुःखस्य दुर्वारत्वादिति सिद्धम्। सुखानुषक्तः कामो दुःखहेतुरित्याकरे स्थितम्।

प्रकृतमनुसरामः। एवञ्च तच्छरीरावच्छिन्नतदात्मसमवेतविशेष-गुणप्रागभावसमानकालीनस्तदात्मवृत्तिस्तदात्मविशेषगुणसामान्याभावस्तदा-त्मनः सुषुप्तिरिति। घटादिवृत्तिः। वृत्तितदभावे व्यभिचारवारणाय तदात्म-वृत्तिरिति। मरणे मुक्तौ च तद्वारणाय कालीनान्तम्, तत्रापि मृतशरीरे केन-

चित्परपुरप्रवेशस्य क्रियमाणस्थले तच्छरीरावच्छिन्नविशेषगुणप्रागभाव-सत्त्वादुक्तम्—तदात्मसमवेतेति। देहान्तरे तदात्मन्यपि विशेषगुणस्योत्पत्स्यमानत्वात्। तच्छरीरावच्छिन्नेति विशेषगुणविशेषणम्। धर्मादेस्तदापि सत्त्वायोग्यत्वमपि तत्र देयम्। तेन स्वसामानाधिकरण्यकालिकविशेषणतोभयसम्बन्धेन योग्याविशेषगुणवद्भिन्नत्वे सति सामानाधिकरण्यं स्वप्रतियोग्यवच्छेदकावच्छेद्यप्रतियोगिकत्वञ्चेत्युभयसम्बन्धेन तादृशविशेषगुणप्रागभाव-विशिष्टो विशेषगुणध्वंस इति फलितार्थः। विशेषगुणध्वंसमात्रस्य जाग्रदादावपि सत्त्वात् सत्यन्तम्। सुषुप्तावपि पूर्वोत्पन्नगुणसामानाधिकरण्यस्य विशेषगुणध्वंसे सत्त्वात् स्वसामानाधिकरण्यनिवेशः [शे] स्वपदं लक्ष्यत्वाभिमतसुषुप्त्यात्मकविशेषगुणध्वंसपरम्। स्वत्वस्य परिचायकमात्रेणानिवेशान्नानुगमः, सम्बन्धस्याननुगमस्यादोषत्वात्। मुक्तौ व्यभिचारवारणाय विशिष्टान्तम्, अन्यदीयविशेषगुणप्रागभावस्य कालिकेन मुक्तात्मगुणध्वंसेऽपि सत्त्वात्सामानाधिकरण्यम्, अभावीयविशेषणतासम्बन्धाभ्यां बोध्यम्। इदञ्च तदेति शब्देन श्रुत्या सूचितम्। अग्रे विशेषगुणोत्पत्तेस्तदभिमतत्वात्। अत एवाग्रे स्पष्टं वक्ष्यति "स वा एष एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव च पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव" इत्यादि। मरणे व्यभिचारवारणाय स्वप्रतियोग्यवच्छेदकावच्छेद्यप्रतियोगिकत्वनिवेशः। तत्र तु ध्वंसप्रतियोगिविशेषगुणावच्छेदकशरीरस्य प्रागभावप्रतियोगिनो ये भाविविशेषगुणास्तदवच्छेदकत्वाभावान्न दोषः। इत्यास्तामप्रासङ्गिकम्।

एवं सुषुप्तौ ज्ञानसामान्याभावमुक्त्वा तदुपपत्तिं दृष्टरूपामप्याह—यद्वै तदित्यादिभिः। अत्र **पार्थसारथिमिश्रा**द्यनुसारेण व्याख्यानं पल्लवयामः। दृष्ट्यादिशब्दा हि नेत्रादिजन्यज्ञानविशेषाणामेव वाचकाः, न तु ज्ञानसामान्यस्य; वाक्यान्तरवैयर्थ्यापत्तेर्लोकप्रसिद्ध्यधिगमत्वाच्च। शब्दार्थनिर्णयस्य गन्धादीनामनुत्पादिस्थलेऽपि जिघ्रत्यादिपदानामप्रयोगात्।

यत्तु "दृष्ट्वा स्नायाद्" इत्यस्योपरागप्रकरणस्थवाक्यस्य व्याख्याने दर्शनपदं न चाक्षुषे शक्तमिति **दाक्षिणात्यनिबन्धकारै**रुच्यते, तदत्यन्तमशुद्धम्; क्वचिल्लक्षणया तथापि शक्तौ मानाभावात्। यत्तु "पश्यार्थैश्चानालोचने" इति **पाणिनीय**सूत्रे अचाक्षुषज्ञानार्थैर्धातुभिर्योगे युष्मदस्मदोस्त्वादय आदेशा न स्युः "चेतसा त्वां समीक्षते", परम्परासम्बन्धेऽप्ययं निषेधः "भक्तस्तव रूपं ध्यायति"। आलोचने तु "भक्तस्त्वा पश्यति चक्षुषा" इति व्याख्यानात्। मानसस्यापि पश्यार्थदर्शनान्न चाक्षुषत्वमात्रं शक्यतावच्छेदकमिति।

तदसत्; तत्र चाक्षुषज्ञानार्थधातुपर्युदाससामर्थ्येन पाश्यार्थपदस्य तद्भिन्नज्ञानार्थकधातुपरत्वकल्पनात्। एकार्थपदयोगे विधिपर्युदासयोरसम्भवात्। अत एव "अदृशोऽदर्शनाद्" इतिसूत्रे करणल्युडन्तदर्शनशब्देन सह नञ्समासव्युत्पन्नादर्शनशब्देनाचक्षुःपर्यायादिति व्याख्यानम्। अत एव "पश्यत्यचक्षुस्स शृणोत्यकर्णः" इत्यादौ चाक्षुषसमानविषयताकज्ञानाभिप्रायेण व्यचचक्षते। अन्यथा चाक्षुषीया विषयता पश्यामीत्याकारकशब्दाभिलप्या न स्यादिति सर्वविप्लवप्रसङ्गः।

किञ्च "शमो दर्शने" इत्यत्र दर्शनपदेन चाक्षुषज्ञानं सर्वैरेव वैयाकरणैर्व्याख्यातम्, निशामयति रूपं दर्शने किं "प्रणयिनो निशमय्य वधूः कथा" अत्र मित्वमेव यथा स्यात् "निशामय तदुत्पत्तिम्" इति तु चौरादिकस्येत्यस्य तत्र व्यवस्थितत्वादित्यलमनेन। सुषुप्तौ मुक्तौ वा चाक्षुषादिज्ञानानां विपरिलोपो नास्तीति वक्तुमशक्यमेव। तस्मात् दृष्ट्यादिशब्दाः शक्त्यभिप्राया इत्यवश्यं वाच्याः। शक्तिश्च पदार्थान्तरं कारणत्वं वेत्यन्यदेतत्। उक्तञ्चात्र वेदान्तिभिरपि "यद्यपि सुषुप्तौ चाक्षुषादिवृत्त्यवच्छिन्नचिद्रूपं दृष्ट्यादिकं नास्ति तथापि तादृशावच्छिन्नत्वयोग्यतामादाय पाचकादिपदस्येव दृष्ट्यादिपदस्य प्रयोग इत्यदोषः" इति। तदयमर्थः—तदवस्थायां यत्र पश्यतीत्यर्थादाक्षिप्तं तत्र दर्शनसामर्थ्याभावात्। किन्तु पश्यन्नेव चाक्षुषशक्तिमानेव द्रष्टव्यं चक्षुर्ग्राह्यमर्थं न पश्यति। हेतुमाह—न हीति। दृष्टेरिति पञ्चम्यन्तं घ्राणरसविज्ञान-वाक्ये घ्राणाद्विपरिलोपो विज्ञानाद्विपरिलोप इति घ्राणरसविज्ञानशब्दानां पञ्चम्यन्तदर्शनात्। अथवा तत्र षष्ठ्यर्थे छान्दसव्यत्ययात्पञ्चमी। उभयथाप्यर्थः समान एव व्याख्येयः। शाखान्तरे घ्रातेर्विज्ञातेरितिसर्वत्र क्तिप्रत्ययस्यैव दर्शनात्। अत एव द्रष्टुरात्मनो या दर्शनशक्तिस्तस्याः कदाचिदपि विपरिलोपो न विद्यते। सा ह्यसावविनाशिनीति **मिश्राणां** फक्किका संगच्छते। तर्हि कथं तदा दर्शनानुत्पत्तिरत आह—न त्विति। द्रष्टुर्द्वितीयं दर्शनसाधनं चक्षुर्व्यापाररूपं दृश्यं वा द्वितीयपदं सहायार्थकमिति **महाभाष्यादि**दर्शनात्। यद्यपि दृश्यं रूपादिकं स्वरूपतस्तस्यामवस्थायामस्ति, तथापि दृश्यता दर्शनयोग्यता तस्यामवस्थायां नास्तीति तेन रूपेणाभावाद् दृश्यं नास्तीत्युच्यते। योग्यता चात्र सहकारिसमवधानं निषेध्यत्वेन विवक्षितं न तु कारणतावच्छेदकधर्ममात्रं विषयनिष्ठदर्शनयोग्यताया अपि सार्वत्रिकत्वात्, स्वस्यापि सहकारित्वात्सावधानमात्रनिषेधानुपपत्तिरतस्ततोऽन्यदिति। यद् येन सहकारिणा विभक्तं

फलोपहितं पश्येत्, पश्यन्नित्यस्य शक्त्यभिप्रायतायाः पूर्वमुक्तत्वात्। अत्र पश्यतेरपि तन्मात्रार्थकत्वशङ्का स्यादत आह—विभक्तमिति। शक्तेः कार्यमात्रगम्यतया विभक्तपदस्य च विविच्य ज्ञातत्वार्थकतया विभक्ताभिन्नत्वस्य दर्शनशक्तौ लाभादर्थतस्तत्कालावच्छिन्नफलोपहितदनर्शशक्त्याश्रयः स्यादिति भावः। ततश्च स्वभिन्नसहकारिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वस्य तत्कालावच्छिन्नफलोपहितदर्शनशक्तावन्वयिशक्तेस्तदानीं सत्त्वेन निषेधानर्हतया "सह विशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः विशेष्ये बाधम्" इति न्यायेन तत्कालावच्छिन्नदर्शनस्यैवोक्तव्यतिरेकप्रतियोगित्वपर्यवसानात् प्रतिज्ञातार्थोपपत्तिः। एवमुत्तरवाक्येष्वपि व्याख्येयम्। इदन्तु बोध्यम्—वदति शब्दजं ज्ञानं करोति शब्दानुच्चारयति वा। इदं च पाण्यादिकर्मेन्द्रियाणामप्युपलक्षणमिति **व्याख्यातारः**। जानातीत्यनुमानपरं; चाक्षुषादीनां शब्दैरुक्तत्वात्। "मनुते मानसं ज्ञानं करोति इति" .... **कारोक्तेः**। वदतीत्यस्य प्रथमव्याख्यापक्षे शाब्दान्यपरत्वमपि जानातेर्बोध्यम्।

यत्तु "न वाह्यं किञ्चन वेद नान्तरम्" इति यदुक्तं तन्न; दृष्टिलोपात्। किन्तु दृश्यलयादित्यलुप्तदृष्टिरूप आत्मेत्याह—यद्वै तन्न पश्यतीत्यादि। तत्तदा सुषुप्तौ यन्न पश्यतीत्याद्युक्तं तत्पश्यन्नेव न पश्यतीत्यादिरूपम्। प्राज्ञेनात्मना संपरिष्वक्त इत्यनेनोक्तो लयो दृश्यमात्रस्येत्याशयेनाह—न तु तद्द्वितीयमित्यादि। ततो द्रष्टुरन्यद्विलक्षणं जडं द्वितीयं विभक्तं स्थूलं तत्रास्ति यः न चक्षुरादि नामरूपकं च पश्येत्, किन्त्वविभक्तं संस्काररूपं सर्वमस्तीति शेषः। अत एव "सुषुप्तिकाले सकले विलीने स्वमपीतो भवति" इत्यादि श्रुत्यन्तराणि। तथा च संस्काररूपेण द्वैतावस्थानरूपस्य लयस्य ब्रह्मण्युक्तत्वात्संस्कारस्य चोपादान एव स्वीकारादुपादानत्वस्य च ब्रह्मण्यपरिणामिन्यविद्योपरागेण वाच्यत्वाच्चिज्जडयोरुपादानोपादेयत्वनिर्वाहकतादात्म्यस्य कल्पितत्वाद्विनिगमकाभावेन द्वैतसामान्यस्य कल्पितत्वसिद्धिरिति भावः। यत्र वा अन्यदिव स्यादित्याद्यन्यदेवाभासत्वरूपाल्पत्वप्रयुक्तमन्यत्। अत एव स्वप्ने घ्नतीवेत्याद्युक्त्वा अविद्ययामन्यत इत्यग्रे आविद्यकत्वेनाभासत्वमुपपादितम्। लोकेऽपि स द्वितीयचन्द्र इवेति प्रयोगो न द्वितीयचन्द्रः प्रसिद्धोऽस्ति यस्य सादृश्यं बुद्ध्येत्। तस्मादुक्तः श्रुतिसन्दर्भो द्वैतमिथ्यात्वपरमिति। तत्रेदं वक्तव्यम्—प्राज्ञेनात्मना सम्परिष्वक्त इत्यनेन लयः कथमुक्तः यदुपपाद्यत्वेन "यद्वै तद्" इत्यादिकं व्याख्यायते। नहि तत्र शब्दात्तादृशार्थः प्रत्ययः; कस्यापि पदार्थवाक्यार्थत्वाभावात्। ततो द्रष्टुरन्यन्न विद्यते इत्यप्ययुक्तम्;

अनादृश्यानां तदा सत्तायास्त्वयैवोपगमात् । अत एव वैलक्षण्यं जडत्वेनोक्त्वापि न निस्तारः सुलभः; अन्यपदस्य वैलक्षण्यार्थकत्वे मानाभावात् । जीवब्रह्मभेदादेर्जडस्यापि तदा सत्त्वाच्च द्वितीयपदवैयर्थ्याच्च ततोऽन्यदित्यत एव भवदुक्तार्थस्य सिद्धेः । मन्मते तु पदार्थान्तरसत्त्वेऽपि तदन्वयव्यतिरेकयोश्चाक्षुषाद्युत्पत्तावप्रयोजकत्वाच्चाक्षुषसाधनीभूततदन्यव्यावृत्तिलाभायोक्तरीत्या द्वितीयं पदं सार्थकमिति वैषम्यम् । तद्द्वितीयमित्यत्र यत्पदवैयर्थ्यञ्च; भेदप्रतियोगिसमर्पणस्य ततोऽन्यदित्येतत्पदेनैव कृतत्वात् । मन्मते तु तदन्यत्साधनं नास्तीत्युक्ते साधनमात्रलाभेऽपि प्रकृतोपयुक्तचाक्षुषादिविशेषकार्यतानिरूपितकारणतालाभार्थतया तत्सार्थक्यं दृष्ट्यादिपदानां चाक्षुषादिवृत्त्यवच्छिन्नत्वरूपयोग्यताभिप्रायत्वेऽविनाशित्वादिति । इह त्वनन्वयश्च; ब्रह्मातिरिक्तस्य विनाशिताया यावद्विकारालोकवदिति न्यायेन भवद्भिरभ्युपेतत्वात् ।

न च द्रष्टर्य्येव तदन्वय इति वाच्यम्; उक्तयोग्यतायाः सुषुप्तिकालसत्त्वस्यानुपपत्तेः, हेतोः स्वाश्रय एव साध्यसाधनसामर्थ्यात् । न च विपरिलोपाभावे साध्ये कथमविनाशित्वं हेतुसाध्यविशेषादिति वाच्यम्; उभयसमाधेयत्वात् । दृष्टिर्द्रष्टृनिष्ठात्यन्ताभावाप्रतियोगिनी; तन्निष्ठत्वे सति नाशाप्रतियोगित्वात्, यद्यन्निष्ठत्वे सति नाशाप्रतियोगि तत्तन्निष्ठात्यन्ताभावप्रतियोगि यथा कपालनिष्ठो नाशप्रतियोगी च घटस्तन्निष्ठात्यन्ताभावप्रतियोगीति सामान्यव्याप्तिमूलकानुमानस्य विवक्षितत्वात् । अत एव द्रष्टुरित्यत्र दृष्ट्याश्रयत्वेनात्मनोऽभिधानं दृष्टेर्हेतुविशेषणीभूतात्मनिष्ठत्वलाभार्थं संगच्छते । एवञ्च ब्रह्मातिरिक्तायामपि दृष्टावविनाशित्वस्योक्तश्रुत्या स्पष्टमभिहितत्वात् । नन्वित्यादेरपि नाद्वैततात्पर्योन्नयनं युक्तमंशतो बाधसत्त्वात् ।

ननु दृष्टे स्वरूपात्मकज्ञानस्येति व्याख्याय तादृशस्यैवाविनाशित्वादित्यन्वयस्य · · · **व्याख्यातृभि**रुक्तत्वात्कथं ब्रह्मातिरिक्तस्याविनाशित्वमेतद्वाक्यबोध्यमिति चेत्, न; योग्यतापरत्वेनोक्तभवद्व्याख्यानं प्रक्रम्यैवोक्तदोषस्योद्भावितत्वात् । एवं सुषुप्त्यवस्थाप्रतिपादकोक्तसन्दर्भेण तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तमिति वाक्यस्य स्थूलदृश्यलयाभिप्रायत्वेन कथञ्चिद् व्याख्यानेऽपि **मैत्रेयीब्राह्मणे** श्रूयमाणस्य तस्य न तथा व्याख्यानं कर्त्तुं शक्यम्; तत्रत्यवाक्यानां मुक्त्यवस्थाप्रतिपादकत्वेन सर्वसम्मतत्वादुपक्रमस्य तथैव स्पष्टत्वात् । "इत्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वम्"

इत्युपसंहाराच्च । यद्यपि "एतावद् यद्धि न वारे पत्युः कामाय" इत्युपक्रम्य "सर्वप्रियतममात्रादात्मरूपं स्वयम्प्रकाशं विज्ञातारमरे केन विजानीयाद्" इत्यन्तमुक्तम्, इयदेवात्मतत्त्वसाधनं नाधिकम्। अरे मैत्रेयि खलु निश्चितममृतत्वममृतत्वसाधनमिति व्याख्यातृभिरुक्तम्। सा **तैत्तिरीयश्रुतिराह** सादरं "न्यासं प्रशस्ताखिलकर्मणां स्फुटमेतावदित्याह च वाजिनां श्रुतिः" "ज्ञानं विमोक्षाय न धर्मसाधनम्" **इत्यध्यात्मरामायणे** चोक्तम्। तथाप्यमृतत्वस्य स्वरूपतस्साधनतश्च प्रक्रान्तत्वादुभयस्याप्युपसंहारो युक्त इति बोध्यम्। एवं स्थिते स्थूलदृश्यलयार्थत्वमुक्तवाक्यस्य न युक्तम्; अवस्थाद्वयस्यापि तदानीं भवता नाशाभ्युपगमात्। उक्तं च **विवरणाचार्यैः**— "अज्ञानस्य स्वकार्येण प्रविलीनेन वर्त्तमानेन वा सह ज्ञानेन निवृत्तिर्बाधः" इति। **वार्त्तिककृद्भिरप्युक्तम्**—

"तत्त्वमस्यादिवाक्ये ह्यसम्यग्धीजन्ममात्रतः।
अविद्यासहकार्येण नासीदस्ति भविष्यति॥" इति।

अत्र हि कार्येण सह नासीदिति संस्कारावस्थां प्राप्तलीनकार्येण सह निवृत्त्यभिप्रायम्। एवं च तत्रत्यानां विभक्तादिपदानां वैयर्थ्यं न स्यात्, स्थूलमात्रलयप्रतिपादकत्वेन तत्र तदुपयोगाभावात्। न च तत्र ततोऽन्यदिति संस्कारावस्थाप्राप्तस्य विभक्तमिति स्थूलावस्थाप्राप्तस्य लयप्रतिपादनार्थमिति वाच्यम्; ततोऽन्यदित्यत एव तदुभयसंग्रहसिद्धेः समुच्चयचकारादिविरहाच्च। वाक्यद्वयेऽपि तेषां समानार्थकत्वस्य प्रतीयमानस्य बाधापत्तेश्च। तथा हि **बृहदारण्यकव्याख्यातृ**भिस्तावज्जनकयाज्ञवल्क्यसंवादगतान्यपि "यद्वै तन्न पश्यति" इत्यादि वाक्यानि मोक्षावस्थापरत्वेनैव व्याख्यातानि, सुषुप्तिप्रक्रमसत्त्वेऽपि "अनन्वगातं पुण्येन" इत्यस्य व्याख्यायाम्— "किं बहुनेदमात्मरूपमनन्वगातमसम्बद्धं सस्यधनेन फलेन पुण्यकर्मणानन्वगातमसंबद्धपापेन ससाधनेन फलेन पापकर्मणा तीर्णो हि यस्मादहंममाध्यासवर्जितस्तस्मात् सुषुप्तिमान्मोक्षेऽप्युत्तीर्णः। तदा मोक्षावस्थाप्रसरे सर्वान् शोकान् निखिलान् कामादीन्। किमेते पूर्वमात्मन इत्याशङ्क्य" इत्याह। हृदयस्य बुद्धेः भवति संसाराब्धेरहं चोरः पापी साधुः पुण्यवान्मम पितेत्यादेरहंममाभिमानस्य त्रिविधदुःखमूलस्य परं पारमानन्दात्मानं चिदेकरसमपगतदेशकालवस्तुभेदं प्राप्तो वर्त्तते।

ननु मोक्षावस्थायां ज्ञानस्य भवत्युच्छेदोऽन्यथावलोकनादिकं स्यात्, न च तत्र दृश्यतेऽतो मन्यामहेऽज्ञानस्वभावः। अज्ञानस्वभावत्वे च कुतः

  

स्वप्रकाशत्वं पूर्वोक्तमित्यत आह—यद्वै प्रसिद्धं स्मर्यमाणं च यत् । मनोरमं पुत्रादिविपरीतं च वैयर्थ्याद्युपेक्षणीयश्च तृणादिः तद्विविधं रूपं रूपि वा तद्वमें-बोध्यम् । न पश्यति नेत्रसम्बन्धजेन ज्ञानेन नावलोकयति पश्यन्वै स्वात्म-रूपज्ञानेन स्वयं प्रकाशमान इव तन्न पश्यति नहि यस्माद् द्रष्टुरात्मनो दृष्टेः स्वरूपज्ञानविपरिलोपो विनाशो विविच्यते नास्ति ।

नन्वस्तु स्वरूपं तावता कथं नित्यत्वं ज्ञानस्येत्यत आह—अविनाशि-त्वात् । आत्मस्वरूपस्याविनाशित्वमित्यभिप्रायेणोक्तमविनाशित्वात् ।

ननु नित्यं चेज्ज्ञानं स्वयंप्रकाशमात्मनो रूपं कुतस्तत्र नावलोकयती-त्यत आह—न तु द्वितीयम् । नास्त्येव यत्र विलोकयेदयमात्मा येनावलोकयेत्, यच्चावलोकनं तदपि स्वयंप्रकाशाच्चिदानन्दात्मनोऽन्यन्नास्त्येवेत्येतद्द्विती पदग्रहणेनैव सिद्धमित्यादि तद्ग्रन्थदर्शनात् । अत एव पूर्वं मैत्रेयीब्राह्मणे प्रति-ज्ञायात्रत्यं त्वधिकार्थनिगमनमित्यपि तैरुक्तं द्वितीये मैत्रेयीब्राह्मणे ।

नन्वेतावताप्यस्माकमिष्टसिद्धितादवस्थ्यमिति चेत् न; सुषुप्त्यवस्थापर-त्वेन व्याख्याने हि विभक्तादिपदानां सार्थक्ये कदाचिदुपपादयिष्यामीत्यभि-प्रायेण भवतोक्तवाक्यं व्याख्यातम्, तच्च त्वद्व्याख्यानविरुद्धमित्यस्यैवेदानी-मुद्भावितत्वात् । एकत्र सुषुप्तिपरत्वमपरत्र च मुक्तिपरत्वमिति वैषम्यम् । निर्बीजमस्तु वा तदपि कथञ्चिदुभयपर्यायेऽर्थभेदः सर्वथैवानुपपन्नः । अत एव पूर्वमैत्रेयीब्राह्मणे यावान्पाठः पठितः स तु पाठभेदमर्थभेदं वा विना नास्माभिर्व्याक्रियत इति प्रक्रम्य व्याख्यातृभिः पश्चादुक्तम्—यत्र हीत्यारभ्य विजानीयादित्यन्तम् । पूर्ववत् पूर्वत्र जिघ्रतेः पर्यायस्य प्रथमः पाठः पश्चात्तु पश्यतेः । अत्र तु वैपरीत्यं तथा पश्यति जिघ्रतीनि स्यात् । तृतीयश्च पर्य्याय-योरसंयत इति स्थले यत्र त्विति च । पश्यत्याद्या विजानातीत्यन्ता अष्टौ पर्यायाः । अत्र पूर्वन्तु जिघ्रतीत्याद्या विजानातीत्यन्ताः षट् इति । एवञ्च पाठभेदमात्रस्योभयत्र दर्शितत्वादर्थभेदस्य चानुक्तत्वाद् द्वितीयमैत्रेयी-ब्राह्मणस्य याज्ञवल्क्यीयकाण्डोपसंहारार्थकत्वेनैवोक्तत्वाच्च । एकार्थत्वं सर्वा-नुभवसिद्धं पर्यायद्वयपठितानामपि "यद्वै तन्न पश्यति" इत्यादिवाक्यानामि-त्यास्तां तावत् । नैयायिकमते तु पूर्वव्याख्यातरीत्या याज्ञवल्क्यीयकाण्डस्थानि यद्वै तदित्यादिवाक्यानि सुषुप्त्यवस्थाप्रतिपादकप्रकरणान्तर्भूतान्येव । मैत्रेयी-ब्राह्मणस्थानि तु मुक्त्यवस्थाप्रतिपादकान्येव । किन्तु सुषुप्तिमुक्त्योर्ज्ञानादि-राहित्यांशे तुल्यत्वमेवेत्युभयोरेक एवार्थः । अत एव न चैषां विज्ञानविशेषणं सुषुप्तौ मुक्तौ वा कथञ्चिदपरिलोपः सम्भवतीति पर्यायद्वयाभिप्रायेण यस्याद्वय-

परत्वे कार्यपरत्वोभयाभिप्रायकं **पार्थसारथिमिश्र**वाक्यं संगच्छते। परन्त्वग्रे दुःखोत्पत्त्यनुत्पत्तिभ्यामेव विशेषः। अत एव प्रथमपर्यायानन्तरं बुद्धान्ता येतीत्युक्तम्। द्वितीयपर्याये तु "इत्युक्तानुशासनासि मैत्रेयि" इत्युपसंहार एव कृतः। अत एव मोक्षे सुखप्रत्यक्षं नास्तीति तार्किकाणामुद्घोषः संगच्छते। सुषुप्तौ शोकाभावमात्रस्योक्ते श्रुतिपदार्थतयैव व्याख्याततत्वेन तत्र विप्रतिपत्तेरनुचितत्वात्। सुषुप्तिमोक्षयोश्च साम्यस्य सर्वसम्मतत्वात्। उक्तविशेषमात्राभिधानेन श्रुतिसम्मतत्वाच्च।

प्रकृतमनुसरामः। एतेन किन्त्वविभक्तं संस्काररूपं सर्वमस्तीति शेषकल्पनं निरस्तम्। तत्कल्पकविपर्ययप्रतियोगिनो वाच्यत्वाभिमतार्थस्यैवासिद्धेः। "सुषुप्तिकाले सकलं विलीनम्" इत्यादिकं **दृष्टिसृष्टिनिरासे** व्याख्येयम्। स्वमपीतो भवतीति वाक्यञ्च तत्त्वमसीत्येतद्व्याख्यानप्रसङ्गे व्याख्या · · ·। एतेन संस्काररूपेण द्वैतावस्थानरूपलयस्य ब्रह्मण्युक्तत्वात्संस्कारस्य चोपादान एव स्वीकारादित्यादिकमपास्तम्। पूर्वपूर्वस्मिन्प्रमाणाभावेन तदनन्यथानुपपत्तिमूलकस्योत्तरोत्तरस्यार्थस्य मूलोच्छेदपराहतत्वादित्यग्रे विस्तरः। किञ्च दृष्टिपदस्य स्वरूपात्मकज्ञानार्थत्वेन व्याख्यानमयुक्तं निर्बीजलक्षणापत्तेः। वाक्यान्तरस्थजिघ्रत्यादिपदानां वैयर्थ्यापत्तेश्च। मन्मते तु ज्ञानविशेषशक्त्यभिप्रायत्वेन न कस्यापि वैयर्थ्यम्।

न च तथापि लक्षणातादवस्थ्यमेवेति वाच्यम्; जहत्स्वार्थत्वाजहत्स्वार्थत्वाभ्यां विशेषाभावात्। नहि स्वरूपार्थकज्ञानार्थत्वे चक्षुर्जन्यत्वाद्यंशं कश्चिल्लक्षतावच्छेदके प्रविशति, ब्रह्मस्वरूपस्य नित्यत्वात्। एवं न प्रेत्य सञ्ज्ञास्तीति ज्ञानव्यतिरेकमुक्त्वापि "अलं वार इदं विज्ञानाय" इतिश्रुत्या ज्ञानसामर्थ्यं मुक्त्यवस्थायां दर्शयन्त्या विज्ञानघन इत्येतदभिप्रायकथनपरया ज्ञानश्रुतीनां तच्छक्तिपरत्वे तात्पर्यस्य **पार्थसारथिमिश्र**रीत्या स्फुटतरमेव ग्राहितत्वात्। एवं द्रष्टुर्दृष्टेरिति दृष्ट्याश्रयत्वस्यात्मनि तत्सम्बन्धस्य च दृष्टौ स्पष्टमुक्तत्वात्। स्वरूपमात्रस्य ज्ञानत्वे मानाभावात्। न चाविद्यकस्य भेदस्यायमनुवाद इति वाच्यम्; मुख्यत्वे बाधकाभावात्, शब्दस्वारस्यस्यैवेदानीं विचार्यमाणत्वात्, आविद्यकभेदादेर्मिथ्यात्वसिद्ध्युत्तरकालीनत्वात्।

ननु धर्म-धर्मिभावे गौरवमैक्येन लाघवमिति चेत्, सत्यम्; अहो प्रमाणविरोधेऽपि लाघवनिर्बन्धस्तवैव शोभते। न वा तदपि निरसयितुं शक्यम्, व्यावहारिकस्य धर्मधर्मिभावस्य त्वयाभ्युपगमात्। अतश्च धर्म-

धर्मिभाव उभयोस्तुल्यः, अभेदस्तु तात्त्विकस्तावदतिरिक्तः। तथा च धर्मधर्मिभावस्तादात्म्यं व्यावहारिकत्वं पारमार्थिकत्वं चेति चत्वारः पदार्थाः कल्प्याः। मम तु धर्मिधर्मभावस्तात्त्विकत्वं चेति कुत्र लाघवमिति विभावय तावत्। अत्र ममापि "विज्ञानमानन्दं ब्रह्म" इति श्रुतिस्तात्पर्यग्राहिकाऽस्तीति चेत्; कुत एतन्निर्णीतं विज्ञानपदसामानाधिकरण्यस्य सुलभत्वात्। विशिष्टञ्च तज्ज्ञानमस्येति बहुव्रीहिव्युत्पन्नत्वाद् विज्ञानपदस्य ब्रह्मसामानाधिकरण्यस्य सुलभत्वात्। विशिष्टञ्च तज्ज्ञानं चेति समासे लाघवमिति चेत्, मैवम्; ज्ञानब्रह्मणोर्भेदसमर्पकश्रुतिविरोधे तस्याकिञ्चित्करत्वात्। नहि तत्र गौरवमाश्रित्यापि शब्दार्थमर्यादया स्वाभिमतोऽर्थस्त्वया सु[व्या]ख्यातः। वस्तुतो निषादस्थपतिरित्यादौ पूर्वपदस्य लक्षणाविरहादभेदस्य सांसर्गिकविषयतापन्नत्वाल्लाघवमिति न तु कुलधर्मः। इह तूपसर्गाणां वाचकत्वाभावेन पूर्वपदे च लक्षणैव वक्तव्ये कुतो लाघवम्। न च तद्गौरवं तवापि समानमेव, परं त्वन्यपदार्थलक्षणाप्रयुक्तं तत्तवापि वाच्यम्; उत्तरपदस्यैव विशिष्टज्ञानवति लक्षणाभ्युपगमात्। चित्रगुरित्यादौ पदद्वयस्यापि सार्थक्येन विनिगमकाभावात् पदद्वयलक्षणाशङ्कादेः प्रसक्तावप्यत्र पूर्वपदस्यानर्थकत्वेन तदप्रसङ्गात्। न च ममाप्युत्तरपदस्य विशिष्टज्ञान एव लक्षणा त्वद्रीत्या तु धर्म्यंशेऽपि लक्षणेति स्वरूपगौरवं दुर्वारमिति वाच्यम्; "यः सर्वज्ञः स सर्वविद् विज्ञानघनः द्रष्टुर्दृष्टेस्तदैक्षत बहुस्याम्" इत्यादावनेकस्थलेष्वाश्रयाश्रयिभावप्रतीत्या तस्या[पि] योजकत्वात्। **पार्थसारथिमिश्रास्तु** "नीलोत्पलादिवद् गुणगुणिनोस्तत्रापि सामानाधिकरण्यम्, न चानन्दादिशब्दानां गुणमात्रपरत्वेन गुणिनि प्रयोगो न दृश्यते इति वाच्यम्; तादृशानामपि कदाचिद् गुणिनि प्रयोगदर्शनात्। मधुरो गुरुः स्निग्धः शीतो रसश्चेति रसशब्दस्य द्रव्यपरत्वाभावे शीतसामानाधिकरण्यानुपपत्तेः" इति वदन्ति। भावार्थविज्ञानपदस्य मत्वर्थीय "अर्शाद्यच्" प्रत्ययान्तत्वमाश्रित्यापि सामानाधिकरण्यनिर्वाहाच्च। तस्य करणल्युट् प्रत्ययान्तत्वोपपत्तेश्च। कर्तृत्वकरणत्वयोश्च रूपभेदेनाविरुद्धत्वादात्मानमात्मना वेत्सीति दर्शनाच्च। नहीयं तृतीया कर्त्तरीति वक्तुं शक्यम्, वेत्सीति कर्त्तर्याख्यातदर्शनेनानभिहिताधिकारीयतृतीयाया असम्भवात्। बाहुलकेन कर्त्तर्य्यपि ल्युटो वक्तुं शक्यत्वाच्च। कथञ्चित्सामानाधिकरण्यमुपपद्यत इति **तात्पर्यटीका**वाक्ये "विजानातीति विज्ञनमानन्दयतीत्यानन्दम्" **इत्युदयनाचार्यै**र्व्याख्यातत्वात्। न च विनिगमकाभावसाम्यं शब्दस्वारस्यबलस्य बाहुलकाश्रयेण विघटितत्वादिति वाच्यम्; "कृत्यल्युटो बहुलम्" इत्यनुगमस्य विनिगमकस्य सत्त्वात्। अत

एव "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति **महाभाष्यवाक्यस्थप्रवर्त्तकविधिपरत्वेन** प्रयोजनपदमप्येवं व्याख्यातम्। नहि द्रष्टु रित्यादौ तृजादेरभेदार्थकत्वे विशिष्य किमप्यनुशासनं त्वन्मते आनेतुं शक्यमिति। एतेनानन्दस्यापि ब्रह्मात्मकत्वमपास्तम्। तथा चोत्पत्तिविनाशशीलयोः ज्ञानसुखयोरहं जानाम्यहं सुखीति स्वभिन्नत्वेनानुभूयमानयोर्ब्रह्मभेदसाधने बाधः [न]। किञ्चानन्दमिति पदं श्रुतिस्थं मत्वर्थीयाच्प्रत्ययान्तमिति तेनानन्दवत्त्वं बोध्यते। ब्रह्मणा नाभेदः, अन्यथा तस्य नपुंसकालिङ्गत्वानुपपत्तेः। न च "व्यत्ययो बहुलम्" इत्यनुशासनाल्लिङ्गव्यत्ययः मानाभावादिति **मणिकृतो लीलावतीकिरणावल्योरुपाये** च **वर्द्धमानचरणाः**। आनन्दपदस्य भावे घञन्तत्वात्तस्य च पुल्लिङ्गत्वनियमात्। अत **एवामरः** "स्यादानन्दथुरानन्दः शर्मशातसुखानि च" इति। अत एव "रसं ह्येवायं लब्ध्वानन्दीभवति" इति स्पष्टमत्वर्थीयनिर्देशः।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन।
आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्॥

इत्यादीनामनेकासां भेदप्रतिपादिकानां श्रुतीनां प्रत्यक्षस्य च प्रामाण्येन निर्बीजमानन्दज्ञानयोरात्मभेदमभ्युपगम्य सर्वनामस्वरसकदर्थजकुसृष्टिकल्पनं सर्वथैव हेयम्। छान्दसत्वं त्वगतिकगतिः। अन्यथा "स्थूलपृषतीमनड्वाहीमालभेत" इत्यादौ सत्यपि पूर्वपदान्तोदात्तत्वे लाघवादेव कर्मधारयमाश्रित्य तत्प्रयुक्तसमासान्तोदात्तत्वप्रसङ्गे छान्दसमेव पूर्वपदप्रकृतिस्वरत्वमित्यादेरप्यापत्तौ **महाभाष्यादिग्रन्था** विरुध्येरन्। अहीनमित्यादौ च मध्योदात्तदर्शनेन खप्रत्ययान्तत्वनिर्णयो न स्यात्। "यस्मिन् पञ्च पञ्चजना" इत्यादौ च द्वितीयपञ्चशब्दस्य समासाभावे आद्युदात्तत्वापत्त्यानुदात्तत्वपाठो न स्यादतो जनशब्देन सह समासः, एवं तथासत्यन्तोदात्ते शेषनिघातेन पूर्वेषामनुदात्तोपपत्तिरिति **भगवत्पादादिभिरुक्तमपि** छान्दसत्वादेवान्यथा स्यादिति दर्शनजातविप्लवः स्यादित्यास्तां तावत्। आनन्दो ब्रह्मेत्यपि क्वचिच्छ्रूयते इति चेत्, किं तेन; लक्षणया सामानाधिकरण्योपपत्तेः। विनिगमकस्य न बाहुल्यस्योक्तत्वात्। न च धर्मिलक्षणायां क्लीबत्वापत्तिः, अन्यथा शुक्लं वस्त्रमित्यादिकमपि न स्यादिति वाच्यम्; [लक्षणास्थले] ................? समानलिङ्गकत्वे गङ्गायां घोष इत्यादावपि स्त्रीत्वानुपपत्तेः। दृष्टान्ते तु "गुणलिङ्गास्तु तद्वति" इत्यनुशासनं मानमिति वैषम्यम्। न च तदपि विशेषणपदत्वेन प्राप्तस्य विशेष्यसमान-

लिङ्गकत्वस्यानुवाद एव, शुक्लं रूपमित्यत्र गुणमात्रपरत्वेऽपि तदनुशासनं परिभूय विशेषणपदत्वात्। "शुक्लपदं विशेष्यरूपपदस्यैव लिङ्गं गृह्णाति" इति **मणिकारै** रुक्तमिति वाच्यम्; किञ्च बहुव्रीहिलिङ्गानुशासनभावेन स्वलिङ्गाभावाद्विशेषणोपस्थापकवाक्यत्वाच्च विशेष्यपदलिङ्गतैव युक्ता। यथायथं दण्डीपुरुष इत्यादाविति फक्किकाया आपातनिकायां शुक्लो रूपमिति नान्वयः। शुक्लादय इत्यस्य विशेष्ये इत्यर्थकत्वादित्यरुचिबीजस्य बीजैरुक्तत्वात्। गुणविशेष्यकबोधजनकस्य शुक्लपदस्य पुंस्त्वविधानात् शुक्लप्रकारकरूपविशेष्यकबोधजनके शुक्लो रूपमित्यस्यानापत्तेः। न च रूपस्यापि गुणत्वाद् गुणस्य विशेष्यत्वमक्षतमिति वाच्यम्; रूपत्वव्याप्यधर्मावच्छिन्नविशेष्यकेत्यर्थादत एव गुणस्य विशेष्यत्वविवक्षायां शुक्लो रूपमितीष्टमेवेति तत्र **कण्टकोद्धारकृतः**। एतेन नीलरूपस्यैव तमस्त्वे "गुणे शुक्लादयः पुंसि" इतिकृत्वा नीलस्तम इति प्रत्ययप्रसङ्गादिति **शशधरवाक्यमपि** व्याख्यातम्।

न चैवमानन्दं ब्रह्मेत्यत्र नीलोत्पलादिवत्सामानाधिकरण्यमिति **पार्थसारथिमिश्रोक्तं** न संगच्छत इति वाच्यम्; मत्वर्थीयाभिप्रायेणैव तस्य नेयत्वात्। अस्तु वा प्रकृत एव छान्दसत्वम्, तदविशेषेऽपि यथोक्तविनिगमकस्य सुस्थत्वात्।

शुक्लादेर्गुणिपरत्वे लाक्षणिकत्वेन स्वलिङ्गप्राप्तौ 'गुणे शुक्लादयः पुंसि" इत्यनुशासनाल्लाक्षणिकस्यापि विशेष्यलिङ्गकत्वमिति **मणिकारी**यशङ्कावाक्यस्थः पूर्वं नवीनमतत्वेनोपन्यस्त आद्यपक्ष एव युक्तः। अत एव चन्द्रो मुखमित्यादौ रूपकस्थलेऽपि चन्द्रसदृशे लक्षणया चन्द्रसदृशाभिन्नं मुखमिति बोधो बहुभिरङ्गीकृतः संगच्छते। अत एव "पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावस्यया" इत्यत्र पौर्णमास्यमावस्याशब्दौ तात्कालीनत्वेन यागसमुदाये लाक्षणिकावपि स्त्रीलिङ्गान्तावेव दृश्येते।

न चैवं बहुव्रीहौ विशेष्यसमानलिङ्गत्वं न स्यादन्यपदार्थे लाक्षणिकत्वाद् "गुणलिङ्गास्तु तद्वति" इतिवद्विशेषानुशासनाभावाच्चेति वाच्यम्; तस्य स्वलिङ्गाभावेन लिङ्गाकाङ्क्षायामनुशासनान्तराऽभावेऽपि सामानाधिकरण्येन विशेष्यलिङ्गस्यैव ग्रहणात्। चन्द्रादिशब्दानां तु विशेष्यलिङ्गनिर्णयेन तेनैव तदंशे निराकाङ्क्षतया विशेष्यपदलिङ्गोपादाने बीजाभावात्। अत एव दण्डीत्यादावपि नानुपपत्तिः तत्तदनुशासनञ्च तत्र लक्षणायां निरूढत्वे तात्पर्यग्राहकम्। अत एव—

कात्यानवार्त्तिकं "समानाधिकरणत्वात्सिद्धमिति न विशेषाणां लिङ्ग-वचनमनुशास्यम्" इति। तस्माल्लक्षणया अविशिष्टत्वेऽपि यादृशानुपूर्वीकस्य शब्दस्य लिङ्गविशेषोपादानमिति सिद्धम्। अत एव **कण्टकोद्धारकारैः**—"न च विशेष्यपदाभावे चित्रगुमानयेत्यादौ लिङ्गानियमापत्तिः, पदानुपादानेऽपि विशेष्यविशेषस्य स्त्रीशूद्रादेरवश्यं विवक्षितत्वात्। तदभावे सामान्ये नपुंसकलिङ्गत्वाद्" इत्युक्तम्। एवं चन्द्रादिपदानामजहल्लिङ्गत्वं बोध्यम्। उक्तञ्च **मणिकृद्भिः**—"अजहल्लिङ्गानां तु विशेषानुशासनान्न तथा" इति। तत्सर्वमभिसन्धाय "अजहल्लिङ्गानन्दशब्दस्य क्लोबत्वानुपपत्तिः" इति **वर्द्धमानोपाध्यायैः किरणावल्युपाये** अजहल्लिङ्गेत्युक्तम्। तथा च तत्र नपुंसकानुरोधादच्प्रत्ययान्तत्वेऽप्यानन्दो ब्रह्मेत्यत्र लाक्षणिकत्वेऽपि पुंस्त्वमेवेति तेषामभिप्राय इति सुधीभिरनुसन्धेयम्। इदमप्यत्रानुसन्धेयं ज्ञानानन्दशब्दौ लोकेऽर्थप्रकाशे वन्दनादिसंयोगजन्ये च सुखरूपे धर्मे प्रसिद्धौ। न च ब्रह्मात्मकं ज्ञानं त्वयापि विषयविशेषावग्राहिवस्तुस्वरूपः तदुक्त**मद्वैतसिद्धौ**—"वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वे न केवलाया वृत्तेः केवलस्य चैतन्यस्य च ज्ञानत्वं नास्ति" इति। व्याख्यातं च **चन्द्रिकायाम्**—"वृत्तेर्जडत्वात् वृत्त्यभावकालेऽपि घटं जानामीत्यापत्तेश्च द्वयोर्ज्ञानयोः ज्ञानत्वाभावः" इति। शब्दार्थश्च लोकानुरोधगम्यः। उक्तं च दहराधिकरणे **भामत्याम्**—"ये त्वाकाशशब्दो ब्रह्मण्यपि मुख्य एव नभोवदित्याचक्षते तैरन्यायश्चानेकार्थत्वमिति चानन्यलभ्यः शब्दार्थ इति च मीमांसकानां मुद्राभेदः कृतः। लभ्यते ह्याकाशशब्दाद्विभुत्वादिगुणयोगेनापि ब्रह्म। न च ब्रह्मण्येव मुख्यो नभसि तु तेनैव गुणयोगेन वर्त्स्यतीति वाच्यम्; लोकाधीनावधारत्वेन शब्दार्थसम्बन्धस्य वैदिकपदार्थप्रत्ययस्य तत्पूर्वकत्वाद्" इति। एवं स्थिते ज्ञानात्मकं ब्रह्मेति स्वीकारे तेषामपसिद्धान्तोऽपि, चैतन्यमात्रे च ज्ञानपदार्थत्वभावः। तदेतदभिप्रेत्य **मीमांसकैरुक्तम्**—"यदि पुनर्यदेवेदमात्मरूपं प्रतीयते तस्यैव ज्ञानमानन्दमिति च सञ्ज्ञेत्युच्यते सा न लौकिकी, नापि वैदिकी, यदि पुनर्वृद्धादिवत्परिभाष्येत तदस्तु यथाकामम्" इति।

यत्तु ज्ञाधातोः शक्यता चिद्व्यक्तावेव निरवच्छिन्ना शक्यनानात्व एवानुगमार्थमवच्छेदकस्वीकारात्। घटं जानातीत्यादिवाक्यजन्यबोधे तदीयासत्त्वापादकाज्ञानविरोधित्वसम्बन्धेन घटादेर्ज्ञाधातोर्धात्वर्थेऽन्वयः। तदीयत्वञ्च स्वावच्छिन्नचिद्विषयिताविषयितान्यतररूपस्तत्सम्बन्धः। स्वावच्छिन्नविषयितामात्रनिवेशे ब्रह्म जानातीत्यादावनुपपत्तिः ब्रह्मणश्चित्स्वरूपत्वे

स्वावच्छिन्नत्वाभावात्। विषयित्वमात्रनिवेशे च घटं जानातीत्यादावनुपपत्तिः घटादेर्जडत्वेनावरणकृत्याभावात्। तद्विषयकत्वस्याज्ञानेऽनङ्गीकारादप्रसिद्धेरतः उभयमन्यतरलाभार्थमुपात्तम्। अभानापादकाज्ञानसत्त्वेऽपि परोक्षवृत्तिकाले घटं जानामीत्यनुभवादसत्त्वापादकेति। निरूपितं हि **सिद्धान्तविन्दौ** "अनुमानावरणं निवर्त्तते न वा? नाद्यः, श्वैत्यानुमित्यादिना शङ्खपीत इत्यादेर्दिङ्मोहादेश्च साक्षात्कारिभ्रमस्य निवृत्त्यापत्तेः। यौक्तिकज्ञानेन च ब्रह्मण्यविद्यानिवृत्तौ साक्षात्कारार्थं श्रवणमननापेक्षायाश्च। नान्त्यः, वह्न्यादिव्यवहारानुपपत्तेरित्याशङ्क्य, उच्यते; द्विविधमावरणमेकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिनिष्ठमन्यदभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठं घटमहं जानामीत्युभयावच्छेदानुभवात्। तत्र घटमिति विषयावच्छेदोऽनुमित्याद्यवच्छेदः। तत्राद्यं परोक्षापरोक्षसाधारणप्रमामात्रेण निवर्त्तते, अनुमितेऽपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात्। द्वितीयं तु साक्षात्कारेणैव निवर्त्तते। तदुक्तम्—

परोक्षज्ञानतो नश्येदसत्त्वावृत्तिहेतुता।
अपरोक्षधिया नश्येदभाना वृत्तिहेतुता॥ इति।

नानुमानादावसत्त्वावरणनाशात्तद्व्यवहारः अभावावरणानिवृत्त्या च सोपाधिकसाक्षात्कारिभ्रमावृत्तिः। अत एव जानाम्यहं पर्वते वह्निरस्ति स तु कीदृश इति मे न भातीति व्यवहार [ रात् ] निर्द्धर्मितावच्छेदककशाब्दबोधः प्रकृते स्यादेव। घटत्वावच्छिन्नविशेष्यताकस्य बाधप्रतिबध्यस्य योग्यताज्ञानस्य हेतुत्वसम्भवात्। चिदाश्रयत्वे आख्यातार्थे वा व्युत्पत्तिवैचित्र्यादन्वयः। अथवा शक्तिज्ञानस्य चिद्विषयकशाब्दत्वेनैव कार्यता, घटं जानातीत्यादिसमभिव्याहारधीकार्यता तु घटाद्यज्ञानविरोधिचित्त्वावच्छिन्नप्रकारताकशाब्दत्वेनैवेति। न निर्द्धर्मितावच्छेदककशाब्दधीः आकाशादिपदनिरवच्छिन्नशक्यतामते तादृशरीतेरावश्यकत्वात्।

न चैवं "सत्यं ज्ञानम्" इत्यादौ लक्षणाया शुद्धचिद्बोधसिद्धान्तहानिरिति वाच्यम्; विशिष्टरूपेण चिद्बोधस्यौत्सर्गिकत्वेन शुद्धचिद्बोधमात्रे शक्तिज्ञानस्य प्रतिबन्धकत्वकल्पनात्। विशिष्टरूपेण बोधाभावमात्रेण लक्षणेति भाक्तव्यवहाराच्च। अन्यथा विशिष्टशक्तिपक्षेऽपि शुद्धेः शक्त्यनपायात्।

न चैवमपि ज्ञानानन्दादिपदार्थानां पर्यायतापत्तिरिति वाच्यम्; आनन्दादिपदानां तुल्ययुक्त्या शुद्धचिच्छक्तत्वेऽपि चन्दनानन्द इत्यादौ

चन्दनसेवाजन्यवृत्तिविशेषस्य सम्वन्धत्वादिना भाननियमेन तावता विशेषेण पर्यायतावारणसम्भवात्। तस्माच्छुद्धचिदेव ज्ञानावच्छिन्नत्वचिन्तानवकाशात् "विज्ञानं ब्रह्म" इति श्रुत्या विज्ञानाभेदस्यैव ब्रह्मणि तन्मतेऽपि बोध्यत्वात्। विज्ञानपदस्य चार्थान्तरे सुनिरूढत्वात् स्वर्गादिपदानां तु लोकेऽर्थ-सिद्धचभावेन—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

इत्यर्थवादेन शक्तिकल्पनात्। एवञ्च यद्यत्रापि निरवच्छिन्नचिद्-व्यक्तौ विज्ञानादिपदानां वृत्तिकल्पकमागमादिप्रमाणं स्यात्तदा लक्षणया तदपि स्वीक्रियते, न तु तथा किञ्चिदस्तीति। अत एव घटं जानातीत्यादौ उक्ताज्ञानविरोधित्वसम्बन्धेन धात्वर्थान्वयोऽपि परास्तः। उक्ताज्ञानघटित-संसर्गस्य अज्ञानासिद्धया विप्रतिपत्तिग्रस्तत्वात्। घटं जानातीतिवाक्यजन्य-बोधे तादृशसांसर्गिकविषयतायाः सर्वानुभवविरुद्धत्वाच्च। तद्वाक्यार्थ-बोधस्य च लौकिकानामप्युदयमानत्वात् अज्ञानादेरनुपस्थितस्यापि संसर्गत्वेन भानमविरुद्धम्। सांसर्गिकविषयताशालिबुद्धौ तज्ज्ञानस्यानपेक्षितत्वादिति चेत्, स्यादेवम्; यदि शाब्दबोधे तद्विषयत्वमानुभविकं स्यात्। नहि तत्रा-नवगाह्यमानस्यापि वस्तुतः संसर्गत्वेन भानं स्वीकर्त्तुं शक्यम्, अति-प्रसङ्गात्।

न च सम्बन्धत्वरूपेणैव तत्संसर्गमर्यादया भासते सम्बन्धश्च कस्यचि-न्मते [कश्चित्] कस्यचिच्च कश्चिदिति विशेष इति वाच्यम्; तथा घटाद्य-वच्छिन्नचिद्विषयिताकेत्यादिसम्बन्धश्च [कस्यचिन्मते कश्चित्] तत्र विषय इत्यत्रैव बीजाभावात्। जानातीति वा योग्यमेव स्यात्; शुद्धचिदा-श्रयस्याप्रसिद्धेः। अत एव व्युत्पत्तिवैचित्र्याच्च पदे[दै]राख्यातार्थे चिदाश्र-यत्वे वाऽन्वयः, इत्यपास्तम्। आख्यातार्थे नामार्थविभक्त्यर्थयोरन्वयस्या-व्युत्पन्नत्वाच्च तादृशाकाङ्क्षाकल्पने बीजाभावात्। न च तण्डुलः पच्यत इत्यादौ तत्प्रसिद्धिः, पाकजन्यफलशाली तण्डुल इत्यन्वयबोधादिति वाच्यम्; नामार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वसम्बन्धेन शाब्दबोधे विशेष्यतयाख्या-तजन्योपस्थितिहेतुतायास्तथाप्यप्रसिद्धत्वात्। एवं जानातीत्युक्तविषय-विशेष्यजिज्ञासा न स्यात्। शुद्धचितो विषयानिरूप्यत्वे विषयाकाङ्क्षानु-पपत्तेः। नहि घट इत्युक्ते तत्प्रतियोगित्वेन पटादेराकाङ्क्षोदयनियमः, प्रतीत्यपर्यवसानप्रसङ्गात्तत्रापि विशिष्टरूपेणैव चिद्बोध इति चेत्, न;

शुद्धचिन्मात्रशक्तिज्ञानसत्त्वे तद्बोधस्य वारयितुमशक्यत्वात्। अवच्छिन्नचिद्बोधतात्पर्यग्राहकस्य शुद्धचिद्बोधप्रतिबन्धकस्य वा घटादिपदसमभिव्याहारस्यासत्त्वाच्च। नहि तीरपरत्वतात्पर्यग्राहकघोषादिपदान्वयि गङ्गापदं तीरमेव बोधयति, अतिप्रसङ्गात्। अथ ज्ञाधातुज्ञानमेव शुद्धचिद्बोधे प्रतिबन्धकमिति, तर्हि कथं शुद्धचिद्व्यक्तौ शक्तिः अज्ञातस्य ज्ञाधातोस्तच्छाब्दजनकत्वानुपपत्तेः। कथं वा विज्ञानपदेऽपि शुद्धचिल्लाभः। अहो महदाश्चर्यं शक्तज्ञानमेव शक्यज्ञानविरोधीति, यदाहुः नहि वरघाताय कन्यामुद्वाहयति, इति। तिष्ठतु तावत्। एतेन चिद्विषयकशाब्दत्वमेव शक्तिज्ञानकार्यतावच्छेदकमेवेत्यपि परास्तम्। आकाशादिपदानां निरवच्छिन्नशक्यतामतेऽपि कर्मवाद्यंशे तद्बोधस्य सविकल्पकत्वेऽप्याकाशांशे तदनङ्गीकारात्। अस्तु वा "पदादपि निर्विकल्पकम्" इति **मणिवाक्यस्य** निर्विकल्पकमाकाशनिष्ठानवच्छिन्नविषयताकम्, तेन आकाशांशे सुबर्थस्य संख्यादेः कर्मत्वादौ सुबर्थे वाकाशस्य प्रकारकत्वेऽपि न क्षतिरिति तैरेव व्याख्यातत्वात्। चित्त्वावच्छिन्नप्रकारताकशाब्दस्यानुचितत्वात्।

किञ्च अज्ञानविरोधित्वांशः संसर्गमर्यादया समभिव्याहारधीकार्यतावच्छेदककोटौ निविशताम्, चित्त्वं तु प्रकारतावच्छेदकत्वेन कथं भासतां पदोपस्थितानामर्थानामन्वयस्यैव समभिव्याहारधीकार्यत्वात्। उक्तं हि **लीलावत्युपाये** "उपस्थितपदार्थेष्वेव समभिव्याहारव्युत्पत्तेः संसर्गभेदस्य प्रतीतेः। न तु ततः पदार्थोपस्थितिरपि" इति। नहि शक्यतावच्छेदकत्वेन भासितुमर्हति चिद्व्यक्तेरैक्येन शक्यतावच्छेदकचित्त्वानङ्गीकारात्। न च ज्ञाधातोरुक्तचिल्लक्षणया लक्ष्यतावच्छेदकत्वेन घटादिपदवैयर्थ्यात् तात्पर्यग्राहकत्वेन तदुपयोग इति चेत्, तर्हि जानातेः कर्मणि लकारो न स्यात्। धात्वर्थान्तर्भूतकर्मत्वेनाकर्मकत्वापातात्। न च शब्दस्वरूपसिद्ध्यनन्तरमेव लक्षणेति वाच्यम्; चिन्मात्रशक्तौ पूर्वमप्यकर्मकत्वापत्तेरुक्तत्वात्। ततश्च विषयनिराकाङ्क्षत्वधात्वर्थान्तर्भूतकर्मत्वाभ्यामवस्थाद्वयेऽपि दोषस्य दुर्वारत्वात्। अथ यथाकाशपदादशक्यमपि शब्दाश्रयत्वं प्रकारत्वेन भासते तद्वदत्रापीति चेत्, अत्रोक्तधर्मस्य विषयभेदभिन्नत्वेनाननुगतत्वात्। शब्दाश्रयत्व [स्य] अष्टद्रव्यातिरिक्तद्रव्यत्वादेश्चानुगतत्वात्। पटं जानातीत्यादौ पटावच्छिन्नचिद्विषयिताकाज्ञानविरोधित्वावच्छिन्नप्रकारताकशाब्दबोधस्योपपादयितुमशक्यत्वात्। नियतोपस्थितिवशादेव शब्दाश्रयत्वादेरशक्यस्यापि शाब्दबोधधीप्रकारत्वोपगमात्। अन्यथा च

तदनभ्युपगमात्। वस्तुतस्तु नियतोपस्थितिरेव नास्तीति **मणिकारोक्तेः** विरोधित्वस्यापि निरूपकभेदेनानुगतत्वात्। अतोऽवच्छिन्नस्याखण्डत्वस्वीकारेणापि निस्तारः। एकदेशान्वयप्रसङ्गश्च घटावच्छिन्नत्वयोः संसर्गान्तरप्रत्यापत्तिश्च। वस्तुतो घटं जानातीत्यतो घटावच्छिन्नचिद्विषयिताज्ञानविरोधित्वावच्छिन्नप्रकारताकः शाब्दबोध एव न भवति, तत्तद्दर्शनमात्रसम्मतपदार्थान्तर्भावेन विशिष्य तत्प्रकारकबोधस्य स्वीकारे लौकिकानां तद्बोधानापत्तेः। तस्माद् घटविषयकज्ञानवानित्येव बोधः। विषयत्वं तु यत्किञ्चिदिति। एतेन नानार्थत्वस्वीकारेणापि न निर्वाहः। घटविषयकज्ञानवानित्यघटावच्छिन्नचिद्विषयिताकेत्यादिविषय इति तु भवन्मतमेव। न तु घटं जानातीत्येतज्जन्यस्य सर्वसाधारणस्य शाब्दस्य स आकारः। अन्यथा ज्ञानादौ विप्रतिपत्तिरेव न स्यादित्यलम्।

एवं पदान्निर्विकल्पकस्वीकारपक्षे उक्तसम्बन्धेन घटादेश्चिदन्वयो चिन्त्यः, शुद्धचित्यज्ञानविरोधित्वस्य तत्सिद्धान्तविरुद्धत्वादन्यथाश्रयत्वभागिनी निर्विभागचितिरेव केवलमित्युक्तिविरोधात्। उक्तञ्च—

"ननु कथं चैतन्यमज्ञानाश्रयः तस्य प्रकाशरूपत्वात्, तयोश्च तमःप्रकाशवद्विरुद्धस्वभावत्वाद्" इत्याशङ्क्य **अद्वैतसिद्धौ** "अज्ञानविरोधि ज्ञानं हि न चैतन्यमात्रं किन्तु वृत्तिप्रतिबिम्बितं तच्च नाविद्याश्रयः, यच्चाविद्याश्रयः तच्च नाज्ञानविरोधि" इति। **चन्द्रिकायाम**प्युक्तम् "चितो वृत्त्युपहिताया एव प्रकाशस्थानीयत्वाद्" इति। न च शुद्धस्याज्ञानविरोधित्वाभावे घटादिवदप्रकाशत्वापत्तिवारणाय—

तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेद्॥

इति न्यायेन स्वतस्तृणतूलभासकसौरालोकस्य सूर्यकान्तावच्छेदेन तद्दाहकत्ववत् स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेनाज्ञाननाशकत्वस्वीकारान्नानुपपत्तिरिति वाच्यम्; तथापि वृत्त्यवच्छिन्नचैतन्य एवोक्ताज्ञानविरोधित्वसंबन्धेन घटाद्यन्वयः स्यात्, न तु शुद्धचैतन्ये प्रकृते तादृशस्य पदजन्योपस्थितिविरहात्। विशेष्यनिष्ठात्यन्ताभावप्रतियोगिना च सम्बन्धेन विशेष्ये प्रकारस्यान्वयबोधानर्हत्वात्। [लघुतर] बोधस्यैव निरूप्यमाणत्वात्कपालस्य घटकाले घटविशिष्टसमवायवत्त्वेऽपि घटानुत्पत्तिकाले घटप्रकारकसमवायसंसर्गककपालविशेष्यकबोधस्य प्रमात्वाभावादुक्तसम्बन्धापेक्षया विषयितासम्बन्धस्य कार्यतावच्छेदकत्वे लाघवाच्च।

अन्यतमत्वस्य भेदयोर्विशेष्यविशेषणाभावे विनिगमकाभावेन गुरुतरत्वाभावाच्च। किञ्च निर्धर्मितावच्छेदकज्ञानस्य बाधबुद्ध्यप्रतिबध्यत्वेन घटत्वावच्छिन्नविशेष्यताकयोग्यताज्ञानस्य बाधप्रतियोगिताकस्य घटत्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य वा बाधस्य निर्णयदशायां घटं जानातीति शाब्दबोधापत्तेः। तादृशबाधनिर्णयस्य घटत्वावच्छिन्नविशेष्यताकज्ञानविषयत्वप्रकारकयोग्यताज्ञानं प्रत्यविरोधित्वात्समानप्रकारकत्वेनैव बाधधियां विरोधित्वादनियतप्रतिबन्धकत्वाश्रयणेऽपि प्रतिबन्धकतावच्छेदकधर्मैक्याभावेन पृथक् प्रतिबन्धकत्वकल्पने गौरवात्।

ननु घटविषयकज्ञानाभावस्य घटो न ज्ञानविषय इति विरोधित्वान्तरस्य त्वयापि कल्प्यत्वात्साम्यम्, अज्ञानं न घटीयमित्यस्यापीति साम्यमेव। अनुभवस्योभयसमाधेयत्वादिति चेत्, सत्यम्; एवं घटविषयकं ज्ञानमित्याकारकयोग्यताज्ञानदशायां शाब्दबोधो विनैव हेतुत्वम्। अतो घटप्रकारकचिद्विशेष्यकबोधं प्रति चिद्विषयकत्वप्रकारकघटविशेष्यकयोग्यताज्ञानस्य हेतुत्वं दुर्घटमेव। बाधस्य त्वनुभावानुरोधेनान्यादृशत्वेऽपि विरोधित्वं न त्वनुभवः प्रामाणिकोऽस्ति। एवं "सत्यं ज्ञानम्" इत्यादौ लक्षणया शुद्धचिद्बोध इति सिद्धान्तस्यापि हानिर्दुर्वारा। विशिष्टरूपेणेत्यादि त्वयुक्तं क्वाचित्कालप्रयोगस्यैव लाक्षणिकत्वौचित्यात्। ज्ञानानन्दादिपदानां पर्यायत्ववारणप्रकारोऽपि न साधीयान्, चन्दनादिसेवाजन्यवृत्तिविशेषस्य संसर्गतया प्रतीतावप्यानन्दादिपदजन्यबोधे तद्भाने मानाभावेन केवलानां ज्ञानानन्दादिपदानां पर्यायत्वापत्तितादवस्थ्यात्। अत एव **न्यायवार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्रैरुक्तम्** "अभेदे त्वानन्दविज्ञानयोस्तत्पदयोः पर्यायतया सहप्रयोगानुपपत्तिः न च कृष्टप्रकाशस्म्वितेत्यत्र प्रकर्षप्रकाशयोरभेदोऽप्रकाशस्यापि प्रकर्षसम्भवात्। अत्र कृष्टस्यापि खद्योतादेः प्रकाशस्य सम्भवात्, तस्माद्यत्किञ्चिदेतद्" इति।

यत्तु सत्यत्वाद्युपलक्षितशुद्धानामैक्यनिश्चयार्थं सत्यादिपदत्रयोपादानमन्यथा सत्यत्वोपलक्षिताद्भेदो ज्ञानानन्दत्वाद्युपलक्षितवृत्तिरिति प्रमानिवृत्त्या ब्रह्मस्वरूपमोक्षस्य स्वप्रकाशचिदानन्दादिभिन्ने ज्ञानवत्स्वरूपेणाभेदबुद्धया तत्प्राप्तेरपुरुषार्थत्वबुद्धया तत्साधनश्रवणादावप्रवृत्तिः। तस्य मिथ्यात्वबुद्धया ब्रह्मज्ञाने मिथ्याविषयकत्वरूपभ्रमत्वज्ञानादविद्यानिवर्त्तकत्वानुपपत्तिश्च। तावत्पदसत्त्वे तु सत्यत्वाद्युपलक्षितानां परस्परावृत्तिपरस्परप्रतियोगिकभेदकत्वं विना समानविभक्तिकवैदिकसत्यादिपदजन्यशाब्दबुद्धिविषयत्वमनुपपन्नमिति धियोक्तपरस्परावृत्तिभेदप्रतियोगित्वनिश्चयान्नोक्तभेदभ्रमः। उक्तञ्च **कल्पतरौ**—"इतरव्यावृत्तिस्त्वर्थान्न तु शब्दादिति।

इतरव्यावृत्तिः सत्यत्वाद्युपलक्षितान्यस्माद् व्यावृत्तिः सत्यत्वाद्युपलक्षितानामैक्यमिति यावदिति, तच्चिन्त्यम्; वैदिकपदेन हि तुल्यञ्च साम्प्रदायिकमिति न्यायेन नैरर्थक्यानुपपत्तिरिति परेषां विवक्षितं तत्र नैयायिकोक्तव्याख्यानेनैवान्यथासिद्धं विनिगमकञ्चोक्तमेव। किञ्च सत्यादिपदत्रयमध्येऽन्यतमपदमात्रसमभिव्याहृतब्रह्मशब्दस्यैव सामर्थ्यात्पदवैयर्थ्यात्पदद्वयवैयर्थ्ये आपादिते सत्यत्वोपलक्षिताद्भेदो ज्ञानत्वाद्युपलक्षितवृत्तिरिति भ्रमवृत्तिर्न स्यात्, इत्युक्तिरनुक्तिसम्भ्रमग्रस्ता। तदन्वयोपलक्षितव्यक्तेस्तदानीमनभ्युपगमात्। न च यत्र यत्र शाखायां प्रत्येकं पदत्रयमुक्तं तत्रोक्तपदत्रयोपलक्षितव्यक्तयः प्रसिद्धा इति वाच्यम्; उक्तपदत्रयमध्येऽन्यतमपदमात्रसमभिव्याहृतब्रह्मशब्दस्थलेऽन्यथानुपपत्तिप्रयोगिनो वैदिकसमानविभक्तिकपदजन्यशाब्दधीविषयत्वस्यैवाभावात्। तन्मूलकस्य परम्परावृत्तिभेदप्रतियोगित्वनिश्चयस्य भवदुक्तस्यानुदयने भ्रमनिवृत्तितादवस्थ्यात्। एवं ब्रह्मस्वरूपमोक्षस्य स्वप्रकाशचिदानन्दादिभिन्नेनान्तवत्स्वरूपेणाभेदबुद्ध्येत्यप्ययुक्तम्; स्वप्रकाशाद्यभेदज्ञानस्य प्रवृत्तावनुपयोगात्, लौकिकदशायां भवन्मतेऽपि स्ववृत्तित्वेनैवानन्दस्येष्यमाणतया पुरुषार्थतावच्छेदकरूपेणानन्दप्रमाया आनन्दाभेदबोधनेऽप्यसिद्धितादवस्थ्याच्च। इदानीं पुरुषार्थत्वेनानुभूयमानस्य वृत्तिविशेषोपहितानन्दस्योक्तश्रुत्याप्यवबोधनात्।

यत्तु साक्षात्क्रियमाणत्वेनैव सुखस्य पुमर्थतासम्बन्धस्य त्वनित्यत्वसाधनपारतन्त्र्यादिरिवावर्जनीयसन्निधिकत्वमेवेति, तदसत्; साक्षात्क्रियमाणत्वस्यैवावर्जनीयसन्निधिकत्वेनानित्यत्वस्थानीयत्वात् सुखस्य साक्षात्कारविषयत्वनियमात्। सुखं मे स्यादित्यादिना सुखेच्छामात्रे विषयीक्रियमाणसम्बन्धस्य न पुरुषार्थतावच्छेदकत्वमपि तु सर्वदाप्यनुल्लिख्यमानस्य साक्षात्क्रियमाणत्वस्यैवेत्युक्तेः साहसमात्रत्वात्। अत एव "सुखमेव तथा न तदवगमः तस्यावश्यकत्वेनान्यथा सिद्धेर्गौरवाच्च" इति **मणिकृतः**। इत्यास्तां विस्तरः।

प्रकृतमनुसरामः। आत्मस्वरूपस्याविनाशित्वं पूर्वमुक्तम्, अतस्तदभिन्नस्य ज्ञानस्याविनाशित्वमित्यभिप्रायेणोक्तमविनाशित्वादिति व्याख्यानमप्ययुक्तम्, विपरिलोपस्य विनाशार्थक[त्वेन] तैरेव व्याख्यातत्वात्। हेतोः साध्याविशिष्टत्वप्रसङ्गात्, आत्मभिन्नत्वस्यैव हेतू[तोः]कर्त्तव्यत्वात्, मया तु पूर्वमन्यथैव तदर्थस्योक्तत्वात्। यदपि, न तु तद्द्वितीयनर्मित्यस्यापातनिकायां नित्यं चेज्ज्ञानं स्वप्रकाशमित्यादि, तदप्ययुक्तम्; ज्ञानं हि शुद्धचिद्रूपं वृत्त्युपरक्तचिद्रूपं वा विवक्षितम्? नाद्यः, तन्नित्यत्वेन चाक्षुषादेरापाद-

यितुमशक्यत्वात्। न द्वितीयः; तन्नित्यत्वस्य तैरभ्युपगमात्। अत एव द्रष्टृदृश्यादिकमात्मभिन्नं नास्त्येवेति द्वितीयशब्दार्थ इत्यपि परास्तम्। ततोऽन्यदित्यतोऽपि तत्सिद्धेः। न चेदं प्रमाणान्तरेणाद्यापि सिद्धमस्ति, येन शब्दाधिक्यादिना तात्पर्यविषयत्वेन कल्प्येतेति, न किञ्चिदेतत्। तस्मात्सहकार्यन्तराभावेन सुषुप्तौ ज्ञानादिशून्यत्वमात्मनो न तु दृश्यलयादिति श्रुत्यर्थः पर्यवसन्नः। तदेव निगमयति–सलिल इति। सलिलवत्स्वच्छीभूतः इति परवदेव व्याख्येयं विकारशून्यत्वात्। न च क्लीबत्वापत्तिः **चन्द्रिकाकारै**रेव त्रेधा समाहितत्वात्। तत्राद्यं छान्दसत्वम्, द्वितीयं तु सलिलमस्यास्तीत्यर्थ आदित्वादच्प्रत्ययः, सादृश्यञ्च सम्बन्ध इति। तृतीयं तु सलिलमिवाचरतीत्यर्थे क्विप्, तदुक्तं **महाभाष्ये** "अपर आह सर्वप्रातिपदिकेभ्य आचारे क्विब् वक्तव्य इति, ततः पचादित्वादच्प्रत्ययः" इति। एक आगन्तुकगुणशून्यः द्रष्टा उक्तरीत्या दर्शनशक्तिविशिष्टः। अत एवाद्वैतः द्वैतसम्बन्धहीनो भवति स्वरूपेणास्ति एष ब्रह्मलोकः भुक्त्यवस्थातुल्यः सुषुप्तिरूपः। तदुक्तं **छान्दोग्योपनिषदि** "ताः एताः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदुः" इत्यादि। सम्राडितिवाजपेययाजिनो राज्ञः सम्बुद्धिः। साम्प्रतं श्रुतिरुपसंहरति—इति होवाचेति। याज्ञवल्क्य इति शेषः। एषा उक्तरूपैवास्य जीवस्य परमा उत्कृष्टा सम्पत् सम्पत्तिशब्देन यदन्यश्रुतिषु व्यवह्रियते तदप्येतदेव सति सम्पद्य न विदुः सतिसम्पद्यामहे इति पूर्वोक्तछान्दोग्यादिदर्शनात्। एष एवास्य जीवस्य परमदृष्टान्तादुत्कृष्टो लोकः दुःखाभावस्यैव परमपुरुषार्थत्वादुक्तरीत्या सुखादेरपि दुःखकुक्षावेव निक्षेपात्। अतएवास्य निरुपधीच्छाविषयत्वरूपसाधर्म्येण सुखत्वव्यवहारोऽपीत्यत आह—एषोऽस्य परम आनन्द इति। विस्तरः पुरस्तात्। एतस्य यथोक्तस्यैवानन्दस्यान्यानि भूतानि स्थानानि मात्रां लेशं जीवन्ति मनुष्यानन्दादिभ्यो यथोत्तरं शतगुणेभ्यो मोक्षस्याविनाशाभावेऽपि न परमपुरुषार्थत्वात्तदपेक्षया सुखान्तराणामपकृष्टत्वमित्यर्थः। एतच्च सुषुप्तिमुक्त्योरशेषविशेषगुणोच्छेदसाम्याद्दर्शितमिति सर्वं शिवम्। इति यद्वै तन्न पश्यतीत्यादि श्रुत्यर्थः॥

सुखानां सातिशयत्वं हेयं वार्थमुपदिशति—"स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दः। अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दः। अथ ये जितलोकानां शतं पितॄणामानन्दाः

स एको गन्धर्वलोक आनन्दः। अथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते। अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ एष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतं सोऽहं भगवते सहस्रं ददाम्येतदूर्ध्वं विमोक्षायैव ब्रूहीति ॥

अयमर्थः—स यः कश्चिन्मान्धात्रा सदृशः मनुष्याणां मध्ये राद्धो रूपयौवनाङ्गसांकल्पदृढगात्रत्वबलसम्पन्नोऽष्टादशविद्यारहस्यज्ञः समृद्धः सप्तद्वीपैश्च सम्पन्नोऽन्येषां राज्ञामधिपतिरव्याहताज्ञः मानुष्यकैः मनुष्यसम्बन्धिभिः कामैः पितृमातृसोदरजायापुत्रबन्ध्वादिभिः समुह्य समुह्य भागैः एतादृशमनुष्यस्य य आनन्दः तदुपरि मनुष्याणामानन्दो नास्तीत्यर्थः। अथानन्तरमानन्दस्योत्कर्षः। एवमग्रेऽपि पूर्वानन्दाच्छतगुणः पितॄणामग्निष्वात्तादीनां जितलोकानां कर्मणा प्राप्तलोकानाम्। कर्मदेवशब्दार्थमाह—ये कर्मणेति ज्योतिष्टोमादिप्राप्तभोगा इत्यर्थः। आजानदेवाः स्वभावतो देवाः "आजानसिद्धं भगवन्तं सनत्कुमारम्" इति **भामत्यां** प्रयोगात्। श्रोत्रियः अधीतवेदः, अवृजिनो निष्पापः, अकामहतः एतदर्वाक्स्थले कामरहितःतस्याप्याजानदेवानन्दतुल्य एवानन्दोऽत्र भवतीत्यर्थः। एवं पुरस्तात् देवलोकः इन्द्रादिलोकः प्रजापतिर्ब्रह्मा हिरण्यगर्भः। ब्रह्मलोको मुक्तिः सुषुप्तिर्वा। तत्र च सुखाभावेऽपि दुःखाभावव्याख्यातरीत्या सुखशब्दार्थः। एवं मुक्तावपीत्याह—एतदमृतमिति। स्वरूपे ज्ञातेऽपि सोपायां मुक्तिं ब्रूहीत्यभिप्रायवान् जनक आह—सोऽहं भगवत इत्यादि। तत्रोत्तरब्राह्मणे याज्ञवल्क्यो वक्ष्यति। सुषुप्तेः प्रकृतायामाद्विशेषं वक्तुं तदुत्तरं दुरुत्पत्तिमाह—"स एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवम्। स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गोऽह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्येतदूर्ध्वं विमोक्षायैव ब्रूहि" इति। रत्वा वन्यादि-दर्शनजां रतिमनुभूय चरित्वा भ्रमदृष्टशरीरावच्छेददेशेषु विहृत्य पुण्यञ्च पापञ्च सुखदुःखतत्साधनानि दृष्ट्वा चकारादुपेक्षणीयस्यापि दर्शनसंग्रहः इति स्वप्नावस्थादिकीर्त्तनमेतस्मिन्नुक्ते सम्यक्प्रसीदत्यस्मिन्निति सम्प्रसादः सुषुप्त्यवस्था, तत्र स्थित्वा च पुनः प्रतिन्यायं प्रतियोन्या बुद्धान्तायैव जाग्रदवस्थां प्रतिपद्यत इति यावत्। पदार्थः पूर्ववत्। स्वप्ने च शालग्राम-

चाण्डालादिदर्शनेन पुण्यपापानुत्पत्तिरित्याह—स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवतीति। तेन तज्जन्येन शुभाशुभेन कर्मणा अनन्वागतोऽसम्बद्धो भवति पूर्ववद् व्याख्या। यद्वात्र बुद्धावस्थायां यत्किञ्चित्पश्यति तेन सुषुप्त्यवस्थायामसम्बद्धो भवति तज्ज्ञानाभावेन तन्निबन्धनसुखदुःखानुत्पादादित्यर्थः। अत एवाह—असङ्गो ह्ययं पुरुष इति। अयं सुषुप्तः पुरुषो जीवः असङ्गज्ञानरूपतत्सम्बन्धाभाववान्, अतः सुखादिहीन इत्यर्थः। तेन न साध्याविशेषशङ्का। पूर्वोक्ताभिप्रायवानेव जनक आह—सोऽहमित्यादि। श्रुतिराह—"अत्र याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मां तेभ्य उदरौत्सीद्" इति। "स यत्राणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्येत एवमेवायं पुरुषः आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जयति तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवंविदं सर्वाणि भूतानि प्रतिकल्प्यन्त इदं ब्रह्मायातीदमागच्छतीति॥ तद्यथा राजानं प्रयियासन्तमुग्रा प्रत्येनसः सूतग्रामण्य उपसंभावयन्त्येवं हैवंविदं सर्वे प्राणाः उपसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति"।

अयमर्थः–अत्र प्रश्ने ह किल याज्ञवल्क्यो मुनिर्बिभयाञ्चकार भीतवान्। कारणमाह—मेधावी राजा सर्वेभ्यो मां तेभ्य उदरौत्सीदिति सर्वमच्छिष्यापेक्षयायं राजा बुद्धिमान् यतः कामप्रश्नवरव्याजेन सर्वं मदीयं ज्ञानमुपसंहृतवानिति भयम्, न तु वक्तुमशक्त्या ज्ञानाभावेन वेति व्याख्यातारः। वस्तुतस्तु एतावत्पर्यन्तं बुद्ध्या अत ऊर्ध्वमित्यादिप्रश्नः साधीयानेव कृतः। अन्यथा एतस्मादमृतमित्यादिश्रवणेन कृतार्थं मत्वा मोक्षोपायादिप्रश्नानुपपत्तेः। किन्तु यदि विवक्षितार्थे प्रतिपादितेऽपि भ्रान्त्या तदुत्तरमपि प्रयच्छति तदा शाकल्यवदस्याप्यनिष्टमापतिष्यतीति भावनं भयहेतुरिति बोध्यम्। इति स्वगतमेव विभाव्य जीवब्रह्मणोर्भेदमेव द्रढयितुं मरणप्रक्रियां तावदाह याज्ञवल्क्यः—स यत्रेत्यादिना। स स्थूलदेहो यत्र यस्यामवस्थायामणिमानमपकर्षं न्येति नितरां गच्छति। हेतुमाह—जरया चोपतपताणिमानं गच्छतीति वेति। जरा प्रसिद्धा उपतापो ज्वरादिः वा शब्दः आकस्मिकसंग्रहार्थः। अणिमानं निगच्छतीति पूर्वोक्तव्याख्यानं त्वदर्शनार्थं पूर्वं दृष्टनिमित्तकमिदानीं त्वदृष्टनिमित्तकमरणत्वमुक्तमिति व्याख्यातारः। औदुम्बरपिप्पलानामुपादानं दार्ष्टान्तिके शरीराणामुत्तममध्यमाधमत्वदर्शनार्थं एवायं शारीर आत्मा जीवः एभ्योऽङ्गेभ्यः शरीरश्रोत्रादिभ्यः सम्प्रमुच्या-

दृष्टघटितावच्छेद्यावच्छेदकभावलक्षणसम्बन्धरहितो भूत्वा ज्ञानाद्युत्पत्तौ शरीरमेवान्त्यावयवित्वगर्भेण न हेतुत्वं किन्तु शरीरतदवयवनाड्यादिसाधारणेन चेष्टावत्त्वेनैवेति स्वीकारात्। अङ्गेभ्य इत्युक्तं पुनरिति, जन्ममरणप्रवाहस्यानादित्वदर्शनार्थं प्रतिन्यायं यथा गमनाद्वैपरीत्यं प्रतियोनि तत्तज्ज्ञानकर्मवासनाद्भुवि यथा तमाद्रवत्यागच्छति। प्राणायैव शरीरान्तरे प्राणादिग्रहणार्थमेव अन्यथा भोगासंभवादिति प्रयोजनं दर्शितम्। पूर्वशरीरत्यागावस्थामाह—तद्यथेति। अनः शकटं सुसमाहितं शोभनैः गुरुभारैः परिच्छदैः सम्पूर्णमुत्सर्जन् शब्दानकुर्वन् यायात्...चित्सारथिना नूनं ग्रामाद् ग्रामान्तरं गच्छन्नेवमेवायं शारीर आत्मा स्पष्टम्। प्राज्ञेनात्मना ईश्वरेणान्वारूढः प्रेरितः हा तातेत्यादिशब्दान् कुर्वन् याति शरीरान्तरं गच्छति। शरीरान्तरग्रहणे पूर्वकर्मणां हेतुत्वं प्रतिपादयति—तद्यथेत्यादिना। उग्राः शूद्रासु क्षत्रियाज्जाताः।

"वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ।" इति स्मृतेः। एनं पापं तत्प्रतिनियुक्ताः चौरादिनियन्तारः प्रत्येनसः "ब्राह्मण्यां क्षत्रियात्सूतः" इति स्मृतिः। ग्रामण्यो ग्रामाध्यक्षाः अन्नैश्चतुर्विधैर्नानाजातीयैः पानैः कर्पूरादिवासितनीरैरावसथैः राजयोग्यगृहैः प्रतिकल्पन्ते तदागमनबुद्ध्या उक्तसामग्रीं संपाद्य सज्जीभवन्ति। सम्भ्रमविशेषमाह—अयमायात्ययमागच्छतीति। एतादृशज्ञातुरपि फलमाह–एवं हेत्यादिना। ब्रह्मशब्द आत्ममात्रपरः सर्वत्र प्रतिष्ठितो भवतीत्यर्थः।

प्राणादीनामपि तदैवोत्क्रमणमित्याह—तद्यथेति। व्याख्यातम्। अभिसमायन्ति सर्वतस्तदभिप्रायज्ञा स्वयमेव सम्यक् स्वं स्वं स्थानं परित्यज्यागच्छन्ति। एवमेवेममन्तकाले सर्वप्राणा मुख्या गौणाश्चक्षुरादयश्चाभिसमायन्ति, ज्ञानाजनकत्वेन तदभिमुखीभवन्ति परस्परप्रकारेणैवात्मचक्षुरादीनां ज्ञानजनकत्वादुभयेषां कार्यवैमुख्यमेव परस्पराभिमुख्यम्। दृष्टान्तस्तु तदधीनत्वमात्रांशे इति बोध्यम्। अन्तकालमाह–यत्रैतदूर्ध्वोच्छ्वासी भवत्यपानवृत्तिविलयेन प्राणवृत्तिप्राबल्यादित्यर्थः। उक्तार्थप्रसङ्गाय पृष्टान्तरप्रतिपादनाय च ब्राह्मणान्तरं "स यत्रायं शारीर आत्मा बल्यं न्येत्यसम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवत्येकोभवति।। एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहु-

रेकीभवति न मनुते इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुरेतस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ तद्यथा तृणजलायुकः तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायं पुरुषः इदं शरीरं निहत्याविद्यां गमयित्वात्मानमुपसंहरति। तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणान्तरं रूपं तनुत एवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणान्तरं रूपं तनुते-पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः।'' इत्यादि॥

अस्यार्थः—अबल्यं बलराहित्यं नीत्य नितरां गत्वा निपूर्वादिनोर्ल्यप्, संमोहं मूर्छामिव न्येति नितरामेति मूर्च्छायास्तच्छरीरावच्छिन्नतदात्मसमवेतज्ञानप्रागभावसमानकालीनरूपत्वान्मर [णा]वस्थाया अतथात्वेऽपि ज्ञानाभावसाम्येन इवशब्दः। अत एव नित्यज्ञानरूपे तस्मिन् विशेषज्ञानाभावादिवशब्द इत्यपि परास्तम्। अथ तदैनं जीवमेते प्राणाः अभिसमायन्ति। व्याख्यातम्। अत एवाह—स एता इत्यादि। एता उक्तास्तेजोमात्राः प्रकाशहेतुभूतानीन्द्रियाणि करणव्युत्पत्तेः समभ्याददानः समन्तात् अभिस्वाधीनत्वेन आददानः ज्ञानजनकमनःसंयोगविरहेण तान्यपि स्वस्वजन्यज्ञानानुपहितानि कुर्वन्तीति यावत्। हृदयमेव शरीरावयवान्तराणि परित्यज्य हृत्पुण्डरीकमेवान्ववक्रामति अवच्छेदकत्वेन स्वीकरोति। प्राणचैतन्यादेर्जीवनलिङ्गस्य तत्रैवोपलम्भात्। तदेव प्रपञ्चयति—स यत्रेति। यदा एष प्रसिद्धश्चाक्षुषः चक्षुरधिष्ठात्री देवता पराङ् आत्मनः पराङ्मुखत्वेन पर्यावर्त्तते ज्ञानरूपे कार्ये आत्मनः सहकारितां जहातीति यावत्। चक्षुर्द्वारकमेव चोक्तपराङ्मुखत्वं बोध्यम्। अथ तदा जीवात्मा रूपाणि न पश्यति सहकारिवैकल्यात्। तच्चादृष्टविशेषविरहादित्यर्थः। तद् व्याचष्टे—एकीभवति न पश्यतीत्याहुः। वस्तुतत्त्वज्ञा इति शेषः। यदा एकीभवति तस्यामवस्थायां समीपस्था न पश्यन्तीत्याहुरिति तद्व्याख्यातारः। एवमग्रेऽपि व्याख्येयम्। श्रवणवदनादिपदानि च पूर्वं पूर्वं व्याख्यातानीति। एवं मरणस्य पूर्वामवस्थामुक्त्वा मुख्यं तद्वदयन्नाह—तस्य हेति। एतस्य पूर्वोक्तस्य हृदयस्य अग्रमूर्ध्वं नाडीमुखं प्रद्योतते मुख्यत्वेन

प्रकाशते तेन प्रकाशभूतेन एष आत्मा निष्क्रामति तदा तन्त्र्यावच्छिन्नो भवतीति यावत्। तत्स्थानश्चानियतमित्याह—चक्षुष्टो वेत्यादि। आदित्यलोकप्राप्तिजनककर्मसत्त्वेऽपि मूर्द्ध्नो वा मस्तकनाडीतो वा, तच्च ब्रह्मलोकप्राप्तिनिमित्तसत्त्वे स्मृत्यन्तरोक्तविलक्षणकर्मसत्त्वे वेत्याह—अन्येभ्यो वा शरीरेभ्य इति। तथा च **मोक्षधर्मे**—याज्ञवल्क्य उवाच।

तथैवोत्क्रममाणं तु शृणुष्वावहितो नृप।
पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते॥
जङ्घाभ्यां तु वसून् देवानाप्नुयादिति नः श्रुतम्।
जानुभ्याञ्च महानागान्साध्यान् देवानवाप्नुयात्।
पायुनोत्क्रममाणश्च मैत्रस्थानमवाप्नुयात्।
पृथिवीं जघनेनाथ ऊरुभ्याञ्च प्रजापतिम्।
पार्श्वाभ्यां मरुतो देवान्नाभ्यामिन्द्रत्वमेव च।
बाहुभ्यामिन्द्रमेवाहुरुरसा रुद्रमेव च।
ग्रीवायान्तु मुनिश्रेष्ठं नरमाप्नोत्यनुत्तमम्।
विश्वेदेवान्मुखेनाथ दिशः श्रोत्रेण चाप्नुयात्।
घ्राणेन गन्धवदनं नेत्राभ्यामग्नि ···।

उक्तरूपात्मनिष्क्रमणानन्तरं प्राणोऽप्यनूत्क्रामति नश्यति तदनन्तरं च सर्वे प्राणाश्चक्षुरादयो नश्यन्तीत्यर्थः। उत्क्रमणावसरे च भाविकर्मकथादिवासना···स्वप्न इव सविज्ञानो गन्तव्यलोकाभिलाषवान्सम्पद्यते सं[वि]ज्ञानमेव स्वाभिलाषविषयीकृतमेव लोकान्तरमन्ववक्रामति गच्छति।

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥ इति **स्मृतेः**।

पूर्वदेहोपार्जितज्ञानादिनाशेऽपि केषाञ्चिद् गुणानां न नाश इत्याहुः—तमिति। विद्याज्ञानजन्यः संस्कारः कर्म पुण्यं पापञ्च समन्वारभेते सम्यगनुबध्नीत। कर्मत्वेन द्वयोरेकविलक्षणान्न बहुवचनापत्तिः। पूर्वप्रज्ञास्तनपानादिप्रवृत्तिहेतुभूतेष्टसाधनत्वस्मरणहेतुः संस्कारः। विशिष्यैतदुपादानं जरायुजमात्रसाधारण्यदर्शनार्थम्। देहान्तरप्राप्तिसामग्रीमादायैव पूर्वदेहं त्यजतीत्याह–तद्यथेति। तृणजलायुकः तृणजोऽतिसुकुमारोऽनेकपात् हरितोऽल्पो जीवः तृणस्याश्रितस्यान्तमग्रं पुच्छपादैस्तद्धित्वा मुखपादैस्तृणान्तरमवष्टभ्य पूर्वतृणादात्मानमुपसंहरति विभजति एवायं पुरुषः। स्पष्टम्। इदं प्रत्यक्षशरीरं निहत्य निश्चेष्टं कृत्वा अविद्यां गमयित्वा सञ्ज्ञारहितं

कृत्वा आत्मानमुपसंहरति । अदृष्टविशेषघटितमवच्छेदकावच्छेद्याभावलक्षणं सम्बन्धं देहे परिहरतीत्यर्थः । देहान्तरारम्भक्रममाह—तद्यथेति । पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रावयवान् अपादायावयव्यन्तरादाच्छिद्या-न्यपूर्वावयविनो रुचकादेर्भिन्नं नवतरं नूतनं कल्याणतरमतिरमणीयं रूपं कण्टकादिकं तनुते एवमेवायं पुरुषः । स्पष्टम् । इदं शरीरं विहत्याविद्यां गम-यित्वेति पूर्ववत् । अन्यन्नवतरं कर्मान्तरभोगसाधनं कल्पान्तरं रूपं शरीरं तनुतेऽदृष्टद्वारा परिगृह्णाति । तथा च पूर्वदेहपरित्यागे देहान्तरपरिग्रहे चोक्तसादृश्यं न तु पूर्वावयव्यवयवैरुत्तरावयव्यारम्भ इत्यत्रापि बीजाभावात् । उत्तरदेहस्यानैयत्यमाह—पित्र्यं वेति । पितृसम्बन्धि गान्धर्वं वा मानुषं मनु-ष्याणां कल्याणतरमितिविशेषणानुरोधादेतदुक्तम् । पापकर्मसत्त्वे त्वाह—अन्येभ्यो वा भूतेभ्य इति षष्ठ्यर्थे चतुर्थी । स्मृत्यन्तरोक्ततत्तत्कर्मानुसारेणे-त्याशयाव्यवहितोत्तरमेव पठन्ति "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षुर्मयः श्रोत्रमयश्चाकाशमयो वायुमयः पृथिवीमय-स्तेजोमय आपोमयाः क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो धर्ममयोऽधर्म-मयः सर्वमयस्तद्यदेदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति । स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यत इति ॥ तदेष श्लोको भवति—

तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।
प्राप्यान्तं कर्मणस्तस्य यत्किञ्चित्करोत्ययम् ॥

तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मण इति तु कामयमानोऽथाका-मयमानो निष्काम आत्मकाम आप्तकामो भवति न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति । तदेष श्लोको भवति—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ इति ।

तद्यथाहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरो मृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदहः । तदप्येते पुण्यश्लोकाः—

अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव ।
तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः ॥

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च।
एष पन्था ब्राह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च ॥

अन्धं तमः प्रविशन्ति ये संभूतिमुपासते।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥
असुर्या नाम ते लोका अन्धेन तमसावृताः।
तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः ॥
तदेव,सन्तस्तदु द्वामो न चेदवेदीर्महती विनष्टिः।
ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति ॥
आत्मानञ्चेद्विजानीयादहमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत् ॥
यस्यानुवित्तः प्रतिबुद्ध आत्मास्मिन्सुन्देहे गहने प्रविष्टः।
स विश्वकृत्स हि सर्वस्य कर्त्ता यस्य लोकः स उ लोक एव ॥
यदैतमनुपश्यत्यात्मानं दैवमञ्जसा।
ईशानं भूतभव्यस्य न तदा विचिकित्सति ॥
यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।
तमेवमयमात्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥
यस्मादर्वाक् सम्वत्सरोऽहोभिः परिवर्त्तते।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥
प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्।
मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥
मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥
एकधवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्।
विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।
नानुध्यायेद्बहूञ्छब्दान् वाचोविग्लापनं हि तत् ॥

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु न एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय ॥ तमेतं

वेदानुवचनेन ब्राह्मणा विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेन तपसा-नाशकेनेतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ।। एतद्ध स्म वैतत्पूर्वे ब्राह्मणाः अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । या ह्येष पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे भवतः ।। स एष नेति नेत्यात्मागृह्यो न गृह्यते अशीर्यो न शीर्यतेऽसङ्गो न सज्ज्यते उषितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे नु हैवेष एते तरत्य-मृतः साध्वसाधुनी नैनं कृताकृते तपतो नास्य केचन कर्मणा लोको मीयते ।। तदेतदृचाभ्युक्तम्—

एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयान् ।
तस्यैवं स्यात्पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन ।। इति ।

तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्सर्वमेनं पश्यति सर्वोऽस्यात्मा भवति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विजरो विचिकित्सो ब्राह्मणो भवति एष ब्रह्मलोकः सम्राडेवं प्रापितोऽसीति होवाच याज्ञवल्क्यः । सोऽहं भगवते विदेहान्दास्यामि मां चापि सह दास्यायेति ।। स वा एष महा-नज आत्माऽन्नादो वसुदानो स यो हैवमेतं महान्तमञ्जसात्मामन्नादं वसुदानं विन्दते वसु य एवं वेद ।। स वा एष महानज आत्माजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै ब्रह्माभयं हि ब्रह्म भवति य एवं वेद ।।'' इति ।

अयमत्रार्थः—पूर्वजन्ममरणप्रकारमाह—मुक्त्वा तद्विच्छेदोपाया-काङ्क्षायां सर्वानर्थहेतोः शरीरादेः काममूलकत्वात्तदुच्छेदेनैव शरीरो-च्छेदद्वारा मरणाद्युच्छेदः स्यादिति स्पष्टयितुमाह—विज्ञानमय इत्यादि । प्राचुर्ये मयट् । विज्ञानसामान्यसामग्रीमाह—मनोमय इति । शरीरसामा-न्योपयोगाभिप्रायेणाह—वाङ्मय इत्यादि, श्रोत्रमय पर्यन्तम् । इन्द्रिया-न्तराणामप्युपलक्षणम् । निमित्तमुक्त्वावच्छेदकस्य समवायित्वमन्येषां निमित्तत्वमिति विशेषः । आत्मनो गुणान्तराण्याह—क्रोधमय इति । अक्रोधपदं द्वेषविरोधिरागात्मकेच्छापरम् । हर्षाहर्षौ सुखदुःखे तज्जनकं गुणद्वयमाह—धर्ममयोऽधर्ममय इति । अधर्मः पापम्, एतद्भोगार्थमेव सर्वमित्याह—सर्वमय इति । नहि बीजप्रयोजनाभ्यां विना कस्यचिदु-

त्पत्तिरिति न्यायात्। विस्तरः पुरस्तात्। सर्वपदार्थमाह—तदित्यादि। तदेव स्पष्टयति—इदंमयोऽदोमय इति। इदमदःशब्दौ प्रत्यक्षपरोक्षाभिप्रायौ। इतिशब्द आत्मगुणोत्कीर्त्तनसमाप्त्यर्थः। यथाकारी यादृशप्रयत्नवान्। यथाचारी यादृशानुष्ठानशीलश्च तथाभवति तत्सम्बद्धो भवति। लोकप्रसिद्धिमप्याह—साधुकारी साधुर्भवति पापकारी पापो भवतीति। स्वाजातौ यत्कर्म साधुत्वेन प्रसिद्धं तत्कारी साधुरिति विपरीतकर्मा चासाधुरिति प्रसिद्धः। एवमिहापीत्याह—पुण्यापुण्येनेत्यादि स्पष्टम्। यत्नक्रिययोः कार्यकारणभावमुक्त्वा यत्नहेतुरिच्छेत्याह—अथो खल्वाहुरिति। काममय इच्छाप्रचुरः "क्रतुः संकल्पः" इति **तात्पर्यटीकायाम्।** व्याख्यातं चो**दयनाचार्यैः**—"फलगोरसास्वरसावाहिनी इच्छा कामः तेनोपाधिना साधनगोचरा, अनेनेदं कुर्यामित्याकारा च। संकल्प इति पौनरुक्त्यं न तु प्रयत्नः, तत्कर्म कुरु इतिधात्वर्थस्य करोत्यर्थत्वात्। तदुक्तम्—

यादृशोऽस्या भवेत्कामस्तादृशो जायते क्रतुः।
क्रतुनिश्चय एवात्र ततः कर्म प्रवर्त्तते॥" इति।

तथा प्रथमफलेच्छा तदुत्तरमुपायेच्छा ततो यागं कृत्वा साधयामीत्यादेः कृतिसाध्यप्रकारकेच्छारूपाचिकीर्षा ततो यागादिकृतिरित्यादिरीत्या फलसिद्धिरित्याह—यत्कर्म कुरुते तदभिसम्पद्यत इति। **मोक्षधर्मे**ऽपि मनुबृहस्पतिसंवादे—

ज्ञानपूर्वा भवेल्लिप्सा लिप्सापूर्वाभिसन्धिता।
अभिसन्धिपूर्वकं कर्ममूलं ततः फलम्॥

"अभिसन्धिः साधनानुष्ठानाभिप्रायः स्वार्थे तद्धितः" इति **विद्यासागरः**। अत्रैव मन्त्रसंवादमाह—तदेष श्लोको भवतीति। उक्तोऽभिलाषवान्स पूरुषः ह प्रसिद्धं कर्मणा क्रियया तदेवाभिलाषविषयमेवैति प्राप्नोति। स्पष्टमाह—लिङ्गं मन इति। वस्तुमात्रस्य लिङ्गं ज्ञापकं मनो यत्रार्थे निषिक्तं नितरामासक्तमिच्छायां मनःसंयोगस्यासमवायिकारणत्वाच्चेदमिच्छाया मनोधर्मत्वाभावात्। इदानीं प्राप्तस्यापि फलस्य क्षयित्वात्तत्रासक्तिर्न कार्येत्यभिप्रायवानाह—प्राप्यान्तमित्यादि। यत्किञ्चित्कर्मेह लौकिके करोति तस्य कर्मणः फलभोगेनान्तनाशं प्राप्य तस्माल्लोकादिन्द्रादिलोकात्पुनरेति भूलोकम् संसारस्यानादितया पूर्वमप्येतादृशगतागतसूचनाय पुनरिति। आगमनप्रयोजनमाह–अस्मै लोकायात्रशरीरग्रहणाय। तस्यापि प्रयोजनमाह—कर्मण इति। धर्माधर्मानुष्ठानाय शरीरव्यतिरेकेण पूर्वोपात्तकर्मणां भोगासम्भवाच्छरीरिणा

विहितनिषिद्धकर्माचरणस्यावश्यकत्वात्तद्भोगार्थश्चेदन्तरात्पादस्यावश्यकत्वाद् विच्छेद एव यथोक्तप्रवाहस्येत्यर्थः। इतिशब्द उक्तोपसंहारार्थः। नु सानुकम्पखेदे कामयमानो विषयासक्तः। एवंविधदुःखस्येतिभावः। अथाधिकारेऽकामयमानो विषयेष्वनासक्तः प्रतिपाद्यत इतिभावः। **तात्पर्यटीकायां** तु "कामयमानो य आसीत्स एवाप्यकामयमानो भवति। अकामयमानः काममपरिहरन् तत्परिहारसिद्धौ सोऽकामः। तस्य व्याख्यानं निष्काम इति। आत्मनः कैवल्योपेतात्मकामः तत्प्राप्त्या आप्तकामो भवति। न तस्य प्राणा इति। शाश्वतो भवतीत्यर्थः" इति व्याख्यातम्। अत्रैव जीवन्मुक्त्यवच्छेदकदेह एव समवनीयन्ते समाप्यन्ते तदात्मभोगावच्छेदकदेहावच्छिन्नप्राणप्रागभावसमानकालीनध्वंसप्रतियोगित्वं फलितार्थः। तत्पूर्वदेहावच्छिन्नप्राणप्रतियोगिकाश्च प्रागभावासिद्धाः ब्रह्मैव सन्निति प्रागेव ब्रह्मसादृश्यप्राप्तिपरत्वेन व्याख्यातम्। तथा च ब्रह्मसादृश्यप्राप्तिरेव ब्रह्मप्राप्तिरित्यर्थः। तत्तत्रार्थो वक्ष्यमाणश्लोको मन्त्रो भवति। पूर्वार्द्धस्य स्पष्टम्। अथ तदेति व्याख्यातारः। मर्त्यो जीवः, अमृतः शरीरसम्बन्धरहितो भवतीत्यत्रैवावस्थायां ब्रह्म समश्नुते प्राप्नोति, अयमेव ब्रह्मप्राप्तिपदार्थ इत्यर्थः। इति मन्त्रसमाप्तौ। जीवन्मुक्त्यवस्थामाह—तद्यथेति। अहिनिल्वयिनी सर्पकञ्चुकः वल्मीके प्रसिद्धे "वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्" **इत्यमरः**। मृता श्वासोच्छ्वासादिशून्या प्रत्यस्था वैपरीत्येन प्रक्षिप्ता अधोमुखा ऊर्ध्वपुच्छा च शयीत तिष्ठेत। एवमेवेदं शरीरं शेते, आत्मत्वेनानवगम्यमानत्वात्। अथायमनस्थिकः शरीरः तदभिमानशून्यः ब्रह्मप्रज्ञानवान् आत्मा जीवो ब्रह्मैव ब्रह्मसदृशः प्रारब्धभोगाय विद्यमानेऽपि शरीरे तादृशसम्बन्धाभावात्। तथा च **तात्पर्यटीकायां वाचस्पतिमिश्राः** "अनात्मन्यात्मग्रहोऽहमस्मीति मोहोऽहंकारः" इतिवार्त्तिकमुपादाय "अत एव सर्वस्येयमात्माशीःकृमेरपि मानुभूवं प्रयासः" इति। सोऽयमीदृशोऽभिनिवेशः शरीरादीनात्मत्वेनाध्यवस्यतो भवति नात्मतत्त्वमविदुषः स खल्वहिनिल्वयिनीमिवाहिः स्वतो व्यतिरिक्तं शरीरादिकं पश्यन् तया स्निह्यति स्नेहविरहान्न तप्यते नाप्यनुशोचतीति। लोकते भुङ्क्त इति, लोक एव प्रारब्धमात्रं भुञ्जानो न तु कर्मान्तरमर्जयन्। तदाहुः—

दोषा तुषानुबद्धा हि कर्मतण्डुलजा यथा।
जन्माङ्कुराय कल्पन्ते न कल्पन्ते तु केवलाः॥ इति।

इदश्च **माध्यन्दिनानां** पाठमनुसृत्य। **काण्वास्तु**-"अथाऽयमशरीरोऽमृतः प्राणो ब्रह्मैवं सम्राडिति" आदिपठन्ति। अशरीरत्वादेवामृतो देहत्यागचि-

न्ताविरहात् प्रकर्षेणाविति जीवति इति प्राणः। प्रकर्षस्तु प्रपञ्चसम्बन्धराहित्यमेव। तदेवाह—ब्रह्मैवेति। कर्मान्तरानुत्पत्तिमाह—तेज एवेति। परैरपि स्वयंज्योतिश्चिदानन्दमात्रमेवेति मुख्यार्थस्यावश्यं त्याज्यत्वात्। सम्राडिति जनकस्य सम्बुद्धिः। राजा हर्षविशेषादाह--सोऽहमित्यादि। स्पष्टम्। तदभिप्रायस्तु ब्रह्मज्ञानाङ्गस्य संन्यासस्यानुक्तत्वात्तदपि कथनीयमिति प्रश्नस्तु न कृतो याज्ञवल्क्यबुद्धिपरीक्षार्थमिति व्याख्यातारः। तदप्येते श्लोका इति। स्पष्टम्। अणुः सूक्ष्मो दुर्ज्ञेयत्वात् पन्था ब्रह्मबोधोपायः वितरः संसारतरणहेतुत्वात्। विनत इति **काण्व**पाठे विस्तीर्णे वितते संसारसमुद्रेऽस्य तरणहेतुत्वादिति व्याख्यातारः। पुराणः पुरापि नवः नित्यश्रुतिप्रकाशित्वात्। मां मुमुक्षुं स्पृष्टः प्राप्तः। फलोपधाननियममाह—अनुवित्तो मयैवेति। पुराणशब्दार्थं प्रदायानुच्छेदमाह—तेनेति। धीराः कर्मफलेच्छामात्रशून्याः। इतो देहादिप्रपञ्चाद्विमुक्ताः सन्तः स्वर्गलोकं कर्मफलमात्रमुत्क्रम्य विहाय यान्ति मुक्तिं लभन्त इत्यर्थः। भ्रान्तानां मतमाह—तस्मिन्निति। तस्मिन् मोक्षे शुक्लं श्वेतवर्णं लोकं तादृशैः प्रासादैः स्त्रीपुंशरीरैश्च सपरिच्छेदैस्तादृश्याधिष्ठात्र्या देवतया योषिता पुरुषेण वाधिष्ठितमाहुः। उतोऽन्ये नीलं कृष्णाञ्जनचयाभमाहुरित्यस्य सर्वत्रानुषङ्गः। पिङ्गलं सुवर्णाभं हरितं दूर्वादलाभं लोहितं प्रवालादितुल्यम्। अनेन शैववैष्णवशाक्तभैरवसौराद्यागमानां प्रतिषेधो दर्शितः, इतिव्याख्यातारः। एतदभिप्रायेणैव **भारतेऽपि** पठ्यते—धृतराष्ट्र उवाच—

भाभाति शुक्लमिव लोहितमिवाथो कृष्णमप्याञ्जनं काद्रवं वा।
न पृथिव्यां तिष्ठति नान्तरीक्षे नैतत्समुद्रे सलिलं बिभर्ति॥
न तारकासु न च विद्युदाश्रितं न चाभ्रेषु दृश्यते रूपमस्य।
न चापि वायौ न च देवतासु नैतच्चन्द्रे दृश्यते नोत सूर्ये॥
नैवर्क्षु नैतद्यजुःषु नाप्यथर्वसु न वा दृश्यममलेषु सामसु।
रथन्तरे बृहत्यथ वापि राजन् महाव्रतस्यात्मनि दृश्यतेऽपि तत्॥

एवं भ्रान्तानां सालोक्यमेव मुख्यमुक्तिं मन्वानानां मतमुक्त्वा प्रकृतमाह—एष इति। पूर्वोक्तः पन्था उपायः ब्रह्मणः ब्राह्मणेनानुवित्तोऽनुभूतः। यद्वा ब्रह्मणा ईश्वरेणानुवित्तः तत्सादृश्यप्राप्तिहेतुत्वं निरस्यति—ब्रह्मविदिति। मोक्षः कीदृश इत्याकाङ्क्षायां मतान्तरं निरस्यति—अन्धन्तम इति। असंभूतिं विनाशमुपासते आत्मनाशं मोक्षत्वेन ये जानन्ति, अन्धन्तमः प्रविशन्ति तत्त्वानभिज्ञत्वात्। न च सम्भूतिपदस्य नाशपरत्वे किंमानमिति चेत्, उच्यते; **ईशावास्या**ध्याये हि एतन्मन्त्रानन्तरं मन्त्रद्वयं पठ्यते—

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥
सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥ इति ।

नास्तिका हि-"आत्मनाश एव मोक्षः । न चैवमपुरुषार्थत्वं दुःखहेतुत्वेन शरीरादेरिवात्मनोऽपि हेयत्वात्, शरीरादिव्यतिरेकेणात्मनि दुःखानुदयवदात्मव्यतिरेकेण शरीरादावपि दुःखानुदयात् । तदुक्तम्—

न तैर्विना दुःखहेतुरात्मा चेत्तेऽपि तादृशाः ।
निर्दोषं द्वयमप्येवं वैराग्यञ्चेद् द्वयोस्ततः ॥ इत्याहुः ।

तदयुक्तम्; आत्मनाशस्यापुरुषार्थत्वात् । दुःखं मे मा भूदित्यात्मनि दुःखाभावसम्बन्धार्थमेव प्रवृत्तिदर्शनात् । ये तु संभूत्यामविनाशेन जीवस्य स्वाभाविकब्रह्मभावसम्पत्तौ रतास्ते ततःपूर्वापेक्षया भूयो बहुलमिव तमः प्रविशन्ति । नित्यप्राप्तस्यापि ब्रह्मणोऽविद्यया प्राप्तत्वाभिमानादविद्यानिवृत्तौ प्राप्तत्वोपचारः, कण्ठचामीकरन्यायात् । द्विविधं हीप्सितं पुरुषस्य किञ्चिदप्राप्तं ग्रामादिकं किञ्चित्पुनः प्राप्तमपि विभ्रमवशादप्राप्तमिवावगतम् । यथा स्वग्रीवावनद्धं ग्रैवेयकादि । एवं जिहासितमपि द्विविधं किञ्चदहीनं जिहासति यथा वलयितचरणं फणिनः, किञ्चित्पुनर्हीनमेव जिहासति यथा चरणाभरणे नूपुरे फणिनमारोपितमिति प्रक्रम्य तथेहाप्यविद्यासमारोपितजीवभावे ब्रह्मण्यानन्दे वस्तुतः सखदुःखरहिते समारोपितनिबन्धनस्तद्भावस्तत्त्वमसीतिवाक्यार्थज्ञानात्साक्षात्कारपर्यन्तान्निवर्त्तते । तन्निवृत्तौ च प्राप्तमप्यानन्दरूपमप्राप्तमिव प्राप्तं भवति । त्यक्तमपि शोकदुःखाद्यत्यक्तमिव त्यक्तं भवतीत्यादि वेदान्तिनः । तदप्ययुक्तम्; जीवब्रह्मणोर्भेदस्य प्रामाणिकत्वादविद्यामूलकत्वे च मानाभावात् । तदेव दर्शयति–अन्यदेवाहुरिति मन्त्रः । मोक्षस्वरूपं सम्भवाद् ब्रह्मैक्यरूपादन्यदेवाहुः । असम्भवादात्मनाशादप्यन्यदेवाहुरिति धीराणां वेदतात्पर्याभिज्ञानां वाक्यं शुश्रुम । यद्वा इति पूर्वोक्तमर्थं शुश्रुम शाब्दयामः । आत्मा श्रोतव्य इत्यादिदर्शनेन शृणोतेः शाब्दज्ञाने निरूढलक्षकत्वस्वीकारात् । ये धीरा नोऽस्माकं तन्मोक्षस्वरूपं विचचक्षिरे विशेषेणाख्यातवन्तः । कस्तर्हि तान्येवानुविनश्यति ब्रह्मैव सन् एति ब्रह्मेव सन् ब्रह्माप्येतीत्यादि श्रुतीनामर्थं इत्यप्याह––सम्भूतिं चेति । उक्तरूपं सम्भूतिविनाशोभयं यो वेद जानाति वेदतात्पर्यविषयत्वरूपसाहित्यविशिष्टं वेदेत्यर्थः । स नैयायिकादिः विनाशेन मृत्युदुःखं तीर्त्वा संभूत्यामृतमश्नुते

मोक्षं प्राप्नोति । दुःखनाशाभिप्रायेण तान्येवानुविनश्यतीत्युक्तम्, ब्रह्मसाम्य-सम्पत्त्या च ब्रह्मवेद ब्रह्मैव भवतीत्युक्तं तादृशमेव मोक्षं प्राप्नोतीत्यर्थः। **काण्वाः** प्रकृते—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो यमविद्यायां रताः ॥

इति मन्त्रं पठन्ति । तदुत्तरम**पीशावास्या**ध्याये पठ्यते—

अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥
विद्यां चाविद्याञ्च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ इति ।

तत्र भाष्यानुसारेणैव व्याख्यानम्। नन्वश्वमेधादिना साकारोपासनया च स्वातंत्र्येणैव मोक्षः स्यादत आह—अन्धं तम इति। ये प्रसिद्धाः कर्मिणः अविद्यामश्वमेधादिरूपां मिथ्याज्ञानजन्यामुपासते ते अन्धं तमः संसाररूपं प्रविशन्ति न तु मोक्षं लभन्ते । येऽपि विद्यायां साकारोपासनायां रतास्तेऽपि तदधिकं संसारं लभन्ते । उपासनाकर्मफलकामिनो हि स्ववर्णाश्रमनियतं कर्म त्यजन्ति, अतस्तेषां श्वसूकरादिशरीराण्येव स्युः, कर्मिणां तु तत्कर्मापरित्यागात्प्रथमं पित्र्यदैवगान्धर्वादीनि शरीराणि तदुत्तरकर्मक्षये तु श्वसूकरादिशरीराणीति कर्मापेक्षया सगुणविद्यामात्रविदां तदधिकतमः प्रवेश इतिभावः। एवमुत्तरवाक्यद्वयमपि व्याख्येयम्। तथा **चेशावास्यभाष्यम्**—"विद्याकर्मणोः समुच्चयसिद्ध्यर्थं फले भेदमाह–अन्यदेवेति। अन्यथैकस्यैव फलवत्त्वेऽन्यस्य तदङ्गत्वमेव स्यात् । विद्याविद्ययोरन्यदेव फलमाहुः "कर्मणा पितृलोको विद्यया देवलोकः" इति श्रुतेः। इति शुश्रुम धीराणां धीमतां वचनं ये आचार्या नोऽस्मभ्यं तत्कर्म ज्ञानं च विचचक्षिरे व्याख्यातवन्तः तेषामय्यागमः पारम्पर्यागत इत्यर्थः। अतो ज्ञानं कर्म च सहानुष्ठेयत्वेन यो वेद तस्यैतत् समुच्चयकारिण एकपुरुषार्थसम्बन्धः क्रमेण स्यादित्युच्यते। अविद्यया कर्मणा मृत्युशब्दवाच्यं कर्म ज्ञानं च तीर्त्वा विद्यया देवताज्ञानेन चामृतमश्नुते प्राप्नोति। तद्धचमृतमुच्यते यद्देवतात्मगमनम्" इति। अमृतत्वमत्रापेक्षिकं न तु मुख्यमिति बोध्यम्। **भामत्यां** तु "अप्रमाणात्कथं पारमार्थिकाद्वैतानुभवोत्पत्तिरित्यत आह—

"देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणन्त्वात्मनिश्चयात् ।।

आत्मनिश्चयात् ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः । यदलीकं तन्न प्रमाहेतुरिति व्याप्तौ मानाभावः, पारमार्थिकप्रपञ्चवादिभिरपि हि देहादिष्वात्माभिमानो मिथ्यैवेति वक्तव्यम्, प्रमाणबाधितत्वात् । तस्यैव समस्तप्रमाणकारणत्वं च भाविकलोकयात्रावाहित्वञ्चाभ्युपेयम् । सेयमस्माकमप्यद्वैतसाक्षात्कारे विधा भविष्यति । अन्तःकरणवृत्तिभेदप्रतिफलितचैतन्यरूपस्याद्वैतसाक्षात्कारस्य प्रतिबिम्बितचिदंशे सत्यत्वेऽपि वृत्त्यंशे मिथ्यास्वरूपरूपत्वात् साक्षात्कारस्य च ब्रह्मरूपस्य पारमार्थिकत्वेऽप्यकार्यत्वात्, एकान्ततः पारमार्थिकस्योत्पत्त्यभावादुत्पद्यमानस्य च पारमार्थिकत्वाभावात्कथमप्रमाणादुक्तानुभवात्पारमार्थिकत्वोत्पत्तिरिति नाशङ्कनीयम् ; अविद्यायाः अविद्योत्पादकत्वं तदुच्छेदकत्वं वा नानुपपन्नं कनकवदविद्याया अप्यविद्योच्छेदकत्वोपपत्तेः । तथा च श्रुतिः—विद्याञ्चाविद्याञ्च" इत्याद्युक्तम्, तच्चिन्त्यम् ; देहात्मैक्यज्ञानस्य भ्रमत्वेऽपि त्वदुक्तमिथ्यात्ववैलक्षण्याज्ज्ञानत्वावच्छिन्नकरणतायाश्च भ्रमसाधारणत्वात् । मन्त्रश्च कल्पतरुकृद्भिर्व्याख्यातः "विद्यां वृत्तिमविद्याञ्च कार्यकारणभावेन सहितेन यो वेद सोऽविद्योपादानकत्वेन तन्मय्या वृत्त्या तदुपादानं मृत्युमविद्यां तीर्त्वा स्वरूपभूतविद्योपलक्षितममृतमश्नुते" इति । अथ मन्त्रद्वयस्थाविद्याविद्यापदार्थैक्यमनुपपन्नम्, अविद्यापदस्य च स्वोपादेयवृत्तिलक्षकत्वं विद्ययेत्युपपदविभक्त्याश्रयणञ्चेत्यादिस्वरूपमूह्यमित्यास्तां विस्तरः। तस्मादयमर्थः—ये विद्यामुपासते स्वीकुर्वन्ति तेऽन्धन्तमः संसारं प्रविशन्ति अविद्यापदार्थस्यैकस्य सर्वैर्वादिभिः स्वीकारादाह—तत इति । विद्यायां ज्ञानस्वरूपे आत्मनि रताः ततश्चार्थाद्वेदान्तिनां लाभः । एवञ्च विद्यात्मके ब्रह्मण्यविद्याया कथं सम्भव इत्यपि युक्तिर्दर्शिता । न हि भास्करे तिमिरावकाशः । न च वृत्त्युपहितचिदेवाज्ञानविरोधीति वाच्यम् ; शुद्धचितः स्वप्रकाशत्वानुपपत्तेः "तमसःपरस्तात्" इत्यादिश्रुतिविरोधाच्च वृत्त्युपहितचितो घटावच्छिन्नचैतन्यनिष्ठाज्ञानमात्रविरोधित्वोक्तावपि तावता शुद्धस्याज्ञानविरोधित्वानुपपादनात् ।

न च स्वतस्तृणतूलभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन यथा तद्दाहकत्वमेवं स्वतोऽविद्यातत्कार्यभासकस्यापि चैतन्यस्य वृत्त्यवच्छेदेनाज्ञानविरोधित्वं नानुपपन्नमिति वाच्यम् ; शुद्धचैतन्यस्य विषयभासकताया

एव तैरनङ्गीकारात् । अन्यथा सर्वदैव जगद्भानापत्तेः । सूर्यकिरणसूर्यकान्तसंयोगजन्यवह्नेरेव तृणादिदाहकत्वाच्च । भासकतायाः भास्वरत्वं तेजोरूपनिष्ठो जातिविशेषोऽवच्छेदकः । दाहकतायाश्च स्पर्शनिष्ठमुष्णत्वमितिभेदाच्चेत्यास्तां तावत् । अत एवाह—अन्यदेवाहुरिति । विद्याया ज्ञानादन्यदेवाहुर्न तु ज्ञानस्वरूपम् । अविद्याया अप्यन्यदेवाहुर्नित्यज्ञानाश्रयत्वात् । भ्रमस्य दोषजन्यत्वेनेश्वरज्ञाने नित्यभ्रमत्वाभावादविद्यासम्बन्धभिन्नमाहुरिति फलितार्थः । यद्वा पराभिमताविद्याया अन्यद्विरुद्धमेवाहुः स्वस्यां भावाभावात् ।

**शशधरोपाध्यायास्तु** "अविद्यां कर्म तदुपासते तन्मात्रासक्ता भवन्ति तेन केवलकर्मोपासनेन जन्मविच्छेदः । विद्या तत्त्वज्ञानं तन्मात्रासक्ताः न भूयोऽति नान्धं तमः प्रविशन्ति नित्याकरणेन प्रत्यवायस्यातिविरुद्धत्वात्, विद्यां तत्त्वज्ञानविद्यां कर्म च सह वेद मोक्षजनने परस्परसापेक्षत्वात् । तत्र कर्मणस्तत्त्वज्ञानद्वारा ज्ञानस्य च साक्षान्मोक्षहेतुत्वम् । साहित्यस्य तावतैव सिद्धेः । न तु तुल्यकक्षतया द्वयोर्व्रीहियववत्कारणत्वम्" इत्याहुः ।

इत्यलं बहुना । सकामकर्मानुष्ठायिनां निन्दामाह—असुर्या नाम इति । आत्मतत्त्वानभिज्ञत्वेनाविदुषामसुरपदेनोपादानम् । आनन्दा इति । शाखान्तरपाठे अनानन्दा इत्यर्थः, तदानन्दस्य दुःखमिश्रितत्वेनानुपादेयत्वात् । अत एवान्धेनादर्शनात्मकेनाज्ञानेन तमसा वृता आच्छादिता तान् स्थावरान्तान्प्रेत्य, परलोकार्थकमव्ययं, त्यक्त्वा देहं वा अभिगच्छन्ति । यथाकर्म यथाश्रुतं ये केचिदात्महन आत्मतत्त्वानभिज्ञा जना आत्मनो दुःखमध्ये निक्षेपात्तद्वधोपचारः । प्रकृते त्वविद्वांसोऽबुधा जना इति पाठः । तत्राबुधा इति पूर्ववद्व्याख्या । ब्रह्मसादृश्यमेव मोक्ष इति दृढयति—तदेवेति । तद् ब्रह्मैव तत्सदृशा भवन्ति वयन्तद्ब्रह्म तद्भिन्ना भवामः । ब्रह्मसादृश्यप्राप्तिरेव ब्रह्मभावप्राप्तिरित्युच्यते इत्यर्थः । उत्कारो निपातः । न चेदेवं विजानीयास्तर्हि अवेदी अज्ञानी वेदतात्पर्यानभिज्ञश्च मुख्यमेव जीवब्रह्मणोरभेदं गत्वा नो भ्रान्त इत्यर्थः । तथा च तत्त्वज्ञानाभावान्न मोक्ष इत्याह–महती विनष्टिरिति । परमपुरुषार्थापवर्गासि[द्धि] रूपा परमा क्षतिरिति भावः । तदेव विनिगमयति—ये तद्विदुरित्यादि । स्पष्टम् । तथा च ब्रह्मज्ञानेनामृतभावप्राप्तिर्जन्ममरणोच्छेदान्महतीविनष्टिरिति व्याचष्टे । अथेतरैरिहैव सन्तोऽप्यविघ्नद्वयमिति शाखान्तरे पाठः । अस्मिन्नेव शरीरेऽस्यासक्त्या न तज्ज्ञातुं समर्था भविष्याम इत्यादिरर्थः । इदमपि भेददृढीकरणार्थत्वेन समञ्जसम् । अभेदमतमेव दूषयति—आत्मानं चेदिति । अयमस्मीत्यभेदज्ञानानुकरणम्, तर्हि किमिच्छन् कस्य

कामाय शरीरमनु शरीरसम्बन्धः संचरेत्संसारे संचरणं कुर्यात् । संज्वरीदिति काण्वपाठे शरीरसंबन्धेन दुःखी कथं स्यात् । अयमर्थः—उक्तपक्षे मुक्तसंसारिणोरविशेषापत्तिः संसारदशायामपि स्वप्रकाशसुखात्मकस[त्ता]त्वात् । न चावच्छिन्नानन्दरूपेण तन्न भासते, तदंशे मूलाविद्यावरणसत्त्वादिति वाच्यम् ; चिदानन्दयोरैक्येन ज्ञानांशस्याप्यावरणापत्तेः ।

यत्त्वानन्दादीनामपि ग्रहोऽस्त्येव परन्त्वविवेकेनागृहीतत्वाभिमानोऽभिज्ञायां गृहीतस्यापि देवदत्तैक्यादेः तत्तेदंत्वाख्योपाधिद्वारकसामानाधिकरण्याननुसन्धानादगृहीतत्ववदिति, तच्चिन्त्यम् ; अभिज्ञायामैक्यग्रहे मानाभावात्, ऐक्यस्य वस्तुतस्तदतिरिक्तत्वायोगमाच्च । ज्ञानानन्दयोश्च भेदाभावात् । तदेतदुक्तं यद्यसौ न प्रकाशेत किन्त्वहंन्यप्रकाशन इत्यादि । अपि चैवं चिदात्मकानामानन्दादीनां विप्रतिभासेन प्रतिभासस्वीकारे बुद्ध्यादिभेदस्यापि चिदात्मनि विद्यमानस्य ग्रहापत्त्या विशेषदर्शनसत्त्वाद्विषयविषयिणोस्तादात्म्याध्यासो न स्यात् । न च बुद्ध्यादिभेदस्य निर्वाच्यप्रतियोगिकत्वेन तात्त्विकत्त्वाभावान्न चिदात्मस्वरूपत्वम्, आनन्दादीनां तु चित्स्वरूपत्वेन तात्त्विकत्वात्तद्ग्रहेणैव ग्रह इति वाच्यम् ; प्रातिभासिक शुक्तिरूप्यप्रतियोगिताभावस्यापि त्वया व्यावहारिकत्वाभ्युपगमेन प्रतियोग्यभावयोः समानसत्ताकत्वनियमाभावात्, तात्त्विकस्यैव स्वरूपस्य ग्रहोनत्वतात्त्विकस्येत्यस्य त्वन्मते क्वचिदप्यसिद्धत्वाच्च ।

किञ्च ब्रह्मणो नित्यसिद्धत्वान्मोक्षस्यापुरुषार्थत्वापत्तिः, पुरुषप्रयत्नसाध्यस्यैतत्त्वात् । अन्यथा घटावच्छिन्नामृतहरणेऽपि प्रवृत्त्यापत्तेरिति प्राञ्चः । अविद्यादिकं चाग्रे निरसिष्यामः । ब्रह्मण उपादानत्वं निरस्यति—यस्येति । तस्यात्मनो लोकः उत पक्षान्तरे स आत्मा लोक इव आत्मा निमित्तमात्रं लोकस्योपादानं वेत्यस्मिन् सन्देहे गहने तर्कप्राचुर्यदुर्गमे संशये प्रविष्टो विशेष्यत्वमापन्नः स ब्रह्मरूपः विश्वकृत्तस्यैव व्याख्यानम् । स विश्वस्य कर्ता निमित्तं परैर्निमित्तत्वस्यापि स्वीकारात् । सिद्धसाधनवारणाय हिशब्दोऽवधारणे उपादानत्वव्यावृत्त्यर्थः । एतादृश आत्मा यस्यानुचित्तो येन साक्षात्कृतः तैरेवमेवोक्तत्वात्, स प्रतिबुद्धस्तत्त्वज्ञानवान्न तु ब्रह्मणः प्रपञ्चतादात्म्यप्रपञ्चवादी । अत्र प्रतिबुद्ध इत्यत्र तच्छब्दानुषङ्गश्चतुर्थचरणस्य द्वितीयचरणोक्तसन्देहस्वरूपसमर्पकत्वेनान्वयश्च व्यवधानेऽपि न दोषः, अर्थगत्या तथैवान्वयोपपत्तेः । परैरपि हि राजादिभीत्या कर्म कर्तव्यमित्याशङ्कावारकत्वेनोक्तमन्त्रमवतार्य सन्देहे सम्यगुपचीयमाने गहनेऽचिन्त्यशक्तौ प्रविष्टो घटा-

काशवदन्तरवस्थितः प्रतिबुद्धः स्वयंप्रकाशचित्स्वभाव आत्मा निरतिशयानन्दो यस्यानुवित्तो येन साक्षात्कृतः सोऽयमन्तःशरीरे प्रविष्टोऽस्य ज्ञातुरात्मा विश्वकृत्। तस्य व्याख्यानम्—स हि सर्वस्य कर्ता हि यस्मात्कार[ण]स्य विषयो यः स एव भूतभौतिकप्रपञ्चस्योत्पादकस्तस्मादयमर्थः सति भेदे ईश्वराद्भीतिर्नासति भेदे ईश्वराद्विभेतीत्यनेन कर्मानधिकारोऽप्युक्तः। तस्य लोक इति विश्वकर्तृ र्लक्षणं तेन भेदबुद्धिः। प्रसक्ततां वारयति—स उ लोक एव विश्वमपि स एव न तु तस्मादन्यदिति व्याख्यातम्। तत्रापि येन साक्षात्कृत इत्युद्देशस्य प्रतिनिर्देशो न कश्चिदित्युक्तः।

न च स विश्वकृदित्येव विधेयमित्यवाच्यम्; ब्रह्मसाक्षात्कारविषयस्यैव प्रपञ्चकर्तृत्वमिति व्याख्यानविरोधात्, विषयस्य पूर्वमनुद्दिष्टत्वात्, स योऽन्तः शरीरे प्रविष्ट इत्यत्र यच्छब्दाध्याहारेण तस्याप्युद्देशवाक्यत्वसम्पादनाच्च। आत्मानं चेद्विजानीयादित्यत्रोक्तस्यार्थस्य विपर्ययमाह–यदेवमिति। अनुपश्यति साक्षात्करोति देवं नित्यज्ञानसम्पन्नं एतमित्यनेन विश्वकर्त्तुरीश्वरस्य परामर्षात्। अञ्जसा तत्त्वतः भूतभविष्यग्रहणं वर्त्तमानस्याप्युपलक्षणं तन्निरूप्यत्वात्। ईशानं स्वातन्त्र्येण प्रयोक्तारं तदा न विचिकित्सति दुःखितो भवतीत्यर्थः, न जुगुप्सतीति शाखान्तरे। यस्मिन्निति पञ्चजना इति समस्तं पूर्वपञ्च····· च समस्तन्नः संख्याया इति नान्तसंख्याप्रयुक्ताद्युदात्तपाठात् पञ्चजना इत्यत्र समासस्वरस्यैव पाठाच्चेति वेदान्तिनः। पञ्चजनाश्च प्राणचक्षुःश्रोत्रान्नमनोरूपा वक्ष्यमाणवाक्यशेषात्। **काण्व**शाखायां तु प्राणस्य प्राणमिति मन्त्रेऽन्नस्यान्नमित्यंशो न पठ्यते। तत्र तदेव ज्योतिषां ज्योतिरिति मन्त्रे **निरुक्तकारः** "गन्धर्वाः पितरो देवाः असुरा रक्षांसीत्येके। चत्वारो वर्णा निषादः पञ्चम इत्यौ**पमन्यवः**" इत्याह। प्रतिष्ठितं यथासम्भवं बोध्यं तमेवात्मानं परमात्मानं ब्रह्मरूपममृतं विद्वानमृत इति मन्ये निश्चिनोमि। तज्ज्ञानादमृतत्वं भवति न तु तत्तादात्म्यं भेदस्यैव प्रामाणिकत्वादिति भावः। ईश्वरसामर्थ्यं न कालाधीनमित्याह—यस्मादर्वागिति। यज्जन्यकालोपाधिरूपः सम्वत्सरो मनुष्यपित्र्यादिभेदभिन्नोऽहोभिर्दिवसरूपकालोपाधिभिः परिच्छिन्नः परिवर्तते चक्रवदविच्छेदेन भ्रमणं करोति। अत एवाष्टावक्रेण जनकं प्रत्युक्त।

चतुर्विंशतिपर्व त्वां द्विनेमि द्वादशप्रधि।
तत्त्रिषष्ठिशतारं वै चक्रं पातु सदागति॥ इति।

तदात्मरूपं ज्योतिषां प्रकाशकानां सूर्यादीनां ज्योतिः प्रकाशसामर्थ्यनिर्वाहयायुस्तेषां स्थितिकालपरिच्छेदकं चार्थान्नाशकमपि। कालविशेषस्यापि

तद्धेतुत्वादाह—अमृतमिति। उपासते साक्षात्कुरुते स्वीकुर्वन्ति देवपदं मुक्तिफलकब्रह्मविद्यायां तेषामप्यधिकारलाभार्थम्। सर्वनियामकत्वमाह—प्राणस्य प्राणमिति। शरीरविधारकस्य प्राणस्यापि विधारकम्। एतेन—

न प्राणेन नापानेन जन्तुर्जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ॥

इति श्रुत्यन्तरमपि व्याख्यातम्। एवञ्चक्षुषश्चक्षुरित्यादावपि व्याख्येयम्। श्रोत्रस्याजन्यत्वेऽपि तदवच्छेदककर्णशष्कुलीजनकत्वादवच्छेदकत्वस्य चादृष्टिविशेषघटितसम्बन्धरूपत्वादन्नस्य भोग्यवस्तुजातस्यान्नं भोग्यत्वनिर्वाहकं भोग्यभोक्तृनियामकत्वाद्, ये विदुर्जानन्ति ते ब्रह्म निश्चक्युर्निश्चितवन्तः। पुराणं पुरापि नवं ध्वंसप्रागभावरहितम्। तस्य कालादिसाधारण्यादाह—अग्र्यमिति। तत्साक्षात्कारोपायमाह–मनसैवाप्तव्यम्। एवकारेण चक्षुरादिव्यवच्छेदः। नेह नानेत्यादि व्याख्येयम्। ग्राह्यग्राहकमेव द्रढयति–मनसैवेति। एकधैवेति शाखान्तरपाठे त्वेकेनैव प्रकारेणात्मरूपेणेत्यर्थः। यद्वा एकधा एकमेवानुद्रष्टव्यमिति निर्विकल्पाभिप्रायः। अत एव प्रमेयं प्रमेय तद्वति तत्प्रकारकत्वरूपेणेत्यर्थः। यद्वा एकधैकमेवानुद्रष्टव्यमिति निर्विकल्पाभिप्रायमत एवाप्रमेयमप्रमेयं तद्वति तत्प्रकारकत्वरूपप्रमित्यविषयत्वादस्यैव मुख्यप्रमापदार्थत्वात्। तज्ज्ञानफलस्य निवृत्त्यभावमाह—ध्रुवमिति। नेह नानेत्यस्य मिथ्यात्वेन प्रामाण्यं तदर्थकत्वे मानाभावात्।

यत्तु नानापदोपात्तं वृत्तिविषयत्वं तादात्म्येनैव निषेधे प्रतियोगितावच्छेदकं न तु पर्याप्त्या, एकाश्रयेण नानास्तीति प्रयोगसत्त्वेऽपि वायौ नानारूपाणि न सन्तीत्यादौ स्वरूपेणापि तद्दर्शनात्। अन्यथा किञ्चनेत्यस्य वैयर्थ्यात् केनापि सम्बन्धेन नानात्ववत्तास्तीत्यस्य ततो लाभात्। अन्यथा युगपत्सर्वदृश्याभावस्य प्रत्यक्षसिद्धतया तत्र विवादाभावेन तद्बोधकवैयर्थ्यापत्तेः। किञ्चनेति मूढधीविषयार्थकं द्वयोर्मध्ये एकमभावप्रतियोगितायामवच्छेदकमेकं तु प्रतियोग्यंशे विशेषणमात्रम्। न चाभावबुद्धौ प्रतियोगितावच्छेदकभिन्नस्य प्रतियोग्यंशे प्रकारकत्वेन न भानमिति वाच्यम्; प्रमेयघटो नास्तीत्यादौ प्रमेयघटत्वस्य गौरवेण प्रतियोगितानवच्छेदकतया प्रमेयत्वं प्रतियोगिनि प्रकार एव, प्रतियोगितावच्छेदकं तु घटत्वमेवेत्यङ्गीकारात्। तदुपादानत्वं त्वात्मनि प्रतीयमानस्य तद्भिन्नस्यात्मनि तादात्म्यासम्भवात्। स्वप्नवद्विषयिणि विषयस्य कल्पितत्वाच्च, सुतरामभावमिति सूचनार्थमिति, तच्चिन्त्यम्; नानापदस्य वृत्तिविषयार्थकत्वे किञ्चनपदस्य मूढधीविषयार्थकत्वे च प्रमाणा-

भावात्। प्रपञ्चे मूढधीविषयत्वस्य मिथ्यात्वसिद्ध्युत्तरकालीनत्वाच्च। वायौ रूपाणि न सन्तीत्यादौ तु रूपसामान्याभावस्य प्रमाणान्तरसिद्धतया स्वरूपेण प्रतियोगितावच्छेदकत्वादत्र च तदभावेन वैषम्यात् स्वरूपेण वृत्तिविषयत्वावच्छिन्नप्रतियोगिताकतदभावस्य भवदभिमतस्य व्यावर्तनार्थमेव पर्याप्त्या तदवच्छिन्नप्रतियोगिताकाभावो बोध्यत इति वाक्यवैयर्थ्यमित्यस्यापि वक्तुं शक्यत्वाच्च। यदप्युक्तं मिथ्यात्वानुमाने च वक्ष्यमाणं यत्पक्षतावच्छेदकं तदेवात्र नानापदोपात्तं सन्निषेध्यतावच्छेदकमित्यादि, तदपि चिन्त्यम्; नानापदस्य तदर्थकत्वे उक्तिसम्भवाभावात्। सामान्यानुमाननिरासप्रस्तावे विस्तरः। यदप्युक्तं कण्ठवल्लीवाक्ये—

यथोदकं दुर्गवृष्टं पर्वतेषु विधावति।
एवं धर्मान्पृथक् पश्यंस्तामेवानुविधावति॥ इति।

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति, इति पूर्वं ब्रह्म दृश्यमात्रस्य दृश्यादृश्यमात्रात्मिरूपः संसार एव भवति, दृश्यमात्रं विदित्वा जलक्षिप्तजलदृष्टान्तेन ब्रह्मात्मैक्यज्ञानेनात्मनो ब्रह्मत्वोक्तेः। तत्र धर्मपदं दृश्यमात्रार्थकं "पराचः कामाननुयन्ति ध्रुवमध्रुवेषु सुप्तान्तञ्च जागरितान्तञ्च भूतेभिर्व्यजायत" इति पूर्वदृश्यमात्रस्य प्रकृतत्वाद् "ईशानो भूतभव्यस्य स एवाद्य स उ" इति परत्रापि दृश्यमात्रस्योक्तत्वात्। तस्माद् "यदेवेह तदेवामुत्र च" इति वाक्ये इह जीवोपाधावमुत्रेश्वरोपाधाविति ब्रह्मण्येव सर्वप्रपञ्चप्रसक्तिमुक्त्वान्यत्र प्रपञ्चस्य सत्त्वशङ्का निरस्ता। नेहेत्यत्र तु पूर्वं पश्चाच्च ब्रह्मसन्निकर्षादिह शब्देन ब्रह्म परामृश्य किञ्चनेत्यनेनोक्तस्य दृश्यमात्रस्य निषेधः। नानेति नञ्शब्दः स्वार्थिकनञ्तात्पर्यान्ततया भेदरूपपदार्थैक्यार्थकः। भेदे च निषेधाधिकरणत्वेनोपस्थितस्य ब्रह्मण एव प्रतियोगित्वं ब्रह्मभिन्नं किमपि ब्रह्म नास्तीति। न तु निषेध्यत्वेनोपस्थितस्य प्रपञ्चस्य दृश्यभिन्नं दृश्यं ब्रह्मणि नास्तीत्यर्थे दृश्यभिन्नं दृश्यमित्यंशस्य बाधितत्वात्। एवं **बृहदारण्यकस्थे**ऽपि नेह नानेतिवाक्ये बोध्यमिति।

अत्रेदं वक्तव्यम्–नानाशब्दस्य भेदार्थकत्वे मानाभावः। न च स्वार्थिकप्रत्ययान्तत्वमेव मानम्, तत्र हि विनञ्भ्यां नानाञौ न सहेत्यस्य प्रत्ययार्थत्वपक्षे नञश्च प्रकृतिभूतस्याभावार्थकत्वे "द्वौ नञौ प्रकृतमर्थं गमयतः" इति न्यायेन साहित्यमेव नानापदार्थः स्यादित्याशङ्क्य "न सहेति नञ् एवार्थः लक्षणाश्रयणात्। नाञ्प्रत्ययस्तु साहित्याभावरूप एव लक्ष्ये नञ्पदार्थे" इति**महाभाष्यका-**

रैरुक्तम्। तथा च तत्र सिद्धान्तग्रन्थे पठ्यते "नैष दोषः नायं प्रत्ययार्थः। किन्तर्हि प्रकृत्यर्थविशेषणमेतत्, विनञ्—इत्येताभ्यामसहवाचिभ्यां नानाञौ भवतः" इति। व्याख्यातञ्च **कैयटेन** "लोकप्रसिद्धार्थानां शब्दानामिह साधुत्वान्वाख्यानाल्लोके च नानाशब्दस्य पृथग्भावाविधायित्वान्न सहेति प्रकृत्यर्थनिर्देशः" इति। अत एव नानाशब्दो विनाशब्दपर्यायः "नानेत्यनेकविनार्थयोः" इत्यव्ययार्थेषु दर्शनात्, "पृथग्विनान्तरेणर्ते हिरुक् नाना च वर्जने" **इत्यमरोक्तेश्च**। एतेन भेदरूपपार्थकत्वादित्यपास्तम्। भेदनियतसंयोगादिरूपसाहित्याभावरूपपार्थक्यस्यैव तदर्थतया **कैयटेनापि** विवक्षितत्वात्। अन्यथा नञ्पदस्य भेदार्थकत्वात्तदर्थ एव नाञ्प्रत्ययस्योपपत्त्या न सहेत्यंशवैयर्थ्यम्। "अनादिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" इति न्यायात्, साहित्याभावलक्षणापरभाष्यविरोधाच्च। एतेन नापदस्य भिन्नसम्बन्ध एवार्थस्तत्रापि भेदांशमात्र शक्यम्। अधिकरणसम्बन्धस्त्वधिकरणनिष्ठसम्बन्धरूपो विशेषणतात्वादिरूपेण वाक्यार्थः। अन्यथा नञ्पदस्य सम्बन्धपर्यन्तशक्त्यभावेन स्वार्थिकत्वेन तत्समानार्थकनाञ्प्रत्ययान्तनानाशब्दस्यापि तदबोधकत्वापत्तेः। "नानाविष्णुर्मोक्षदो नान्यमेव" इत्यादावपि विष्णुभिन्नो मोक्षदो नेत्यर्थः। अमरोक्तिमात्रेण नानाशब्दस्य विनाशब्दनानार्थकत्वे पृथक्शब्दस्यापि तदापत्तिः। विनाशब्दार्थे पृथक्शब्दप्रयोगाभावस्तु नानाशब्देऽपि तुल्यः, तस्य तथा प्रयोगसत्त्वेऽपि विनाशब्दस्येव भिन्नतादार्थकत्वस्यापि सम्भवात्, भिन्नात्मकं किमपि नास्तीत्यर्थे बाधकाभावादित्यपास्तम्। तथाहि नानापदस्य नञ्पदसमानार्थकत्वे घटो नास्तीति घटो नानास्तीत्यपि प्रयोगः स्यात्। अभावार्थेषु च तन्निर्देशेऽनुशासनेषु स्यात्। अत एव—

नञभावे निषेधे च रूपार्थे च व्यतिक्रमे।
ईषदर्थे च सादृश्ये तद्विरुद्धस्तदन्ययोः॥
नाना विनार्थेऽपि भवेन्नानानैकोभयार्थयोः॥

इति **विश्वकोषे** नानानञ्पदयोः पृथगेवार्थोक्तिः। एवं भेदार्थकनञ्समानार्थकत्वेऽपि घटः पटो नेतिवद् घटः पटो नानेत्यपि स्यात्। स्वार्थिकत्वं तु साहित्याभावेन नञा लक्षणां कृत्वेवेत्युक्तमेव भेदार्थकत्वनञ्समासार्थकतायां तु न किञ्चित्प्रमाणं पश्यामः। "तद्धितश्चासर्वविभक्तिः" इतिसूत्रे "तद्धितश्चापि कश्चिद्विभक्त्यर्थप्रधानः, तत्र यत्रेति कश्चित्क्रियाप्रधानः नानाविना" इति **महाभाष्यदर्शनाच्च** नञ्पदस्य क्रियाप्राधान्याभावान्नानाशब्दस्यापि तदनुपपत्तेः। अत एव क्रियावाचित्वे सति गणपठितत्वं धातुत्वमिति

लक्षणे क्रियावाचिषु हिरुक् नाना इत्यादिष्वतिव्याप्तिवारणाय विशेष्यदलमिति शाब्दिकसम्प्रदायः। अत एवोक्तामरोक्तिमात्रेणेत्यपास्तम्। एकस्मिन्नेवार्थे द्वयोर्व्युत्पादितत्वाच्च। एवं पृथक्शब्दस्यापि विनाशब्दार्थे प्रयोगापत्तिरितीष्टापादनमेव। नानाशब्दस्य तु विनाशब्दार्थे प्रयोगानां "नानारीतिफला लोकयात्रा" इति क्षीरस्वाम्यादिभिरेवोपन्यस्तः। न ह्यत्र नारीभिन्ना लोकयात्रेत्यर्थो वक्तुं शक्यः नारीसाहित्यसाधारण्यात्। न च नार्यत्यन्ताभाववदभिन्नेत्यर्थः तात्पर्यं तस्य नञर्थत्वाभावात्तदुक्तस्वार्थिकत्वव्याघाताल्लक्षणायां च मानाभावः। नानाविष्णुमित्यादौ च लक्षणाया एवाश्रयणीयत्वाद्विनिगमकस्य च बहुशो दर्शितत्वात्। अत एव—

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥

इत्यादौ साहित्यभाव एव विनार्थो न तु भेदः। वस्तुतस्तु नानाविष्णुमित्यस्य नानापदस्य, न भेदोऽर्थः, अन्यदेवेत्यन्यपदवैयर्थ्यापत्तेः। विष्णुभिन्नोऽन्यदेवो मोक्षदो नेत्यत्रान्यपदार्थैकदेशान्योन्याभावेऽपि विष्णोरेव प्रतियोगित्वेनान्वयस्य वाच्यत्वात्। अन्यथा विष्णुभिन्नस्यापि मोक्षदातृत्वबोधप्रसङ्गाद्विष्णोरेव मोक्षदातृत्वाव्यवच्छेदबोधेऽप्रसङ्गाच्च। भूतले नानाघट इत्यादौ तु बहुत्वमेव प्रतीयते तच्च स्वाश्रयभेदनान्तरीयकमित्यन्यदेतत्। भेदोऽपि नानापदार्थे विशेष्यतावच्छेदकधर्मावच्छिन्नव्यक्तिनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगित्वानुयोगित्व [योः] एक [एव] भासते, न तु भूतलत्वावच्छिन्नप्रतियोगिताकघटत्वावच्छिन्नानुयोगिताकोऽपि। एवञ्चात्राप्यधिकरणत्वेनोपस्थितस्यात्मनो भेदप्रतियोगित्वं दुर्लभम्। किन्तु किञ्चनपदार्थत्वेनाभावः।

यत्तु "नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति वाक्येऽपि नात्र काचन भिदास्ति। अत्र भिदामिव मन्यमानः शतधा सहस्रधाभिन्नो मृत्योर्मृत्युमाप्नोतीति श्रुत्यन्तरैकवाक्यतया नानाशब्दो भेदपर इति कल्प्यते इति, तन्न; भेदनिषेधेऽपि भिन्ननिषेधस्यासिद्धेः। प्रत्युत नानापदेन नानात्वमुपादायानेकत्वरूपं तन्निषिध्यत इति व्याख्यानस्यैव सावकाशत्वापत्तेः। अनेकवाचकनानाशब्दस्य भावप्रधानत्वादनेकत्वपरत्वे लक्षणा स्यादिति भवदुक्तदोषस्य श्रुत्यन्तरसंवादिलक्षणयादोषत्वेनाप्रयोजकत्वात्। भवन्मतेऽपि नानाशब्दस्य लक्षणयैवाभिन्नपरतया वाच्यत्वात्। प्रत्युत भवन्मते धर्मिलक्षणायां प्रमाणस्यैव परेण पर्यनुयोज्यत्वात्। न च भेदपरत्वेऽपि नानाशब्दस्य तदर्थस्य विशेषणताविशेषसम्बन्धेन किञ्चनपदार्था-

न्वयेन वाक्यार्थतयैवाश्रयलाभसम्भवान्न लक्षणेति वाच्यम्; श्रुत्यन्तरीयभिदापदे भिन्नलक्षणाया आवश्यकत्वात्। न च नानापदे भेद एव निषिध्यत इति वाच्यम्; ननास्तीत्यतो भेदाभावप्रतीतिविरहेण निपातार्थस्य भेदस्य प्रतियोगितासम्बन्धेनाभवान्वये निराकाङ्क्षत्वात्। निपातार्थभेदप्रकारकशाब्दत्वावच्छिन्ने तदाश्रयोपस्थापकपदजन्योपस्थितेरेव विशेष्यतया हेतुत्वस्य कल्प्यत्वात्। एवं किञ्चनेत्यस्यासंकोचात्सर्वदृश्यपरत्वमित्यप्ययुक्तम्, "असाकल्ये तु चिद्धनेत्यपवर्गे" अमरकोशादिदर्शनात्। चनशब्दस्य समभिव्याहृतकिंशब्दस्य समभिव्याहृतधर्मावच्छिन्नव्यक्तिसङ्कोचतात्पर्यग्राहकस्य व्युत्पत्तिसिद्धत्वात्।

किञ्च घटमानयेत्युक्ते घटपदस्यानेकघटतात्पर्यावधारणाच्चिदादिपदसमभिव्याहृतकिंशब्दस्य विशिष्यपदोपात्तैकधर्मावच्छिन्नव्यक्तिबोधकत्वाच्च कश्चिद्घटः कश्चित्पट इत्यादिप्रयोगदर्शनान्निर्द्धारणार्थकत्वपर्यवसानात् तादृशस्य दृश्यत्वादिबोधकदृश्यादिपदस्य चात्रविरहात्, कश्चिदपि घटो नास्तीत्यादावन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्त्यैव घटत्वावच्छिन्नप्रतियोगिताकाभावबोधः। नचैवं कश्चनेति पदवैयर्थ्यं घटविशेषप्रतियोगिकत्वाभिप्रायविघटनार्थं तदुपादानात्। अन्यथा तात्पर्यसन्देहेन घटत्वावच्छिन्नाभावबुद्धावप्रामाण्यसंशयापत्तेः। तदुक्तम् "घटो नास्तीत्यादेः सामान्याभाव एवोत्सर्गतस्तात्पर्यम्" इति। नहि "कश्चिद्यक्षो रामगिर्य्याश्रमेषु वसतिञ्चक्रे" इत्यादौ यक्षस्य लाभः। अतः समभिव्याहृतधर्मिविशेषबोधकपदान्तरसहकारेणैव किञ्चनादिशब्दा बोधकाः, न तु स्वयं पूर्वपरामृष्टस्यैव बुद्धिस्थस्य वा बोधकाः। दृश्यादिपदञ्च पूर्वमत्र नास्त्येव येनानुषङ्गादिनापि कथञ्चिदुक्तिसम्भवः स्यात्।

ननु विधिस्थले कश्चन पदस्योक्तरीत्या सङ्कोचकत्वे निषेधस्थले निषेधप्रतियोगिवृत्तित्वेन भासमानधर्मस्य प्रतियोगितावच्छेदकत्वतात्पर्यग्राहकतया किञ्चन नानानास्तीति दृश्यमात्रस्य निषेधः स्यादेवेति चेत्, मैवम्; किञ्चनपदस्य नानापदार्थविशेषणसमर्पकत्वे नानापदार्थभेदस्य निषेधान्वयानुपपत्तेरुक्तत्वात्, भेदाश्रयविशेषसमर्पकत्वे तु दृश्यमात्रस्य पूर्वतत्तदसाधारणरूपेण प्रक्रान्तत्वाभावात्, प्रतियोगितावच्छेदकस्य सर्वसाधारणस्य दृश्यत्वादेरपि तदभावाच्चेत्युक्तत्वात्। पूर्वोक्तानामनेकेषामेकधर्मावच्छेदेन परामर्शस्तु न किञ्चनशब्दसाध्यः प्रत्युत सङ्कोचस्यैव तत्साध्यत्वात् पूर्वोक्तानां मध्ये किञ्चन तत्र नास्तीत्युक्तेऽपि निर्द्धारणस्य स्वेच्छामात्रकल्पितत्वादप्रामा-

व्यम्। न च तावतापीष्टसिद्धिप्रत्याशा दृश्यमात्रस्य प्रातिस्विकरूपेण पूर्वमनुक्तत्वात्। एवं धर्मान्पृथक् पश्यन्नित्यत्र धर्मपदं दृश्यमात्रपद [र]-मित्यत्र तु प्रमाणाभाव एव, दृश्यमात्रस्य च धर्मताया अद्याप्यसिद्धत्वात्। एतेन धर्मदृश्यमात्रस्य दृष्ट्या संसार एव भवतीत्यादिकमप्यपास्तम्। विभुत्वादि-धर्मपरस्यैव तावदुपगन्तुं शक्यत्वात्। ननु मन्मतेऽपि न वस्तुतो ब्रह्मधर्मा इतिचेत्, मा भूवन्; व्यावहारिकास्तु सन्ति दृश्यमात्रस्यापि त्वन्मते वास्तवत्वा भावाच्च। मन्मते तु दृश्यमात्रस्य ब्रह्मधर्मत्वं कथमभ्युपगतं नास्ति तदेतावति विनिगमके विद्यमाने किं पुनः ब्रह्मधर्मत्वेनोभयसिद्धा एव धर्मा गृह्यन्ताम्। उतैकमात्रसम्प्रतिपन्नदृश्यमात्रमिति वीक्षायां द्वितीयस्य प्रेक्षावद्भिरवश्य-मुपेक्षणीयत्वात्, तत्किमिदानीमेवासिद्धस्वसिद्धान्तसमुद्भावनेनेति, तिष्ठतु तावत्। अत एव धर्मान्पृथक् पश्यन्नित्यस्यात्मनः पृथग्भूतान्धर्मानप्या-त्मज्ञाने विषयीकुर्वन् सप्रकारकात्मज्ञानवानिति यावत्, निःप्रकारकात्मकज्ञान-स्यैव मोक्षहेतुत्वात्। एवञ्च धर्माणां धर्मिसमानसत्ताकभेदवत्त्वं मोक्षजनक-ज्ञाने प्रकारत्वेनानवभासश्चेति स्पष्टम्। धर्मपदोक्तपरामर्शकत्वे किञ्चने-त्यत्र केचनेत्यस्यापत्तेश्च चनशब्दपूर्ववर्त्तिकिंशब्दस्य विशेष्यसमानलिङ्गत्व-नियमात्। अत एव—

काचित्कीर्णा रजोभिर्दिवमनुविदधे मन्दवक्त्रेन्दुलक्ष्मीं ।
रात्रावत्र विवाहमण्डपतले कश्चित्प्रसुप्तो युवा ॥

किञ्चिद्वेदमयं पात्रमित्यादयः प्रयोगाः। न च नानापदार्थ एवात्र विशे-ष्यत्वेनान्वेत्विति वाच्यम्; स ह्यात्मभिन्नरूपो वा, अनेकरूपो वा, विनार्थरूपो वा ? नाद्यः, दूषितत्वात्। न द्वितीयः, तस्यापि विशेष्यविशेषणसाकाङ्क्षत्वात् त्वदिष्टसिद्धेरुक्तत्वाच्च। नान्त्यः, द्वितीयातृतीयापञ्चम्यतिरिक्तविभक्त्य-न्तस्य तत्रानन्वयनियमादनुपयोगाच्च। यदप्युक्तम्—

ननु कथमुक्तश्रुत्या मिथ्यात्वेन प्रपञ्चतदभावयोर्बोधः ब्रह्मणि प्रपञ्चस्या-भावबोधेऽप्यबोधेऽप्यभावे प्रपञ्चसामानाधिकरण्यस्य प्रपञ्चान्यूनसत्ताकत्वस्य चाबोधनादिति चेन्न; इहेत्यस्य प्रपञ्चविशिष्टब्रह्मणि इत्यर्थकत्वात्किञ्चनेत्यस्य चातोऽन्यपदार्थकत्वमिति श्रुत्यादिमानेन विनाशितयाप्रमितिदृश्यमात्रमि-त्यर्थकत्वाद्विनाशिदृश्यविशिष्टब्रह्मणि दृश्यं नास्तीति बोधकस्योक्तश्रुत्या-बोधनाद्विनाश्यदृश्यवति विनाशिदृश्याभावस्योक्तश्रुतिप्रमितत्वेनैवाप्राति-भासिकत्वानुमितिसम्भवात्। विनाशिदृश्यत्वावच्छेदेनाप्रातिभासिक-

स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्यानुमितिद्वारोक्तश्रुतितात्पर्यविषयत्वसंभवात्। न च तथाप्युक्ताभावे प्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्वस्यावच्छिन्नवृत्तिकान्यत्वस्य चासिद्धचा मिथ्यात्वबोधनमसिद्धमिति वाच्यम्; निषेधस्य प्रसक्तिपूर्वकत्वेन निषेधवाक्यस्वाभाव्येन प्रतियोगिप्रसक्त्यवच्छेदकदेशाद्यवच्छेदेनैवोक्तवाक्येनोक्ताभावस्य बोधनीयत्वात्। तदवच्छेदकविशिष्टदृश्यवद्ब्रह्मण एवाधिकरणत्वेन इहेति सर्वनामपदेनोक्तिसम्भवेन तदभावानां स्वस्वप्रतियोग्यवच्छेदकावच्छिन्नतया इहेति सप्तम्यानवच्छिन्नविशेषणतासम्बधावच्छिन्नाधेयतयावोक्तश्रुत्या बोधनसंभवादिति।

तदपि चिन्त्यम्; वह्निमति वह्निर्नास्तीतिवद्दृश्यवति दृश्याभावबोधनस्य बाधितत्वात्। धर्मितावच्छेदकांशे प्रकारतया भासमानस्य धर्मस्याभावांशे प्रतियोगितानवच्छेदकत्वेनानवभासनियमात्। इह किञ्चनपदयोर्दृश्यमात्रपरत्वांशे च प्रमाणाभावस्योक्तत्वात्। अतोऽन्यपदार्थमित्यादि श्रुतावपि तदभिमतार्थस्य प्रत्यक्षत्वादेः वक्ष्यमाणत्वात्। न चायमभावः प्रातिभासिकभिन्नः श्रुतिबोधितत्वादित्यनुमितिः; तदप्रातिभासिकत्वे मानं साध्याप्रसिद्धचा व्याप्तेरग्रहात्। भ्रमविषयकभिन्नत्वस्य साध्यत्वेऽपि यथा श्रुतहेतोर्ग्रावाणः प्लवन्त इत्यादिवाक्यबोधभ्रमविषये ग्रावोन्मज्जनादौ व्यभिचारात्। न च श्रुतितात्पर्यविषयत्वं हेतुः; स्वरूपासिद्धेः। अनुमित्या यथोक्ताभावस्याप्रातिभासिकत्वसिद्धावुक्तश्रुत्या तात्पर्यगत्या तद्घटितयथोक्तमिथ्यात्वबोधनं श्रुतितात्पर्यविषयसिद्धौ तदभावस्याप्रातिभासिकत्वसिद्धिरित्यन्योऽन्याश्रयात् पारमार्थिकत्वेनार्थान्तरस्य दुर्वारत्वाच्च। भावाद्वैतपक्षे तत्रेष्टापत्तावपि प्रकृतग्रन्थासङ्गतेरनुद्धारात्। मिथ्यात्वमिथ्यात्वस्यैव तत्र प्रक्रान्तत्वात्। एवं प्रतियोगिप्रसक्त्यवच्छेदकदेशकालावच्छेदेनाप्यभावबोधो वक्तुमशक्यः, निषेधाधिकरणान्यदेशकालावच्छेदेन तत्सत्त्वापत्तेः। देशान्तरकालान्तरवर्तिवस्तुविरहबोधकत्वस्यापि निषेधप्रमाणस्वाभाव्यात्। स्ववासनामात्रेण स्वभावैकदेशपरित्यागोपादानानुपपत्तेः अत एव तद्विशिष्ट एव तदभावस्य निरवच्छिन्ने विशेषणतया बोधनमित्यप्यपास्तम्। मानान्तरविरुद्धयथोक्तविशेषणता सम्बन्धस्य वाक्यार्थान्तर्भावकल्पनाया असम्भवात्। पदार्थवत्संसर्गेऽशतोऽपि श्रुत्यस्पृष्टे विप्रतिपत्तेः कर्तुमशक्यत्वादित्यास्तां विस्तरः। कस्तर्हि उक्तश्रुतेरर्थ इति चेत्, उच्यते; इह ब्रह्मणि विद्यमानं नाना अनेकं वस्तुज्ञानेच्छादिरूपकिञ्चनानिर्वचनीयं नास्ति, विशिष्यनिर्वक्तुमशक्यं हि वस्तु किञ्चिदिति व्यवहरन्ति। "नमस्तस्मै कस्मचिदमितमहिम्ने

पुरभिदे" "कस्मैचित्कपटायकैटभरिपूर:पीठदोर्घा—" इत्यादौ तथा दर्शनात्। यद्यपि वेदान्त्यभिमतमिथ्यात्वरूपमनिर्वाच्यत्वमभिप्रेत्य नते प्रयोगाः तथापि किञ्चिदंशसाम्येन दोषाभावः। अस्तु वा तादृशमेवानिर्वाच्यत्वमयार्थः तथाचाद्वैतानिषेधपरमेवेदं वाक्यम् अत एवात्र न काचन भिदास्तीत्यत्राप्यनिर्वचनीया भिदास्ति किन्तु ब्रह्मणि विद्यमानो भेदः पारमार्थिक एव तथा चार्थात्प्रतियोगिनामप्यमिथ्यात्वलाभः। अस्तु वा तच्छ्रुत्येकवाक्यतया नानाशब्दस्य भिदार्थे लक्षणा। किञ्चनेत्यत्राव्ययविशेषणत्वात्क्लीबत्वम्। तथाचानिर्वाच्यभेदनिषेध एवार्थः। अत एव य इह नानेव पश्यति अत्र भिदामिव मन्यमानेत्यत्र चावास्तवं पश्यन् सरितो लङ्घयन्ति तत्त्वानभिज्ञत्वादित्यर्थकमिवपदं संगच्छते। आरोपितत्वस्यापि सम्भावनारूपस्य इवपदार्थत्वात्। अत एव—

न नित्यमस्मिन् परिपूर्णतेति हित्वा नभः क्षोणितलावतीर्णः।
आनन्दयन्निन्दुरिव स्वधाम्ना विभाति लोके नवकाकतीन्द्रः॥

इत्यादावुत्प्रेक्षास्थले तथैवाङ्गीक्रियते **काव्यमीमांसकैः**। यदि तु नानापदस्याभिदापरत्वेऽपि तदर्थस्य प्रतियोगितया नञर्थाभावान्वयो न स्यात्, त्वदुक्तयुक्त्यैवेति विभाव्यते, तदास्तु नानाशब्दस्य भिन्नपरत्वमेव लक्षणासाम्येऽपि मानान्तरसंवादविगानयोरेव विनिगमकत्वात्। अत्र भिदामिवेति श्रुत्यन्तरेऽप्यनिवार्य्यभेदनिषेध एवार्थः, लक्षणायां प्रयोजनाभावादद्वैतनिषेधस्य तावतैव सिद्धेः। अथवा इह ब्रह्मणि विद्यमानं किञ्चन ज्ञानादिकं नाना अनेकं स्वजातीयप्रागभावसमानाधिकरणं नास्ति किन्त्वेकमेव नित्यत्वादिति भावः। न च ज्ञानेच्छादीनामनुपस्थितत्वं प्रमाणस्य प्रमाणमिति पूर्वार्द्धे प्राणादिनियामकत्वेन तेषां प्रक्रान्तत्वात्। ननु "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इतिवाक्यशेषेण नानात्वदर्शनस्य संसारप्राप्तिहेतुत्वाभिधानेन नानात्वदर्शनस्यैव मिथ्याज्ञानत्वं लभ्यते संसारहेतोर्मिथ्याज्ञानत्वे सर्वेषामेव विवादात्। तदेव नानात्वं निषेध्यत्वेन तात्पर्यविषयः। तथाचासङ्गतिः, न हि न्यायमते परमात्मन्यनित्यज्ञानवत्त्वज्ञानं मिथ्याज्ञानमनात्मन्यात्मग्रहेऽहमस्मीति मोहोऽहङ्कार इति **न्यायवार्त्तिकोक्तेः**। "अनित्याशुचिदुःखानात्मसुखात्मख्यातिरविद्या" इति **पातञ्जलसूत्राच्चेति** चेत्, नानाविधं किञ्चन वस्तु इह ब्रह्मणि नास्ति तथा च जगद् ब्रह्मण्यध्यस्तमिति नाशङ्कनीयमितिभावः। ब्रह्मसत्ताप्रयुक्तसकलव्यावृत्त्या स्वतन्त्रसत्तावत्त्वस्य बाधकाभावेन बोधितत्वादध्यस्तमिति पर्यवसानात्। अथवा मनसैवाप्तमित्युक्तम्, तत्रैवकारव्यवच्छेद्यं स्पष्टयति—नेह नानास्ति

किञ्चनेति। प्रत्यक्षानुमानादिप्रमाणं नात्मनि प्रवर्त्तत इत्यर्थः। मनसैवेति तृतीयया करणत्वस्य ज्ञानविरूपितस्यैवार्थवशादुपस्थितत्वात्। ननु बहिरिन्द्रियमात्मनि मा नाम प्रवर्तिष्ट शब्दानुमानादिकन्तु न वर्त्तत एवेत्याशङ्क्याह—मृत्योःस मृत्युमित्यादि। यश्चात्मनि शब्दानुमानादिप्रवृत्तिं मन्यते संसारमेव प्राप्नोति मोक्षहेतुज्ञानजनकत्वस्यैव प्रमाणान्तरव्यवच्छेद्यत्वात्तादृशशब्दानुमित्याद्यात्मकज्ञानस्य च सत्त्वेऽपि साक्षात्कारानुपयुक्तत्वात्। अत एवाग्रे मनसैवानुद्रष्टव्यमिति **माध्यन्दिनशाखायां** नियमनं संगच्छते। मध्येऽर्थान्तरप्रतिपादने तु तदनुपपन्नं स्यात्। यद्वा इह ब्रह्मसाक्षात्कारे नानाविधं किञ्चन किमपि सुविषयो नास्ति तेन समूहालम्बनस्य सविकल्पकस्य च मोक्षहेतुत्वव्यवच्छेदः। तदेवाह—मृत्योः स मृत्युमित्यादि। एकधैव एकमेवानुद्रष्टव्यं साक्षात्करणीयम्। धाप्रत्ययस्य विशेषणरूपविषयपरत्वे मानाभावेन विशेष्यरूपविषयस्यापि तदर्थत्वकल्पनात्। एकधा एकधानिर्विकल्पकेन घटो ज्ञात इत्यादौ तथा दर्शनाच्चेति परैरेवाभिहितत्वादिति दिक्।

नेह नास्तीत्यर्थः॥ जीवस्य ब्रह्मभिन्नत्वमेवाह—विरज इति। आसमन्तात् काशते इत्याकाशो जीवः, सर्वप्रत्ययविषयत्वात्। तस्मादज आत्मा महान् ध्रुवः परमात्मा परो भिन्नः। भेदहेतुमाह—विरत इति। रागहीन इत्यर्थः। एतेन सुखद्वेषधर्माधर्मसंस्कारशून्यत्वं जीवाद्ब्रह्मणोवैलक्षण्यमित्युक्तम्, अजपदेन शरीरासम्बन्धः, महानिति जन्यविशेषगुणानाश्रयत्वम्, ध्रुव इति सर्वदैकरूपेण नित्यज्ञानादिमत्त्वं कार्यमात्रजनकत्वं चोक्तम्। धीरः काम्यकर्मफलेच्छाहीनः, तमेव विज्ञाय श्रवणेन ज्ञात्वा मननेन चाप्रामाण्यशङ्काशून्यज्ञानविषयीकृत्य निदिध्यासनेन प्रज्ञां साक्षात्कारं कुर्वीत। ब्राह्मण इति साक्षात्कारफलोक्तिः। "यो वा एतदक्षरं गार्ग्यविदित्वा अस्माल्लोकात्प्रैति स ब्राह्मण" इति श्रुतेः। अधिकारिपरत्वस्य परैरप्यनभ्युपगमात्। अद्वैतादिमतान्तरं च न श्रद्धेयमित्याह—नानुध्यायादिति। बहूननेकदुस्तर्कग्रन्थिलान् शब्दाननर्थकत्वेन शब्दमात्रभूतान् नानुध्यायात्तत्रासक्तिं न कुर्यात्। हेतुमाह—वाच इति। हि यतस्तादृशतर्कानुसरणं वाचो वाग्देव्याः विग्लापनं ग्लानिमात्रजनकं न तु मोक्षफलकम्। तस्मात्तादृशवादेषु विश्वासो न विधेय इति भावः।

यत्तु तमेव विज्ञाय प्रज्ञां ब्रह्मात्मकसाक्षात्कारं कुर्यात् ततो भेददर्शननिवृत्तिः स्यादित्याह—ब्राह्मण इति। ब्रह्मज्ञानेनापगतभेदः कृतकृत्यो जायत-इति, तच्चिन्त्यम्; स्वपक्षवासनामात्रमूलत्वाद्ब्रह्मविषयकज्ञानवत्त्वस्यैव

ब्राह्मणपदार्थतायाः श्रौतत्वाच्च भेदस्य तदर्थत्वे मानाभावात् । अन्यत्स्वयमूह्यम् । इति शब्दो मन्त्रसमाप्त्यर्थः । इदानीं ब्रह्मज्ञानोपायं गोसहस्रदानप्रतिज्ञाक्षिप्तसंन्यासं तैजसः पुण्यकृच्चेत्यत्र मोक्षहेतुत्वेनोक्तानां कर्मणां चारादुपकारकत्वं वक्ष्यन् याज्ञवल्क्यो भेदं दृढयन्नेवात्मस्वरूपं तावदनुवदति—स वा अयमिति । सर्वस्य ब्रह्मेन्द्रादेरपि वशी स्वाधीनताक इति यावत् । ज्ञानाद्यधीनानामपीच्छादीनां न तत्स्वामिकत्वमतः सर्वेशान इति । ईशानत्वस्यान्यानपेक्षत्वमाह—सर्वस्याधिपतिरिति । स्वरूपस्यैव सर्वस्याधिपतिः । अधिपतीनामस्वीयव्यापारजन्यव्युत्पत्त्यादिमन्निरूपिताधिपत्यनियमाभावादाह—सर्वमिदं प्रशास्तीति । सृष्ट्यादौ वेदनिर्माणेन हिताहितप्रवृत्तिनिवृत्तिजनकत्वात्स्वयं शरीरमादायाशेषशब्दशक्तिग्रहकार्यकारणभावग्रहजनकत्वाच्च ब्रह्मादीनामपि स्वान्यसर्वप्रकाशकत्वादाह—सर्वमिति । तेषामपि प्रशासकः तेन योग्यादिभिः सिद्धसाधनानवकाशः । तदानीन्तनशरीरपरिग्रहे तत्तत्कर्मजन्यफलसम्बन्धः स्यादत आह—स न साधुना कर्मणा भूयान् तज्जन्यपुण्यसम्बन्धहीनः नो एवासाधुना कनीयान् पापसम्बन्धहीनः मिथ्याज्ञानवासनाराहित्येन तत्कृतकर्मणामदृष्टानुत्पादकत्वात् । तदेतदभिप्रेत्य **आचार्यैरुक्तम्**—

स्वाम्यं यस्य निजं जगत्सुनमिते त्वादौ ततः पालनं
व्युत्पत्तेः करणं हिताहिताविधिन्यासे च संभावनम् ।
भूतोक्तिः सहजा कृता निरुपधिर्यतनस्तदर्थात्मक-
स्तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः ॥

एवं जन्यमात्रोत्पादकत्वमुक्त्वा परमाण्वादीनामपि तन्नियम्यत्वात्तदाधिपत्यमप्यक्षतमित्याह—एष भूताधिपतिरिति । तद्विषयकप्रत्यक्षादिमत्त्वात्तदुपादेयैश्वर्यादेव तदैश्वर्यमपीत्याह—एष लोकेश्वर इति । ईश्वराणामपि राजादीनां पालकत्वव्यभिचारादाह—एष लोकपाल इति । वेनादीनां मर्यादोच्छेदकत्वदर्शनादाह–स सेतुरिति । सेतुशब्दप्रवृत्तिनिमित्तं धर्ममाह—विधरणमिति । एतेन मृण्मयत्वपरिच्छिन्नत्वादिनिरासः । तन्निमित्तमाह–एषां लोकानामसंभेदायासांकर्याय तत्तत्कार्यनियमायेत्यर्थः । एतेन "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सहप्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्यावाचो विमुञ्चथामृतस्यैव सेतुः" इति श्रुत्यन्तरमपि व्याख्यातम् ॥

प्रकृतमाह–तमेतमिति । वेदानुवचनेन स्वाध्यायानुध्यानेन कर्मकाण्डोक्तस्वरूपेणाश्वमेधादिकर्मणा दानेन गोभूम्यादेः तपसा कृच्छ्रचान्द्रायणादिना

अनाशकेन कामानशनेन यावज्जीवं रागद्वेषादिराहित्येन। "अनाशकेनेति तपसो विशेषणम्" इति **वाचस्पतिमिश्राः**। तथा च **भामत्यां** "कामानशनमेव हि तपः हितमितमेध्याशिनो हि ब्रह्मणि विविदिषा भवति न तु सर्वथानश्नतः मरणात् नापि चान्द्रायणादितपःशीलधातुवैषम्यापत्तेः। अथवा वेदानुवचनेन ब्रह्मचर्याश्रमोक्तकर्मभिः यज्ञेन दानेन गृहस्थाश्रमोक्तकर्मभिः तपसाः वनस्थ-नैष्ठिक-ब्रह्मचारिकर्मभिः अजासकेन संन्यासधर्मैरिति **व्याख्यातारः**। अत्र तिप्प्रत्ययोपात्तानां तत्तद्यज्ञादिकरणकनानाभावानामेव ज्ञानविविदिषा-न्यतररूपेण फलेन सम्बन्धो न तु यज्ञदानाद्यन्यतरस्य भावनान्तरस्य वा सुबन्तयज्ञादिपदैस्तत्तद्यागादीनामुपस्थिते विधेयधात्वर्थश्रवणाभावात्।

न च यज्ञादिपदानां सुबन्तत्वेऽपि मासे जुहोतीतिवत् प्रकृताप्रकृतय-ज्ञमात्रवाचित्वान्नियमेन पूर्वकर्मानुपस्थित्या कर्मान्तरत्वमेव युक्तम्। न च द्रव्यदेवतयोरश्रवणात् रूपाभावः, अव्यक्तत्वादिसादृश्येन ज्योतिष्टोमविध्य-न्तोपपत्तेरिति वाच्यम्; विविदिषापेक्षितचित्तशुद्धिरूपद्वारसमर्पके "स ह वा आत्मयाजी यो वेदेदमङ्गेनाङ्गं संस्क्रियते" इत्यादि वक्ष्यमाणवाक्ये एत-च्छब्देन प्रकृतयज्ञादिपरामर्शात्तदनुरोधेन द्वारि समर्पके उक्तवाक्येऽपि यज्ञादिपदस्य पूर्वविहितयज्ञादिपरामर्शकत्वनिश्चयात्। न चैतच्छब्दस्यापि पूर्वविहिताविहितसाधारण्यात् यज्ञादिपदसमानशीलत्वमेवेति वाच्यम्; स यदेव यजेतेति पूर्ववाक्ये यच्छब्दापपदं · · · · पशुनेतिवद्यजेः पूर्वविहितकर्म-मात्रपरत्वादेव यच्छब्दस्यापि तन्मात्रपरत्वात्। अतश्च तात्पर्यग्राहकवशेन यज्ञादिपदस्य पूर्वकर्मपरामर्शकत्वान्न कर्मान्तरत्वं प्रत्यभिज्ञापकप्रमाणाभाव एव "मासमग्निहोत्रं जुहोति" इत्यादौ प्रकरणान्तरेण कर्मभेदप्रत्ययात्।

न च धात्वर्थमात्राभेदेऽपि पूर्वभावनोपस्थापकाभावात्कर्मभेदः स्यादि-तिवाच्यम्; सर्वेभ्यो दर्शपौर्णमासावितिवद् यज्ञादिनैव स्वसम्बन्धाभिचरित-भावनोपस्थापनोपपत्तेः। फलभेदेन भावनाभेदे च प्रमाणाभावात्। नचानेक-भावनाविधानाद्वाक्यभेदः, यज्ञादिविशिष्टैकभावनाविधाने तु यज्ञादिसकल-साधनविशिष्टप्रयोगान्तरविध्यापत्तिरिति वाच्यम्; यज्ञादिप्रत्येकान्वितनाना-भावनानां तन्त्रेणैकाख्यातोपात्तत्वाद् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्याग्नेयादिषड्यागानां स्वर्गाद्युद्देशेनेवात्रापि विविदिषोद्देशेन यज्ञादीनां विधानेऽपि वाक्यभेदाभावात् तद्भावनानां तत्तद्यज्ञादिकरणकत्वं प्राप्तमेवेति यज्ञादिपदमनुवादो भावनान्तरत्वप्रतिबन्धार्थः। विविदिषाफलसम्बन्धेन विनि-योगकरणाच्च नैकप्रयोगापत्तिः, यद्दृष्टेतिवत्।

केचित्तु विविदिषन्तीत्यस्यानुषङ्गेणय ज्ञेन विविदिषन्तीत्यादिवाक्यानि भिन्नान्येव। यद्वा, अर्द्धमन्तर्वेदीं मिनोत्यर्द्धं बहिर्वेदीं निरस्यान्तरालदेश इव यज्ञादिपदानां कर्मसामान्ये लक्षणा। तथैकवाक्यत्वं कर्मणा विविदिषन्तीत्यस्य पर्यवसानादित्याहुः। विविदिषन्तीति च लेट्। यज्ञादिनिष्ठविविदिषासाधनत्वस्यापूर्वत्वात्तत्सिद्धं कर्मकाण्डोत्पन्नानामेव यज्ञादीनामत्र विविदिषोद्देशेन विधानमिति। तथा च **वेदव्यास**सूत्रं "सर्वथापि त एवोभयलिङ्गाद्" इति। यज्ञेत्यादिकं सिद्धार्थकनामरूपं तावल्लिङ्गं व्याख्यातम्। "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः" इत्यादिस्मृत्यादिरूपं विज्ञातकर्त्तव्यताकानामेव कर्मणां विद्यार्थकत्वबोधकं च द्वितयमपि शब्दाद्यस्यैतेऽष्टचत्वारिंशत्संस्काराः "स ब्रह्मणः सायुज्यं सलोकतां गच्छति" इति स्मृत्या कर्मकाण्डोक्तकर्मणां विद्योपयोगित्वेनैवसंस्कारत्वोक्तेश्चेति। नचैवं यज्ञादिर्विविदिषार्थत्वतत्कामनारहितकर्त्तव्यत्वं न स्यादिति वाच्यम्; यावज्जीवमग्निहोत्रं जुहोतीत्यादिना विहितत्वे प्रत्यवायपरिहारार्थं तदुपपत्तेः। तथा च सूत्रं 'विहितत्वाच्चाश्रयकर्मापि" इति। अथैवं नित्यत्वं काम्यत्वं विरुद्धमिति चेत्; अत्रापि सूत्रं "सहकारित्वेन च" इति। यज्ञादीनां विविदिषावाक्येन श्रवणादिसहकारित्वलाभात्तद्वचनबलात्खादिरो यूपो यूपो भवति खादिरं वीर्यकामस्येतिवदुभयात्मकत्वात्काम्यप्रयोगेणैव प्रसङ्गान्नित्यप्रयोगसिद्ध्या प्रयोगानावृत्तेर्विरोधाभावात्। तथा च **जैमिनीय**सूत्रम् "एकस्य तूभयार्थत्वे संयोगपृथक्त्वात्" इति। उभयार्थत्वे नित्यकाम्यत्वे संयोगोऽन्यार्थकत्वबोधकवाक्यं तस्य पृथक्त्वभेदप्रमाणं वचनेनोभयार्थत्वबोधने उक्तरीत्या नित्यत्वं काम्यत्वं चेत्युभयरूपत्वमित्यर्थः। इदमप्यवधेयम्–यज्ञादीनां विविदिषन्तीति सन्प्रत्ययार्थे इच्छायामेव विनियोगो न तु धात्वर्थे ज्ञाने शाब्दप्राधान्यस्यैव शाब्दान्वयनियामकत्वात्, राजपुरुषमानयेत्यादावर्थतः प्रधानस्यापि राज्ञ आनयनानन्वयात्। अत एव **श्रुतिः** "सह वा आत्मजीवयोर्वेदेदमनेनाङ्गं संस्क्रियते इदमनेनाङ्गमुपचीयते" इति। अनेन कर्मणा इदं ममाङ्गमात्मा संस्क्रियते क्षीणपापः क्रियते पुण्येन चोपचीयते इत्यर्थः। अत एवान्तःकरणशुद्धावेव कर्मणामुपयोग **आथर्वणे** श्रूयते "विशुद्धसत्त्वस्ततस्तु तं पश्यति निःकलं ध्यायमानः" इति। विशुद्धो नित्यनैमित्तिकानुष्ठानेन निःकल्मषः। सत्त्व आयस्य यथा हि प्रकृतौ यस्याङ्गस्य य उपकारस्तदतिरिक्त उपकारोऽतिदेशस्थले न कल्प्यते कृतेषु वैतुष्यरूपप्रकृतोपकारबाधेऽप्यवघातस्यादृष्टार्थत्वानभ्युपगमात्, तथैव ज्ञाने विनियुक्तानां यज्ञादीनां पापक्षयरूपनित्यकर्मफलातिरिक्तो नित्यकाम्यसाधारणो, मोक्षोपयोग्युपकारोऽपि न

कल्पते। न च कर्मणां ज्ञानोत्पत्तौ पापक्षयस्य द्वारत्वे मानाभाव इति वाच्यम्; ततस्तु तमितिश्रुतेरेव मानत्वात्। अत एव

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ इति स्मृतिः।

न चैवं नित्येभ्यः पापक्षयस्यपापक्षयाच्चज्ञानोत्पत्तेः सिद्धत्वाद्यज्ञेनेत्यादिवाक्यं व्यर्थमिति वाच्यम्; नित्यानां विशिष्यज्ञानोत्पत्तिप्रतिबन्धकदुरितनाशकत्वान्यतोऽसिद्धेः ज्ञानोद्देशेन नित्यानुष्ठानेऽवश्यं ज्ञानोत्पत्तिरन्यथा तु शुद्धिमात्रं ज्ञानोत्पत्तिरिव नियतेत्येतदर्थकतया विनियोगसार्थकतया विनियोगसार्थक्येत्यादि**र्वाचस्पत्या**दौ विस्तरः। अत एव सत्त्वशुद्धिद्वारेणारादुपकारकत्वे "कर्म सन्निपत्योपकारकं तत्त्वज्ञानम्" इति **किरणावली**वाक्ये "सत्त्वमात्मा तस्य शुद्धिर्ज्ञानोत्पत्तिप्रतिबन्धकनिवृत्तिः" इति **उपायकृद्भि**र्व्याख्यातम्। एवञ्च—

तस्मात्तत्प्राप्तये यत्नः कर्त्तव्यः पण्डितैर्नरैः।
तत्प्राप्तिहेतुविज्ञानं कर्म चोक्तं महामते ॥

इति **विष्णुपुराणम्**।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणो गतिः।
तथैव ज्ञानकर्माभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥

इति **हारितवाक्यम्**।

ज्ञानं प्रधानं न तु कर्महीनं कर्म प्रधानं न तु बुद्धिहीनम्।
तस्माद्द्वयोरेव भवेत्प्रसिद्धिर्नत्वेकपक्षो विहगः प्रयाति ॥

इत्यादि वाक्यश्च यथोक्तद्वारेणैव कर्मणामुपयोगाभिप्रायं न तु समप्रधान्येनाग्नेयादिवत्। नापि विकल्पेन व्रीहियववत्, दृढभूमिसवासनमिथ्याज्ञानोच्छेदं विना मोक्षासम्भवात्तस्य च मिथ्याज्ञानप्रागभावासहवृत्तिमिथ्याज्ञानध्वंसरूपस्य तत्त्वज्ञानैकसाध्यत्वादित्यन्यदाकरे स्पष्टमिति दिक्।

उक्तफलीभूतेच्छाविषयस्य ज्ञानस्य फलमाह—एवमेवेति। विदित्वा-साक्षात्कृत्य मुनि[:]विषयेतरेच्छाविरहितो भवति। कृतकृत्यत्वात्संन्यासमाह—एवमेवेति। लोकं ब्रह्मसाक्षात्कारमिच्छन्तः प्रव्राजिनः परमहंसाः सर्वतो विरक्ताः प्रव्रजन्ति पञ्चमलकारः, तथा च तदुद्देशेन परिव्राजककार्यमित्यर्थः। इदञ्चात्यन्तायोगव्यवच्छेदभावार्थं न तु आश्रमान्तरे तत्त्वज्ञानं

न भवतीति भ्रमितव्यम्, आश्रमचतुष्टयमुपक्रम्य "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुतेः। संकोचे मानाभावादाकाङ्क्षाया विशेषेणानन्तर्यस्याप्रयोजकत्वात्। "मोक्षाश्रमश्चतुर्थो वै यो भिक्षोः परिकीर्तितः" इत्यसाधारण्येन व्यपदेशाच्च। गृहस्थस्य च पुत्रदारादिसंसर्गो दुर्वार इत्यभिप्रायकत्वात् "तत्त्वज्ञाननिष्ठो गृहस्थोऽपि विमुच्यत इत्यागमाच्च" इति **चिन्तामणिकृत**ः। श्रूयते हि **छान्दोग्योपनिषदि** "त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एवैते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति। तत्र यज्ञाध्ययनदानावच्छिन्नत्वेन गृहाश्रमः, तप इति वानप्रस्थभिक्षुरूपमाश्रमद्वयम्, ब्रह्मचारी चेतिचतुर्णामेवैतत्पदपरामृष्टानां पुण्यलोकमुक्त्वा तेषां मध्ये ब्रह्मणि संस्था निष्ठा यस्य स मोक्षभागिति तस्यार्थः।

यद्यपि "अनुष्ठेयं **बादरायण**ः साम्यश्रुतेः" इति सूत्रे परिव्राजकमात्रानुष्ठेयं यत्कर्म तदेव ब्रह्मसंस्थाशब्देनोच्यते द्वितीयैतत्पदोपादानादेकवाक्यत्वावगमात्तत्र चोपक्रमस्य बलवत्त्वादुपक्रमे च यज्ञादिरूपासाधारणधर्मेण गृहाश्रमोक्त्या भिक्ष्वाश्रमस्यापि तदसाधारणधर्मे वक्तुमुचितत्वात्तपःशब्देनाश्रमद्वयोक्त्ययोगादतोऽसाधारणधर्मेण तत्तदाश्रमाभिधानरूपसाम्यानुरोधादवसादयन्नित्यनेन आश्रमत्रयस्यैवोक्तत्वात्सर्व एतदित्यादिना तन्निन्दानुवादे च ब्रह्मसंस्थ इत्यादिना भिक्षुः स्तूयत इत्येव सिद्धान्तितम्। तथाप्याश्रमान्तरानुक्तत्वरूपमसाधारण्यं नात्र विवक्षितमध्ययनस्य ब्रह्मचर्याश्रमसाधारण्येन व्यभिचाराद् दानस्य सर्वसाधारण्याच्च। तपसोऽपि भिक्षुप्रभृतिसाधारणत्वेन तेन वानप्रस्थाश्रमाभिधानानुपपत्तिप्रसङ्गाच्चोपक्रमस्य शब्दार्थनिर्णायकत्वेऽप्यभिधानप्रकारनियामकत्वाभावाच्च पूर्वोक्तरीत्यैतत्पदेन चातुराश्रम्योपादानमिति **मणिकृतामभिप्रायः**। विधेः सतिसम्भवेऽर्थवादसापेक्षत्वा- ......... शस्त्वार्थमाह—एतस्मै वै तदिति। ह किल स्म प्रसिद्धाः वै स्मर्यमाणास्तदित्यस्य ते इत्यर्थः। पूर्वे संन्यासाधिकारिणः कृतसंन्यासाः ब्राह्मणाः ब्रह्मज्ञातुकामाः अनूचानाः साङ्गवेदाध्यायिनः कृतनित्यनैमित्तिककर्माणश्च विद्वांसः श्रवणादिना प्राप्तब्रह्मसाक्षात्काराः प्रजापुत्रादिरूपा न कामयन्ते नेच्छन्ति। तदनुवादमाह—किं प्रजया करिष्याम इति। तत्र हेतुः तेषां नोऽस्माकमयमात्मैवायं लोकः प्रजासाध्यलोकेच्छाविच्छेदहेतुत्वात्। इदस्र्वेच्छान्तरस्याप्युपलक्षणमित्याह—ते ह स्मेति। वित्तं गोधनादि, लोकः स्वर्गादि, एषणा इच्छा, व्युत्थानं परित्यागः, लोकैषणापरित्यागेन यागादिनि-

वृत्तिदर्शनम्। तथा च मैत्रेयोपनिषदि "एतद्धैव तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति। तथा च सूत्रम्-"उभयथा च दर्शनम्" इति। उभयथा तत्त्वज्ञानिनां कर्मऽननुष्ठानेऽनुष्ठाने चान्त्यमुक्तमाद्यं यथा "जनको ह वैदेहो बहुदक्षिणेन यज्ञेन" इत्यादि। तथा च तत्त्वज्ञानमेव कारणं न त्वाश्रमविशेष इति फलितार्थः। भिक्षाचर्यं ब्रह्मचर्यं संन्यासं पारमहंस्यमिति व्याख्यातारः। एषणात्रयस्यापि द्वयोरन्तर्भाव इति दर्शयति—या ह्येवेति। पुत्रैषणापि वित्तैषणैव, पुत्रस्यापि वित्तत्वात्, तद्धेतुद्वारवित्तैषणापि च लोकैषणा, लोकस्यापि वित्तत्वात्तत्साध्यत्वाद्वा। अन्तर्भावहेतुं धर्ममाह—उभे ह्येते इति। एषणे इच्छे एव भवतः। तथा च विषयान्तरेच्छामात्रं परित्याज्यमिच्छात्वस्यैव परित्याज्यतावच्छेदकत्वादिति भावः। ब्रह्मसाक्षात्कारे सोपाये उक्ते तत्फलाकाङ्क्षायां सत्यां ब्रह्माभेदेनावस्थानस्य फलत्वं निराकर्त्तुमाह—स एष इति। जीवपरामर्शः। जीवो मोक्षावस्थायां नास्ति, ब्रह्मैक्यसम्पत्तेरुपाधेरविद्यायाश्च निवृत्तेः। इतिशब्देन तन्मतमनूद्य नेति तद्दूषणप्रतिज्ञा, इतिशब्दः समाप्त्यर्थः। तथा च तन्मतनिरासस्य सिद्धत्ववदनुवादाद्धेत्वादिकं यथासम्भवं योज्यम्। प्रतिज्ञायां तु बाधकभावान्तराभावेन साध्यं सर्वथैव सिद्धमिति भावः। एवं पूर्वेणैव नकारेणात्मनाशो मोक्ष इति नास्तिकमतमप्यनूद्य द्वितीयेन तन्मतदूषणमपि प्रतिज्ञेयम्। कथं तर्हि मोक्षस्वरूपमत आह—अगृह्य इति। तद् व्याचष्टे—न गृह्यन्त इति। परममुक्तौ सत्यां शरीरादिसामग्र्यभावेन ज्ञानानुत्पत्त्या तद्व्यतिरेकेण च जीवस्य ग्रहानुपपत्तेः। एतेन "तान्येवानुविनश्यन्ति" इत्यादिश्रुतयो व्याख्याता इति भावः। द्वितीयं निराचष्टे—अशीर्यत इति। तद्व्याचष्टे—नहि शीर्यत इति। ध्वंसप्रागभावोभयप्रतियोगित्वविरहाद् दुःखं मे मा भूदित्यात्मोपरागेणैव दुःखाभावस्य काम्यत्वात्। न च त्वन्मतेऽपि दुःखाभावस्य ज्ञानाभावे कथं काम्यत्वम् ?

> दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते।
> न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः॥

इतिन्यायादिति वाच्यम्; शास्त्रेणेदानीं तस्य ज्ञायमानत्वात्स्वकालावच्छेदेन ज्ञायमानत्वादकिञ्चित्करत्वादन्यत्र दुःखाभावज्ञानेऽपि दुःखाभावमुद्दिश्यापि दशाविशेषे मरणप्रवृत्तिदर्शनात्, विवेकित्वस्य च पुरुषार्थत्वं प्रत्ययोजकत्वात्। अन्यत्र दुःखाभावज्ञानेऽपि पुरुषार्थतायां तस्यानपेक्षितत्वात्। "दुःखं मे मा भूदित्युद्देश्येनैव प्रवृत्त्या दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्त्य-

भावाद्'' इति मणिकृतः। प्रपञ्चनिवृत्तिमपास्यति–असङ्ग इति। प्रपञ्चसम्बन्धहीन इत्यर्थः। अत एव असितः अबद्धः ''षिञ्बन्धने'' इत्यतो व्युत्पन्नत्वात् प्रपञ्चसम्बन्धस्यैव बन्धत्वात्। अत एव श्रुत्यन्तरं ''तदा विद्वान्नामरूपाद्विमुक्तः'' इत्याथर्वणेऽपि ''तथा विद्वान्नामरूपाद्विमुक्तः'' इति। एतेन प्रपञ्चस्य तत्त्वज्ञानान्निवृत्तिरित्यर्थकत्वमुक्तवाक्यस्येत्युक्तिः परास्ता। राहोश्चन्द्रो विमुक्त इत्यादौ राहोश्चन्द्रजन्यनाशप्रतियोगित्वबोधस्य सर्वानुभवविरुद्धत्वात्, अत्रैव तादृशार्थे मानाभावात्। अत एवास्मदुक्तमेवार्थं स्पष्टयति—न सज्जते न व्यथते इति। सङ्गाभावान्न व्यथते इतिभावः। इतिशब्द उक्तार्थसमाप्तौ। न केवलं परममुक्तावेवास्य संगहीनत्वम्, किन्तु जीवन्मुक्त्यवस्थायामपीत्याह—अत इति। अतो निषिद्धात्साधनात्पापं प्रत्यवायमकरवं कृतवानस्मीत्यनुकरणार्थः। एवमुत्तरत्रापि। अतो विहिताद् गङ्गास्नानादेः कल्याणं पुण्यमिति विशेषः। उभे एते चिन्ते साध्वसाधुनी त्यजति। तत्र हेतुः—अमृत इति। तत्त्वसाक्षात्कारवानित्यर्थः। अत एवाह—नैनमिति। कृताकृतेति। विहितस्य निषिद्धस्य वोभयत्राप्युपादानं विहितकरणेऽभ्युदयस्य तदनुकरणे प्रत्यवायस्य चानुपपत्तेः। एवं निषिद्धकरणेऽपि प्रत्यवायानुत्पादात्, व्रतरूपोपवासादिस्थलेऽभ्युदयाभावाच्च। न च तस्यापि विहितपदेनैवोपादानम्, पर्युदासे नञर्थत्वसाम्येनैतेनापि ग्रहे बाधकाभावात्, इतिभावः। नास्य केनचन कर्मणा लोको मीयते हिंस्यते, इति स्पष्टम्।

यत्तु शाकल्यस्य ब्राह्मणजातं स एष नेतीति वाक्यं व्याचक्षाण आहुः—''इति परिदृश्यमानसमासव्यासरूपो न इति स्वयंप्रकाशात्मव्यतिरिक्तं स्थूलसूक्ष्मकारणं न। अथवा इति सकारणो निश्शेषप्रपञ्चो नेति सकारणप्रपञ्चाभावो नकारार्थः। सोऽपि न निश्शेषकार्यकारणसदसद्विलक्षणः'' इत्यादि, तन्न; इत्येतादृशार्थपरत्वे मानाभावात्, स्ववासनामात्रमूलस्य व्याख्यानस्यात्र हेयत्वात्। स एष नेति तन्मतानुवादेन तन्निषेधपरत्वमित्यस्मद्व्याख्यानस्य च पदोक्तत्वात्। एतेनेतिशब्दोपात्तनानाधर्मावच्छिन्नप्रतियोगिताका निषेधा इतिशब्दसमभिव्याहृतनकारेण बोध्यन्ते। अतो घटत्वादिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावबोधपरत्वादुक्तवाक्यस्य मिथ्यात्वे प्रामाण्यमिति निरस्तम्, इतिशब्दस्य घटाद्युपस्थापकत्वे बीजाभावात्तादृशप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकाभावबोधेऽपि मानाभावाच्च। अभावनिष्ठप्रतियोग्यवच्छेदकावच्छेद्यत्वानवच्छिन्नवृत्तिकत्वांशयोः

कथमप्यलाभाच्च। अभ्युपेत्यापि ब्रूमः—आत्मा न दृश्यत इत्यत्र आत्मेत्यनुयोगिसमर्पकपदस्य सप्तम्यन्तत्वान्नञोऽत्यन्ताभावपरत्वं दुर्लभम्, नामार्थप्रतियोगिकनञर्थात्यन्ताभावनिष्ठत्वनिरूपितवृत्तित्वीयविषयत्वनिरूपितप्रकारतया बोधे विशिष्यतया सप्तम्यन्तपदोपस्थितेर्हेतुताया भूतले न घट इत्यादौ कल्पितत्वात्। तदवच्छिन्नप्रतियोगिताकभेदस्यात्मनि बोधेन त्वस्माकमेवेष्टसिद्धिः।

न च निपातार्थस्य यत्र प्रतियोगित्वं तादृशात्यन्ताभावप्रकारकबोधेऽनुयोगिपदस्य सप्तम्यन्तत्वमनपेक्ष्यं घटः पाण्डुर एव नेत्यादौ मुखं चन्द्र इव नेत्यादौ च एवकाराद्यर्थात्यन्ताभावस्य घटादौ प्रतीयमानत्वादिति वाच्यम्; तत्र एवादेर्धर्मिलक्षणया पाण्डुरत्वायोगव्यवच्छेदवद्भेदस्य चन्द्रसादृश्यवद्भेदस्यैवावगम्यमानत्वात्। वस्तुतस्तु तत्र नञ् विनिर्मोके एवकाराद्यर्थस्य विशेषणतादिभेदसम्बन्धेनैव घटादावन्वयात्तादृशसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावबोधेऽपि स एष इति वाक्ये घटादीनां संयोगादिनाभेदेन आत्मविशेषणत्वावच्छिन्नप्रतियोगिताकोऽभावो बुद्धयते, यथा भूतले न घटः, घटः पटो न भवति, चैत्रो न पचतीत्यादावित्यस्यैवानुगतस्य नियामकत्वाच्छास्त्रकृत्सम्मतत्वाच्चेति किं बहुना।

उक्तार्थे मन्त्रसंवादमाह—तदेतद्दृशामुक्तमिति। ब्राह्मणस्य ब्रह्मसाक्षात्कारवतः महिम्नो नित्यत्वमुपपादयति—न वर्द्धतेऽधिको न भवति कर्मणा पुण्येन, कनीयानल्पोऽपि न भवति पापेन। कर्मशब्दस्योभयसाधारण्यादिति तद्भाष्यम्। अन्यत्र तु स्वमतानुसारेण विशेषमुक्त्वा विरुद्धस्थले तद्रीत्यैव व्याख्येयम्। तथाहि तस्य ब्रह्मण एव पदवित्स्वरूपा·····ता स्यात्, तमात्मानं विदित्वा पापकेन द्विविधेनाप्यन्ते दुःखहेतुना कर्मणा न लिप्यते। स्पष्टम्।

यत्तु तस्यैव ब्रह्माभिन्नस्य ब्राह्मणस्यैव स्याद्भवेत्, अन्योऽपि पदवित् पदं नेतिनेतीत्युक्तमात्मानं वेत्तीति पदवित्स्यादिति, तच्चिन्त्यम्; स्यादित्यस्यावृत्त्यापत्तेः। पदशब्दस्यात्मवाचित्वे बीजाभावात्, ब्राह्मणपदस्य ब्रह्माभिन्नार्थकत्वेऽपि मानाभावात्, ब्रह्मविषयकज्ञानपरत्वे च प्रमाणस्य दर्शितत्वात्। न च त्वन्मते तच्छब्देन साक्षात्कारे विषयत्वेन विशेषणस्य ब्रह्मणः परामर्षस्तन्मते तु विशेष्यस्य ब्रह्माभिन्नत्वस्येति वाच्यम्; अप्रयोजकत्वात्, आत्मज्ञानस्य फलत्वेन विधेयत्वायोगात्, तदुपायस्य च श्रवणादेः पूर्वमेव विहितत्वात्। आत्मज्ञानानुवादेनेतिकर्तव्यतां विधत्ते—तस्मादेवंविदित्यादि। शान्तो दान्तः चित्तेन्द्रिययोर्व्यापारोपरमाद्...तः सर्वप्रवृत्तिहीनः। अस-

त्प्रवृतीनां शान्तदान्तपदाभ्यां व्यावृत्तिः सत्प्रवृत्तीनां तूपरतशब्देनेति व्याख्यातारः। तितिक्षुः प्राप्तस्य शीतोष्णादिसुखदुःखस्य परिहारमनाकाङ्क्षन् श्रद्धाविदास्तिक्यबुद्धिसम्पन्नो भूत्वा आत्मन्येवमात्मानं पश्यति न तु तदर्थं देशादिविशेषापेक्षा। एवञ्च परमात्मनि साक्षात्कृते सर्वमेवं पश्यति सर्वज्ञो भवति एतच्छब्दस्य प्रपञ्चपरत्वात्। यद्वा द्रष्टव्यान्तरदर्शनाभावादकृतार्थत्वमाशङ्क्याह–सर्वमेनं सर्वात्मकमेनमात्मा न पश्यति। सर्वात्मकत्वञ्चाग्रे व्याख्येयम्। तथा चैतद्दर्शनादेव कृतकृत्यत्वम्।

"एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च" भारत। इति स्मृतिः। स[र्वो] परमात्मास्य तत्त्वज्ञस्यात्मा भवति शोकराहित्यात्। अयमपि परस्यात्मा भवति। उक्तार्थं सर्वपाप्मानमित्यादि स्पष्टार्थम्। तरणशब्दार्थं स्पष्टयति–विपाप इति। पापरदमुभयपरम्। तदभावफलमाह–विजिघत्सोऽपिपास इति। दुःखमात्रोपलक्षणम्। ब्राह्मणो ब्रह्मज्ञः। जीवपरयोर्भेदं स्पष्टयति—स वा एष इति। महानज इत्युभयसाधारणम्। अन्नादः कर्मफलभोक्ता जीवः "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति दर्शनात्। वसुदानः तत्फलसुखदुःखदानानुपरः "प्राणिनां भोगभूतयः" इत्यादिदर्शनात्। एवमुभयविधमात्मानमुक्त्वा प्रसङ्गेन सफलामुपासनामाह—विदन्ते वसु इति। सुखं गवाश्वादितत्साधनं वा प्राप्नोति। मुक्त्यूत्तरं च जीवस्यापि ब्रह्मसादृश्यमित्याह—स वा एष इति। अजराभयामरामृतशब्दैर्जीवस्य शरीरादिसम्बन्धप्रयुक्तधर्मह।निरात्यन्तिक्युक्ता। प्रकृतमाह–ब्रह्माभयं वै जनक प्राप्तोऽसीति। ब्रह्मप्राप्तिश्च तत्सादृश्यप्राप्तिरेव। अत एव तत्प्रयोजकधर्मंब्रह्मण्याह–उभयमिति। मुख्यप्राप्ते परेषामपि बाधितत्वादेवञ्च इति। विमुच्यमानः एवं गमिष्यसीत्यत्रोक्तस्य गन्तव्यस्य निर्णये सति कृतार्थो जनक आह—सोहं भगवत इत्यादि। स्पष्टार्थम्। एवमप्यन्येषामात्मतत्त्वज्ञानां शोकोच्छेदो भवतीति श्रुतिराह–स वा एष इति। उक्तार्थम्। तदुत्तरमेव पठन्ति—

"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्॥ मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति॥ सा होवाच मैत्रेयी येनाहं

नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ।। स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धंत तर्हि भवत्ये- तद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ।। स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् ।। ब्रह्म तं परादाद्योऽन्य- त्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्यो- ऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा ।। स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन ,दुन्दुभ्याघातस्य वा शब्दो गृहीतः ।। स यथा शंखस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय शंखस्य तु ग्रहणेन शंखध्मस्य वा शब्दो गृहीतः ।। स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणा- वादस्य वा शब्दो गृहीतः ।। स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्च- रन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽ- थर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि

व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां गन्धानां नासिके एकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां संकल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां वेदानां वागेकायनम् ॥ स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः" ॥

अस्यार्थः—प्रकृते स्त्रिय उद्देश्यत्वात्तासां च पतिविषयकप्रेमातिशयवत्त्वात्तामेव प्रस्तुत्याह—न वा अरे पत्युरिति । तर्हि तत्त्वमूर्द्धाभिषिक्तस्य याज्ञवल्क्यस्यापि मैत्रेयीसापेक्षत्वाज्जायापदस्वारस्याद् "आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथवित्तं मे स्यादथ कर्मकुर्वीय" इत्यादिश्रुतिदर्शनाच्च । पुत्रस्य प्रियत्वं स्यादत आह—न वा अरे पुत्राणामिति । जीविष्यति विनाधनेनेत्यनुपपन्नमिति न्यायादुक्तश्रुतिदर्शनाच्च । द्रव्यस्य प्रियत्वं सम्भाव्याह—न वा अरे वित्तस्येति। एषणाद्वयमुक्त्वा लोकैषणाप्रयुक्तं लोकानां प्रियत्वं व्यावर्त्तयिष्यन् तत्साद्दश्यधनकर्माधिकारितावच्छेदकजातेः प्रियत्वव्यावृत्त्यर्थमाह—नवा अरे ब्रह्मण इति, न वा अरे क्षत्रस्येति । प्राधान्यादुभयोपादानम्, लोकविशेषप्राप्त्यर्थं प्रयासदर्शनादाह—न वा अरे लोकानामिति । द्रव्यदेवतयोः कर्मरूपत्वाद्देवतायाः स्वनिर्वाहकत्वेन प्रियत्वमाशङ्क्याह—न वा अरे देवानामिति । यज्ञादेरिष्टसाधनस्यैव वेदैकगम्यत्वादाह—न वा अरे वेदानामिति । अत एव न कर्मणोऽपि निरुपाधिकं प्रियत्वमित्याह—न वा अरे यज्ञानामिति । तथापि स्थूलदेह एव प्रियः स्यादत आह—न वा अरे भूतानामिति । उपलक्षणं चैतदात्मभिन्ने निरुपाधिकप्रियत्वाभावस्येत्याह—न वा अरे सर्वस्येति । तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतमं यदयमात्मेति तत्पूर्वमपि श्रूयते । अत्र पुत्रादेरात्मसम्बन्धेन प्रियत्वं बोधयन्ती श्रुतिरात्मनः स्वाभाविकं प्रियत्वं बोधयति । "यदन्वये यत्प्रतीयते तद्विरहे तु न प्रतीयते तत्तस्य स्वाभाविकमिति व्युत्पत्तेः" इति **वर्द्धमानोपाध्यायाः** ।

नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ।। स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धंत तर्हि भवत्ये-तद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ।। स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् ।। ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा ।। स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ।। स यथा शंखस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय शंखस्य तु ग्रहणेन शंखध्मस्य वा शब्दो गृहीतः ।। स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ।। स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि

व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां गन्धानां नासिके एकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां संकल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां वेदानां वागेकायनम् ॥ स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः" ॥

अस्यार्थः—प्रकृते स्त्रिय उद्देश्यत्वात्तासां च पतिविषयकप्रेमातिशयवत्त्वात्तामेव प्रस्तुत्याह—न वा अरे पत्युरिति । तर्हि तत्त्वमूर्द्धाभिषिक्तस्य याज्ञवल्क्यस्यापि मैत्रेयीसापेक्षत्वाज्जायापदस्वारस्याद् "आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथवित्तं मे स्यादथ कर्म-कुर्वीय" इत्यादिश्रुतिदर्शनाच्च । पुत्रस्य प्रियत्वं स्यादत आह—न वा अरे पुत्राणामिति । जीविष्यति विनाधनेनेत्यनुपपन्नमिति न्यायादुक्तश्रुतिदर्शनाच्च । द्रव्यस्य प्रियत्वं सम्भाव्याह—न वा अरे वित्तस्येति । एषणाद्वयमुक्त्वा लोकैषणाप्रयुक्तं लोकानां प्रियत्वं व्यावर्त्तयिष्यन् तत्साहश्यधनकर्माधिकारितावच्छेदकजातेः प्रियत्वव्यावृत्यर्थमाह—नवा अरे ब्रह्मण इति, न वा अरे क्षत्रस्येति । प्राधान्यादुभयोपादानम्, लोकविशेषप्राप्त्यर्थं प्रयासदर्शनादाह—न वा अरे लोकानामिति । द्रव्यदेवतयोः कर्मरूपत्वाद्देवतायाः स्वनिर्वाहकत्वेन प्रियत्वमाशङ्क्याह—न वा अरे देवानामिति । यज्ञादेरिष्टसाधनस्यैव वेदैकगम्यत्वादाह—न वा अरे वेदानामिति । अत एव न कर्मणोऽपि निरुपाधिकं प्रियत्वमित्याह—न वा अरे यज्ञानामिति । तथापि स्थूलदेह एव प्रियः स्यादत आह—न वा अरे भूतानामिति । उपलक्षणं चैतदात्मभिन्ने निरुपाधिकप्रियत्वाभावस्येत्याह—न वा अरे सर्वस्येति । तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतमं यदयमात्मेति तत्पूर्वमपि श्रूयते । अत्र पुत्रादेरात्मसम्बन्धेन प्रियत्वं बोधयन्ती श्रुतिरात्मनः स्वाभाविकं प्रियत्वं बोधयति । "यदन्वये यत्प्रतीयते तद्विरहे तु न प्रतीयते तत्तस्य स्वाभाविकमिति व्युत्पत्तेः" इति **वर्द्धमानोपाध्यायाः** ।

ननु त्वन्मते आत्मनः सुखरूपत्वाभावात्कथं निरुपधीच्छाविषयत्वं तस्य स्यात्, सुखदुःखाभावान्यतरस्यैव मुख्यप्रयोजकत्वादिति चेत्, अत्राहुः; "नहि सुखमपि स्वरूपेण मुख्यं प्रयोजनं पुरुषान्तरीयसुखेऽपि तादृशेच्छापत्तेः, किं त्वात्मसम्बन्धित्वेनैव। अपिच आत्मन इदानीमप्यस्मदनुभवविषयत्वात्सुखरूपत्वं सा च तत्रानुभवादिदानीमपि सुखरूपेणानुभववारितश्च लोकमर्यादातीतत्वेनोत्तरानर्हत्वात्, मुक्तसंसारिणोरविशेषप्रसङ्गाच्च। दृष्टबलादेवान्यथानुपपत्या सुखानात्मकस्याप्यात्मन प्रियत्वमुपपन्नं सुखस्यापिप्रियत्वेऽन्वयव्यतिरेकयोरेव प्रमाणत्वाद्" इति **पार्थसारथिमिश्रादयः**।

नन्वनवच्छिन्नानन्दरूपेण संसारावस्थायां न प्रकाशते तदावरणहेतुभूतमूलाविद्यायाः सत्त्वादवच्छिन्नानन्दरूपेण तु प्रकाशत एव तदावरणहेतोरवस्थाज्ञानस्य विषयसम्बन्धजन्यवृत्त्या नष्टत्वादिति चेत्, सत्यम्; तथापि यस्यामवस्थायामवच्छिन्नानन्दरूपेणापि न प्रकाशते तदाप्यात्मनः प्रियत्वानुभवत्वादानन्दरूपत्वे मानाभावात्।

किञ्चावच्छिन्नानन्दरूपेण तस्य प्रियत्वेऽपि तादृशानन्दस्य ब्रह्मविषयत्वं भवद्भिरपि नोपगम्यते। प्रियतानवच्छेदकरूपेण तत्त्वन्त्वनुपयुक्तमेव। अत एव तर्कचरणे **मीमांसकै**रुक्तम्—

अथ संसारावस्थायामानन्दो न प्रकाशते।<br>
नह्यप्रकाशनं युक्तं स्वप्रकाशस्य वस्तुनः॥<br>
यद्यसौ न प्रकाशेत किं तर्ह्यन्यत्प्रकाशते।<br>
आत्मस्वरूप इति चेन्ननु चानन्द एव न॥<br>
तच्चेत्प्रकाशते नूनमानन्दोऽपि प्रकाशते।

प्रकृतमनुसरामः। द्रष्टव्य इत्यस्य निदिध्यासितव्यमित्यनन्तरमन्वयः। श्रवणमनननिदिध्यासनैरात्मा साक्षात्कर्त्तव्य इत्यर्थः। पाठक्रमादर्थक्रमस्य बलवत्त्वात्। अत एव "अग्निहोत्रं जुहोति यवागूं पचति" इत्यत्र पाठक्रमादग्निहोत्रहोमो द्रव्यान्तरेण, यवागूपाकस्तु पश्चाददृष्टार्थं इति प्राप्ते होमस्य द्रव्याकाङ्क्षत्वादयवागूद्रव्यस्य विनियोगापेक्षत्वाद् द्रव्यान्तरेण होमस्य यवागूद्रव्यस्य चादृष्टार्थत्वस्य कल्पनापेक्षया यवागूद्रव्येणाग्निहोत्रहोमकल्पनायामेव लाघवात्तथैवेति सिद्धान्तः। अत एव श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्य इति व्यत्ययेनैव श्रुतिपाठ आकरस्थः सङ्गच्छते। अत एव स्पष्टार्था स्मृतिः—

आगमेनानुमानेन ध्यानाभ्यासवशेन च।<br>
विधां प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम्॥

"उत्तमयोग आत्मतत्त्वसाक्षात्कारः" इति **उपायक्रतः**। तत्फलं तु मुक्तिः "न च पुनरावर्त्तते" इत्यर्थवादान्तरेण तस्य समर्थनात्। "तज्ज्ञात्वा मृत्युमत्येति नान्यः पन्था विमुक्तये" इति श्रुत्यन्तराच्च। "ईशं तं ज्ञात्वा अमृता भवन्ति" इत्यादि श्रुतेश्च।

केचिच्च श्रवणादीनामपि मुक्तिं प्रत्येव हेतुत्वं प्रकरणोपात्तानामुत्सर्गतः प्रधानफलान्वयात्। उत्तमयोगपदार्थश्चात्र मुक्तिरेव। नच साक्षात्काररूपसाधनावरुद्धे मोक्षरूपे फले साधनान्तराकाङ्क्षत्वं शङ्क्यम्; श्रवणावरुद्धे साक्षात्कारे त्वन्मतेऽपि मननिदिध्यासनयोः साधनत्वेनानन्वयापत्तेः। किमन्यत्साधनमित्याकाङ्क्षायाश्च तुल्यत्वात्। न चोत्पत्तिविशिष्टसाधनावरुद्धे उत्पन्नशिष्टानां नान्वयः, साक्षात्कारे तु श्रवणादीनामुत्पत्तिशिष्टत्वात्साम्यमेवेति वैषम्यम्; मोक्षं प्रत्यपि साक्षाच्छ्रवणादीनामुत्पन्नशिष्टत्वरूपवैषम्याभावादित्याहुः। अन्ये तु श्रवणं मनने तन्निदिध्यासने तत्साक्षात्कारे स च मुक्तौ हेतुः, विधेस्साक्षाद्धेतुत्वबोधकताया औत्सर्गिकत्वात्। व्यत्ययेन श्रुतिं पठद्भिराचार्यैरप्ययमेवार्थोऽनुमतप्रायः। एवञ्च साक्षात्कारहेत्वपेक्षायां निदिध्यासितव्य इति तद्धेतुत्वाकाङ्क्षायां च श्रोतव्य इतीति वदन्ति। अयं चैषामभिप्रायः प्रधानफलान्वयित्वमेकप्रकरणोपात्तानामुत्सर्गः स च बाधकबलात्त्यज्यते। अत एव "सोमेन यजेत" इत्यादौ सोमधात्वर्थादीनां प्राथमिकभावनासम्बन्धे समानेऽप्यदृष्टोत्पत्तिर्धात्वर्थादेव द्रव्यादीनां तु याग एव हेतुत्वम्। अन्यथाऽनेकादृष्टकल्पनापत्तेरिति **प्रतिपदाधिकरणे** सिद्धान्तः। अस्ति चात्र बाधकं "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ये "तद्विदुरमृतास्तेभवन्त्यथेतरे दुःखमेवोपयन्ति"।

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदादेवमविज्ञाय दुःखस्यान्तो भविष्यति॥

इत्यादेः श्रुतिसहस्रस्य स्मृतिपुराणानां चानेकेषामात्मतत्त्वसाक्षात्कारस्य मुक्तिहेतुत्वबोधकानां दर्शनात्। मिथ्याज्ञानध्वंसस्य तत्त्वसाक्षात्कारसाध्यत्वदर्शनाच्च। एवञ्च श्रौतसाधनावरुद्धे मोक्षे आकाङ्क्षोत्थापनद्वारकसाधनत्वकानां श्रवणादीनां न साधनत्वेनान्वयः कल्पयितुं शक्यः। अत एव "वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र स्वधावाक्योपात्तद्रव्यदेवतयोः वाक्यान्तरोपात्तद्रव्यदेवतापेक्षया शीघ्रोपस्थितिकत्वात्तत एव यागस्य निराकाङ्क्षत्वे वाक्यान्तरोपात्तयोर्न तत्र निवेश इति पूर्वकर्मणि वाजिनस्यानिवेशात् कर्मान्तरत्वमिति गुणे सिद्धान्तः। एवञ्च साधनान्तरव्यवच्छेदेन विकल्पस्य समुच्चयान्यतरप्रकारासम्भवाच्च।

  

नचात्र पक्षे वाक्यभेदो दोषः, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति प्रत्ययत्रयश्रवणेन विधेरावृत्त्यभावात्तन्निबन्धनवाक्यभेदानवकाशात् "समिधो यजति तनूनपातं यजति" इत्यादिवन्मुक्त्युद्देशेन सर्वविधाने च बाधकोक्तत्वात्। न च साक्षात्कारोद्देशेन श्रवणादीनां विधानमेवास्त्विति वाच्यम्; निदिध्यासनस्यात्मसाक्षात्कारोद्देश्येनैव विधेयत्वस्यावश्यं वाच्यतया श्रवणमननयोस्तदुद्देशेन विधातुमशक्यत्वात्। शब्दानुमानयोः साक्षात्कारजनकत्वानुपपत्तेः। ततश्च सकृत् प्रतिसंहितेन दृशिना साक्षात्कार-परोक्षयोर्बोधयितुमशक्यतया तदावृत्त्यैव शब्दानुमितिरूपोद्देश्यसमर्पणस्य वाच्यत्वाद्वाक्यभेदस्यावश्यकत्वात्।

ननु "वै पत्न्यवेक्षितमाज्यं भवति" इत्यादावीक्षतेश्चाक्षुषवाचित्व-निर्णयात् तदर्थकस्य दृशेरपि तथात्वात् साक्षात्कारार्थकत्वमपि दृशेर्लक्षण एव कल्प्यम्। तथा च परोक्षापरोक्षसाधारणं निश्चयत्वमेव लक्ष्यतावच्छेदकीकृत्य निश्चयोद्देशेन श्रवणादीनां विधिरस्त्विति चेत्; उद्देश्यानेकत्वनिबन्धनवाक्य-भेदस्य परिहारेऽपि विधेयानेकत्वनिबन्धनस्य तदवस्थत्वात्। वस्तुत उद्देश्य-क्यसम्पादनमपि दुर्घटमेव। तथा हि तदभावप्रकारकत्वे सति तस्य कारक-रूपं निश्चयत्वं न निदिध्यासनजन्यतावच्छेदकं "तमेव विदित्वा" इत्यादिना निर्विकल्पकात्मसाक्षात्कारस्यैव मोक्षजनकत्वावधारणेन सप्रकारकत्वस्य तज्जन्यतावच्छेदकत्वस्वीकारे प्रयोजनाभावात्। निर्विकल्पकस्य च शब्दादि-कार्यतावच्छेदकानाक्रान्तत्वादनुमितित्वस्य च निर्विकल्पकवृत्तित्वे उक्ति-सम्भवस्याप्यनवकाशाच्च। अथात्मान्यादिशेष्यकज्ञानमेव तमेवेत्यादि-श्रुतेरर्थः, अत आत्मनि वृत्तिधर्मप्रकारकज्ञानस्यापि मोक्षजनकत्वमबाधित-मित्यादिकमाश्रीयते; तथाप्युक्तनिश्चयत्वं जन्यतावच्छेदकं समूहालम्बन-साधारण्यात्। न चावच्छेदकपर्यन्तं श्रुतेर्न व्यापारः, स्वर्गकामो यजेदि-त्यादौ गङ्गास्नानादिजन्यस्वर्गव्यावृत्तवैजात्यस्य यागजन्यतावच्छेदकत्वस्य व्यभिचारपरिहाराय कल्पनेऽपि तद्रूपेण श्रुत्यानवबोधनात्। सामानाधिकरण्य-मात्रस्यैव सर्वत्र बोधनादिति वाच्यम्; तत्र स्वर्गत्वेनैव कामनावदत्रापि ब्रह्मनिश्चयत्वेनैव तदापत्तेः। फलतावच्छेदकरूपेणैव कामनायाः समुल्लिख्य-मानत्वात्। न चेष्टापत्तिः, आत्मान्याविषयकज्ञानं जायतामितीच्छयैव निदिध्यासने प्रवृत्तेरात्मनिश्चयमात्रस्येदानीमपि सत्त्वेन तत्साधारण-रूपेण तदिच्छानुदयादिच्छाविषयत्वावच्छेदकरूपवत्सिद्धेरिच्छाविरोधित्वात्। तस्मान्निदिध्यासनादेवात्मसाक्षात्कारः तस्माच्च दुःखाभावरूपो मोक्षः

मिथ्याज्ञानस्य प्रागभावासहवृत्तिमिथ्याज्ञानध्वंसश्च व्यापारः। दृष्टेनैवोपपत्तावदृष्टकल्पनानवकाशात्। न च निदिध्यासनस्य साक्षात्कारहेतुं "पश्यते निष्कलङ्कं ध्यायमानः" इत्याथर्वणश्रुतिदर्शनाच्च ध्यायमान इति न शानच्, ध्यायतेः परस्मैपदित्वात् चानश्, स च "ताच्छील्यवयोवचनशक्तिषु-चानश्" इति सूत्रात्। तेन च विजातीयप्रत्ययव्युदासेन सजातीयप्रत्ययानुवृत्तिरूपध्यानप्रवाहरूपनिदिध्यासनस्य स्पष्टमेव लाभात्। अत्र **वेदान्तिनः** "सुवर्णं हिरण्यं भार्यसुवर्ण एव भवति दुर्वर्णोऽस्य भ्रातृव्यो भवति" इत्यादाविवाव्यवहितपाठरूपसन्निधानात् साक्षात्काररूपफलसाधनत्वं श्रवणस्यैव विधिना बोध्यते, मनननिदिध्यासनयोस्तु श्रोतव्य इत्यनेन व्यवधानादर्शनरूपेष्टसाधनत्वबोधनासम्भवात्। प्रकरणेन श्रवणाङ्गतानिश्चयेन श्रवणरूपेष्टसाधनत्वमेव बोध्यते। तदुक्तं **विवरणाचार्यैः**—"श्रवणमङ्गिप्रमाणस्य प्रमेयावगमप्रत्यगात्मप्रवरणत्वं ब्रह्मात्मैक्यमात्राविषयकत्वं तदेकाग्रवृत्तिर्विपरीतभावनाशून्यब्रह्मात्मैक्याकारवृत्तिः मननासम्भावितत्वज्ञानरूपस्योपेक्षाज्ञानचित्तविक्षेपयोर्हेतोर्निवृत्यापेक्षात्मकब्रह्मात्मैक्यज्ञानेन ब्रह्मात्मैक्यमात्रविषयकसंस्कारः निदिध्यासने।

न च तस्य तस्य बाहुल्यरूपं तत्प्रयुक्तजातिविशेषरूपं वा दार्ढ्य सम्पद्यते ततो विपरीतसंस्कारनिवृत्त्या ··· भावनाशून्यब्रह्मात्म्यैक्याकारवृत्तिरिति भावः। ब्रह्मानुभवहेतुतामविद्यानिवृत्त्युपधायकानुभवप्रयोजकतामङ्गस्य प्रधानजन्यफलाहेतुत्वात्। न चोक्तदृढसंस्कारद्वारोक्तैकाग्रवृत्तिरूपोक्तानुभवप्रयोजकतामित्येव व्याख्यायताम्, तत्समानाकारकवृत्त्यन्तरकल्पने प्रयोजनाभावादिति वाच्यम्; विपरीतसंस्कारनिवृत्त्युत्पत्तिकाले जायमानायां वृत्तावप्रामाण्यशङ्कासंभवेन तच्छङ्काशून्यवृत्त्यन्तरस्यैवाविद्यानिवृत्युपधायकत्वात् फलोपकार्यङ्ग" इति। उक्तैकाग्रवृत्तिरूपो योऽप्रामाण्यशङ्काशून्यसाक्षात्काररूपस्य श्रवणफलस्य प्रयोजक उक्तोपकारस्तज्जनकाङ्ग इत्यर्थः। तस्माच्छ्रवणमेवाङ्गि।

न च सामर्थ्ये निदिध्यासनस्यैवाङ्गित्वमिति वाच्यम्; "बर्हिर्देवसदनं दामि" इत्यादि मन्त्रस्य बर्हिलम्बननिष्ठसाध्यतानिरूपितस्वनिष्ठसाधनताबोधकसामर्थ्यवत् साक्षात्काररूपे साध्ये निदिध्यासननिष्ठसाधनत्वबोधकसामर्थ्यस्य निदिध्यासनपदेदुर्वचत्वात्। मन्त्रादिरूपसाधननिष्ठसार्थप्रकाशनसामर्थ्यं शब्दसामर्थ्यविधया श्रुतिस्तत्रमानम। तत्र हि कर्मणः पूर्वमुक्तत्वात्तस्यैव श्रवणरूप[स्या ?]चारात्मकस्य तच्छब्देन परामर्शः। सामान्यरूपेण परामर्शेऽपि

योग्यताबलाच्छ्रवणात्मकभानम्, निषेधस्तु तदन्यकर्मपरः ज्ञानप्रसादशब्देन-मननाधीनबुद्ध्यैकाग्रस्थविशुद्धसत्त्वपदेन निष्कामकर्मानुष्ठानाधीनसत्त्वशुद्धे ध्यायमानपदे न निदिध्यासनस्योक्तत्वात्तत इति शब्देन पारिशेष्याच्छ्रवणस्यैव परामर्षौचित्यात्। तस्माद्ध्यायमान इति कर्तृकारकगतत्वेन श्रुतं ध्यानं कर्तृसंस्कारकतया श्रवणाङ्गनिःसंदिग्धवाक्यान्तरैस्तत इति पञ्चम्याचार-निस्संदिग्धे हेतुताबोधात्, श्रवणस्यैव साक्षात्कारहेतुत्वस्य श्रुतितात्पर्य-विषयत्वादिति। तत्रेदं वक्तव्यम्—तत इत्यस्य हेतुपञ्चम्यादेशतसिलन्तत्वमेव सन्दिग्धं "पञ्चम्यास्तसिल्" इत्यनेन पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्-विधानेऽपि हेतुपञ्चम्यन्तत्वनियमाभावात्। एवं तच्छब्दस्य सर्वनाम्नः श्रवणपरामर्शकत्वमपि दुर्घटम्, पूर्वोपस्थितपरत्वाच्छ्रवणस्य च पूर्वमनु-त्क्रान्तत्वात्।

न च कर्मपदेन तत्परामर्षः, आत्मसाक्षात्कारनिष्ठकार्यत्वप्रतियोगिक-कारणत्वाभाववतामेककर्मणां तत्रोपादानात्। निषेधः श्रवणान्यकर्मपरः इत्यस्य स्वयमेवोक्तत्वात्। श्रवणान्यपरत्वे निर्णीतकर्मपदस्य सामान्यरूपे-णापि श्रवणस्य यच्छब्देन परामर्श इति वक्तुमशक्यत्वात्, शब्दतात्पर्या-विषयस्य तत्प्रक्रान्तत्वे बीजाभावात्। अत एव "अचोरहाभ्यां द्वे" इतिसूत्रे तक्रकौण्डिन्यन्यायेन परपदस्य रेफभिन्नपरत्वात् "अनचि च" इत्यत्रापि तथैव। तेन हर्य्यनुभव इत्यादावपि न रेफस्य द्वित्वमिति **शाब्दिकाः**। स्वशब्दोपादानेऽपि पूर्वार्थपरत्वे च तच्छब्दस्य पूर्वानुपक्रान्तपरत्वे उक्तिसम्भवाभावात्। ततश्च-ध्यायमानपदोक्तनिदिध्यासनस्यैव तच्छब्देन परामर्षौचित्यात्तस्यैव च साक्षा-त्कारहेतुत्वं तत इत्यनेन बोध्यते। न च पूर्वोक्तपरामर्षकतच्छब्देन कथं पश्चादुक्तनिदिध्यासनपरामर्श इति वाच्यम्; आर्थिकपौर्वापर्यस्यैव तत्रोपयो-गेन शब्दतस्तस्याकिञ्चित्करत्वात्। अत एवानुकृतेस्तस्य चेत्यधिकरणे पूर्वोक्त-परामर्षित्वं तच्छब्दस्येत्यत्र "तेन रक्तं रागात्" "तस्यापत्यम्" इत्यादौ व्यभि-चारशङ्कायां **भामत्यामुक्तम्**—"प्रकृतेः परस्मिन् प्रत्ययेऽर्थभेदेऽन्वाख्यायमाने प्रातिपदिकप्रकृत्यर्थस्य पूर्ववृत्तित्वमस्ति" इति। व्याख्यातञ्च **कल्पतरौ** "प्रकृतेः परो यस्तस्मिन् योऽर्थविशेषस्तस्मिन् व्याख्यायमाने प्रत्ययाधस्तनप्रकृत्यर्थ-स्यास्ति प्रस्तुतत्वमिति ध्यायमानस्सन् ततस्तं पश्यतीत्यनुनये तस्यैव पूर्वत्वात् साक्षात्कारानन्तरं निदिध्यासनस्य प्रयोजनाभावेन परैरपि कर्तृसंस्कारकत्व-स्वीकारेण प्रथममेव तदन्वयस्य वाच्यत्वात् एकवाक्यान्तर्गतत्वेन निदिध्या सनोपस्थितेरन्तरङ्गतया तस्या एव नियामकत्वाच्च। एतद्वाक्यार्थबोधका-

लेन कर्मणेत्येतद्वाक्यार्थोपस्थितेरनपेक्षितत्वात्। अत एव मनोमयः प्राणशरीर इत्यत्र प्राणः शरीरमस्येति सर्वनामार्थगर्भस्य बहुव्रीहेः सन्निहितावलम्बित्वात्स्ववाक्योपात्तस्य मनोमयादेर्विकारप्राचुर्याद्यर्थकत्वेनानवधारितत्वाद्धर्मिविशेषसमर्पकत्वानुपपत्त्या शमविधिपर "सर्वं खल्विदं ब्रह्म" इतिवाक्योपक्रान्तब्रह्मैव समासार्थ इतिसिद्धान्तः। तदुक्तम्—

समासः सर्वनामार्थः सन्निकृष्टमपेक्षते।
तद्धितार्थोऽपि सामान्यं नापक्षेपो निवर्तकः॥

तस्मादपेक्षितं ब्रह्म ग्राह्यमन्यपरादपि।
तथा च सत्यं सङ्कल्पप्रभृतीनां यथार्थता॥ इति।

प्रकृते च ध्यायमानपदस्य निदिध्यासनपरतायाः उभयसम्मतत्वादेकवाक्योपात्तत्वाच्च तस्यैव परामर्शे बाधकाभावात्। एवञ्च तत इत्यस्याभावेऽपि ध्यायमानस्तं पश्यतीत्येतावतापि मलिनं ते वपुः स्नाया इत्यादाविव सिद्धसाध्यसमभिव्याहारन्यायेन निदिध्यासनात्मसाक्षात्कारयोर्हेतुहेतुमद्भावलाभः सुघटः। प्रागेव तु तत इत्यनेन श्रुत्यैवेति न किञ्चिदनुपपन्नम्। एवञ्च व्यवहितपाठरूपसन्निधानेन श्रवणस्य साक्षात्कारहेतुत्वं बोधयितुं शक्यम्, श्रुतेः सर्वतो बलवत्त्वात्। एतेन दर्शपौर्णमासयोः "श्रुते हस्ताववनेनिक्तं उपलराजीस्तृणाति" इत्यत्राव्यवहितपठितेप्युपलराजिस्तरणमात्रे हस्तावनेजननाङ्गमपि तु योग्यत्वात् तदुत्तरकरिष्यमाणेष्वपीति स्थितम्। तृतीयप्रथमे आनन्तर्यमचोदनेत्यधिकरणे "तस्मादत्रापि सन्निधिना श्रवणस्य न साक्षात्कारहेतुत्वम्" इत्यनूद्य यद्दूषणमुक्तं हस्तावनेजस्य कर्तृसंस्कारकर्तृत्वात् कर्तुश्च प्रयोगान्वयित्वेन तद्द्वारा करिष्यमाणसर्वकर्माङ्गत्वं युक्तम्। प्रकृते तु प्रकरणस्य फलान्वयात्पूर्वमसिद्धत्वाल्लिङ्गस्य च मननादौ सत्त्वेऽपि सन्निधानसहकृतलिङ्गस्य बलवत्त्वेन श्रवणे दर्शनान्वयिनियामकत्वसम्भवात्। अत एव "एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते परा वा एतस्यायुः प्राण एति योऽश्रुं गृह्णाति" इत्यनारभ्य श्रुतेः अश्रुमदाभ्यमिति यागनामनी, अंशौ यजत्यश्रवणेऽपि गृह्णाति चोदनासामान्येन ज्योतिष्टोमप्रकृतिकत्वात्तदीयद्रव्यदेवतासम्बन्धेन यागत्वसिद्धिसम्भवात्। तथा च नाम्नाभेदाज्ज्योतिष्टोमाद्भिन्नावेतौ यागावित्याशङ्क्य अदाभ्यस्याव्यवहितपाठाद् ग्रहणेनैवान्वयाद्यागसामानाधिकरण्याभावेन संज्ञाया भेदकत्वायोगात्। उपांश्वन्तर्यामादिग्रहणापेक्षया च भेदस्य ग्रहणसामानाधिकरण्येन दृष्टत्वात्। अंशौ च यजतेरप्यश्रवणाद् ग्रहणस्य संस्कारत्वेऽपि नामसम्भवात्। ज्योतिष्टोमाङ्गत्वेन ग्रहण एव विधीयेते इति द्वितीयतृतीयेऽद्रव्यत्वात्केवले

कर्मविशेषस्यादित्यधिकरणे सिद्धान्तितमित्यादि तत्सर्वमपास्तम्। अपि च शब्दस्य साक्षात्कारकरणत्वबाधादपि नश्रवणस्याङ्गित्वम्। तदुक्तमुदयनाचार्यैः "तस्मादेव वेदान्तिनो वाक्यार्थज्ञानादेव मुक्तिमिच्छन्ति ते प्रष्टव्याः–किं वस्तुसन्त्युपायोपेयभावमभ्युपगमस्य प्रवृत्तिः सम्वृत्तिसन्तं वा? आद्ये अद्वैतसिद्धान्तक्षतिः, कार्यकारणभावस्य भेदाधिष्ठानतया तयोः पारमार्थिकत्वं भेदस्यापीति पारमार्थिकत्वप्रसङ्गात्। द्वितीये तु किमविशेषणप्रवृत्तिर्यथासंवृत्तिव्यवस्थं वा? आद्ये,भोगिनोऽप्यपवृज्येरन्। द्वितीये तु न शब्दाद्वाऽनुमानिकाद्वा तत्त्वज्ञानादैन्द्रियकव्यामोहविगमः। किन्तर्हि साक्षात्कारादेव इष्ट इति तथैव तदर्थिनः प्रवृत्तिर्युक्ता? न च वाच्यं वाक्यादेव साक्षात्कारोदय इति तस्य केवलस्य सामर्थ्यानुपलम्भात्। यदि तु स्वसंविदितरूपतया किं तत्रध्यानादिकमपूर्वमाधास्यतीत्युच्यते। तदा श्रुतेरपि वैफल्यमनेन न्यायेन। यदपि भौतदशकनदीसन्तरणमुदाहृतं तथापि न केवलेनैव वाक्येन साक्षात्कारः, किन्तु चक्षुरादिनैव। अत्रापि मनसा सहकृतेन भविष्यतीति चेत्; अनेकधा श्रुत्युक्तेऽपि(?) सत्यपि पटीयसि मनसि ब्रह्मसाक्षात्काराभावात्। "तत्कस्य हेतोः भौतानामिव शरीरे दृढतरस्य चाक्षुषस्याभ्यासस्य मुमुक्षोर्मानसस्याप्यभावात्। तस्मात्तदर्थमभ्यासमेव शरणम्" इत्यादि। **न्यायभास्करकृद्भिरप्युक्तम्**—

"यत्तु भूतदशकनदीसन्तरणोदाहरणं तत्र शाब्दज्ञानं तद्बोधितो दृढतरशरीरसाक्षात्कारजः संस्कारो वा सहकारी चाक्षुषे न, शब्दाविरोधात्। अत्रापि तदभ्यर्थनसिद्धं दृढसंस्कारहेतुनिरन्तरदीर्घकालादरोपासनीयंसाक्षात्कारिफलं निदिध्यासनम्" इत्यादि।

यत्तु "तद्वास्य विजज्ञौ तमसःपारं दर्शयति वेदान्तविज्ञानसुनिश्चितार्था" इत्यादिकं शब्दस्यापरोक्षज्ञानजनकत्वे मानम्, अस्योद्दालकस्य तत्तस्मात्तत्त्वमसीत्याद्युपदेशादात्मानं विज्ञातवान् श्वेतकेतुरिति शेषः। ततश्च फलजनकापरोक्षज्ञानस्योपदेशमात्रसाध्यत्वलाभः। तमसः पारमज्ञानप्रयुक्ताद्विलक्षणं सर्वाधिष्ठानमनवच्छिन्नानन्दं दर्शयति–साक्षात्कार इति। "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति श्रुतेः। वेदान्तेत्यादिवाक्ये च शाब्दज्ञानस्य विपदेन विशेषविषयत्वस्य लाभात्। सुपदेनापरोक्षत्वमेवोक्तम्। न च विजज्ञावित्यस्य परोक्षपरत्वं दर्शयतीत्युक्तवाक्यस्वारस्येन साक्षात्कारपरत्वात्। न च ग्राममार्गोपदेष्टरि ग्रामं दर्शयति वदुपचारात्तदुपपत्तिः, मुख्यत्वे बाधकाभावात्। उपदेशातिरिक्तकारणस्य नारदसनत्कुमाराख्यापिकायामप्रतीतेश्चेत्यादि, तन्न; भूय एव भगवान्विज्ञापयत्विति

पूर्वं वाक्यानुसारेण विजज्ञावित्यस्य शाब्दपरोक्षपरत्वात् । अन्यथा तत्त्वमसीत्यादेर्नवकृत्व उक्ततया पूर्वोक्ताष्टपर्यायेषु तद्वाक्यात्परोक्षं नवमे तु प्रत्यक्षमिति वैषम्यात् । न च पूर्वत्रापि तत्त्वमसीत्यस्मात्प्रत्यक्षमेवेति वाच्यम्; अभ्यासवैयर्थ्यापत्तेः । नचाप्रामाण्यशङ्कानिवृत्यर्थमभ्यासः; भवदभिमतनिर्विकल्पकसाक्षात्कारे तदसम्भवादप्रामाण्यादिज्ञानस्य सप्रकारकज्ञानविशेष्यकत्वनियमात् । भावरूपाप्रामाण्यस्य निर्विकल्पके शङ्कानर्हत्वात् । उक्ताभावात्मकप्रामाण्यस्य ज्ञानानुपयोगात् । तदुक्तम्—असम्भावनाविपरीतभावने च निर्विकल्पके न सम्भवतः प्रमाणे सम्भवाच्चेति ।

यत्तु निर्विकल्पकेऽपि संशयत्वं सुलभं तं पश्यामि तमनुमिनोमीत्यादिधीसिद्धलौकिकविषयत्वविधेयत्वादिवत्संदेह्मीत्यादिधीविषयताविशेषनिरूपकत्वस्यैव संशयत्वात् तन्नियामकाश्चाननुगताः । शक्तिविशेषाविशिष्टत्वेनानुगता वा दोषाः विशेषणीभूतकोट्योरन्यतरस्य विशेष्यतावच्छेदकव्यापकत्वविशिष्टसम्बन्धेन विशेषणता यत्र ज्ञाने तत्त्वं तु न संशयत्वम्, अनन्तवस्तुघटितत्वेन सन्देह्मीति सर्वजनसिद्धानुभवानुपपत्तेः, भावमात्रकोटिकसंशयसाधारण्याभावाच्च । अथवा विचारोत्तरमेव ज्ञानमविद्यां निवर्त्तयति लौकिकसूक्ष्मार्थोपदेशजन्यज्ञाने तथैवानुभवात्, "वेदान्तविज्ञानसुनिश्चितार्था" इत्यादि "परिमुच्यन्ती" इत्यन्तश्रुतेश्च । निवर्त्तकावच्छेदकं तु विचारनिर्वर्त्यस्य तात्पर्यसंशयस्य तदाहिताप्रामाण्यविरहेण विशिष्टसाक्षात्कारत्वं शक्तिविशेषो वा ? तत्राद्येऽप्रामाण्यज्ञाननिवर्त्तकत्वेन, द्वितीये च शक्तिविशेषसम्पादकत्वेन विचारस्योपयोग इति । तच्चिन्त्यम्; संशयत्वस्य विषयिताविशेषरूपत्ववादिभिरपि सप्रकारकज्ञान एव तदभ्युपगमाद्विशेष्यताविशेष्यरूपस्य संशयत्वस्य विशेष्यतावच्छेदेनान्यतरकोटिकप्रत्यक्षस्यैवोपगमात् । विशेष्यतावच्छेदकसामानाधिकरण्यमात्रेणोभयकोटिकज्ञानस्य च समुच्चयान्तर्भावात् । अत एव विशेष्यतावच्छेदकावच्छेदेनैककोटिप्रकारकज्ञानस्य तादृशविषयिताविशेषनियामकत्वं तत्र स्वीक्रियते, तेन दोषविशेषस्य नियामकत्वकल्पनं चिन्त्यम्; निर्विकल्पकसंशयस्य प्रामाणिकत्वे सत्येव तत्साधारणनियामकस्य कल्प्यत्वात् संशयात्मकनिर्विकल्पकस्य कुत्राप्यनङ्गीकारात्, संदेहानुव्यवसायेन सन्देहस्य सप्रकारकत्वेनैवोल्लेखात् । "अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाको-

वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतं ह्येव मे भगव दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति" तदनुरोधेनोपसंहारस्थस्य तमसः पारं दर्शयतीत्यस्यापि ज्ञापनार्थत्वध्रौव्यात् । वेदानां वेदं ज्ञापकं व्याकरणं पित्र्यं श्राद्धकल्पं राशिं गणितं दैवमुत्पातज्ञानं निधिं महाकालभूतादिनिधिशास्त्रं वाकोवाक्यं तर्कशास्त्रमेकायनं नीतिशास्त्रं देवविद्यां निरुक्तं ब्रह्मविद्यां शिक्षाकल्पछन्दश्चितीः भूतविद्यां भूततन्त्रं क्षत्रविद्यां धनुर्वेदं नक्षत्रविद्यां ज्योतिषं सर्पविद्यां गारुडतन्त्रं देवजनविद्यां गन्धर्वोक्तयुक्ति स्पष्टमन्यत् । नचोक्तव्याख्याने क्षोयतीत्यस्य गौणत्वं तत्समर्थाचरणे णिप्रत्ययोपगमात् "कारीषोऽग्निरध्यापयति" इत्यादौ तदनुकूलव्यापारपरतयैव व्याख्यानात् । वेदान्तविज्ञानेत्यस्य त्वयमर्थः—उपनिषद्वाक्यानां यद्विज्ञानं तात्पर्यनिर्णयः श्रवणमिति यावत् तेन सुष्ठ्वप्रामाण्यशङ्काशून्यत्वेन निश्चितोऽर्थ आत्मरूपो यैस्ते । तथा च श्रवणोत्तरमननलाभात् श्रवणस्य शेषित्वं दूरापास्तमेव ।

यत्तु वेदान्तवाक्याद्विशेषविषयकमद्वितीयत्वाद्युपलक्षणेन व्यावृत्ताधिष्ठानमात्रविषयकं ज्ञानं तेन सुनिश्चितस्तदभिन्नस्यापरोक्षस्यास्याप्रामाण्यज्ञानानास्कन्दितस्य विषयीकृते वेदान्तवाक्यार्थोऽखण्डब्रह्मात्मैक्यरूपो यैस्ते तथेत्यर्थ इति, तच्चिन्त्यम् ; वेदान्ताद्विज्ञानमित्यत्र पञ्चमीसमासस्यानुशासनविरहात् । योगविभागादिकल्पने च मानाभावात् । मन्मते च कर्मषष्ठ्यन्तत्वेन च तत्समासस्य प्रत्यक्षानुशासनसम्मतत्वात् । तदभिन्नस्येत्यपि न युक्तम्, अभेदार्थकतृतीयान्तस्य समासविध्यभावात् । एतेन क्रियाविशेषणत्वेन विज्ञानपदस्य द्वितीयान्तत्वशङ्कापि निरस्ता, तत्रापि समासस्य दुर्लभत्वात् । अपरोक्षत्वस्य सुशब्दार्थत्वमप्ययुक्तं तात्पर्यग्राहकमानान्तराभावाच्छब्दगत्या च तदलाभात् । एतेन निश्चितपदेनैवाप्रामाण्यशङ्काविरहादिलाभात् सुपदमपरोक्षपरमेवेत्यपि परास्तम् । अत एव निर्णयत्वेन प्रतिबन्धकतायामप्यप्रामाण्यज्ञानाभावमपि निवेशयन्ति । यदपि आचार्यवान्पुरुषो वेदेत्यनेनाचार्योपदेशात्तत्त्वज्ञानवन्तमुक्त्वा तस्येत्यादिनोक्तज्ञानादेव कैवल्योक्तरीतिस्तदपि चिन्त्यम् ; "तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेनां दिशं गन्धारा एतां दिशं व्रजेति । स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्यतैवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इत्यादि **छान्दोग्ये** दृष्टान्तपर्यालोचनया उपदेशस्य-

पारम्पर्येण ब्रह्मप्राप्तिहेतुत्वस्यैव लाभात् । एतेन तमसस्पारं दर्शयतीत्यस्यापि पूर्वोक्तार्थो व्याख्यात इति दिक् ।

एतेनापि वेदान्तबोध्यस्य ब्रह्मातिरिक्तस्याप्येवमपरोक्षापत्तिः अर्थपदस्य मुख्यतस्तात्पर्यविषयपरत्वाद्वेदान्तबोध्यतायाः ब्रह्ममात्रपर्यवसानत्वाच्चेत्यपि परास्तम् । इन्द्रियशरीरादीनां प्रत्यक्षपरोक्षजनकत्वस्य वेदव्यवस्थाप्यत्वविरहाच्च मानान्तरेण ब्रह्मणो वेदजन्यप्रत्यक्षविषयत्वासिद्ध्यार्थपदस्येत्यादेरत्यन्तमेवायुक्तत्वात् ।

यत्तु अपरोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति, अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववदिति, तदसत्; अनुमितित्वमुक्तवृत्त्यनुमितिनिष्ठात्यन्ताभावाप्रतियोगित्वादित्याद्याभासवदप्रयोजकत्वात् । अपरोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानावृत्ति घटमानयेत्यादिवाक्यजन्यज्ञानावृत्तित्वात्, स्मृतित्ववदिति प्रतिरोधाच्च । यद्यपि ज्योतिष्टोमादिवाक्यजन्यज्ञानवृत्तित्वमप्युक्तहेतुता स्यादित्याशङ्क्योक्तं तज्ज्ञानस्यापरोक्षत्वमनुष्ठानार्थं फलार्थं वा कल्प्यम् ? नाद्यः, परोक्षज्ञानादेव तत्सम्भवात्तत एवानुष्ठानात्फलासिद्धेर्न द्वितीयोऽपीति, तदप्यसत्; अत्रापि श्रवणादेः साक्षात्कारिभ्रमनिवृत्तौ मानाभावेन कल्पकाभावात् । यद्यपि विमतः शब्दो नापरोक्षधीहेतुः शब्दत्वादिति प्रतिसाधनमाशङ्क्य दशमस्त्वमसीत्यादावेव व्यभिचारादिति, तदप्यसत्; तत्रापि चक्षुषैव प्रत्यक्षोदयात्, अन्धस्य तत्र साक्षात्कारोदये मानाभावात् । एवं तमस्यपीति बोध्यम् । तथोक्तं **कल्पतरुकारैः** "शब्दस्तु नापरोक्षप्रमाहेतुः क्लृप्तः प्रमेयापरोक्षयोग्यत्वात्प्रमायाः साक्षात्कारत्वे देहात्मभेदविषयानुमितेरपि तदापत्तिः, दशमस्त्वमसीत्यत्रापि तत्सविवाद[त्वा]देव साक्षात्कारः, अन्धादेस्तु परोक्षधीरेव" इति ।

यत्तु निदिध्यासनरूपभावनाप्रकर्षजन्यत्वे साक्षात्कारस्य कामातुरकामिनीसाक्षात्कारवदप्रमात्वापत्तिः । न च "वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः मूलप्रमाणदार्ढ्येन भ्रमत्वं प्रपद्यते" इति **कल्पतरुरीत्या** निस्तारः, मूलप्रमाणस्य निदिध्यासनप्रयोजकवेदान्तवाक्यस्य दार्ढ्यान्निर्दोषत्वादिति तदर्थादितिवाच्यम्; तदपेक्षया शब्दस्य साक्षात्कारकरणत्वकल्पनाया एव युक्तत्वादिति, तच्चिन्त्यम्; अक्लृप्तकल्पनापत्तेः । न च शब्दस्य प्रमाकरणत्वं क्लृप्तमिति वाच्यम्; कार्यतावच्छेदकभेदेन करणत्वभेदात्, साक्षात्कारत्वावच्छिन्नकार्यतानिरूपितस्य करणत्वातिरिक्तस्यैव कल्प्यत्वात् । चक्षुरादेस्तु चक्षुरादिप्रमाकरणत्वस्य क्लृप्ततया तत्कार्यतावच्छेदकाक्रान्ताभावात् । चाक्षुषत्वावच्छिन्नं प्रत्यपि तथा-

  

त्वमिति विशेषः। तस्माच्छब्दो न साद्ययादिप्रमाकरणं ज्ञायमानकरणत्वाल्लिङ्गवत्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्नांशतः सिद्धसाधनं दोषः ज्ञायमानत्वप्रयुक्तकारणताकत्वस्य च सर्वसम्मतत्वान्न भागासिद्धिः, अन्यथान्येषामपि ततो ब्रह्मात्मैक्यसाक्षात्कारप्रसङ्गात्। किञ्च शब्दस्य स्वभावेन प्रत्यक्षजनकत्वे घटमानयेत्यादावतिप्रसङ्गः नैमित्तिकत्वे तु निमित्तं दुर्वचम्, विषयापरोक्षत्वस्य तत्त्वे दोषस्य पूर्वदर्शितत्वात्। अर्थस्य चापरोक्षत्वं न तावदपरोक्षबुद्धिरूपत्वं ब्रह्मान्यस्मिन्नभावात्। नाप्यपरोक्षव्यवहारविषयत्वम्, अपरोक्षार्थविषयकत्वस्यैव व्यवहारनिष्ठापरोक्षत्वस्य वाच्यत्वादन्योन्याश्रयात्। नाप्यपरोक्षोऽयमित्याकारकत्वं व्यवहारस्यापरोक्षत्वं शाब्दवृत्तेरपरोक्षव्यवहारविषयकत्वेनाज्ञाननिवर्त्तकत्वम्, अज्ञाननिवृत्तौ च सत्यां यथोक्तरूपं व्यवहारस्यापरोक्षत्वमित्यन्योन्याश्रयात्। नाप्युक्तव्यवहारयोग्यत्वं व्यवहितघटे शब्दादपरोक्षप्रसङ्गात्। नाप्यपरोक्षज्ञानविषयत्वमेवार्थस्यापरोक्षत्वं वाच्यम्; तत्र ज्ञानपदं यदि यस्य ज्ञानस्यापरोक्षत्वनिर्वचनाय विषयापरोक्षत्वं निरुच्यते तज्ज्ञानव्यक्तिपरं तदान्योन्याश्रयः। अपरोक्षविषयत्वेन तज्ज्ञानस्यापरोक्षतज्ज्ञानविषयत्वेन चार्थस्यापरोक्षत्वमित्यत्र पर्यवसानात्। अथ यत्किञ्चिज्ज्ञानपरं तर्हि स्वर्गादेरपि केषाञ्चिदपरोक्षतया तत्रास्माकमपि शब्दादपरोक्षधीप्रसङ्गात्। यदि तत्पुरुषीयज्ञानपरं तदा भिन्नकालीनं ज्ञानमादायातिप्रसङ्गः। अथ तत्कालीनत्वस्यापि निवेशः, तथाप्यग्न्यादिप्रत्यक्षकाले शब्दाल्लिङ्गाद्वापरोक्षज्ञानं स्यात्।

यत्तु शाब्दं लैङ्गिकं वा बोधमादाय यस्य बोद्धव्यं तदभिन्नार्थविषयकज्ञानत्वमेव तस्यापरोक्षत्वम्, तदभिन्नत्वं च मनोऽनवच्छेदकप्रयुक्तो यो मे भेदस्तच्छून्यतावच्छेदकत्वं तेन घटादिप्रत्यक्षकाले घटादौ प्रमात्रभेदेऽपि न क्षतिः। यद्विषयावच्छेदेन चिति वृत्तिरूपेण परिणतमनःसम्बन्धस्तद्विषयावच्छेदेनैव पूर्वसत उक्तभेदस्य नाशाभावेन पटतासंपत्तेः। घटप्रत्यक्षकाले च चिति उक्तमनःसम्बन्धाभावेन पटावच्छेदेन सत उक्तभेदस्य नाशाभावेन पटस्योक्तशून्यतावच्छेदकत्वाभावात्। पुरुषान्तराभिन्नविषयज्ञानस्यापरोक्षत्ववारणाय तन्मनोऽवच्छिन्नचिद्भेदविषयतावच्छेदकविषयज्ञानत्वं तन्मनोवच्छिन्नज्ञानस्यापरोक्षत्वं वाच्यम्। इच्छादिवारणाय ज्ञानत्वनिवेशः। विषयस्यापरोक्षत्वं तु नोक्तज्ञानविषयत्वं धर्माधर्मादौ तदापत्तेः। किन्त्वनावृतत्वमित्यग्न्यादिप्रत्यक्षकाले शब्दादिनाप्यपरोक्षोत्पत्ताविष्टापत्तिरेवेति, तदसत्; एतादृशसाक्षात्कारत्वस्य तद्व्यक्तिघटितत्वेनानुगतप्रतीत्यनुपपादकत्वानावृत्तिचिद्रूपत्वे

ब्रह्मण्य[णो]पि तादात्म्येनैव विषये तद्विषयकत्वेन च वृत्तावपरोक्षव्यवहार इत्यनेकाननुगमदोषस्य च दुर्वारत्वात्। मनःप्रभृतीन्द्रियपदार्थघटितत्वेन तदनुपस्थितौ चाक्षुषादिविषयकानुव्यवसायविषयत्वानुपपत्तेश्च। अननुगमे च जन्यजनकत्वावच्छेदकत्वाभावाच्च।

यत्त्वनावृत्यत्वस्यैवाखण्डाभावस्य प्रतियोगिविशेषितरूपानवच्छिन्नस्यापि हेतुत्वसंभवश्चेति, तच्चिन्त्यम्; अभावस्य तद्व्यक्तित्वेन हेतुत्वापेक्षया भावहेतुत्वे लाघवाच्चेत्यास्तामप्रासङ्गिकम्। एतेन "मनसैवानुद्रष्टव्यम्" इति मनसो ब्रह्मप्रत्यक्षकरत्वमाशङ्क्य "यन्मनसा नु मनुते" इत्यनेन तन्निषेधः।

न च "यतो वाचो निवर्त्तन्ते" इति शब्दस्यापि तत्करणत्वं निरुद्धमिति वाच्यम्; तस्य शक्त्या तद्बोधकत्वनिरासमात्रतात्पर्यकत्वात्। "चकितमभिधत्ते श्रुतिरपि" इति न्यायात्। चकितं शक्तिं विना अभिधत्ते बोधयतीत्यर्थात्। तन्त्वौपनिषदमेव पुरुषं पृच्छामि इति तत्र साधुरित्यर्थकप्रत्ययान्तौपनिषदशब्देन तदन्याकरणकत्वस्य ब्रह्मसाक्षात्कारे लाभाच्च। न च यन्मनसेत्यस्यायुक्तमनोविषयकत्वं कल्प्यं मनसः करणत्वं तज्जन्यज्ञानस्य साक्षात्कारित्वञ्चेत्युभयकल्पनापेक्षया क्लृप्तकरणकत्वशब्दजज्ञानस्य साक्षात्कारित्वमात्रकल्पने लाघवादित्यादिकमप्यपास्तम्। करणत्वस्य प्रागुक्तरीत्या भिन्नस्यैव कल्प्यतया लाघवाभावात्। मनसोऽपि करणत्वस्य तार्किकसिद्धत्वाच्च मनसैवानुद्रष्टव्यमित्यात्मसाक्षात्कारित्वावच्छिन्नकार्यत्वप्रतियोगिककरणत्वस्यापि श्रौतत्वाच्च। औपनिषदमित्यस्य च निदिध्यासनापेक्षितधीघटकतयान्यथासिद्धत्वात्। औपनिषदपदस्य "तत्र साधुः" इत्येतदर्थकप्रत्ययान्तत्वे मानाभावाच्च। उपनिषदा गृह्यत औपनिषद इत्येव व्युत्पत्तिसम्भवात् ग्रहणस्य च चक्षुषा गृह्यते चाक्षुषं रूपमित्यादौ साक्षात्कारात्मकत्वेऽपि प्रकृते तादृशसमानाभावेन तत्परत्वपर्यवसानानुपपत्तेः। अत एव **मन्वर्थमुक्तावल्यां व्यासः**—

नैवास्यैव चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः।
मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः॥

**भारते सनत्सुजातवाक्यम्**—

न दर्शने तिष्ठति रूपमस्य पश्यन्ति चैनं सुविशुद्धसत्त्वाः।
स्थितो मनीषी मनसाभिपत्य तं भजेयुरमृतास्ते भवन्ति॥

अभिपत्य प्राप्य साक्षात्कृत्येति यावत्। एतेन "तद्धेत्यादिश्रुतेः क्वापि मनस्तदयोगतः शब्दत्वादनुमितेर्बाधाद्व्यभिचारादनुपस्थितेः" इति **चित्सुखाचार्योक्तं** परास्तम्।

  

शब्दा[ध्याहार]विरहाच्छ्रुतेरर्थान्तरोदयात् ।
मनसः श्रुतियुक्तिभ्यामात्मप्रत्यक्षहेतुता ॥

इति तत्र प्रत्युत्तरस्य पठनीयत्वात् । इत्यादि बहुतरमूहनीयम् । तस्माच्छ्रवणस्य शेषित्वं निष्प्रमाणकमिति स्थितम् । इदमप्यत्रानुसन्धेयम्—यदपि विचाररूपं श्रवणं शब्दज्ञाने न करणं वेदेन धर्म इव ब्रह्मणि प्रमीयमाणेऽपि विचारस्य शब्दरूपे तज्ज्ञानरूपे वा करणे इतिकर्त्तव्यतामात्रत्वादनुमाने तर्कवत्, इति चेत्, न; शब्दशक्तितात्पर्यावधारणं हि विचारः, अवधृतिशक्तितात्पर्यकश्च शब्दः करणम् शक्तीत्यभेदेन तात्पर्यविशेषणमवधृतिशाब्दप्रमाजननानुकूलशब्दरूपतात्पर्यक इति यावत् । अपौरुषेये वेदे पुरुषेच्छारूपभावात् । अतो विचारस्य करणतावच्छेदकघटकत्वेन नेतिकर्तव्यतामात्रत्वम् । तदुक्तं **विद्यासागरेण**—"अनुमितौ लिङ्गविशिष्टज्ञानवत् तात्पर्यावधारणविशिष्टशाब्दज्ञानं करणम्" इति । यथाहि लिङ्गज्ञानत्वेन करणताग्राहकं प्रमाणं ज्ञायमानलिङ्गत्वेन तां ग्राहयति न तथैव शब्दज्ञानतात्पर्यावधारणत्वेन करणताग्राहकमवधृततात्पर्यकशब्दज्ञानत्वेऽपि विशिष्टधर्मिकमानस्य बाधकम्, विना विशेषणे विधेयग्राहकत्वनियमात् । न च ज्ञायमानलिङ्गस्यातीतादेः कथमनुमितिहेतुत्वम्, कार्याव्यवहितपूर्वकाले तदसत्त्वादिति वाच्यम्; ज्ञानसम्बन्धेन तदुपपत्तेरन्यत्र कृतत्वात् ।

न च तात्पयभ्रमनिरासोपक्षीणस्य तात्पर्यावधारणस्यान्यथासिद्धिरेव करणत्वबाधिकेति वाच्यम्; एवं सति निराकाङ्क्षत्वादिभ्रमनिरासकत्वमात्रेणाकाङ्क्षादेरपि करणकोटिबहिर्भावापत्तेः । ततश्चाकाङ्क्षादिज्ञानाभावे विपरीतव्युत्पन्नस्येव तात्पर्यज्ञानाभावे शुकादिवाक्यश्रोतुशशाब्दबोधो .... वाच्यम्; स्वविशिष्टशाब्दबोधे साकाङ्क्षज्ञानत्वस्येव तात्पर्यज्ञानस्यापि हेतुत्वमन्वयव्यतिरेकबलात् । यदभावाविषयकौ यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितो व्याप्तेरिव व्याप्तेश्चेति । न च वाक्यार्थस्यापूर्वत्वात्प्रथमं प्रमाणान्तरेणानिश्चयाच्छाब्दनिश्चये सत्येव वाक्यार्थघटिततात्पर्यनिश्चयस्तत्सत्त्वे च शब्दनिश्चय इत्यन्योन्याश्रयः । सामान्यतः पदार्थत्वरूपेण तन्नियमसम्भवात् । गां देहीत्यादावन्वययोग्यनानार्थपदे तात्पर्यज्ञानस्यैव नियामकत्वात् । तस्माद् विपरीतज्ञानोत्तरप्रत्यक्षे विषयदर्शनस्येव तात्पर्यसंशयहेतुर्यस्तात्पर्यसंशयस्तदवारकत्वमात्रेण तात्पर्यनिर्णयस्य शाब्दनिर्णयोपयोगित्वमिति स्वीकारात् । ततश्च न तावच्छाब्दत्वावच्छिन्ने तस्य हेतुत्वं शुकादिवाक्यजन्यबोधे व्यभिचारात् । नापि स्वविशिष्टशाब्दत्वावच्छिन्ने

उक्तरीत्यान्यथासिद्धेः, यत्संशयव्यतिरेकनिश्चयौ यत्प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति व्याप्तेश्च प्रकृतेऽनवकाशात्। तात्पर्यसंशयस्य शाब्दकारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकतायामेव तदभ्युपगमात्। अन्यथा योग्यताज्ञानस्यापि निश्चयत्वेन हेतुत्वापत्तेः। अत एव फलज्ञानादावपि तद्व्यभिचार आकरे स्पष्टः।

न च शाब्द[तात्पर्य?]निर्णयत्वावच्छिन्नस्यापादयितुमशक्यत्वात् [मशक्यं] न च (?) निर्णयत्वं मन्मते विषयिताविशेष एव न तु तदभावाप्रकारकत्वे सति तत्प्रकारकत्वं येनार्थवशसम्पन्नं स्यात्, निर्विकल्पकस्यापि मया निर्णयत्वाभ्युपगमादिति वाच्यम्; तथापि तात्पर्यसंशयाभावस्यैव तद्धेतुत्वोपगमात्। न च लाघवात्तात्पर्यनिर्णयो हेतुत्वस्यैव कल्पयितुं युक्तत्वात्। न च तथापि तात्पर्यसंशयाभावसम्पादकतयैव तन्निर्णयो हेतुः प्रतिबन्धप्रयोजकत्वस्यैवात्र प्रतिबन्धकत्वस्य वाच्यत्वादिति वाच्यम्; "ज्ञानप्रामाण्यसन्देहे सत्यर्थसन्देहेनार्थानिश्चयादेवाप्रवृत्त्या प्रामाण्यसन्देहो न प्रवृत्तिप्रतिबन्धकः" इति **मणिका**रोक्तेः विरोधात्। न चैवमनुमितौ व्याप्तेरिवेति दृष्टान्तानुपपत्तिः, व्याप्तिसंशयव्यतिरेकनिश्चययोरपि व्याप्तिनिश्चयेनान्यथासिद्धत्वात्तत्सत्त्वे व्याप्तिनिश्चयाभावादेवानुमित्यनुत्पत्तेरिति वाच्यम्; प्रतिबध्यत्वाभिमतनिष्ठकार्यत्वप्रतियोगिककारणताश्रयस्यार्थनिश्चयस्य कारणमर्थसंशयाभाव एव। अर्थसंशयश्च प्रामाण्यसंशयनान्तरीयक इत्यन्यदेतत्। तत्प्रतियोगित्वं प्रामाण्यसंशये नास्तीत्यदोषात्। अनुमितिनिष्ठकार्यत्वनिरूपितकारणताश्रयव्याप्तिनिश्चयस्य कारणं तत्संशयाभावः तत्प्रतियोगित्वं च व्याप्तिसंशयस्यास्ति, ग्राह्यसंशयत्वेऽप्युपाधिसंशयाहितव्याप्तिसंशयस्य फलबलेन प्रतिबन्धकत्वस्वीकारादिति स्पष्टमाकरे।

प्रकृते च प्रतिबध्यत्वाभिमतशाब्दनिर्णयनिष्ठकार्यत्वप्रतियोगिककारणताश्रयत्वं तात्पर्यसंशयाभावस्यैव, उक्तयुक्तेः। तत्कारणीभूताभावप्रतियोगित्वञ्च न तात्पर्यनिर्णयस्य तात्पर्यनिर्णयाभावस्य तात्पर्यसंशयाभावकारणत्वस्य चानुमितिं प्रति पुरुषत्वव्याप्यकरादिमत्ताज्ञानस्य हेतुत्वकल्पनत्वस्यावश्यकतया केनाप्यनङ्गीकारादित्यास्तां विस्तरः। नानार्थे विनिगमार्थञ्च पदतात्पर्यज्ञानमात्रमपेक्ष्यताम्, सर्वथापि वाक्यार्थतात्पर्यनिश्चयो न हेतुः, विशेषदर्शनदृष्टान्तश्चातिविषमः, तत्रानुमितित्वमुक्तरीत्या लाघवादिति वैषम्यात्। इदञ्च सर्ववस्तुगतिमनुसृत्योक्तम्। तात्पर्यनिर्णयस्यापेक्षायामप्येकवाक्यार्थबोध एव · · · न तूपक्रमोपसंहाराद्यनेकवाक्यार्थतात्पर्यज्ञानस्यानेकवाक्यार्थबुद्धयपेक्षा। किन्त्वेतद्वाक्यार्थबोधः कीदृक्प्रमा कीदृक् च

केनेति ज्ञानप्रामाण्यनिर्णयार्थमेव विचारस्यापेक्षा न तु शाब्दबोधोत्पत्त्यर्थं घटपदमम्पदार्थविशेष्यकस्वार्थप्रकारकबोधपरम्, न चेत्यादितात्पर्यनिर्णयस्यैव शाब्दबुद्धावुपयोगात्। अद्वैते वेदतात्पर्यमस्ति न वेत्यादिविचाररूपतात्पर्यज्ञानस्य तद्बुद्धावनपेक्षितत्वात्। अन्यथा दर्शनान्तरीयाणां तत्तद्वाक्येभ्यो विलक्षणशब्दबुद्धेरनुपपत्तेर्न हि प्रकारताविशेष्यताविशेषत्वेन तत्तदर्थं निवेश्य यथाविधं वाक्यतात्पर्यज्ञानं कारणम्, तदेव प्रकृते परेषामपि श्रवणपदार्थः। अस्मदादीनामपि तच्छाब्दोत्पत्त्या साक्षात्कारसिद्धयापत्तेः। अतो यत्किञ्चिदेवैतत्। यद्यपि तात्पर्यज्ञानस्य करणकोटिप्रवेशे वेदेऽपि तात्पर्यभ्रमस्य बाह्यागमेऽपि तत्प्रमायाश्च संभवाच्छाब्दकरणत्वस्य दुष्टादुष्टत्वव्यवस्था न स्यादित्याशङ्क्योक्तम्—वेदे कदाचित्कुत्रचित्कस्यचित्तात्पर्यभ्रमसम्भवेऽपि यथार्थतात्पर्यमस्त्येव। परागमे तु पौरुषेयतया प्रतारणादिमत्पुरुषप्रणीतत्वेन दुष्टत्वान्न तथेति, तदपि चिन्त्यम्; स्वरूपसत एव यथार्थतात्पर्यस्य दुष्टादुष्टव्यवस्थापकत्वमिति पर्यवसानात्। तथा च तस्य प्रमात्वप्रयोजकत्वे परेषां स्वतः प्रामाण्यभङ्गापत्तेः। ज्ञानसामग्रीभिन्नभावानपेक्षत्वस्यैवोत्पत्तौ स्वतः प्रामाण्यपदार्थत्वात्। परतः प्रामाण्यपक्षे तु तात्पर्यभ्रमकालेऽपि स्वरूपतो यथार्थतात्पर्यसत्त्वाच्छाब्दप्रमापत्तिरुक्तरीत्या स्यात्। अप्रमायां तस्य नापेक्षा किन्तु जन्यबोधस्य प्रामाण्याभावप्रसङ्गात्। प्रमितिजनकातिरिक्तस्य तदुभयनियामकत्वानुपपत्तेश्च तात्पर्यस्यादुष्टत्वव्यवस्थापकत्ववैयर्थ्याच्चाधिकं धीमद्भिरनुसन्धेयम्। एतेन तात्पर्यावधारणस्यावघातादेरिव यागे शब्दे सन्निपत्योपकारकतयाप्यङ्गित्वं मननाद्यपेक्ष्य निरस्तम्।

यत्तु करणस्वरूपे तद्गत ······ तायां वा प्रयोजकाङ्गत्वमेव सन्निपात्याङ्गत्वं ··· देवतासंग्रहाय स्वरूपेत्यभिक्रामञ्जुहोतीति विहिताभिक्रमणस्यापि कर्त्तुराहवनीयदेशप्राप्तिरूपसंस्कारद्वारा प्रयाजहोमप्रयोजक एवेति नाव्याप्तिः। प्रोक्षणादिसंग्रहाय तद्गतेत्यादि। तथा च प्रोक्षणादेर्व्रीह्यादिनिष्ठातिशयाधीनकरणनिष्ठयोग्यतायामिव तात्पर्यावधारणस्यापि करणीभूतशब्दनिष्ठायामवधृततात्पर्यकत्वरूपयोग्यतायां प्रयोजकत्वात्सन्निपात्यङ्गत्वमिति, तच्चिन्त्यम्; योग्यताप्रयोजकत्वं हि करणेनावान्तरव्यापारे जननीये सहकारित्वं प्रोक्षणादिजन्यापूर्वाणां यागेनोत्पत्त्य पूर्वं जननीये सहकारित्वोपगमात्। अस्तु वा यागनिष्ठकारणतावच्छेदको योग्यताख्यः कश्चिद्धर्मविशेष एव तत्प्रयोज्यः, यथाश्रुतग्रन्थस्वारस्यानुरोधात्, इह तु शब्देन फल-

जननीये भवद्रीत्या तात्पर्यावधारणस्य प्रयोजकत्वं न त्ववान्तरव्यापारे तात्पर्यभ्रमनिरासस्य शब्दजन्यत्वाभावात्, पदार्थोपस्थितेश्च तात्पर्यावधारणानुत्पाद्यत्वात्। अन्यथाचारादुपकारकस्यापि सन्निपात्यङ्गत्वापत्तेरिति, तिष्ठतु तावत्। इतिश्रवणस्य शेषित्वनिरासः॥

यत्तु ज्ञानस्य न विधेयत्वं कृत्यसाध्यत्वात्, न च प्रत्यवेक्षितमाज्यं भवति "विदुषा कर्म कर्त्तव्यं तस्मात्पश्येत नित्यशः" इत्यादि निरोधः, अनन्यगत्या लक्षणया ज्ञानहेत्विन्द्रियसम्प्रयोगस्यैव विधेयत्वात्। न च न विधौ परः शब्दार्थ इति वाच्यम्; "गोभिः श्रीणीत मत्सरम्" इत्यत्र गोशब्दस्य पयसि लक्षणाङ्गीकारात्, तादृशनियमाभावादर्थवादानुरोधेन विधौ न लक्षणेत्यर्थाच्च। न च साक्षात्कृतिसाध्यत्वस्येन्द्रियसम्प्रयोगेऽप्यभावादिन्द्रियसंप्रयोगे तु तद्वैपरीत्येन विशेषात्। तथा हि स्वर्गेच्छास्वर्गसाधनीभूतायां यागादिकृतौ न कारणं किन्तु यागादिचिकीर्षा तथा च स्वचिकीर्षाधीनं कृतिसाध्यत्वं कृतेः साध्यत्वाख्यविषयतातात्पर्यावच्छिन्नं विधेयत्वप्रयोजकम्, न च ज्ञाने साध्यत्वाख्यविषयतया कश्चित्प्रवर्त्तते, तच्चिन्त्यम्; भिन्नविषयकानुमितिसामग्रीकाले आज्यचक्षुषानुत्पादेऽपीन्द्रियसंप्रयोगसत्त्वेऽप्रत्यवेक्षितमाज्यं भवतीति विध्यर्थसिद्धिप्रसङ्गात्। न चेष्टापत्तिः, अन्धकारावच्छेदेनापि तदनुष्ठानापत्तावाचारविरोधात्। अत एव विवाहे ध्रुवदर्शनविधौ "सा यदि न पश्येत्पश्यामीत्येव ब्रूयाद्" इतिसूत्रं ध्रुवचक्षुःसंयोगमात्रस्य विधेयत्वे न हि ध्रुवचाक्षुषाभावेऽपि तच्चक्षुःसंयोगस्य जातत्वाद्विध्यर्थनिष्पत्तौ न पश्येदित्यादेरसङ्गत्यापत्तेः। पूर्वविधेयव्यतिरेकस्यैतदर्थत्वात्। अत एव ज्योतिष्टोमे भक्षे हि भावि "शं दीर्घायुत्वाय शं तनुत्वाय रायस्पोषाय" इत्यादिर्भक्षणे "नृचक्षसं त्वा देव सोम सुचक्षा अवख्येयम्" इत्यस्य च दर्शने विनियोगः, भक्षणावेक्षणयोरनुष्ठेयत्वात्। "मंद्रा विभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु" इत्यंशस्य तु भक्षणमन्त्रस्यैकवाक्यतया भक्षण एव विनियोगो न तु तृप्तौ, तृप्तेन तु निष्पादितत्वेनानुष्ठेयत्वादिति तृतीयद्वितीये स्थितम्।

यत्तु इन्द्रियसंयोगरूपावेक्षणस्य तृप्त्यादिवदनुनिःपादितत्वाभावेनानुष्ठेयतया तत्प्रकाशतया तत्प्रकाशभागस्य विभज्य तद्विनियोग इति तस्यार्थः इति, तदसत्; वमनविरेकसाधनीभूतद्रव्यस्य द्रव्यसंसर्गपरिहारार्थत्वेनावेक्षणविधेर्दृष्टत्वाद्वमनविरेकनिमित्तकप्रायश्चित्तसमाम्नानात्। अवेक्षणस्पष्टार्थत्वलाभायैव संम्यग्जरणपर्यन्तस्यैव भक्षणस्य तद्विधेर्विधेयत्वात्। इन्द्रियसंप्रयोगमात्रेण तादृशद्रव्यसंसर्गपरिहारानुपपत्तेः। चिकीर्षाधीनकृतिसाध्य-

त्वस्य ज्ञानविशेषेऽनुभवसिद्धस्य दुरपह्नवत्वात्। ज्ञानत्वावच्छेदेनैव ज्ञानत्वाभावः कल्प्यत इति, तन्न; आहार्यस्थले जानामीत्याद्यनुव्यवसायस्य सर्वसिद्धत्वात्तत्र धर्मान्तरकल्पने गौरवात्।

यत्तु इच्छाजन्यज्ञानत्वेन पराभिमते तत्तदिच्छानामेव विशिष्यावश्यके हेतुत्वे प्रमाणहेतुत्वे प्रमाणाभावः, तस्य प्रमासिद्धेः। अन्यथा तत्पूर्वमिन्द्रियसंप्रयोगाद्यनन्तव्यक्तीनां ज्ञानहेतूनां कल्पने महागौरवात्। अनुमित्यादावीक्षाजन्यत्वमात्रं तु प्रकियामात्रं सिद्धेः प्रतिबन्धकत्व एव गौरवेणाननुभवेन च **प्राभाकराणां** विवादादिति, तदपि चिन्त्यम्; तत्र प्रामाण्याभावकल्पने गौरवेण बाधकविरहेण च प्रमात्वस्यैव कल्पयितुं युक्तत्वात्। द्विविधस्य क्वचित्फलमुखत्वात्तदिच्छाया प्रमाणजन्यज्ञानविषयकत्वेन तद्व्यापारापेक्षावश्यकत्वात्तदिच्छाजन्यत्वस्य ज्ञानत्वादेर्दुर्वारत्वात्। अन्यथा पश्यामीत्याद्यनुव्यवसायानुपपत्तेरप्यप्रामाण्यस्य प्रमात्वापेक्षया गुरुशरीरत्वात्। अत एवेन्द्रियसंप्रयोगादिकल्पनगौरवं निरस्तम्। कुत्रचित्तेषां सिद्धत्वेनाकल्प्यत्वासमानविषयकप्रत्यक्षसामग्री नानुमित्यादाविच्छाहेतुत्वे बाधकाभावाच्च। इच्छाया उत्तेजकत्वपक्षेऽपि ज्ञानान्तरापेक्षया वैलक्षण्यसत्त्वात्। यद्यपि विज्ञाय प्रज्ञां कुर्वीतेत्यत्र ज्ञानमात्रस्य प्रज्ञाशब्दार्थत्वे प्रशब्दवैयर्थ्यं प्रकृष्टज्ञानरूपयोग्यार्थादेरनुज्ञानविध्यनुपपत्तिः अन्तःकरणरूपप्रत्ययार्थमादाय प्रकृष्टज्ञानसाधनरूपविचारार्थकत्वमेव युक्तम्। ज्ञानविध्युक्तानुपपत्त्या प्रज्ञाशब्दस्य विचारलाक्षणिकत्वमिति ग्रन्थस्त्वनुपपत्तिसत्त्वे लक्षणापि न दोष इत्यभिप्रायः। पत्न्यवेक्षितमित्यादावपि चाक्षुषमात्रपरत्वे उपसर्गवैयर्थ्यात्तदुत्तरशुद्ध्यशुद्धिविचार एवावेक्षणपदार्थः। आलोचनात्मकविचारेऽपूर्वके क्षतेर्निरूढलाक्षणिकत्वात्। विदुषा कर्म कार्यमित्यादौ तु विदेर्विचारेऽपि शक्त्या कर्मविचार एवार्थः। तस्मात्पश्यैनमित्यादौ तु कर्त्तव्यं सर्वं विचारयेदित्युभयसिद्ध एवार्थ इति, तदपि चिन्त्यम्; अवेक्षत इत्यत्र चाक्षुषानुरूपव्यापारस्य तिङर्थतयोक्तप्रयोगस्य सुस्थत्वात् विचारस्यापि युक्तिजन्यनिर्णयात्मकज्ञानविशेषतया तस्य विधेयत्वेऽप्यस्मदिष्टसिद्धेश्च "विचार्यते परीक्षते" इति **कैयटोक्तेः**। रजतत्वाभावव्याप्यवत्ताज्ञानरूपाया युक्तेरिति भवद्व्याख्यानाच्च। अत एव "प्रमाकर्तृत्वेन प्रमातृत्वे तदनुकूलत्वप्रयत्नवत्त्वरूपं स्वातन्त्र्यं प्रमायामस्मदादीनामपि नास्ति" इति **उपायकृतः**। सूक्ष्मशास्त्रार्थादिप्रमायां कृतिसाध्यत्वसत्त्वादिति तदभिप्रायस्य प्रमायाः सर्वत्वविशेषणत्वोपसन्दानेन गम्यमानत्वात्। एतेन प्रशस्तज्ञानयोर्विधिनिषेधादर्शनमपि ज्ञानका-

रणविषयकमेवेत्यपि निरस्तम्। ज्ञानस्यैवेष्टानिष्टसाधनस्य ज्ञानगम्यत्वात्, तत्परित्यागे मानाभावात्। अत एवेत्यादिना तदुत्पत्तिनिरोधयोरनुभवः सोऽपि करणव्यापारविषयः, इत्यपि निरस्तम्। यदपि परोक्षज्ञानसन्तानरूपनिदिध्यासनस्य विधेयत्ववादिनां वेदान्तिनामपि ज्ञानानां विधेयत्वमङ्गीकार्यमन्यथा सन्तानविधानानुपपत्तेरित्याशङ्क्योक्तम्—उपनिषदमावर्त्तयेदितिवदावृत्तिगुणयोगस्यैव विधेयत्वादिति, तदपि न; एकपदोपात्तयोरुद्देश्यविधेयभावाभावेन ज्ञानोद्देशेनावृत्तेर्विधातुमशक्यत्वात्। आवृत्तिविशिष्टज्ञानस्यैवावश्यं विधेयत्वात्। अत एव "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेत् वषट् करिष्यन् सन्ध्यां मनसा ध्यायेत्" इत्यादिकं सङ्गच्छते।

यत्तु ध्यानं ज्ञानाद्भिन्नमेवेति, तन्न; मानाभावात्। इच्छायाः ज्ञानं प्रत्यपि हेतुत्वदर्शनात्। विध्यन्यथानुपपत्त्या तत्कल्पने त्वन्योन्याश्रयात्, तस्य स्वविषये व्यवहारजनकत्वानुपपत्तेश्च। यत्तु तत्कारणत्वाभिमतज्ञानान्तरेणैव तद्विषयव्यवहारगौरवस्य प्रामाणिकत्वाद्वस्तुतो ज्ञानान्यस्यापि शशविषाणादिविकल्पस्य व्यवहारादिहेतुत्वेन तत्साधारणजातिविशेषस्य ध्यानादिनिष्ठस्य तदवच्छेदकत्वानुपपत्तिरिति, तदसत्; ध्यानतृतीयक्षणे ध्यानतज्जन्यस्मृत्योश्च मध्यसमये तद्विषयव्यवहारस्य दुरुपपादत्वात्, शशविषाणादिविकल्पस्यापि ज्ञानत्वात्। नचासति सन्निकर्षव्याप्तिवृत्तीनामसत्त्वेन तत्प्रत्यक्षानुमितिशाब्दानामसम्भव इति वाच्यम्; शब्दस्य तत्र वृत्तिसम्भवात्। अनेन पदेनालीकं बोध्यमिति वृत्तेस्त्वयापि स्वीकाराच्च। अर्थरहितशब्दजन्यत्वाभिप्रायेण शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति **पातञ्जले सूत्रे** विकल्पस्य पृथगभिहितत्वात्। अत एव गगनकमलस्यापि ज्ञानमर्थे शब्दः करोति हि खण्डनम्। यत्तु "सङ्गतिग्रहणाभावाच्छशशृङ्गादिपदानामेवोच्छेदेन" इति **बौद्धाधिकार**वाक्यं तदप्रमापकत्वाभिप्रायम्। अन्यथा-सतोऽर्थानि च वासनावशादेव तैः समन्ताच्छब्दानां सङ्केते प्रतिपद्यते इत्यनेनैतदिणपरस्य शशादिप्रत्येकपदार्थाव्युत्पन्नस्य शशविषाणादिपदात्तदर्थप्रत्ययप्रसङ्गादिति तद्वाक्यस्यैवानुपपत्तेश्च। अत ए**वाद्वैतसिद्धौ** शशशृङ्गादिपदानामनर्थकत्वपक्षमवतार्योक्तम्—"न चानन्वयनिश्चयविरहदशायां प्रवृत्तिपर्यनुभवविरोधः। अनन्वयनिश्चयदशायामेवाबोधकतोक्तेस्तद्विरहदशायामपि नाखण्डशशशृङ्गादिबोधकत्वं किन्तु सन्मात्रगोचरव्यधिकरणप्रकारकज्ञानं वा सदुपरागेणासद्गोचरज्ञानं वा केवलासद्भाने सामग्रीविरहात्। तदुक्तं संसर्गज्ञानादित्यादि। अत एवार्थवदादिसूत्रेणैव **शशविक-**

लपस्य ज्ञानत्वे तु तदन्यज्ञानविषयत्वाभाव आपाद्य इत्यपि प्रागुक्तम्। अत एवार्थवदादिसूत्रेणैव शशशृङ्गादिपदस्य प्रातिपदिकसंज्ञासिद्धौ "कृत्तद्धितसमासाश्च" इति सूत्रे समासग्रहणस्य नियमार्थत्वमिति वैयाकरणसिद्धान्तः सङ्गच्छते। अन्यथा उक्तस्थले अप्राप्तप्रमाणपदार्थतयापूर्वविधित्वापत्तेः। एवञ्च शाब्देतरज्ञानविषयत्वाभावनियतानां शशशृङ्गादीनां विभक्त्यर्थैकत्वादिरूपसदुपरागेणैव प्रत्ययः। प्राचीनमते भ्रमस्थले पुरोवर्तिविषयोपरक्तयोरिवात्यन्ताविद्यमानयोस्तादात्म्यसंसर्गयोस्तदुक्तं **मणिकारैः** "सदुपरक्तस्यात्यन्तासतः ख्यात्युपगमात् सदुपरक्तस्याखण्डस्यात्यन्तासतः ख्यातिरसत्ख्यातिर्नाभ्युपेयते कारणाभावाद्" इति। एतेन शशविषाणमनुभवामीति प्रत्ययाभावादित्यपि निरस्तम्। "ज्ञाततां विनापि शशविषाणादिविकल्पोपपत्तेः" इति **लीलावतीवाक्ये** शशविषाणादिविकल्पानामप्यनुभवोऽस्ति। न च तत्र लिङ्गमिति किमनुमापकं स्यादित्यर्थकतयोपायकृद्भिर्व्याख्यातत्वात्। अत एव सम्बन्धिद्वयस्य सम्बन्धस्य च प्रसिद्धचा तत्रैव ज्ञाततोत्पत्तिरित्याशङ्कय तया सत्यवस्तुविषयकत्वं न स्यादित्ययुक्तम्।

यत्तु कारणे सत्यपि पुरुषेच्छान्यथाकर्त्तुं शक्यं यत्तदेव विधेयम्, ज्ञानं तु न तथा चक्षुर्घटसंयोगादिसत्त्वे तदुत्पत्तेरावश्यकत्वादिति, तदप्यसत्; अन्यथाकरणं हि रूपान्तरापत्तिर्वा निरोधो वा? नाद्यः, घटयागादावप्यभावात्। नान्त्यः, ज्ञानसाधारण्यात्। चक्षुर्मीलनादिना तस्यापि निरोधसम्भवात्। सामग्र्यव्यवहितोत्तरत्वस्य कार्यव्याप्यतया कारणपदस्य सामग्र्येकदेशपरत्वस्यावश्यवाच्यत्वात्। अत एव

विन्ध्यादुत्तरतो यस्य निवासः परिकीर्त्तितः।
पराशरमतं तस्य सेतुबन्धन[दर्शन]म्॥

इत्यादौ ब्रह्महत्याप्रायश्चितत्वेन सेतुदर्शनविधिः सङ्गच्छते।

यत्तु नहि सेतुदर्शनमात्रस्य दुरितनाशकत्वं तत्रत्यम्लेच्छानामपि दुरितनाशप्रसङ्गात्। किन्तु पर्षदपस्थानादिपूर्वकव्रतकलापविशिष्टसत्त्वतया च छत्रपादुकादिवर्जनदोषोद्घोषणदूरदेशगामित्वभिक्षाभोजित्वादिनियमानां कृतिसाध्यत्वात्तद्विशिष्टं सेतुदर्शनमपि कृतिसाध्यमिति विशिष्टरूपेण विधानोपपत्तिरिति, तच्चिन्त्यम्; उक्तरीत्या दर्शनस्य विधाने बाधकाभावात्। अन्यथा दर्शनस्याविहितत्वेन पापक्षयाद्यनुत्पादकत्वप्रसङ्गादङ्गस्य प्रधानविधिसापेक्षविधिविधेयत्वनियमात्तत्रत्यानाञ्च पूर्वार्द्धेनैव निरासात्। अन्धकारे व्रतकलापविशिष्टेन सेतुचक्षुःसंयोगेन पापक्षयप्रसङ्गाच्चेति दिक्।

"श्रोतव्यः श्रुतिवाक्येभ्यः" इति वाक्यान्तरम्। तत्र च श्रुतिपदं प्रमाणशब्दमात्रपरम्, अन्यथा नियमदृष्टेः कल्पनापत्तेः। अतः सामान्यतो निर्णीतवेदमूलकत्वं स्मृतीतिहासपुराणादिभ्यः। श्रवणेन मननमविरुद्धमेव। एवञ्च स्मृत्यादिना श्रुतेर्जातमननस्य शूद्रस्याप्यपवर्गभागित्वे न दोषः, सामग्रीसत्त्वात्। अत एव जगतः श्रमायेति **वार्तिकोक्ता** यथाश्रुतैव जगदुद्देश्यता शास्त्रप्रणेतुर्महर्षेरप्युपपद्यते। अत एव "श्रुतो हि भगवान् श्रुतिस्मृतीतिहासपुराणेभ्यः" इति **कुसुमाञ्जलि**लिखनमपि सङ्गच्छति" इति **मिश्राः**। एवं सति शूद्रस्यापि मोक्षाधिकारे चानधिकृतव्युत्पादनेनास्य तपोनिधेः कश्चिद्दोष इति **टीकाकारै**र्विरोधः। वार्त्तिकं तु शूद्रादेरनधिकारेऽपि तत्तदुद्देश्यता महर्षेरस्त्येवेति **टीकाकृतै**वोपपादितम्। **कुसुमाञ्जलि**लिखनन्तु "संवादेनाप्रामाण्यशङ्कानिवृत्त्यर्थं स्मृत्याद्युपयोगः" इति वदता **प्रकाशकृतै**व समर्थितम्।

किञ्च विना बाधकमदृष्टार्थकत्वकल्पना भयमात्रेण मुख्यार्थत्यागे स्वर्गादिपदेष्वपि तत्परित्यागापत्तिरित्यन्ये। इदञ्च नियमादृष्टं दुरितनिवृत्तिद्वारा तत्त्वज्ञान एवोपयुक्तं न तु मोक्षे बीजाभावात्। "सर्वकर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति **स्मृते**श्च। ज्ञानपरिसमाप्तिश्च ज्ञानजन्याजनकत्वे सति ज्ञानजनकत्वम्। अत एव **वेदव्यास**सूत्रं "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववद्" इति। अस्यार्थः–तत्त्वज्ञाने सर्वधर्मजन्यादृष्टापेक्षा "विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति **स्मृते**श्च। यथाश्वो रथचालनादौ विनियुज्यते योग्यत्वान्न तु लाङ्गलकर्षणादौ, अयोग्यत्वात्तथैवात्रापीति। एतेनारादुपकारकं कर्म सन्निपत्योपकारकं तत्त्वज्ञानमिति **किरणावलि**वाक्यं व्याख्यातम्। फलजनकजननोपयोगित्वं ह्यारादुपकारकत्वं स्वर्गजनकपरमापूर्वोत्पत्त्युपयोगिनां प्रयाजादीनां तथात्वदर्शनात्। तथात्वहेतुत्वसाक्षात्कारोत्पत्त्युपयोगिनां प्रतिबन्धकापनायकानां कर्म आरादुपकारकत्वं सुघटम्। नच प्रधानोत्पत्त्युपयोगित्वेन द्रव्यादिवत्सन्निपातवत्त्वमेव युक्तमिति वाच्यम्; मनस एवात्र यागस्थानीयत्वात्तस्य चोत्पत्त्यभावात्।

ननु तदपि प्रोक्षणादिवत्सन्निपातित्वं स्यात्, यागेन पूर्व इव मनसा तत्त्वसाक्षात्कारे जननीये कर्मणामुपयोगादिति चेत्, सत्यम्; अत एव "हेत्वपेक्षया सन्निकर्षविप्रकर्षौ नात्र विवक्षितौ, अपि तु फलापेक्षयेति मनसिकृत्य

तत्त्वज्ञानमेव मोक्षहेतुः कर्म तु तत्प्रत्युपयोगीत्यन्यथासिद्धम्'' इत्युपायकारैर्व्याख्यातमित्यास्तामप्रासङ्गिकम्।

इदन्त्ववधेयम्—वेदान्तिनां साक्षात्कारस्य श्रवणसाध्यतया श्रवणादिनियमादृष्टस्य स्वजनकश्रवणादिसाध्यसाक्षात्कार एव कथमुपयोगः, अवघातजन्यनियमादृष्टस्यावघातजन्यवैतुष्यादन्यत्रैव हेतुत्वदर्शनात्। नियमादृष्टतज्जनकयोर्भिन्नफलकत्वनियमात्। नैयायिकानां तु साक्षात्कारस्य निदिध्यासनसाध्यत्वानुपपत्तिः। यत्तु क्रत्वर्थनियमापूर्वस्य परमापूर्वसाधनत्वेऽपि पुरुषार्थहिरण्यधारणादिनियमादृष्टस्य तदभाववच्छ्रवणादिनियमापूर्वस्य श्रवणादिसाध्यसाक्षात्कारान्यफलाभावेऽपि तेनैव फलवत्त्वोपपत्तिरिति, तच्चिन्त्यम्; नियमादृष्टस्य स्वजनकसाध्यान्यफलाभावस्य तावताप्यनानयनात्। हिरण्यधारणविधिस्त्वपूर्वविधिरेव। न च ''सुवर्ण एव भवति दुर्वर्णोऽस्य भ्रातृव्यो भवति'' इति सुवर्णतायाः प्रत्यसिद्धत्वात्कथं तदंशेऽपूर्वमिति वाच्यम्; हिरण्यधारणस्य तादृशदुःखहेतुत्वे मानाभावात्, स्वधार्यमाणेनैव सुवर्णेन तदुत्पत्तेश्च। किञ्चोक्तनियमापूर्वस्य क्वोपयोगः, नोक्तदुःखे धर्मस्य तन्त्राजनकत्वात्। न च तदधर्मात्मकमेव फलव्यधिकरणत्वात्, नापि वैफल्यं मानाभावात्, नापि स्वर्गादावपूर्वविधित्वस्यैव युक्तत्वात्, नियमादृष्टेन फलस्य क्वाप्यजननात्।

वस्तुतो नियमविधित्वेऽप्यस्य प्रत्यवधारणफलमृतुगमनादिनियमस्तथा व्युत्पत्तेरिति तत्त्वम्। इन्दश्चात्र विचारणीयम्—यन्निष्ठकार्यत्वनिरूपितकारणत्वेन यद्विधीयते तन्निष्ठकार्यत्वनिरूपितकारणान्तरं नियमविधिस्थले व्यवच्छेद्यम्। व्रीहीनवहन्तीत्यादौ हि वैतुष्यसाधनत्वेनावघातविधिवैतुष्यनिष्ठकार्यत्वप्रतियोगिककारणान्तरस्य नखविदलनादेश्च व्यावृत्तिः, अर्थात् विधिं विनाप्यर्थाक्षेपात्पुरोडाशनिष्पत्त्यर्थं तुषतण्डुलविभागरूपवैतुष्यसाधनत्वेन दलनादिविकल्पितावघातस्य वृत्त्या तत्साधारण्यामेव प्राप्तौ विवक्षितायां विधिवैयर्थ्यापत्त्या पाक्षिकप्राप्तिव्यवच्छेदे तात्पर्यात्। तेन च पाक्षिकप्राप्तिप्रतियोगिनः साधनान्तरस्य निवृत्तिः। नचेयमेव नियमफलमस्त्विति वाच्यम्; अप्राप्तांशप्रापणरूपनियमाभावे तदनुपपत्तेः, तत्सत्त्वे चार्थादेव तत्सिद्धेः। एवञ्च यद्विध्यभावे प्रकृतकार्यप्रतियोगिककारणत्वेन साधनान्तरस्य प्राप्तिः स्यादेव। अवघातदलनयोर्हि विजातीयं स्वविशिष्टं वा विभागत्वं योज्यतावच्छेदकं प्रकृते च परेषां निर्विकल्प-

कब्रह्मात्मैक्यसाक्षात्कारप्रतिबन्धकनिवृत्तिः श्रवणस्य फलम्, तादृशफले च साधनान्तरं किञ्चित्, नैवं प्रसक्तमिति नियमविधित्वमनुपपन्नम्।

यत्तु वैतुष्यादौ क्रियाप्रयोजकत्वेन दलनादेः प्रसक्तितद्रूपावच्छिन्ननिवृत्तेर्नियमफलत्वेऽवघातादेरपि तत्त्वानिवृत्यापत्तिः, अतोऽपूर्वसाधनवैतुष्येऽवघातनियमस्य विधिविषयत्वात्तादृशवैतुष्येऽवघातान्यस्यैव क्रियाप्रयोजकस्य निवृत्तिः। तथा च तत्तत्क्रियायास्तत्क्रियाविशिष्टविभागे कारणत्वे क्रियाविशेषप्रयोजकस्य दलनादेरपूर्वीयवैतुष्ये कथं प्रसक्तिः, तथापि यद्विशेषयोरिति न्यायेन कार्यमात्रवृत्तित्वेन च विभागत्वस्य क्रियाकार्यतावच्छेदकत्वावश्यकतया प्रसक्तिः। तन्नियमानङ्गीकारेऽपि विध्यभावेऽपूर्वीयवैतुष्यहेतुक्रियाविशेषविशिष्टत्वसम्भवादिति, तच्चिन्त्यम्; व्यावृत्तिप्रतियोगितावच्छेदकरूपावच्छिन्नप्रसक्तेरेव नियमविध्यपेक्षितत्वात्। विभागत्वस्य क्रियात्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वेऽपि तस्य विधेयसाधारण्येन व्यावृत्तिः प्रतियोगितानवच्छेदकत्वात्। एतेन "यद्धच ... संयोगोऽव्ययं ह्ययं-पुरुषः स्वयं ज्योतिः" इत्यादिवाक्येभ्यः कथमखण्डार्थयोरित्याद्यसम्भावनायाः सांख्यादिना निवृत्तिर्नास्ति किन्तु "तत्तु समन्वयाद्" इत्यादिशारीरकोक्तन्यायेनैव। तथा चाकर्तृत्वस्वप्रकाशत्वादिप्रकारकात्मनिश्चयसाधारणरूपविरहादस्मदभिमताकर्तृत्वाद्युपलक्षितात्मविषयकनिर्विकल्पकं प्रति साङ्ख्यश्रवणादीनां प्रसक्तिभावेऽपि [प्रति]पन्ना, तथापि प्रतिबन्धकनिवृत्तिद्वारोक्तप्रकारकात्मनिश्चयत्वावच्छिन्नं प्रति विशेषहेतुत्वे वाच्ये यद्विशेषयोरिति न्यायेनात्मज्ञानत्वावच्छिन्नं प्रत्यपि सामान्यतः उक्तद्वारा साङ्ख्यश्रवणादीनां हेतुत्वावश्यकत्वादुक्तसामान्यरूपावच्छिन्ने तत्प्रसक्तिरिति निरस्तम्। एतन्नियमविध्यभावे भवदभिमतजीवात्मैक्यविषयकसाक्षात्कारसाधनतया साङ्ख्यादिश्रवणस्य प्रसक्त्यभावात् तादृशप्रसक्तेरेव नियमोपयोगित्वात्। सामान्यहेतुत्वे हि शास्त्रश्रवणत्वं कारणतावच्छेदकं वाच्यम्; तस्य च वेदान्तश्रवणसाधारणतया व्यावृत्तिप्रतियोगितानवच्छेदकत्वात्। न ह्यज्ञानत्वेन साङ्ख्यादिश्रवणत्वेन हेतुहेतुमद्भावः सम्भवति, विशेषावच्छिन्नकार्यतानिरूपितहेतुतायामेव तस्यावच्छेदकत्वात्, सामान्यविशेषयोरेकधर्मावच्छिन्नकारणतानिरूपितकार्यतानवच्छेदकत्वनियमात्, अत्र तादृशकल्पने बीजाभावाच्च। यदपि कर्तृत्वादिधीविरोधितावच्छेदकं जातिविशेषादिरूपमकर्तृत्वादिप्रकारकतदुपलक्षितविषयकनिर्विकल्पकोभयसाधारणं तदेव साङ्ख्यादिश्रवणादिप्रयुक्ताया अकर्तृत्वाद्यंशेऽसम्भावनानिवृत्तेर्जन्यताव-

च्छेदकमिति नानुपपत्तिः। न चैवं निर्विकल्पकप्रतिबन्धकनिवृत्तौ साङ्ख्यादेः कारणत्वे कथं विधिना तन्निवृत्तिरिति वाच्यम्; विधिना प्रतिबन्धकविशेषरूपाया अद्वितीयस्वरूपाद्यंशेऽसंभावनादेर्निवृत्तिर्वेदान्तश्रवणादिनैव कार्येति बोधनादिति, तदपि चिन्त्यम्; अद्वितीयस्वरूपाद्यंशेऽसम्भवादिना निवृत्यर्थं साङ्ख्यादिश्रवणप्रसक्तेस्तथाप्यनुपपत्तेः। सामान्यहेतुहेतुमद्भावे साङ्ख्यादिवेदान्तोभयसाधारणस्यैव हेतुतावच्छेदकस्य वाच्यतया तद्धर्मस्य व्यावृत्तिप्रतियोगितावच्छेदकत्वानुपपत्तेः। अद्वैतस्य साङ्ख्यादिभिरनङ्गीकारेण सद्वितीयत्वादिधीविरोधितावच्छेदकस्य साधारण्यकल्पनानवकाशात्। अपि च साङ्ख्येनात्मनोऽकर्तृत्वस्वीकारादात्मनो नोपयुक्ततया तत्साधारण्यं जन्यतावच्छेदकं दुर्वचम्; तैरकर्तृत्वाद्यंशेऽसम्भावनानिवृत्तेस्तत्त्वज्ञानहेतुत्वानवगमाच्च। तथा च न्यायादिश्रवणानां नियमैकनिवृत्तिर्न स्यात् इति न त्वदिष्टसिद्धिः। सर्वसाधारणात्मतत्त्वज्ञानसाधारणस्योक्तनिवृत्तिजन्यताजनकतावच्छेदकस्य दुर्वचत्वादित्यास्ताम्।

प्रकृतमनुसरामः। जीवात्मानमुपक्रम्यैव श्रवणादिविधानात्तत्साक्षात्कारस्य मोक्षहेतुत्वमिति नैयायिकाः। तदुक्तम**आत्मतत्त्वविवेके** "आत्मज्ञानतत्त्वमेव तदुपायमेवमाकर्णयन्ति न ततोऽन्यम्" इति। "नैसर्गिकमात्मतत्त्वज्ञानमतत्त्वज्ञानमेव" इति च। व्याख्यातञ्च **दीधितिकृता** "अपरे पुनरनादिनिधनमात्मानं न्यायादिना निर्णयन्तस्तदीयं तत्त्वज्ञानमेव न्यायागमाभ्यां मोक्षोपायमाचक्षत इतिनैसर्गिकं गौरोऽहमित्याकारकमनादिदेहाभेदवासनासमुद्भूतमात्मज्ञानमेव" इत्यादि। **कुसुमाञ्जल्युपायेऽपि** "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्य इति श्रुतौ सामानाधिकरण्याद्यद्विषयकः साक्षात्कारस्तद्विषयकं मननं मोक्षहेतुः, साक्षात्कारश्च न जीवात्ममात्रगोचरो न चेश्वरविषयस्तथा मिथ्याज्ञानध्वंसद्वारा ह्यस्य तद्धेतुत्वम्। न च जीवात्ममात्रगोचरमीश्वरगोचरं मिथ्याज्ञानं संसारहेतुर्येन तदुच्छेदस्तद्द्वारः स्यात्, किन्तु स्वात्मगोचरमिथ्याज्ञानमिति, तस्य तथात्वात्। तत्साक्षात्कारो मोक्षहेतुः" इति। न चात्र जीवोपक्रमे मानाभावः; "आत्मनस्तु कामाय पतिः प्रियो भवति" इति प्रियत्वान्वाख्यानस्य तथात्वादीश्वरात्मसन्निकर्षासम्भवेन तत्साक्षात्कारासम्भवाच्च।

केचित्तु "मनःसंयोगसन्निकर्षेणाग्राहकेणेश्वरविषयकस्यापि प्रत्यक्षसम्भवः "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्ताद्" इतीश्वरमुपक्रम्य "तमेव विदित्वा मृत्युमेति" इति श्रुतौ तत्पदेनेश्वरस्यैव ग्रहणाच्च

जीवात्मनीतरभिन्नत्वज्ञानं वासनानाशोपयुक्तं विरोधिज्ञानस्य संस्कारनाशकतायाः प्रवृत्तत्वात्। न च मुक्तिहेतुत्वेनावश्यकादीश्वर इति ज्ञानादेव वासनानाशोऽस्तीति वाच्यम्; अतिरिक्तकार्यकारणभावकल्पनापत्तेः। जीवप्रत्यक्षस्य तथात्वे तु घटः शरीरादिभ्यो भिन्न इति ज्ञानस्य घटः शरीराद्यभिन्न इति संस्कारनाशकत्वे कल्पनीये धर्मविशेषमनिवेश्य शरीरादिनिष्ठप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितभेदनिष्ठ-विशेष्यताख्यप्रकारतानिरूपितविशेषणताविशेषीयसांसर्गिकविषयतानिरूपित-विशेषणतासम्बन्धेन ज्ञानस्य शरीरादिभेदनिष्ठप्रकारतानिरूपितप्रतियोगित्वीयसांसर्गिकविषयतानिरूपिताभावनिष्ठविशेष्यताप्रकारतानिरूपितविशेषणताविशेषीयसंसर्गतानिरूपितविशेष्यताकसंस्कारनाशं प्रति हेतुत्वकल्पनयैव निर्वाहात्। आत्मशरीराद्यभिन्न इति संस्कारनाशे आत्मा शरीरादिभिन्न इति ज्ञानस्य हेतुत्वान्तराकल्पनात्। तर्हि मोक्षहेतुत्वमपि जीवतत्त्वज्ञानस्यैव स्याल्लाघवादितिचेत्, न; तमेवेत्यादिना ईश्वरप्रत्यक्षस्यैव मोक्षहेतुत्वप्रतिपादनाद्" इति वदन्ति। अत्राहुः—अन्यपुरुषीयजीवप्रत्यक्षवारणाय विषयतया तत्पुरुषीयात्मप्रत्यक्षे तत्पुरुषीयात्मनस्तादात्म्येन हेतुत्वध्रौव्यात्तादृशकारणाभावेन जीवानामीश्वरसाक्षात्कारानुपपत्तिः। तादात्म्येनेश्वरात्मनोऽपि हेतुत्वकल्पने गौरवम्।

न च मोक्षं प्रतीश्वरसाक्षात्कारहेतुत्वबोधकवेदान्यथानुपपत्त्या गौरवं प्रामाणिकमिति वाच्यम्; तमेवेत्यादिवेदस्यापि जीवपरत्वे बाधकाभावात्। "तत्त्वमसि श्वेतकेतो" इत्यादिश्रुतेस्तु जीवपरमात्मनोरभेदभावनं मोक्षप्रयोजकमित्येतत्परत्वादिति। न च "तस्य महतो भूतस्य निश्वसितं-यदृग्वेद" इत्यादेरीश्वरधर्मस्य जीवप्रकरणे कथं न विरुद्धत्वमिति वाच्यम्; अभेदभावनार्थत्वे सार्थक्यात्। अतएव—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत्॥

इति स्वात्मज्ञानस्य प्रवृत्त्यभावद्वारा मोक्षहेतुत्वं कथं न संगच्छते। अयन्तु विशेषः—वेदान्तिनां जीवाजीवेश्वराभेद ज्ञानं·····र्थमेव तु तार्किकाणां भ्रमः। परन्तु श्रुतिबलान्मोक्षे हेतुरिति **दीधितिकारानुयायिनः**।

अन्ये तु, सार्वज्ञसम्पादकयोगधर्मादनाहार्यभ्रमानुत्पत्तिः सवासनमिथ्याज्ञानोच्छेदासम्भवाच्चाहार्यभ्रमोऽप्यत एव निरस्तः। श्रवणमनननिदिध्यासन-

तत्त्वज्ञानानां समानाकारकत्वप्रतीतिविरोधाच्च। शब्दानुमित्योरनाहार्यक-स्वभावत्वात्।

स्वर्गापवर्गयोर्द्वारमामनन्ति मनीषिणः।
यदुपास्तिमसावत्र परमात्मा निरूप्यते॥
न्यायचर्येयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥

इति, **आचार्य**स्वरसाच्च। एवं च कामिनीजिज्ञासाधीनकामिनी-साक्षात्कारवत्परमात्मजिज्ञासाधीनपरमात्मसाक्षात्कारः स्वगतासाधारण-धर्मेण स्वमात्रविषयकः, स चादृष्टद्वारा स्वात्मनि देहादिभेदलौकिकप्रत्यक्ष-हेतुः। अत एव तत्पूर्वं तल्लौकिकप्रत्यक्षाभावः तदेवानादिदृढभूमिसवासन-मिथ्याज्ञानोन्मूलकम्। अत एव **कुसुमाञ्जलौ** "ईश्वरमननं च यद्यपि मिथ्या-ज्ञानोन्मूलनद्वारा नोपयोगि तथापि स्वात्मसाक्षात्कारायोपयुज्यते"। यदाहुः "स हि तत्त्वज्ञातः स्वात्मसाक्षात्कारस्योपकरोति" इत्यु**पायकृतः** ततः प्रत्यक् चेतनाधिगमोऽप्यन्तरायाभावश्चेति **पातञ्जलसूत्रे** "तत ईश्वरप्रणिधा-नात्" प्रत्यक्चेतनाधिगम उक्तजीवप्रत्यक्षमित्यर्थाच्च, इत्याहुः।

अपरे तु, पापविशेषो देहादिभेदलौकिकप्रत्यक्षविरोधी, तन्नाशः क्वचिदी-श्वरसाक्षात्कारात्क्वचिद्योगजधर्मकाशीमरणादिभ्यस्तन्नाशस्तत्त्वधीहेतुः। अत एव "ईश्वरप्रणिधानाद्वासंप्रज्ञातलाभः" इत्युक्तं **पातञ्जलसूत्रे**। असप्रज्ञातः स्वात्ममात्रविषयिणीवृत्तिः। द्रष्टव्य इति। श्रुतावपि पापनाशकत्वमेव विध्यर्थः। जीवपरत्वे तु मुक्तिसाधनं तदर्थः। अत एव तत्त्वज्ञानं मोक्षसाधन-त्वेन विधिना बोध्यते इति **द्रव्यकिरणावल्यामुपायकृतः** इत्याहुः।

यत्तु वेदान्तिनः जीवोपक्रमं त्रेधा समर्थयन्ते, तथाहि **ब्रह्ममीमांसायां** प्रथमचतुर्थे **आचार्यदेशीयमतेन** सामाधानपरं सूत्रं "प्रतिज्ञासिद्धेलिङ्गरथ्या" इति। अस्यार्थः—यथा वह्नेर्विकारा व्युच्चरन्तो विस्फुलिङ्गा न वह्नेरत्यन्त-भिन्ना स्तद्रूपेण निरूपणात्, नाप्यभिन्ना वह्न्यपेक्षयेव परस्परापेक्षयापि भेदाभावप्रसङ्गात्। न चेष्टापत्तिः, परस्परं व्यावृत्तत्वेन प्रतीयमानत्वात्। एव जीवात्मनोऽपि ब्रह्मविकारास्ततो नात्यन्तं भिद्यन्ते चिद्रूपत्वाभाव-प्रसङ्गात्। नाप्यत्यन्तमभिन्नाः परस्परव्यावृत्तिप्रसङ्गात्। सर्वज्ञं प्रत्युपदेश-वैयर्थ्याच्च। तस्मात्कथञ्चिद्द भेदाभेदौ ब्रह्मणा सह जीवानामास्थेयौ। तत आत्मविज्ञाने सर्वविज्ञानप्रतिज्ञासिद्धये जीवपरमात्मनोरभेदमुपादाय परमात्मन्यपि दर्शयितव्ये जीवोपक्रम इति, **आश्मरथ्य** आचार्यो मन्यते।

तादृशमेव द्वितीयसूत्रम् "उत्क्रमिष्यत एवंभावादित्यौडुलोमिः" इति। औडुलोमिसञ्ज्ञस्त्वाचार्यः पूर्वमाह—संसारदशायां भेदश्च वैलक्षण्यात्, मुक्तौ त्वभेद एव। तथा च **पाञ्चरात्रिकाः**—

आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः॥ इति।

पूवमुत्क्रमिष्यते भाविमुक्त्यवच्छिन्नस्य जीवस्येश्वराभिन्नत्वात्तादृशभेदजीवोपक्रमो न विरुद्ध इति सिद्धान्तस्तु तृतीयसूत्रम् "अवस्थितेरिति **काशकृत्स्नः**" इति। **काशकृत्स्न**संज्ञस्त्वाचार्यो मन्यते—"अनेन जीवेनात्मना स एष इह प्रविष्ट" इति च श्रुत्या ब्रह्मणश्च जीवरूपेणावस्थितेर्वास्तवमेवैक्यमादाय जीवोपक्रमो न विरुद्ध इति। आत्यन्तिके हि जीवपरमात्मनोरभेदे तात्त्विकेऽनाद्यविद्याकल्पितो भेदश्च तत्त्वमसीति जीवात्मनोर्ब्रह्मभावतत्त्वोपदेशश्रवणमनननिदिध्यासनप्रकर्षपर्यन्तं जन्मना साक्षात्कारेण विद्यया शक्यो निवर्त्तयितुं रज्जौ सर्पभ्रम इव रज्जुतत्त्वसाक्षात्कारेण। म्लेच्छकुले वर्धमानस्य राजपुत्रस्यैव च स्वात्मन्यारोपितो म्लेच्छभावस्त्वं राजपुरुषोऽसीत्याप्तोपदेशेन। न हि शरावादिमृद्विकारः शतशोऽपि मृन्मृदिति चिन्त्यमानस्तज्जन्मनाममृद्भावसाक्षात्कारेण शक्यो निवर्त्तयितुं तत्कुतो विकारस्यापि मृदो भिन्नाभिन्नस्य तात्त्विकत्वादिति।

तत्रेदं वक्तव्यम्—जीवस्येश्वराभिन्नत्वे मानाभावः। तथा च प्रयोगः—जीवः परमात्मनिष्ठतादात्म्याप्रतियोगी तद्वृत्तिधर्मत्वात्, घटवत्। जीवः परमात्मनिष्ठानौपाधिकभेदप्रतियोगी भेदपूर्वकालीनाभावप्रतियोग्युपाधित्वात्, यो यन्निष्ठस्यानौपाधिकस्य भेदस्यासत्प्रतियोगी स तद्भेदपूर्वकालीनाभावप्रतियोग्युपाधिसहितः। यथा चैत्रनिष्ठानौपाधिकभेदतत्प्रतियोगी तत्क्षणावच्छिन्नश्चैत्रस्तत्पूर्वकालीनाभावप्रतियोगितत्क्षणादिरूपोपाधिमानिति व्यतिरेकी। अविद्या हि भेदोपाधित्वेन त्वदभिप्रेता सा च न भेदपूर्वकालीनाभावप्रतियोगिनी, अनादित्वात्, भेदस्यापि त्वयानादित्वाभ्युपगमेन तत्पूर्वकालाप्रसिद्धेश्च। न च त्वन्मतेऽपि भेदस्य नित्यत्वात्तत्पूर्वकालाप्रसिद्धिरिति वाच्यम्; भेदसम्बन्धस्यापि विवक्षितत्वात्। यद्वा परमात्मजीवभेदो नौपाधिकः अनादित्वात्परमात्मवत्।

ननु शुद्धचैतन्ये धर्मानधिकरणतया साध्यहेत्वोरभावः, उपहिते च सिद्धसाधनम्। तदुक्तम्—

अप्रमेये तु मानस्य प्रवृत्तिर्न कथञ्चन ।
प्रमेयस्य त्वनात्मत्वात्तत्र भेदानुमेष्यते ॥ इति ।

इति चेत्, मैवम्; धर्माभावस्य धर्मत्वादैक्यस्यात्रापि सम्भवादैक्यानुमितिभङ्गाच्च । तच्छब्दस्याप्यसम्भवादित्यस्माभिस्तत्र पठनीयत्वात् । धर्मानधिकरणत्वं हि धर्माधिकरणत्वाभावाधिकरणत्वं तथा च व्याघातः धर्माधिकरणत्वाभावस्यापि धर्मत्वविशेषात् । तस्यापि शुद्धे वक्तुमशक्यत्वात् । अथ तद्भावोऽधिकरणस्वरूप एवेति चेत्तर्हि अनौपाधिकत्वमनादित्वं चेत्यपि तथैवास्तु मिथ्यात्वपरप्रकाश्यत्वकालदेशवस्तुपरिच्छेदाभावरूपाणां सत्यत्वस्वप्रकाशत्वनित्यत्वविभुत्वपूर्णत्वानां "सत्यं ज्ञानमनन्तम्" इत्याद्यनुरोधेन तैरपि तथाङ्गीकारात् । न च धर्माभावेऽपि तत्र नास्त्येवेति वाच्यम्; प्रतियोगिसद्भावापत्तेः तदभावानाश्रयस्य तद्वत्त्वनियमादित्यग्रे विस्तरः । एवं जीवब्रह्मणोरैक्यानुमितिरपि न स्यात् । जीवाः परमात्मनस्तत्त्वतो न विभिद्यन्ते, आत्मत्वात्परमात्मवदित्यादिका ।

यत्तु शुद्धचैतन्यशब्दैकगम्यत्वेन तत्राननुमेयत्वमिष्टमेवेति, तन्न; उक्तानुमानवैयर्थ्यात् । न च भेदे तात्त्विकत्वभ्रमनिरासार्थमेव तदिति वाच्यम्; विकल्पासहत्वात् । तथाहि ब्रह्मणि तात्त्विकजीवभेदज्ञानं प्रत्युक्तभेदाभावानुमितेस्तद्ग्राह्याभावावगाहितयावच्छेदकधर्मदर्शनविधया वा तदभावव्याप्यवत्ताज्ञानविधया वा विरोधित्वं, नैकमपि युक्तं, विशेष्यवृत्तित्वेन ज्ञानं विनैतदन्यतमेनापि भ्रमनिवृत्तेर्दुर्घटत्वात् । उपहितवृत्तित्वेनैव तज्ज्ञानस्य चान्यविशेष्यकभ्रमनिवृत्तावसामर्थ्यात्, उपहितभेदभ्रमनिवृत्तेश्च भवताप्यनुद्देश्यत्वात् । शब्दमात्रगम्यत्वं शुद्धस्येत्यप्यग्रे निराकरिष्यत एव । इत्यास्तां तावत् । उक्तं भेदानुमानं च न युक्तम्, परमात्मप्रतियोगिकतात्त्विकभेदाभावे साध्यप्रतियोग्यप्रसिद्धेः । न च त्वद्रीत्यैव तदिति वाच्यम्; दृष्टान्तस्योभयसंप्रतिपन्नत्वनियमात् । आगमबाधादिदोषाणां च यथोक्तवक्ष्यमाणरीत्या दुर्वारत्वात् । न चाद्यभेदानुमाने दुःखादेरन्तःकरणधर्मत्वेन स्वरूपासिद्धिरिति वाच्यम्; अहं सुखी दुःखीत्यादिप्रत्यक्षेण तत्सिद्धेः । न च "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुत्या तेषामन्तःकरणधर्मत्वसिद्धिरिति वाच्यम्; आयुर्घृतमितिवत्कार्यनिमित्तयोरभेदोपचारेण तत्र सामानाधिकरण्यस्योपपत्तेः । "त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्र मना अभूवं नादर्शमन्यत्र मना अभूवं नाश्रौषमिति मनसाह्येव पश्यति

मनसा शृणोति" इत्यनन्तरं "कामः संकल्प" इत्यादेः श्रूयमाणत्वात्। पश्यतीत्यादिना दर्शनाद्याश्रयत्वमात्मन्युक्त्वा करणत्वेनैव मनस उपक्रान्तत्वात्। सर्वं मन एवेत्यस्मात्तदनन्तरं तस्मादपि पृष्ठतः उपस्पृष्टो मनसा विजानातीति तथैवोपसंहृतत्वात्। एतेन कुलालो घट इति सामानाधिकरण्यादर्शनान्नात्र तथेति **चित्सुखाचार्यो**क्तं परास्तम्। "स वायमात्मा ब्रह्म" इति जीवात्मानं प्रक्रम्य "क्रोधमयोऽक्रोधमयो हर्षमयः" इति श्रुतेश्च। हर्षाहर्षौ सुखदुःखेच्छा तदर्थस्य च व्याख्या[तत्वात्]। न च व्यावहारिकभेदमादाय सिद्धसाधनम्, तदनङ्गीकारिणं तार्किकं प्रति तदुद्भावनस्यायोग्यत्वात्। व्यावहारिकत्वभेदस्यासिद्धत्वाच्च तत्रैवेदानीं विवादात्। भेदसिद्धौ तात्त्विकत्वेन व्यावहारिकत्वस्य बाधकाभावादनित्यत्वात्। न च भेदानुमानानामप्रयोजकत्वम्, आगमादेरनुकूलतर्कत्वात्। तथा च **वेदव्याससूत्रं** "शारीरश्चोभयेऽपि हि भेदेनैवमधीयत" इति। अस्यार्थः "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरोऽयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष आत्मान्तर्याम्यमृतः" इत्यादिवाक्ये जीवो नार्थः। हि अस्मादुभय**काण्वमाध्यन्दिनानां** च जीवपरयोर्भेदेन "यो विज्ञाने तिष्ठन् य आत्मनि तिष्ठन्" इत्यादिना पठन्ति, इत्यादि। एवं "विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ" इत्याद्यपि निराहार्यम्।

दीव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।

अप्राणो ह्यमना शुभ्र इति जीवादक्षरात्परतः परः॥ इति प्रधानाच्च भेदेन व्यपदेशात् "यद्भूतयोनिं परिपश्यन्ति धीराः" इत्या**थर्वणवाक्ये** जीवप्रधानयोर्भूतयोनित्वं नार्थ इति तदर्थात्। तत्रैक**मुण्डकोपनिषदि** मन्त्रवर्णः—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।
तयोरन्यः पिप्पलः स्वाद्वत्त्यशनन्नन्यो अभिचाकशीति॥ इति।

प्रथमाद्विवचनस्य "सुपां सुलुक्" इत्यादिसूत्रेण डादेशः तेन द्वौ सुपर्णौ सयुजौ सखायौ इत्यर्थः। अत्र ह्यन्यपदेऽन्यपदेन तात्त्विक एव भेद उक्तः।

यत्तु बुद्धिजीवपरत्वेन प्रकृतवाक्यव्याख्यानान्न जीवब्रह्मभेदकत्वमस्येति, तन्न; द्युम्नाद्यायतनं स्वशब्दादिति प्रथमतृतीयाधिकरणे "यस्मिन्द्यौः पृथिवी चान्तरीक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथा अमृतस्यैष सेतुः" इति वाक्यस्य ब्रह्मपरत्वं सिद्धान्तयित्वा तस्य हिरण्यगर्भजीवादिपरत्वे तत्प्रकरणे तयोरन्यः पिप्पलं स्वाद्वत्ति इति कर्मफलाशनमनश्नन्नन्योऽभिचाकशीति, इत्यौदासीन्येनावस्थानञ्च

निर्दिश्यते। तथा च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ परिगृहीतौ तथा च द्युम्वाद्यायतनत्वेनेश्वरविवक्षायामेव प्रकृतस्य तस्य क्षेत्रज्ञात्पृथक् वचनं युक्तम्। जीवस्य हिरण्यगर्भस्य वा तदायतनत्वे तं प्रकृत्याऽनश्नन्नन्योऽभिचाकशीतीति परमात्माभिधानमसङ्गतं स्यात्।

न च जीवात्मनस्तदायतनत्वेऽपि दृष्टान्तार्थं तत्प्रतिपादनायैव ब्रह्माभिधानमिति वाच्यम्; वेदस्यानधिगतार्थबोधनस्वभावतया प्रत्यक्षसिद्धेर्जीवात्मनि तात्पर्यायोगानधिगते ब्रह्मण्येव तथात्वादिति भाष्यादावभिहितत्वेन जीवब्रह्मणोरेवात्र प्रतिपादितत्वावगमात्। अत एव "गुहां प्रविष्टावात्मानौ हि तद्दर्शनाद्" इति सूत्रे—

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः॥

इति **कठवल्लीवाचो** बुद्धिजीवौ पूर्वपक्षयित्वा विज्ञात्मपरमात्मानाविहोच्येयातां कस्मादात्मानौ हि तावुभावपि चेतनस्वभावौ, साङ्ख्यश्रवणे च समानस्वभावेष्वप्रतीतेर्लोके दृश्यते। अस्य गौर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वः पुरुषो वा, तदिह ऋतपानेन निश्चिते ज्ञानात्मनि द्वितीयोऽन्वेषणीयः। समानः स्वभावश्चेतनः परमात्मैव प्रतीयते इति सिद्धान्तयित्वा परमात्मनः कर्मफलभोगो गुहाप्रवेशश्च कथमित्याशङ्क्य सृष्टीरुपदधातीति तद्गौणत्वेन समाहितं **भाष्ये**। तथा **भामत्यां** "ऋतपानेन जीवात्मा निश्चितोऽस्य द्वितीयता ब्रह्मणैव सरूपे न तु बुद्ध्याविरूपया प्रथमं स सद्वितीयत्वे ब्रह्मणा ब्रह्मणावगते सति गुहाशयत्वं परमं व्याख्येयमवरोधत" इति। ततश्च **भाष्यकारैरपि** "एष एव न्यायो द्वा सुपर्णा सयुजा सखायेत्यादावपि। तत्रापि ह्यध्यात्माधिकारान्न प्राकृतौ सुपर्णावुच्येते। अदनलिङ्गाद्विज्ञानात्मा भवति, अनशनचेतनत्वाभ्यां परमात्मा। अनन्तरे च मन्त्रे च तावेव द्रष्टव्यभावेन विशिनष्टि—

समाने वृक्षे पुरुषो निमग्नो अनीषया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥ इति।"

अत्र च अत्तीति कर्तृत्वस्योपचारात्करणभूताया अपि बुद्धेरुक्ते एधांसि पचन्तीति वदतो बुद्धिजीवाविति पूर्वपक्षः। मुख्यकर्तृत्वसंभवे उपचारायोगाज्जीवपरमात्मानाविति सिद्धान्तः। स्यादेतत्; कृत्वाचिन्त्यमेवेदं भाष्यं तदुत्तरमेवापर आहेत्यादिनान्यथा व्यवस्थापितत्वात्। तथाहि **पैङ्गिरहस्य—**

ब्राह्मणे श्रूयते "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं अनश्नन्नन्यो अभिचाकशीत्यनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ" इति। न च सत्त्वक्षेत्रज्ञशब्दौ जीवात्मपरमात्मपराविति वाच्यम्; अन्तःकरणशारीरपरतयैव प्रसिद्धेः। "तदेतत्सत्त्वं येन स्वप्नं पश्यतीत्यर्थयोगं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किञ्चन रज आध्वंसत" इति श्रुत्यैव व्याख्यानाच्चेति। न चोक्तन्यायवचनविरोधे तस्याभासत्वादिति **कल्पतरु**कृद्भिरुक्तत्वात्। अतोऽत्र बुद्धिजीवपरत्वमेव सिद्धान्त इति।

अत्रोच्यते; अनश्नन्नित्यस्य कथं जीवपरत्वम्? यत्तु **भामत्यां** तस्य भोक्तृत्वेऽप्युपाधिरहितेन रूपेण ब्रह्मस्वभावस्योदासीनत्वादभोक्तृत्वादचेतनस्य च बुद्धितत्त्वस्यापारमार्थिकं भोक्तृत्वमुक्तम्। तथा ह्येवंभूतं जीवं कथयता अनेन मन्त्रवर्णेन द्युम्नाद्यायतनं ब्रह्मैव कथितं भवति, उपाध्यवच्छिन्नश्च जीवः प्रतिषिद्धो भवतीति, तच्चिन्त्यम्; स्वारस्यावगतार्थत्यागे बीजाभावात्। अभेदविप्रतिपत्तिदशायामुपाधिरहितेन रूपेणेत्यादेरनवकाशाच्चेति। अतो भगवता **निरुक्तकारेणा**प्युक्तं "सुपर्णा सयुजा सखायेत्यात्मानं चेति"। "स्थित्यदनाभ्याञ्चेति" सूत्रयतो **वेदव्यास**स्यापि तथैवाभिमतत्वात्। **पैङ्गिव्याख्याने** कथञ्चिदुपपत्तावपि सूत्रस्वारस्यस्यात्रैवोत्कटत्वात्। अत एव पुराणादौ द्वासुपर्णेत्यादिरीत्या जीवपरमात्मनोरेव निर्देशः। गुहां प्रविष्टावात्मानौ हीत्यत्राप्येतद् दर्शितम्—"द्वा सुपर्णेत्यस्यामृचि ईश्वरक्षेत्रज्ञावुच्येते" इति। तत्र **भाष्यकारै**रुक्तत्वादेकान्ततस्तत्र कृत्वा चिन्तात्वस्य वक्तुमशक्यत्वात्। अत एव **भामत्याम**पि समन्वयसूत्रे उक्तम् [तत्पिप्पलं च] स एवाश्नातीत्यादि भाष्यं प्रक्रम्य "तयोरन्यः पिप्पलमिति। अन्यो जीवात्मा पिप्पलं कर्मफलमनश्नन्नन्य इति परमात्मा"। संहतस्य च भोक्तृत्वमाह—मन्त्रवर्णः "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादि। न च श्रुतिस्मृतिविरोधन्यायेन **निरुक्ता**दिव्याख्यानापेक्षया **पैङ्ग्युपनिषद्**व्याख्यानमेव बलीय इति वाच्यम्; तस्याप्येतदविरोधेन व्याख्यानसंभवात्। न च सत्त्वपदस्य जीवात्मपरत्वे मानाभावः,

सत्त्वं गुणे पिशाचादौ चले द्रव्यस्वभावयोः।
आत्मत्वे व्यवसाये च चित्ते प्राणिनि जन्तुषु॥ इति।

**विश्वकोषे** प्राणिशब्देन जीवस्य विवक्षितत्वादन्यथा जन्त्वर्थेन पौनरुक्त्यात्। "प्राणी तु चेतनो जन्मी जन्तुर्जन्यशरीरिणः" **इत्यमरोक्तेः**

प्राणभृच्छब्देन जीवनिर्देशस्य वेदान्तग्रन्थेषु दर्शनाच्च। "सत्त्वशुद्धिद्वारेणारादुपकारकं कर्म सन्निपत्योपकारकं तत्त्वज्ञानम्" इति **किरणावली**वाक्ये "सत्त्वमात्मा तत्त्वशुद्धिश्च तत्त्वज्ञानोत्पत्तिप्रतिबन्धकनिवृत्तिः" इति **वर्द्धमानो**क्तिदर्शनाच्च। सत्त्व आत्मेति तात्पर्यशुद्धावाचार्योक्तेश्च।

सुखी भवेयं दुःखी च माभूवमिति रूष्यतः।
यैवाहमिति धीः सैव सहजं तत्त्वदर्शनम्॥

इति वाक्ये सत्त्वपदेनात्मेत्यर्थस्य **बौद्धाधिकारशिरोमणौ** दर्शनाच्च।

आत्मारामाविहितरतयो निर्विकल्पे समाधौ
ज्ञानोत्सेकाद्विघटिततमोग्रन्थयस्तत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम्॥

इति **वेणीसंहार**श्लोके **काव्यप्रकाशटीकाकारैः** कैश्चित्सत्त्वपदस्यात्मपरत्वेन व्याख्यानाच्च। स्वप्नदर्शनस्यान्तःकरण इव जीवेतिसंभवात् करणे कर्तृत्वोपचारवत्कर्त्तरि करणत्वोपचारस्यापि संभवात्प्रत्युत व्याख्येयत्वेन प्रधानभूते मन्त्रे उपचारापेक्षया ज्ञानत्वेन तदङ्गभूते ब्राह्मणवाक्यस्य तदौचित्यात्। न चैवमपि शारीरपदस्य परमात्मपरत्वेन व्याख्यानमशक्यम्, शारीरे जीवात्मनि उपद्रष्ट्रेति सप्तम्यन्तं शारीरपदं "लोपःशाकल्यस्य" इति पक्षे लुप्तयकारं व्याख्याय सप्तम्याश्च विषयत्वमर्थमाश्रित्य जीवविषयकसाक्षात्कारवत्त्वेन तत्परत्वोपपत्तेः एकजीवस्यान्यजीवसाक्षात्कारासम्भवात्। स्वपरत्वे च शारीरपदेनैव तत्सिद्धौ उपद्रष्ट्रेत्यस्य वैयर्थ्यात्। अथ शारीरपदं प्रथमान्तमेवेत्याग्रहस्तथापि न क्षतिः, शारीरस्यायमित्यणन्तत्वोपपत्तेः। स्वविषयसाक्षात्काराश्रयत्वं सम्बन्धः। अथ

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः,

इति वचनान्नैवमित्युच्यते, तथापि शारीरस्यास्तीत्यर्श आद्यच्च सम्बन्ध उक्त एवेति बोध्यम्। एतद्व्याख्याने च **निरुक्तकारा**दिमहर्षिग्राहकमित्यप्यधिकमवधेयम्। अत एव "द्वौ सुपर्णसाम्यात्सुपर्णौ सयुजौ सर्वदा सहयुक्तौ सखायौ समानाख्यानौ स्वप्रकाशकत्वात्। समानमेकमुच्छेद्यत्वाद् वृक्षं शरीरं परिष्वक्तवन्तौ एकः पिप्पलः कर्मफलं संसारस्याश्वत्थत्वेन निरूपितत्वात्" इति**कल्पतरुकारै**र्व्याख्यातम्। नहि बुद्धिजीवौ सर्वदा

सहयुक्तौ बुद्धिः[द्धेः] सादित्वस्य तैरभ्युपगमात्। नापि समानाख्यानौ बुद्धेरचेतनत्वादिति दिक्।

अत एव द्वौ सुपर्णेत्युपक्रमः द्वित्वस्याश्रयप्रतियोगिकभेदसामानाधिकरण्यनियमात्। द्वौ चन्द्रावित्यादिवद्भेदस्य कल्पितत्वे च प्रमाणाभावात्। परमसाम्यमेतीत्युपसंहारः। तयोरन्यः अनशनन्नन्यः अन्यमीशमित्यभ्यासः। शास्त्रैकगम्येश्वरप्रतियोगिकभेदस्य मानान्तराप्राप्तेरपूर्वत्वं पुण्यपापे विधूयेति फलस्य महिमानमिति श्रुतिरूपोऽर्थवादः। अत्ति अनश्नन्नित्युपपत्तिरिति षड्विधतात्पर्यग्राहकलिङ्गोपेतश्रुतिगम्यत्वाद्भेदस्य तात्त्विकत्वमिति वदन्ति।

यत्तु **आथर्वणे प्रथममुण्डके** "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति **आङ्गिरसं** प्रति **शौनक**प्रश्नानन्तरं "तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा या तदक्षरमधिगम्यते यत्तदद्रश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रमपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्म तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादिना पराविद्याविषयमक्षरं प्रश्नानुसारेण प्रतिपादयताभेदस्यैवोपक्रान्तत्वात्, अन्यथा तदुत्तरत्वानुपपत्तेः। **द्वितीयमुण्डके** "पुरुष एवेदं विश्वमिदं वरीष्ठम्" इति मध्ये परामर्षात्। **तृतीयमुण्डकान्ते** च "परेऽव्यये सर्वमेकीभवन्ति स यो ह वै तत्परमं ब्रह्मैव भवति" इत्यैक्यलक्षणफलेनोपसंहाराच्च। **मुण्डक**त्रयात्मिकया उपनिषदैक्यपरत्वे स्थिते संप्रयुक्ते प्रकरणादिति न्यायेनाभिक्रमणादिवन्मध्यस्थितवाक्यस्यापि द्वा सुपर्णेत्यादेस्तदनुकूलत्वे संभवति, महाप्रकरणविरोधेन विपरीततात्पर्यकल्पनयाभेदोपक्रमत्वात् इति, तच्चिन्त्यम्; "कस्मिन्नु भगवो विज्ञाते" इत्यस्य "येनाश्रुतं श्रुतं भवति" इति **छान्दोग्य**वाक्येन तुल्यार्थकत्वेन व्याख्यातत्वादभेदस्योपक्रमे मानाभावात्। "पुरुष एवेदम्" इत्यादिश्च "इदं सर्वं यदयमात्मा" इति **बृहदारण्यक**वाक्यस्य वक्ष्यमाणो योऽर्थस्तत्समानार्थकत्वात्। सर्वं एकीभवन्तीत्यस्य तु "आत्मेत्येवोपासीतात्र ह्येते सर्व एकीभवन्ति" इति **छान्दोग्य**वाक्येन भेदपरतयैव व्याख्यातत्वात्। अतश्चाभेदस्य महाप्रकरणमित्यस्यासंभवदुक्तिकत्वात्। एतेनान्तर्यामिब्राह्मणे षड्विधलिङ्गोपेतं वाक्यं भेदप्रमाणम्। तथाहि "वेत्थ नु त्वं काप्य तमन्तर्यामिणम्" इत्युपक्रमः। "एष त आत्मान्तर्यामी" इत्युपसंहारः। एष त आत्मेत्येकविंशतिकृत्वोऽभ्यासः। अन्तर्यामीत्वस्याप्राप्ततया पूर्वत्वं "स ब्रह्म स ब्रह्मवित्" इत्यादिफलं "तच्चेत्त्वं

याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणमिमा ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यति" इति निन्दारूपोऽर्थवादः । "यस्य पृथिवी शरीरम्" इत्याद्यु-पपत्तिरित्याशङ्क्य यदुक्तम् "आत्मेत्येवोपासीत" इति सूत्रितब्रह्मविद्यावरण-रूपायां चतुरध्याय्यामनेन ह्येतत्सर्वं वेदेत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेद ब्रह्मास्मीति तस्मात्तत्सर्वमभवद्" इत्यभेदेनोपक्रम्य षष्ठाध्यायान्ते **मैत्रेयीब्राह्मणे** निगमरूपे "यत्र त्वस्य सर्वमा-त्मैवाभूत्तत्केन कं पश्येद्" इत्यादिना अभेदेनैवोपसंहारादध्यायचतुष्टयस्याभेद-परत्वे स्थितम्, तदन्तर्गतब्रह्मलोकान्तरसूत्रात्मप्रतिपादनपरस्य उत्तरब्राह्मण-प्रतिपाद्यनिरुपाधिकसर्वान्तरब्रह्मप्रतिपत्त्यनुकूलस्य महाप्रकरणविरोधेन तद्विरोधिभेदपरत्वाभावात् । त्वदुपन्यस्तलिङ्गानां भेदापरत्वनिर्णायकत्वेऽपि कल्पितभेदपरतयातात्त्विकभेदाविरोधित्वात् । अत एव न "शारीरश्चोभ-येऽपि" इति सूत्रभा[ष्य]विरोधोऽपीति, तदप्यपास्तं वेदितव्यम् । "आत्मेत्येवो पासीत" इत्यादेः सकलस्यापि श्रुतिसन्दर्भस्याभेदसिद्ध्यनन्तरकल्प्यतया तत्सिद्धेः पूर्वमसिद्धतया तत्परत्वेन श्रुतीनां सावकाशत्वायोगात्, इत्यास्तां तावत् । अत एव **भगवद्गीतायाम्**—

न त्वेवाहं जातु नाशं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥

अत्र पूर्वकालीनात्यन्ताभावप्रतियोगित्वस्येवोत्तरकालीनाभावप्रतियो-गित्वस्यापि निषेधस्य निरवच्छिन्नविशेषणतयैव बोधितत्वात्, त्वद्रीत्याविद्या-नाशेन तद्भेदनाशे तु तत्त्वज्ञानोत्पत्तिपूर्वकालावच्छिन्नविशेषणतयैवोत्तर-कालीनाभावप्रतियोगित्वस्य निषेधे तद्विरोधस्यापत्तिर्दुर्वारा स्यात् । न च जीवब्रह्मणोरैक्यपक्षेऽपि ब्रह्मणस्तत्त्वज्ञानोत्तरमपि सत्त्वात्तद्रूपेण जीवस्या-प्युत्तरकालीनाभावप्रतियोगित्वाभावो निरवच्छिन्नविशेषणतया संभवत्येवेति वाच्यम्; एकरूपावच्छेदेनैवोभयकालीनात्यन्ताभावप्रतियोगित्वाभावस्य शब्दस्वारस्येन गम्यमानत्वात्, इति दिक् ।

यत्तु विमता जीवा वस्तुतो ब्रह्मणो न भिद्यन्ते वस्तुत्वात्पूर्ववदिति, तन्न; पक्षदृष्टान्तसाधारणवस्तुत्वस्य दुर्वचत्वात् । व्यावहारिकभेदाभावसाध्या-भाससाम्याच्च श्रुत्यनुग्रहस्य बहुशो निराकरणात् । एवञ्च विमता जीवाश्चैत्रा-त्तत्वतो न भिद्यन्ते जीवत्वाच्चैत्रवदिति जीवैक्यानुमानमपि सावद्यम् ।

अतीतानागताश्चैव यावन्तः सहिताः क्षणाः ।

ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ।
बह्वो ज्ञापनतपसा पूता मद्भावमागताः ॥

इत्याद्यागमबाधात् । अयं घटस्तद्घटात्तत्त्वतो भेदहीनः घटत्वात्तद्घटवदित्याद्याभाससाम्यात् । विमतानि शरीराणि चैत्राधिष्ठितानि शरीरत्वान्मृतवदित्यपि न साधु; मैत्रशरीरं चैत्रशरीराधिष्ठात्रनधिष्ठितं चैत्रभोगानवच्छेदकत्वाद् घटवदिति प्रतिरोधाच्च । यदप्यात्मा स्वसमानाधिकरणा या द्रव्यत्वन्यूनवृत्तिजातिस्तदाश्रयप्रतियोगिकभेदवत्, यद्यत्तदन्यः स्वसमानकालीनयावन्मूर्त्तसंयोगित्वादाकाशवत्, साध्ये स्वभेद इति, तदप्यसत्; आत्मा उक्तभेदवान् शब्दान्यविशेषगुणवत्त्वात् पृथिव्यादिवदिति प्रतिरोधात् । यदपि संवित् संविदनुयोगिप्रतियोगिकभेद आकाशानुयोगिप्रतियोगिकभेदश्चेत्यन्यतरभेदवत्त्वात् गगनवत् प्रतियोग्यनुयोगिरूपधर्मप्रत्यक्षव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिप्रत्यक्षविषयभेदकघटपटादौ व्यभिचारवारणाय भिन्नान्तमिति, तदप्यसत्; स्वभेदाभावमादाय सिद्धसाधनात् । न च संवित्त्वावच्छिन्नप्रतियोग्यनुयोगिताकभेद एवाभावप्रतियोगित्वेन साध्ये निवेश्यः, एकधर्मावच्छिन्नत्वानुयोगित्वयोरनङ्गीकारात् । शाब्दादिरूपप्रतियोगिज्ञानस्यापि भेदप्रत्यक्षधीहेतुत्वेन स्वरूपासिद्धेः, अस्माकं संविदात्मनो भेदेन व्यधिकरणत्वाच्च । आत्मा आत्मत्वाश्रयप्रतियोगिकभेदवान् द्रव्यत्वादाकाशवत्, इति प्रतिरोधाच्च । यदप्यात्मत्वं स्वप्रतियोगिकभेदवत्त्वं स्वसमानकालीनत्वश्चेत्युभयसम्बन्धेन यत्स्वाश्रयवत्त्वं तच्च समवायश्चेत्युभयसम्बन्धेन वर्त्तते यत्तदन्यत्, आत्मवृत्तित्वाच्चैत्रत्ववद्बहिरिन्द्रियग्राह्यम् । आद्योभयसम्बन्धे घटत्वाश्रयवत्त्व समवायश्चेत्युभयसम्बन्धेन वर्त्तते घटत्वं न तु चैत्रत्वं तत्तत्समवायिव्यक्तिद्वयस्यैकदा विरहात् इति, तदप्यसत्; चैत्रत्वादेः शरीरवृत्तितया दृष्टान्तस्यैव कल्पात् । तथा च समानकालीनानेकावृत्तिशरीरवृत्तिजातित्वं दुःखावच्छेदकत्वासमानाधिकरणवृत्तिर्न वेति विप्रतिपत्तौ तादृशी च जातिर्बल्याभिन्नशरीरवृत्तिरसाधारणी चैत्रत्वादिः प्रसिद्धेति **कुसुमाञ्जलिप्रकाशे** उक्तोभयसम्बन्धेन स्वाश्रयत्वस्य घटत्वघटयोः सम्बन्धत्वे मानाभावाच्च । आत्मत्वतद्विशेषणसमानाधिकरणत्वे सति प्रत्यक्षत्वात्पृथिवीत्ववत् प्रत्यक्षत्वे सति द्रव्यविभाजकोपाधित्वात्तद्वत्त्वान्मनस्त्वङ्मात्रवृत्तिरिति प्रतिरोधाच्च । इति जीवब्रह्म भेदानुमानम् ।

यत्तु "पादोऽस्य विश्वा भूतानि" "ममैवांशो जीवलोके जीवभूतस्सनातनः" इति श्रुतिस्मृत्योरंशत्वव्यपदेशाज्जीवे ब्रह्माभेदसिद्धिः । भूतपदं

जीवपरं "अहिंसन् भूतान्यत्र तीर्थेभ्यः" इति प्रयोगात्, तीर्थेभ्यो यज्ञेभ्यः इति, तन्न; अवयवत्वरूपांशशब्दमुख्यार्थत्वस्य बाधितत्वात्, "द्रव्यसमवायिवचने-नावयवपदेन" इति न्यायभास्करोक्तेः। "ज्ञानेऽवयवाभावेनांशो विषय एव" इति मणिकारोक्तेश्च। जीवस्याभेदपक्षे कल्पितप्रदेशत्वरूपत्वस्येव भवन्मते मन्मतेऽपि तन्नियम्यत्वादिरूपस्यांशत्वस्य सम्भवात्। "ये विज्ञाने तिष्ठन् य आत्मनि तिष्ठन्" इत्यादौ भेदश्रवणाच्च। यत्तु वस्त्वेकदेशे मुख्यस्यांश-शब्दस्य सतो निरंशे प्रकल्पिते प्रयोग एवात्यन्तिकभेदगर्भार्थतरकल्पनापेक्षया युक्तः। अत एव व्याससूत्रम्–"अंशो नानाव्यपदेशादन्यथा चापि दाशकित-वादित्वमधीयत एके" इति। अस्यार्थः—लौकिकं भेदव्यवहारमपेक्ष्य जीवो ब्रह्मभिन्नत्वेन य आत्मनि तिष्ठन्नित्यादौ निर्दिष्टः। यकारस्त्वर्थे, अपिरेवार्थे। एके आथर्वणिकादयस्तु अन्यथैव लोकानवगतसप्रयोजनत्वेन तात्पर्यवन्तो ब्रह्मणि दासकितवाद्यभेदमधीयते। यथा च तेषां मन्त्रवर्णः "ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत" इति। दाशाः कैवर्त्ताः दासाः सेवकाः कितवा द्यूतकाराः हीनजीवाः। भेदोक्तिस्तु जीवमात्रस्य तदभेदसूचनार्था। अत एव "त्वं स्त्री त्वं पुमान् त्वं कुमार उत वा कुमारी" इत्यादि "तत्त्वमसि" इत्यादि च श्रूयते।

नन्वेवं हस्तगतस्य शरीरसम्बन्धवज्जीवगतस्य संसारस्य ब्रह्मगतत्वं स्यात्; अंशगतस्यांशिगतत्वनियमात्। न चेष्टापत्तिः; नित्यमुक्तश्रुतिविरोधा-दित्यतः सूत्रान्तरं 'प्रकाशादिवन्नैवं परः" इति। यथा सूर्यादिप्रकाशो गुल्माद्यवच्छेदेनैव ऋजुत्ववक्रत्वादि, यथा वा कर्णाद्यवच्छेदेनैवाकाशादेः शब्दादिग्राहकत्वम्, एवमन्तःकरणरूपं यदंशतावच्छेदकं तदवच्छेदेनैव संसार इति, परो नैवं तथाचोक्तनियमोऽसिद्ध इति, तत्रोच्यते; दासत्वादि-धर्माणामात्मवृत्तित्वाभावादाथर्वणमन्त्रलिङ्गस्य जीवब्रह्माभेदपरत्वे माना-भावः, पदोदात्तरूपावच्छिन्नयोरभेदस्य तैरप्यनभ्युपगमाच्च। व्याख्यानं तु पुरुष एवेदं सर्वमित्यादिवद्वक्ष्यमाणरीत्या बोध्यम्। न हि तन्त्वादिभ्यः पटादिरभिन्नो येनाभेदगर्भ एवार्थः कल्प्येत, अवयवावयविनोरभेदस्यैव प्रत्यक्षत्वात्। अंशपदस्य द्रव्यसमवायिन्येव मुख्यत्वाभिधानाच्च।

केचित्तु, पादोऽस्येति श्रुत्यादिना शुद्धचैतन्यांशत्वं जीवस्य बोध्यते उत ईश्वरांशत्वम्? नाद्यः, इदंशब्देन प्रकृतसहस्रशीर्षत्वादिविशिष्टस्यैव ममैवांश इति स्मृतावीश्वरोच्चरितास्मच्छब्देन च ईश्वरस्योक्तेः। नान्त्यः, वेदान्तिमते ईश्वरस्याप्युपहितत्वेन जीवस्य तं प्रत्यंशत्वायोगात्। न च

गृहावच्छिन्नमेवाकाशं यथा पुनर्घटे नावच्छिद्यते, एवमीश्वरोपाधिनावच्छिन्नमेव चैतन्यं पुनर्जीवोपाधिनावच्छिद्यत इति वाच्यम्; तथात्वे मुक्तस्य शुद्धब्रह्मत्वानुपपत्तेरिति वदन्ति।

यत्तु सर्वनाम्ना सहस्रशीर्षत्वाद्युपलक्षितचैतन्यस्यैव परामर्शान्न दोष इति, तन्न; विशिष्टपरामर्शे बाधकाभावादन्यथाचान्योन्याश्रयात्।

तत्र यः परमात्मा हि सन्नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा॥

कर्मात्मा त्वपरो योऽसौ, बन्धमोक्षैस्स युज्यते। इतिस्मृतेश्च।

प्रकृतमनुसरामः। ननु शरीरादिव्यतिरिक्ते आत्मनि मानाभावः। तस्य च दर्शनादिकं सिद्धमेवेत्याशङ्क्याह—'ब्रह्म तं परादादित्याद्यात्मनोऽन्यत्रात्मानं विनात्मन्यसति" इति यावत् ताभ्य ऋतेऽन्वय इति याज्ञवल्क्यवाक्ये "ताभ्यो दुहितृभ्यो विना दुहितॄणामभावेऽन्वये पुत्रादिर्गृह्णीयात्" इति विज्ञानेश्वरव्याख्यानात्। यो ब्रह्म ब्राह्मणत्वं जातिं वेद जानाति परैरपि जातिपरत्वेनैव ब्रह्मादिपदव्याख्यानात्। अयं ब्राह्मण इति ज्ञानमन्यद्देहज्ञानविलक्षणाविषयकत्वे सति ब्राह्मणविषयकं यो मन्यते। ब्राह्मणत्वजातिं निराकुरुते स्वाभावे स्वविषयकज्ञानवन्तं व्याघातेन यो जयति ब्राह्मणत्वजातेरदृष्टविशेषोपगृहीतशरीरवृत्तित्वाद्देहस्यैवात्मत्वेन तस्य साधारण्यात्। क्षत्रियादिव्यावृत्तब्राह्मणव्यवहारानुपपत्त्यादृष्टाश्रय आत्मावश्यमिति रीत्याङ्गीकर्त्तव्यः। एवं जात्यन्तरोऽपीत्याह—क्षात्रं तं परादादित्यादि।

ननु ब्राह्मणोऽयमित्याकारकानादिव्यवहारविषयपिण्डविशेषजन्यशरीरवृत्तिरेव ब्राह्मणत्वादिजातिरतो नानुपपत्तिरत आह—लोकास्तमिति। उक्तव्यवहारो हि लौकिको वाच्यः। लोकाश्च प्रयोक्तारः पुरुषाः। न च तद्व्यवहारस्याविच्छेदः सम्भवति प्रलये वृद्धपरम्पराविच्छेदस्यावश्यकत्वात्। ततश्च सर्गाद्यब्राह्मणादौ तद्व्यवहाराभावादव्याप्तिः स्यादतो नेयमुपपत्तिरित्यर्थः। तदुक्तमाचार्यैः उद्भिदवृश्चिकवद्वर्णा इति। एवमिन्द्रियाणामप्यात्मत्वं निरस्यति—देवास्तमिति। "देवमाख्यातमिन्द्रियम्" इति कोषदर्शनेऽपि। नैतद्देवा आप्नुवन्पूर्वमर्षदित्यत्रेन्द्रियपरत्वेन तद्भाष्यव्याख्यानदर्शनात्। एकेन्द्रियोप[घा]ते तदनुभूतस्यान्येन्द्रियेण स्मृत्यनुपपत्तेरित्यादि प्रागुक्तम्। ज्ञानमेवात्मेति निरस्यति—वेदास्तमिति। विद ज्ञाने भावे घञ्।

ज्ञानं पृथिव्याद्यतिरिक्तद्रव्याश्रितं तदनाश्रितत्वे सति कार्यत्वात्। यत्पृथिव्याद्यतिरिक्तद्रव्याश्रितं न भवति तत्तदनाश्रितत्वे सति कार्यं न भवति यथा गन्धादिरिति। केवलव्यतिरेकीतिभावः। यद्वा परमात्मसाधनार्थमाह—वेदास्तमिति। वेदः पौरुषेयो वाक्यत्वाद्भार[त]वत्। अस्मदादेश्च तत्कर्तृत्वासम्भवात्। तत्कर्तृत्वेनेश्वरसिद्धिः। "वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः" इत्याचार्योक्तेः। यज्ञादीनामिष्टसाधनत्वेनाप्ताभिप्रायविषयत्वेनानुमेयम्। विध्यर्थस्त्वभिप्रायमात्रम्। न च तद्दर्शी जीवः सम्भवति तस्यातीन्द्रियविषयकसाक्षात्कारानुपपत्तेः। अतो विध्यर्थेच्छाश्रयत्वेनापीश्वरसिद्धिरित्याशयवानाह—यज्ञास्तमिति। उक्तञ्चाचार्यैः।

विधिर्वक्तुरभिप्रायः सा चेच्छातो यतश्च सा।
तज्ज्ञानविषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥ इति।

एवं सूर्यादीनां नियतक्रियावत्त्वेनापि तथेत्याह—भूतानीति। प्रागुक्तरीत्यैवार्थः। यद्वा क्षित्यादिकं सकर्तृकं कार्यत्वादित्यादौ तात्पर्यम्। अतिरिक्तसंग्रहार्थमाह—सर्वतामिति। तस्मादेतद्रीत्या प्रपञ्चात्मानौ अतिरिक्तावेवेति निगमयति—इदं ब्रह्मेति। सदयमात्मेति साध्यसाधनयोरभेदोपचारः। यद्वा इदं सर्वं यद्गमनशीलमनित्यमिति यावत्। इण्धातोः शतृप्रत्यये "इणो यण्" इति यणादेशः। सर्वपदं नित्यादतिरिक्तपरं पूर्वोक्तान्यपरत्वेन संकोचस्य तेनापि वाच्यत्वात्। अयमात्मेति यः पूर्वं श्रोतव्यत्वादिनोक्तः सोऽयमात्मा न तु शरीरादिस्वरूप इति वाच्यम्। मिश्रास्तु—"आत्मैवेदं सर्वमित्यादौ सर्वस्यात्मा भोक्तेत्यर्थः, यथा यः कामयेत राष्ट्रं स्यामिति राष्ट्रस्य भोक्तेत्यर्थ, यः कामयते सर्वमिदं भवेयमिति सर्वस्य भोक्ताभवेयमित्यर्थः" इत्याहुः। यद्वा इदं सर्वमिति सर्वप्राधान्यमेवार्थः। तेनेह "तेन विश्वकर्मा भौवं ईजे तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदं सर्वं समभवदतिष्ठत सर्वाणि भूतानीदं सर्वं भवति य एवं विद्वान् सर्वमेधेन यजते यो वै तदेवं वेद" इत्यादिवत्। अथवा यो ब्राह्मणजातीयमात्मनोऽन्यत्राधारे वेदेत्यादि व्याख्येयम्। तैरपि चिदानन्दरसाद् ब्रह्मात्मनः सत्तास्वभावादन्यस्मिन् सत्त्वे विभिन्नेऽनुगते व्यावृत्ते वा ज्ञाते स्वरूपेऽस्वरूपे वा स्वातन्त्र्येण स्थितं ब्रह्म ब्राह्मणत्वजातिं वेद जानातीत्याधारार्थकत्वेन व्याख्यानात्। संयोगादिना ब्राह्मणादीनां तत्रासत्त्वेऽपि तन्नियामकप्रयत्नविशेषाद्याश्रयत्वेन तथोक्तिः। "यस्मिंश्च द्यौः पृथिवी च तते" इत्यादिश्रवणात्।

यत्तु व्याख्यातारः अत्रेदंपदैरेकवचनबहुवचनान्तैःषड्विधैर्विविधप्रत्ययविषयार्थं ब्रह्मादिसमानाधिकरणैः ब्राह्मणत्वाद्यनूद्यात्मत्वं विधीयते। यथाऽयं पुमान् योऽयं स्थाणुरितीदमासमानाधिकरणेन पुरुषत्वमनूद्य स्थाणुत्वं विधीयते। योजना त्वेवम्—इदं ब्रह्म यत्तच्छाब्दाध्याहारेण तदयमस्मद्धीसाक्षी आत्मा चिदेकरसः। न तु ब्राह्मणत्वजातिरस्मादन्यत्र नचास्मिन्नपि वस्तुतः किन्तु रज्जुसर्पवत्परिकीर्त्तिता। एवं शेषेष्वपि क्षत्रियान्तेषु सर्वान्तेषु योज्यमिति, तच्चिन्त्यम्; बाधायां सामानाधिकरण्याश्रयणे मानाभावात्। तत्र पदद्वयस्यापि लाक्षणिकत्वापत्तेः। तदपेक्षया एकस्यैव लक्षणाया युक्तत्वात्। अथवान्यदित्यादिनाद्वैतवाददूषणस्यैव व्याख्यातत्वाच्च। ब्राह्मणादीनामात्मनि सत्त्वस्य पूर्वशब्दादेव प्रतीतत्वेन तद्विरोधिनो वस्तुतस्तथापि नास्तीत्येतदर्थककल्पनस्य बाधितत्वाच्च।

यत्तु सर्वप्रपञ्चाभावोपलक्षितात्मस्वरूपबोधकेनेदं सर्वमिति वाक्येनावान्तरतात्पर्येणात्मनि सर्वाभावो बोध्यते। सर्वपदस्य सर्वाभावोपलक्षितार्थकत्वेऽप्यात्मपदस्य मुख्यार्थैकदेशाखण्डात्मनि लक्षकत्वाभावादखण्डात्मन एव प्राकरणिकत्वेन तात्पर्यविषयसर्वव्याप्त्यादिलाक्षणिकार्थासम्भव इति, तन्न; योऽन्यत्रात्मनो ब्रह्म वेदेत्यादिविरोधोक्तत्वात्। पृथिवीभिन्ने गन्धो नास्तीति शाब्दे पृथिवीवृत्तित्वस्थायिगन्धे निर्णयादनाघ्राततद्बोधाद् गन्धे पृथिवीवृत्तित्वसंशयस्यानुच्छेदप्रसङ्गात्। आत्मत्वविशिष्टशाब्दस्यात्मपदशक्तिज्ञानकार्यतावच्छेदकत्वेन क्लृप्तत्वात्तद्रीत्या केवलव्यक्तिविषयकबोधस्य लक्षणामूलकत्वाभावेऽपि विशेषणानवभासस्य कल्पने गौरवाच्च। अखण्डात्मन एव प्राकरणिकत्वे च प्रमाणाभावात्पूर्वं सन्दर्भबलात्तात्पर्याविषयत्वेन निर्णीततदुक्तसामानाधिकरण्यानुरुद्धैकपदलक्षणाकल्पनापेक्षया तात्पर्यविषयकत्वेन सन्दिह्यमानसर्वव्याप्त्यादिलक्षणायाः श्रुत्यन्तरसंवादिन्या मानान्तराविरुद्धायाश्च कल्पनस्य सुतरामेव युक्तत्वात्। "सर्वभूतमयस्त्वं हि न हि किञ्चित्त्वया विना" इति **रामायणे लङ्काकाण्डे** श्रीरामं प्रति नारदोक्तौ सर्वभूतमयत्वस्य सर्वव्यापकत्वपरतयैव स्पष्टं दर्शितत्वाच्च। वह्निं विना न धूम इत्यादौ तथैव प्रत्ययाद्धूमत्वमिथ्यात्वप्रत्ययाभावाच्च। विनाशब्दस्य पूर्वोक्तरीत्यात्यन्ताभावपरतया वह्न्यभावे धूमाभाव इति प्रत्ययात्। वह्न्यभावव्यापकीभूताभावप्रतियोगित्वस्यैव धूमे लाभात्। अत एव **भगवद्गीतायाम्**—

यच्चापि सर्वभूतानां बीजं तदहमर्जुन।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम्॥

  

अत्र सर्वजनकत्वेन सर्वतादात्म्यस्य स्पष्टं प्रतिपादितत्वात्। व्यापकत्वं पुनस्तत्रान्यादृशमत्र च तत्संयोगित्वनियामकत्वादिकमित्यन्यदेतत्। अत एव **मोक्षधर्मे** भीष्म उवाच—

श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च॥
असितो देवलस्तात वाल्मीकिश्च महातपाः।
मार्कण्डेयश्च गोविन्दं कथयन्त्यद्भुतं महत्॥
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः।
वायुर्ज्योतिस्तथा चापः खं च गां चान्वकल्पयत्॥

इत्यादिना सर्वहेतुत्वमुक्तम्। तथा च सर्वस्रष्टृत्वव्यापकत्वज्ञातृत्वादिना सर्वत्वमिति स्पष्टम्। अत एव सर्वसंहारकत्वेनापि तज्ज्ञेयम्। तथा च **मोक्षधर्मे** याज्ञवल्क्यजनकसंवादे—

अथ ग्रसत्यन्ततो हि महात्मा विश्वमीश्वरः।
ततः समभवत्सर्वमक्षयाव्रणमव्ययम्।

इत्येकवाक्यतया तथोक्तार्थलाभात्। अत एव **दानधर्मे** भीष्मवाक्यम्—

अपः सृष्ट्वा सर्वभूतात्मयोनिः पुराकरोत्सर्वमेवाथ विश्वम्।
ऋतूनन्यान् विविधान्यद्भुतानि मेघाद्या विद्युत्सर्वमैरावतश्च॥
सर्वं कृष्णात्स्थावरं जङ्गमञ्च विश्वात्मानं विष्णुमेनं प्रतीहि।
ततो [देवान] सुरान्मानवांश्च लोकानृषींश्चापि पितृनजांश्च॥
समासेन विधिवत्प्राणिलोकान् सर्वान् सदा भूतपतिः सिसृक्षुः।
यद् वर्त्तते यच्च भविष्यतीह सर्वमेतत्केशवात्त्वं प्रतीहि॥
मृत्युश्चैव प्राणिनामन्तकाले साक्षात्कृष्णः शाश्वतो धर्मबाहुः।
भूतञ्च यच्चेह न विप्र किञ्चिद्विष्वक्सेनात्सर्वमेतत्प्रतीहि॥
यत्प्रशस्तञ्च लोकेषु पुण्यं यच्च शुभाशुभम्।
तत्सर्वं केशवो चिन्त्यो विपरीतमतः परम्॥

अत्र सर्वस्रष्टृत्वादिना सर्वत्वमित्यस्य स्फुटतरं प्रोक्तत्वात्। अत एव "कुतश्चाहं कुतश्च त्वम्" इति प्रश्नोत्तरत्वेनावतार्य "वासुदेवः सर्वम्" इति **वार्ष्णेयाध्यात्मे** "वासुदेवात्सर्वमुत्पन्नमिति" **विद्यासागर**-व्याख्यानम्।

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः।
सर्वस्य च सदाज्ञानात्सर्वमेतं प्रचक्षते ॥
पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत्।
इत्युच्यते तदीयत्वान्नतु सर्वस्वरूपतः॥
सर्वं समाप्नोसि ततोऽसि सर्वः।

इति स्पष्टमेव **भारते** तद्विरुद्धार्थकत्वेन व्याख्यानाच्च। अस्यार्थः— असतः कार्यस्य सतः कारणस्य सर्वस्योत्पत्तिविनाशहेतुः।

नन्वेतावतापि नित्यानां कारणानां बहिर्भावापत्तिः, तेषामपि सर्व-पदेन सङ्कोचं विना संगृहीतत्वात्। अत आह—सर्वस्य चेति। तथा च तदंशे ज्ञापकत्वादेवांशान्तरे चोत्पत्तिविनाशहेतुत्वात्सर्वमित्युच्यते। अत एव—

यतो द्रव्यं गुणाः कर्म तथा जातिः परापरा।
विशेषाः समवायो वा तमीश्वरमुपास्महे ॥

इति **किरणावलीवाक्ये** "उत्पत्तिज्ञप्तिहेतुहेतुत्वं यथायोगं नित्यानित्यानामत्र" इति **उपायकाराः**। **श्रीनारायणसर्वज्ञास्तु उद्योगपर्वटीकायाम्** "असतोऽनित्यस्य प्रभवो जननः नित्यस्याप्ययः अप्ययते आप्नोतीति व्युत्पत्त्या सदसच्च सर्वपदेनोच्यते, अतस्तच्छब्दस्तत्प्रभवाप्ययहेतावुपचारात्प्रवर्त्तते। एवं सर्वस्य ज्ञानादित्यत्रापि निमित्ते उपचारः" इति व्याचख्युः। पुरुष एवेदं सर्वमिति। "आत्मैवेदं सर्वम्" "इदं सर्वं यदयमात्मा" "ब्रह्मैवेदं सर्वम्" इत्यादीनामप्युपलक्षणम्; तदीयत्वादिति। व्यापकत्वाद्भोक्तृत्वादि योग्यसम्बन्धमात्रपरिग्रहार्थमिति स्पष्टयति—नत्विति। तथा च सर्वात्मकत्वादिकं नोक्तश्रुत्यर्थ इत्यत्रोक्तस्मृतिरेव प्रमाणमिति न काप्यनुपपत्तिः। यत्तु व्याचक्षते सर्वं ब्रह्मणः स्वमसाधारणं निरुपममित्यर्थमादाय तत्सर्वमिति नोच्यते, किन्तु त्वदीयत्वात्सर्वं ब्रह्मसम्बन्धात्, सम्बन्धश्चासत इत्यादिश्लोके विशिष्योक्तः। प्रभवाप्यययोर्भासकतायां च नियामकं तादात्म्यसम्बन्धमित्यर्थः। तथा च चिज्जडतादात्म्यानुपपत्तिदृग्दृश्यसम्बन्धोऽनुपपत्त्यादिन्यायैराध्यासिकत्वेनाध्यासे बाधायां वा सामानाधिकरण्यं न त्वभेदे, इत्यत्र तात्पर्यम्। "एतावदरे खल्वमृतत्वम्" इति वाक्यशेषाद् "इदं सर्वं यदयमात्मा" इत्यादेरखण्डप्रकरणस्थस्य बाधायामेव सगुणोपासनाप्रकरणस्थस्य "सर्वं खल्विदं ब्रह्म" इत्यादेरध्यासेऽपि सामानाधिकरण्यसम्भवेनाविरोधात्। "सर्वं तं परादाद्" इत्यत्रान्यत्रैत्यस्यान्यदित्यर्थकत्वात्।

यथा श्रुतार्थत्वेऽप्यात्मनि सर्वमध्यस्तमित्यर्थपर्यवसानादिति, तच्चिन्त्यम्; उपक्रमन्यायेनात्मवृत्तित्वस्य यथोक्तस्यैव प्रपञ्चे प्राबल्यात्। यत्र वान्यदिव स्यादित्यादेरुपसंहारस्याप्यद्वैतदूषणपरत्वात्। मध्येऽपि तदनुगुणस्यैवार्थस्य न्याय्यत्वात्। अन्यत्र पदस्यान्यदित्यर्थकत्वे मानाभावात्। त[द्व्याख्यान]-विसंवादाच्च।

नान्यः प्रतिबलो लोके तवार्जुन भविष्यति।
अन्यत्र भीष्माद्भीष्माद् ·········॥

इत्यादौ प्रथमान्तान्यशब्दसमानार्थकत्वेऽपि अहिंसन्नन्यत्र तीर्थेभ्यः कारणत्वश्चान्यत्र पारिमाण्डल्यादिभ्य इत्यादौ सप्तम्यन्तत्वस्यौत्सर्गिकत्वात्। उक्तस्थले प्रथमासमानार्थकत्वस्यागतिकगतित्वाच्च। "न कर्म कुर्यादिति ममैतदन्यत्र युद्धाद्धहु यल्लघीयः।" इति **उद्योगपर्ववाक्येऽ**न्यत्र युद्धादन्यत् प्रथमार्थे सप्तमीति व्याख्यातत्वात्। "गुदवद्गुरुपुत्रे यतितव्यमन्यत्रोच्छिष्ट-भोजनात् पादोपसंग्रहणाच्च" इत्यत्र विनाशब्दसमानार्थकत्वात्। आत्मनि सर्वमध्यस्तमित्यर्थपर्यवसानमूलस्य सम्बन्धान्तरास्तमयस्यासिद्धेश्च। स्मृति-व्याख्यानमप्ययुक्तं सर्वज्ञानादेव सर्वत्वमुच्यत इत्यर्थस्य स्पष्टतरत्वात्। भासकत्वादौ नियामकतादात्म्यमिति शेषं दत्त्वा व्याख्यानस्य निर्बीजत्वात् शब्दात्तस्यानवगमात् कल्पकस्य चासिद्धत्वात्, प्रत्युत सर्वस्मादपि स्वरूपतोऽ-भेदबोधकाकाङ्क्षाघटितपदद्वयगम्यात्सम्बन्धादिति बाधाध्यासयोः सामाना-धिकरण्यस्यापि व्यावृत्तावेव तात्पर्यात्। सर्वं ब्रह्मणः स्वमसाधारणरूपमि-त्यर्थकस्य केनचिद्वादिनानाशङ्कितत्वेन तद्व्यावृत्तौ तात्पर्यायोगाच्चेति दिक्।

यदपि समयेत्यादेर्व्याख्यानं **भामत्यां** "यत्खलु यद्ग्रहं विना न शक्यते ग्रहीतुं तत्ततो न व्यतिरिच्यते, यथा रजतं शुक्तिकायाः भुजङ्गो वा रज्जोः दुन्दुभ्यादिशब्दसामान्याद्वा तच्छब्दभेदाः न गृह्यन्ते। क्वचिद्रूप-ग्रहणं विना स्थितिकाले नामरूपाणि तस्मान्न चिदात्मनोऽभिद्यन्ते। तदिद-मुक्तम्—यथादुन्दुभेर्हन्यमानस्येति। दुन्दुभिशब्देन तद्गतं सामान्यमुप-लक्षयतीत्यादि। यच्च **सूत्रमुक्तावल्यां** बाह्यान् दुन्दुभिशब्दविशेषल्पान् न शक्नुयादिति दुन्दुभिशब्दस्य सामान्यस्याभावेन यथा तद्गतविशेषाणां न ग्रहणमेवं ब्रह्मरूपस्य सत्सामान्यस्य ग्रहणे तद्गतविशेषरूपस्या (प्रवस्यां?) पीति स तत्र कल्पित इति दुन्दुभिवाक्यार्थ" इति। यच्च **बृहदारण्यकव्याख्याने** यथा शब्दत्वेनानुस्यूतभेरीशङ्खवीणाशब्दाः विजातीये शब्दान्तरे सत्यपि केषाञ्चिदनादरे विजातीयशब्दतिरस्कारेण

सजातीयशब्दग्रहणादरवद्भिरपि भेरीशब्दविशेषा वीणाशब्दविशेषा अपास्य भेरीशब्दसामान्यं शङ्खशब्दसामान्यं ग्रहीतुमशक्याः तानि वा शब्दत्वमपास्य ग्रहीतुमशक्यानि तथा ब्रह्मसत्त्वानुस्यूता अव्याकृतहिरण्यगर्भविराजस्तत्कारितैतत्त्रयग्रहणमन्तरेण तानि तत्त्रयं वात्मसत्त्वग्रहणमन्तरेण न गृह्यन्त इति दृष्टान्तत्रयस्यार्थ इति तात्पर्यसंग्रहकथनम्, तत्सर्वं चिन्त्यम्; प्रतिज्ञाया एकोक्तरीत्या प्रपञ्चमिथ्यात्वपरत्वासिद्धेः। पूर्वमेव स्वेच्छया शब्दान्परिक्षिप्य स्वाभिमतार्थपरत्वमभिधाय दृष्टान्तेऽपि लक्षणाध्याहारादिना तत्परत्वमित्यस्य वक्तुमशक्यत्वात्। तस्माच्छ्रुतिशब्दस्वारस्यादर्थस्य विचार्यमाणत्वे स्वपदप्रक्षेपात्तत्कदर्थनं व्यर्थमत्यर्थमपि च प्राणिषु वचनेषु विचारकाले पदान्तरैरनवगीतपदान्वयेषु निक्षिप्य शेषमपि तत्प्रतिकूलमर्थमानीय तत्र रतिरित्यतिसाहसिक्यम्। यत्तु यद्धि येन विना न शक्यते ग्रहीतुं तत्तदभिन्नमिति, तदसत्; सहोपलम्भनियमतोऽस्य "नाभाव उपलब्धेः" इत्यादि सूत्र एव निरस्तत्वात्। नामरूपाणां चिद्रूपग्रहाधीनग्रहत्वस्यासिद्धेश्च।

किञ्च दुन्दुभित्वावच्छिन्नजनकत्वप्रयोजकत्वप्रतियोगिकजन्यतावच्छेदकंवैजात्यविशिष्टशब्दग्रहे न हेतुः, निर्विशेषं न सामान्यसामान्यमिति न्यायेन व्याप्यधर्मावच्छिन्नशब्दाविषयकव्यापकीभूतधर्मावच्छिन्नशब्दमात्रविषयकप्रत्यक्षस्याप्रसिद्धेः। न च व्याप्यजात्यवच्छिन्नशब्दस्य व्यापकजात्यविषयकप्रत्यक्षाविषयत्वमित्येव दृष्टान्तार्थो न तु हेतुहेतुमद्भावेऽपीति वाच्यम्; दुन्दुभेस्तु ग्रहणेनेति तृतीयार्थपरित्यागापत्तेः, दुन्दुभिशब्दस्य दुन्दुभिसामान्यलक्षणापत्तेश्च। ब्रह्मैव सर्वानुस्यूतसत्त्वात्मकमित्यग्रे निराकरिष्यत इत्यास्तां तावत्। तस्मादयमर्थः ज्ञानादीनां शरीरगुणत्वाभाव उक्तस्तत्रैवोपपत्तिमाह— स यथेति। बाह्यान् दुन्दुभिशब्दभिन्नान् शब्दान् हन्यमानस्य दुन्दुभेः समवेतत्वसम्बन्धेन ग्रहणाय ज्ञानं कर्तुं न शक्नुयात्। शब्दो न स्पर्शवद्विशेषगुणः अयावद्द्रव्यभावित्वादिति दुन्दुभिगुणत्वं शब्दस्य न तु वक्तुं शक्यम्, दुन्दुभिसमवेतनाशं प्रति दुन्दुभिनाशकालीनदुन्दुभिसमवेतनाशत्वमेव तन्नाशस्य कार्यतावच्छेदकम्। अतस्तत्सत्त्वेऽपि शब्दनाशो नानुत्पन्नः तस्य दुन्दुभिसमानकालीनत्वाभावादित्यादिकं कल्प्यते। तथापि शङ्खादिशब्दे शङ्खादेस्समवायित्वं कल्प्यमिति गौरवं स्यादतः शब्दसमवायित्वेनाकाश एवाभ्युपगमात्, इति दृष्टान्तार्थः। दुन्दुभेरेव शब्दमात्रे समवायिकारणत्वं कुतो न स्यादत आह— दुन्दुभेस्त्विति। ग्रहणेन शब्दसम-

वायित्वनिश्चयेन दुन्दुभ्य[व]घातस्य जन्यत्वेन सम्बन्धी शब्दस्य गृहीतो न तु शब्दादिजन्यः, तत्र तादात्म्येन दुन्दुभेरभावात्। अतस्तत्तदनन्तद्रव्याणां तादात्म्येन शब्दहेतुकल्पने गौरवप्रसङ्ग इति भावः। एवं शङ्खवीणावाक्ययोरपि योज्यम्। वाकार एवकारार्थकत्वादवधारणार्थः।

वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये।

इति **कोषदर्शनात्**। एवं देहादीनामनन्तानामित्यात्मत्वकल्पनम[ना]पेक्षातिरिक्तस्वीकार एव युक्तः। एवं क्षित्यादेरपि कर्तृसिद्धौ पूर्वसर्गसिद्धानां तत्सर्गकर्तृत्वे गौरवातिरिक्त एव सर्वत्र कर्त्तेति यथायोगमूह्यम्।

नाध्याहारः कश्चिन्न लक्षणा कुत्रचिच्छब्दे।
अत्रैव व्याख्याने रुचिरुचिता तद्विपश्चितां प्रचिता॥

एवञ्च दुन्दुभ्यादीनां निमित्तहेतुत्वेऽपि जीवस्य स्वकार्यज्ञानादौ समवायित्वस्वीकारादीश्वरस्यापि स्वकार्ये उपादानत्वशङ्का स्यादतस्तन्निवृत्त्यर्थमाह—स यथेति। आर्द्राणि एधानि काष्ठानि यस्य "एधान् हुताशमनयत" इत्यादिप्रयोगादकारान्तोऽप्येधशब्दः। तादृशस्याग्नेरभ्याहितस्येति सर्वतः स्थितादिति परव्याख्यानात्। छान्दसो व्यत्ययः। पृथग्धूमाः कृष्णकपिलह्रस्वदीर्घादिभेदभिन्ना इति व्याख्यातारः। वस्तुतः पृथक्त्वमग्निप्रतियोगित्वेन तदुपस्थितेरन्तरङ्गत्वात्। तेनोपादानोपादेयभावशङ्काप्रसज्जकतादात्म्यव्यावृत्तिः। अत एवात्र विस्फुलिङ्गानां नोपादानं तेषां कथञ्चिदभेदशङ्काधायकत्वात्। तेन सजातीयाश्चाग्नेः कणाः पूर्वोक्ता विनिश्चरन्ति विविधं निर्गच्छन्त्युत्पद्यन्ते इति परकीयं तत्प्रक्षेपवर्णनं हेयम्। आर्द्रेन्धनप्रभववह्नित्वं धूमकारणतावच्छेदकमिति पक्षे यथाश्रुतमेवेदं सम्यक्, आर्द्रेन्धनत्वमेव तथेति पक्षेऽप्यार्द्रेन्धनप्रभववह्नेरेव धूमोपधायकत्वादिति बोध्यम्। एवं वै एव अरे मैत्रेयि अस्य प्रमाणसिद्धत्वेन संशयाविषयतया प्रत्यक्षतुल्यस्य महतो नित्यज्ञानादिमत्त्वेन विभुत्वेन च, अत एव भूतस्य सत्यस्य निःश्वसितं निःश्वासवत्पुरुषकल्पनामूलकत्वाभावात्। एतद् वक्ष्यमाणं यदि व्यत्ययं वक्ष्यमाणेषु तत्तल्लिङ्गेषु तत्तल्लिङ्गानुसारेण सम्बध्यते।

ऋग्वेदः पादबद्धः "तेषामृग्यत्रार्थवशेन पादव्यवस्था" इति **जैमिनीयोक्तेः**। यजुर्वेदोऽविवच्छन्दाः "शेषे यजुःशब्दः" इति **जैमिनीयात्**। ऋक्सामभिन्नमन्त्रत्वं यजुषमित्यर्थः। सामवेदो गीतिसहितः "गीतेषु समाख्याति" इति **जैमिनीयसूत्रात्**। अथर्वाङ्गिरसो ब्राह्मणादुद्धता मन्त्राः इति चतुर्विधा मन्त्राः। ते च, वेदपदमपि ऋगादिमात्रपरं बोध्यमिति तासां "दृप्तवाला-

किर्ह्यनूचानो गार्ग्य" इत्यादि संवादककथनं पुराणम् "आत्मैवेदमग्र आसीद्" इत्यादिकमुत्पत्त्यादेर्विधानं विद्या उषा वा इत्याद्या उपनिषदः "सत्यस्य सत्यम्" इत्याद्याः। श्लोकाः ब्राह्मणस्था मन्त्राः "तदेष श्लोको भवति" इत्यादौ निदिष्टा "यतश्चोदेति सूर्यः" इत्याद्याः। सूत्राणि "आत्मेत्येवोपासीत" इत्यादीनि। अनुव्याख्यानानि "अर्वाग्बिलश्चमस ऊर्ध्वबुद्ध इतीदं तच्छिर" इत्यादीनि। "स एष इह प्रविष्ट इत्याद्या अर्थवादाः। इत्यष्टविधं ब्राह्मणमुक्तम्। "दत्तदानमिष्टम्" इति काण्वशाखायामिष्टं यागादिकम्, हुतं मन्त्रपूतमग्नौ प्रक्षिप्तं द्रव्यम्, आशितं ब्राह्मणादेरशनं कारितम्, पायितं तृषार्त्तस्य पानं कारितम्। अयञ्च लोक एकं जन्मापि परश्च लोकः जन्मान्तरमपि सर्वाणि च भूतानि निखिलानि स्थावरजङ्गमान्यपि। चकारत्रयमुक्तानुक्तसमुच्चयार्थम् "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" इत्यादिकमत्रावधेयम्। प्रतिनियतविषयकत्वादपीन्द्रियाणां नात्मत्वमित्याशयेनाह—स यथेति। एकमयनमाश्रयः। सर्वपदं बाहुल्यपरं तेन केषाञ्चिज्जलानामन्यत्र नाशेऽपि न क्षतिः। सर्वशरीरव्यापकत्वेन प्रथमं त्वगिन्द्रियस्योक्तिः। एकायनत्वं तत्साक्षात्कारासाधारणकारणत्वात्। घ्राणरसनचक्षुःश्रोत्राणां क्रमेणैवोपादानं नासिके इत्यधिष्ठानापेक्षया द्वित्वं जिह्वापदमप्यधिष्ठानपरं सर्वपदं योग्यतद्विषयपरं तेनानुद्भूतस्पर्शादीनां प्रथमशब्दस्य चेन्द्रियाग्राह्यत्वेऽपि न क्षतिः। इन्द्रियग्राह्यवृत्तिगुणत्वव्याप्यवृत्तिजातिमत्त्वं वा विवक्षणीयम्। अन्तःकरणस्य मनसो नित्यत्वे ज्ञानमात्रहेतुत्वे च सत्यपि बहिरर्थे स्वातन्त्र्याभावान्नात्मत्वमित्यभिप्रायेण तस्याभ्यन्तरमात्रविषयकत्वमाह–सर्वेषां संकल्पानामिति। ज्ञानसुखदुःखेच्छादीनामित्यर्थः। एवं च त्वं मनोयोगस्य ज्ञानमात्रहेतुत्वादाद्यन्तयोस्त्वङ्मनसोरुक्तिमध्ये चतुर्णां घ्राणादीनामिति बोध्यम्। एवं प्रत्यक्षस्येन्द्रियाधीनत्वमुक्त्वानुमित्यादेर्ज्ञानाधीनत्वमाह—सर्वेषां वेदानामिति। सर्वपदमनुमित्युपमितिशाब्दपरम्, वेदपदं ज्ञानपरम् हृदयपदमपि लक्षणाया व्याप्तिज्ञानादतिदेशवाक्यार्थज्ञानपरम्, हृदयपदस्य बुद्धिपरत्वेऽपि लक्षणाया एव परैरभ्युपगम्यत्वात्। अवच्छेदकतासम्बन्धेन शरीरस्यापि ज्ञानहेतुत्वात्तदवयवानां कर्मेन्द्रियत्वेन परप्रसिद्धानां शरीरस्थितिहेतुभूतत्वात्। तद् व्यापारमप्याह—सर्वेषां कर्मणामित्यादिना। कर्मणामादानानामध्वानां गमनानां विद्यानां शब्दानां वाक्तदुच्चारणहेतवो जिह्वायाः। एवञ्चैतत्सम्बन्धेनैव जीवात्मनि विशेषगुणोत्पत्तिर्न त्वनाथेति तात्पर्यम्। अत एवैतद्व्यतिरेकेण मुक्तिदशायां चाक्षुषादेरनुत्पत्तिरिति यद्वै-

तन्न पश्यतीत्यादिना वक्ष्यति, तच्च प्रागेव व्याख्यातम्। साम्प्रतं मुक्तौ ज्ञानाद्यभावं वक्तुं तदानीमात्मन इन्द्रियसम्बन्धाभावं प्रतिपादयति—स यथेति। सैन्धवघनः सैंधवस्य कठिनः पिण्डः, अनन्तरोऽबाह्य इत्यस्य लवणरसबहिरन्तरावयवशून्यत्वमर्थः। अत एवाह—कृत्स्नो रसघन एव स्यादिति। सर्वेषामेव तदवयवानां लवणरससमवायित्वादित्यर्थः। एवं वै एवमेव अरे मैत्रेयि अयमाजीवः अनन्तरोऽवधिशून्यः पूर्वापरावधिराहित्यात्। अस्य परमा··वादिसाधारण्यादाह-अबाह्य इति। न विद्यते बाह्यं संयोगविहितं यस्येति विभुत्वं दर्शितम्। तदेवाह—कृत्स्न इति। अस्याप्याकाशादिसाधारण्यादाह—प्रज्ञानघन एवेति। ज्ञानसामर्थ्येन ज्ञानघन इत्यर्थः। व्याख्यातमन्यत्। तस्मात्सिद्धं मुक्तौ सामग्र्यभावेन जीवस्य ज्ञानादियावद्विशेषगुणराहित्यं श्रुत्यर्थः इति। अत एव **मोक्षधर्मे**—

विज्ञानानुगतं ज्ञानमज्ञानेनापकृष्यते।
पृथक्त्वासंप्रयोगाच्च नाशपूर्वादिशाश्वतम्॥ इति।

एतद् **विमलबोधेन** व्याख्यातम्—"मुक्तिदशायां ज्ञानमस्ति नास्तीति वा विचार्यते। विज्ञानं शास्त्रपरिचयः ध्यानाशनादिशिल्पपरिचयश्च तेनानुगतं हेतुमद्भावेन सम्बद्धं ज्ञानमात्मतत्त्वज्ञानं तदनेनाविद्याविच्छेदेनापकृष्यते। तत्राह—पृथक्त्वान्नाशपूर्वात्संप्रयोगाच्च विषयेन्द्रियादिज्ञानहेतुसंयोगनाशात्। अत एव तदशाश्वतमनित्यं तस्मान्मुक्तौ नास्त्यात्मनि ज्ञानमित्यर्थः" इति। यद्वा विज्ञानमात्मा कर्तृव्युत्पत्तेः तस्मिन्ननुगतमुपादानोपादेयभावेन सम्बद्धं ज्ञानमज्ञानेन ज्ञानाभावेनापकृष्यते मुक्त्यवस्थायां स्वासमानाधिकरणक्रियं देशं मुक्तिकालान्यकालोभयानवच्छिन्नाविशेषणतया ज्ञानाभाव आत्मनि तिष्ठतीत्यर्थः। ननु ज्ञानस्वरूपत्वादात्मनस्तदा ज्ञानाभावोऽनुपपन्न इत्यत आह—पृथक्त्वादिति। आत्मभिन्नत्वात्। अशाश्वतमागन्तुकतद्गुणरूपम्। ननु ज्ञानमात्मनि सम्बद्धं न वा? नाद्यः, असम्बद्धसमवायस्यासम्बद्धत्वायोगादन्यथाचानवस्थानात्। नान्त्यः, गुणगुणिभावानुपपत्तेः। अतः आविक एवायमित्यत आह—संप्रयोगाच्चेति। समानात् समवायरूपात्सम्बन्धात्। उक्तानुपपत्तिस्तु तर्काभासत्वादेव परिहार्यतिभावः। तदानीं कथं न ज्ञानोत्पत्तिरतः नाशपूर्वंपूर्वादिति। शरीराविनाशरूपात् कारणादित्यर्थः। तत्रैव याज्ञवल्क्यजनकसंवादे विश्वावसुरुवाच—

पञ्चविंशपदे तत्त्वे प्रोक्तं ब्राह्मणसत्तम।
तथा तन्न तथा नेति तत्त्वमर्हति॥

जगीषव्यस्यासितस्य देवलस्य मया श्रुतम् ।
पराशरस्य विप्रर्षेर्वार्षगण्यस्य धीमतः ॥
भृगोः पञ्चशिखस्यास्य कपिलस्य शुकस्य च ।
गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः ॥
नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः ।
सनत्कुमारस्य ततः शुकस्य च महात्मनः ॥
कश्यपस्य पितुश्चैव पूर्वमेव मया श्रुतम् ।
तदनन्तरं च रुद्रस्य विश्वरूपस्य धीमतः ॥
दैवतेभ्यः पितृभ्यश्च दैतेयेभ्यस्ततस्ततः ।
प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत ॥
तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण ।
भवान् प्रवर्हः शास्त्राणां प्रगल्भश्चातिवीर्यवान् ॥
न तवाविदितं किञ्चिद्भवान् श्रुतिनिधिः स्मृतः ।
कथ्यते देवलोके च [पितृलोके] च ब्राह्मणः ॥
ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः ।
पतिश्च [तपतां] शश्वदादित्यस्तव भाषते ॥
साङ्ख्यज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च ।
तथैव योगशास्त्रञ्च याज्ञवल्क्य विशेषतः ॥
निस्सन्दिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरम् ।
श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ॥

याज्ञवल्क्य उवाच--

कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम ।
जिज्ञासा ते तु या राजंस्तन्निबोध यथाश्रुतम् ॥
अबुध्यमानप्रकृतिं बुध्यते पञ्चविंशकः ।
न तु बुध्यति गन्धर्व प्रकृतिः पञ्चविंशकम् ॥
अनेन प्रतिबोधेन प्रधानं प्रवदन्ति तत् ।
सांख्या योगाश्च तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ॥
पश्यंस्तथैव चा[पश्यन्]पश्यत्यन्यः सदानघ ।
षड्विंशं पञ्चविंशं च चतुर्विंशं च पश्यति ॥
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ।
पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम ॥

न चतुर्विंशति ग्राह्यो मनुजैर्ज्ञानदर्शिभिः ।
मत्स्यश्चोदकमन्वेति [प्रवर्त्तेत] प्रदर्शनात् ।।
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते ।
सस्नेहः सहवासाश्च साभिमानाच्च नित्यशः ।।
स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
उन्मज्जति हि कालस्य ममत्वेनाभिसंवृतः ।।
यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विज ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ।।
अन्यच्च राजन् षड्विंशस्तथान्यः पञ्चविंशकः ।
तत्स्थानाच्चानुपश्यन्ति एक एवेति साधवः ।।
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमुच्यते ।
जन्ममृत्युभयाद्भीता योगाः सांख्याश्च काश्यपाः ।।
षड्विंशमनुपश्यन्तं मुनयस्तत्परायणाः ।
यदा स केवलीभूतः षड्विंशमनुपश्यति ।।
तदा स सर्वविद्विद्वान् पुनर्जन्म न विन्दति ।
एवमप्रतिबुद्धञ्च बुध्यमानश्च तेऽनघ ।।
बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् ।
पश्यापश्यं यो न पश्येत्क्षेमतत्त्वञ्च काश्यप ।।
केवलाकेवलं चाद्यं पञ्चविंशं परञ्च यत् ।

विश्वावसुरुवाच—

तथ्यं शुभं चैतदुक्तं त्वया विभो सम्यक् क्षेम्यं देवताद्यं यथावत् ।
स्वस्त्यक्षयं भवतश्चास्तु नित्यं बुद्ध्या सदा बुद्धियुक्तं नमस्ते ।।

याज्ञवल्क्य उवाच—

एवमुक्त्वा संप्रयातो दिवं स विभ्राजन्वै श्रीमता दर्शनेन ।
हृष्टश्च तुष्टः परयाभिनन्द्य य दक्षिणं मम कृत्वा महात्मा ।। इति ।

अस्यार्थः—चतुर्विंशतिपदार्थाः पूर्वं गीतावाक्यव्याख्यानप्रसङ्गे उक्ताः । अतः पदार्थविभाजकोपाधीनां च चतुर्विंशतित्वमित्यनाशङ्क्यम् । पञ्चविंशस्त्वात्मा जीवः तथा सत्यं न वेति संशये उत्तरं ब्रूहि भूम्यादिकं मिथ्यादिकं न वेति भावः । जीवस्यापि वेदान्तिभिर्बाध्यत्वाभ्युपगमात् । तथा पदस्य सत्यार्थकत्वं **क्षीरस्वाम्यादिसर्वसिद्धं** दर्शितं च प्राक् ।

प्रश्नस्यापि विप्रतिपत्तिमूलकत्वसूचनाय स्वस्यानेकाचार्योपदिष्टत्वमाह—जैगीषव्यादिना। स्पष्टमन्यत्। अबुध्यमान इति कर्मणि शानच्। प्रकृतिः पूर्वं भुक्ता भूम्यादि · · · · · नः। यद्यपि भूम्यादिसमवेतज्ञानविषयत्वाभाववानिति नार्थः, अप्रसिद्धेः, तथापि भूम्यादिनिष्ठात्यन्ताभावप्रतियोगिज्ञानविषयत्वमर्थः। प्रकृतिः भूम्यादिकं बुध्यते जानाति। एतेन देहादिभिन्नत्वं दर्शितम्। तदेव स्पष्टयति—न तु इत्यादि। बुध्यतीति छान्दसं परस्मैपदम्, अनेनोक्तेन प्रतिबोधेन ज्ञानेन जीवं प्रधानं प्रवदन्ति, भोक्त्रर्थत्वात्सर्वस्य भोग्यस्य च तेन मात्रे संभवात्। भोक्तृभोग्ययोश्च भोक्तृप्राधान्यस्य सर्वसम्मतत्वात्। श्रुतेरप्यत्रैव तात्पर्यमित्याह—यथाश्रुतीति। तथा चात्मनो निर्गुणत्वादिकल्पनमाभासमात्रमिति भावः। ईश्वरमधिकृत्याह—पश्यतीति। अन्यः परमात्मा सदा नित्यं पश्यति नित्यज्ञानाश्रय इत्यर्थः। प्रमात्वं तु ज्ञानस्य दर्शयति—तथा सत्यमेव पश्यन्। एवशब्दो ज्ञानस्य सर्वांशे प्रमात्वसूचनार्थः। अन्यथा भ्रममात्रस्याप्यंशतः प्रमात्वनियमेन तज्ज्ञानमेव पश्यन् एव भ्रमत्वव्यवच्छेदाप्रसिद्धेः। ततश्चार्थाज्ज्ञानविषयाणां सत्यत्वलाभः। पश्यतीत्यस्य मुख्यार्थत्वनिषेधायाह—अपश्यन्निति। नित्यज्ञाने चक्षुरादेरनुपयोगात्, चाक्षुषत्वस्य ज्ञाने निषेधात् पश्यतीत्यस्य साक्षात्कारिज्ञानमात्रपरत्वमिति भावः। षड्विंशं परमात्मानं पञ्चविंशं जीवं चतुर्विंशं भूम्यादि तदुभयभिन्नपदार्थञ्च पश्यति साक्षात्करोति। एतेन सर्वविषयकत्वं तज्ज्ञानस्योक्तं भूम्यादीनां तज्ज्ञानस्यैवाभावात्। जीवानाञ्च परमात्मतद्गुणत इन्द्रियपदार्थसाक्षात्काराभावादीश्वरस्यैव सर्वविषयकसाक्षात्कारवत्त्वात्। एवञ्च तथा तन्न तथेति चेति विप्रतिपत्तौ विधिकोटिरेव सर्वसम्मतेत्युक्तम्। पश्यन्ति साक्षात्काराश्रयमेनं परमात्मानं च पञ्चविंशो जीवः अनुपश्यति साक्षात्करोति। स तु न पश्यति न जानाति परमुक्तौ सत्यां सामग्र्यभावेन ज्ञानानुदयात्। इदमेव मन्त्रत्वस्य "सर्वमात्मैवाभूद्" इत्यादिश्रुतीनां तात्पर्यविषय इत्याह—अभिमन्येत नान्योस्ति परतो ममेति। परतो मुक्त्यवस्थायामन्यः पदार्थो मम सम्बन्धी नास्तीत्यभिमन्यते इति। मोक्षपूर्वकालीनमोक्षावस्थाज्ञानानुवादः। नन्वेवं सुखस्यापि हानावपुरुषार्थत्वं मोक्षस्य स्यादित्यत आह—नेत्यादि। ज्ञानदर्शिभिर्विशेषवद्भिर्मनुजैश्चतुर्विंशकः सुखहेतुः देहादिसमुदयो न ग्राह्यो नोपादयत्वेन बोध्यः। तथा च सुखस्य दुःखसम्भेदावश्यकतया प्रेक्षावद्भिरवश्यं हेयतया न तद्धानिप्रयुक्तमपुरुषार्थत्वमिति भावः। लवकणतायाँ बहुतरदुखानुविद्ध-

तया सुखस्यापि प्रेक्षावद्धेयत्वान्मधुविषसम्पृक्तान्नभोजनजन्यसुखाद्" इति। अत एव **सांख्यसूत्राणि** तदपि दुःखपक्षे निक्षिपन्ते विवेचकाः। अत एवोक्तम्-

जन्ममृत्युजराव्याधिदुःखान्यनुदिनं नृणाम्।
स्वयमेव विना यत्नान्निपतन्ति सहस्रशः॥
विहिताकरणं नित्यं प्रतिषिद्धनिषेवणात्।
महदामुष्मिकं दुःखं यन्नरैर्नावगम्यते॥
बहुदुःखपरिष्वक्तं यन्नाम खल्वकं सुखम्।
सुरापानादिसुखं रञ्जनीयं विवेकिनाम्॥
एवं भूतेऽपि संसारे ये रक्ताः सुखतृष्णया।
न तेषामधिकारोऽस्ति मुक्तिशास्त्रे कथञ्चन॥
संसारादुद्विजन्ते ये दृष्टलोकपरम्पराः।
त एव खलु मोक्षन्ते न तु यः प्राकृतो जनः॥
तेषामेवाधिकारश्च मुक्तिशास्त्रे · · · · ' ·।
तेषामेवापवर्गाख्यपुरुषार्थो महात्मनाम्॥
तेनाभावात्मकत्वेऽपि मुक्तेर्नापुरुषार्थता।
सुखदुःखोपभोगो हि संसार इति कीर्त्यते॥
तयोरनुपभोगस्तु मोक्षं मोक्षविदो विदुः।
श्रुतिरप्येवमेवाह भेदं संसारमोक्षयोः॥
न ह वै स शरीरस्य प्रियाप्रियविहीनता।
अशरीरं ह वै सन्तं स्पृशन्तो न प्रियाप्रिये॥ इति।

तिष्ठतु तावत्।

ननु देहानवच्छेदेन ज्ञानानुत्पत्त्या आत्मनो देहभिन्नत्वं कुत इत्यत आह–मत्स्यश्चेति। बुध्यत इति कर्मणि तङ्, तथा च सर्वदा सहचरितेऽपि मत्स्यो लिङ्गविशेषेणोदकभिन्नत्वेन ज्ञायते, तथैव देहभिन्नत्वेनात्मापीति भावः। एतच्च तत्रैव पूर्वं स्पष्टमुक्तम्—

यथा मुञ्ज इषीकाणां तथैवैतद्विजायते।
अन्यच्च मशकं विद्यादन्यच्चोदुम्बरं तथा॥
नरोदुम्बरसंयोगैर्मशकस्तत्र लिप्यते।
अन्य एव तथा मत्स्यस्तदन्यदुदकं स्मृतम्॥
न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः।
अन्यो ह्यग्निरुषाप्यन्या नित्यमेवमवेहि नो॥

न चोपलिप्यते सोऽग्निरुषासंस्पर्शनेन वै।
पुष्करं त्वन्यदेवात्र तथान्यदुदकं स्मृतम्॥
न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम्।
एतेषां सहवासश्च निवासं चैव नित्यशः॥
याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः।
ये त्वन्यथैव पश्यन्ति न सम्यक् तेषु दर्शनम्॥
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः।

तथा च वशिष्ठजनकसंवादे—

मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः।
मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते॥
एवमेवावगन्तव्यं नानात्वेकत्वमेतयोः।

नन्वेवं देहपुष्ट्यादावहं पुष्ट इत्यादि ज्ञानं कथमत आह—सस्नेह इति। साभिमानादविवेकविशिष्टात्सहवासात्साहचर्यात्तु सस्नेहो भवति। देहे एष आत्मेति पूर्वोक्तं विशेष्यम्। एकश्चकारस्त्वर्थः एकः समुच्चयार्थः। अत एव देहात्मज्ञानभ्रमत्वात्तेन संसार इत्याह—स निमज्जतीति। एकत्वं भेदं यदा न बुध्यते तदा कालस्य जन्ममरणाद्यवच्छिन्नस्य सम्बन्धी सन् निमज्जति, उक्तरूप एव निमज्जनोन्मज्जनं प्राप्नोतीत्यर्थः। ममत्वेनाविवेकेनाभिसंवृतोऽभिनिविष्टः। तथा च **स्मृतिकल्पतरौ देवलः**—

इदं ममेति यत्स्वाम्यमात्मनोऽर्थेषु मन्यते।
अजानंस्तदनित्यत्वं ममत्वमिति तद्विदुः॥

आत्मनि देहादिभिन्नत्वेन ज्ञातेऽप्याह—यदा त्विति। यद्यप्यात्मनि देहभिन्नत्वज्ञानमेव प्रकृतोपयुक्तं तथापि देहादीनामप्यात्मप्रतियोगिकभेदवत्त्वेन तदावश्यमवगाहनात्तदप्ययुक्तम्। तदा तादृशभेदज्ञानं सम्पत्तिकाले केवलीभूतो मुमुक्षुः षड्विंशं परमात्मानमनुपश्यति श्रवणादिप्रतिपत्तिक्रमेण साक्षात्करोति। इदानीं जीवपरमात्मानौ वस्तुतो भिन्नौ न वेत्याशङ्क्याह—अन्यश्चेति। परमात्मजीवौ परस्परप्रतियोगिकस्वाभाविकभेदवन्तावेव। न चैवायमाविद्यकभेदानुवादः, वैयर्थ्यापत्तेः। मया तदभेदानङ्गीकारेण त्वद्व्याख्यायामप्रसक्तनिषेधत्वप्रसङ्गात्। मद्रीत्या तु भवदभ्युपगताभेदनिषेधज्ञापकत्वेन सार्थक्यात्।

नन्वेवं जीवपरैक्यवाक्यानां का गतिरित्यत आह—तत्स्थानाच्चेति। भावव्युत्पन्नस्थानशब्देन स्थैर्यलाभात्तस्य च दुःखादिनिवृत्तिरूपस्य प्रकृते वाच्यत्वाच्छोकात्यन्ताभावरूपेण साधर्म्येण एक एवेत्यनुपश्यन्ति। तथा च सुसदृशेषु वक्तारो भवन्ति नास्यास्य च कश्चिदपि भेदोऽस्तीति भावः। अतश्चात्मनो दुःखनिवृत्तौ विवेकिनो यतन्त इत्याह—तेनेति। अच्युत स्वगुणेभ्योऽपृथग्भूतविशेषगुणवन्तमिति यावत्। पञ्चविंशकं जीवं नाभिनन्दन्ति सविशेषेण हीति न्यायेन दुःखस्यैवाभिनन्दनीयत्वपर्यवसानम्। तदेवाह—जन्मेति। जन्ममृत्युरूपं यद्भयं भीतिहेतुस्तस्माद्भीतास्तत्प्रयुक्तभयवन्तः तत्परिहारार्थं न इति यावत्। षड्विंशं परस्यात्मानमनुपश्यतः। मोक्षहेतुज्ञानकर्त्तुमिच्छन्तः शुचयस्तत्परायणाः इति शमदमादिसम्पत्तिरपीति पदार्थानां सूत्रम्। यदा तु जीवः केवलीभूतः, अकेवलः केवलःसम्पन्नः केवलीभूतः क्विप्प्रत्ययस्तु ज्ञानादिगुणानां संसारितादशायामप्यनारोपितत्वलाभार्थः। सर्ववित्त्वं सर्वमिदं विज्ञातं भवतीत्यादिरीत्या व्याख्येयम्। विद्वान् तत्त्वज्ञानसम्पन्नः पुनःपूर्वजन्मापेक्षया भिन्नं जन्म न विन्दति न प्राप्नोति तथाचात्यन्तिकी दुःखनिवृत्तिरेव मोक्षः न तु ब्रह्मात्मैक्यसम्पत्तिरपीति। पदार्थानां मिथ्यात्वं न प्रामाणिकमिति तात्पर्यमुपसंहरति—एवमिति। अप्रतिबुद्धः शरीराद्यात्मनोर्भेदानभिज्ञः बुध्यमानस्तद्भेदज्ञः बुद्ध आत्मसाक्षात्कारवांश्च श्रुतिनिदर्शनाच्छ्रुतितात्पर्यरीत्येति भावः। तस्माद् **योगीश्वरेण** विवृतो मैत्रेयीब्राह्मणाद्यर्थः मत्पक्षे पक्षपाति विपक्षश्च परपक्षे, इत्यास्तां विस्तरः। इदंसर्वमिति श्रुत्यर्थः॥

"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"।
"यस्मात्परं नापरमस्ति किञ्चित्तस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्।
वृक्ष इव तज्ज्ञो दिवि तिष्ठत्येकस्तेनेदं पूर्णंपुरुषेण सर्वम्।
ततो यदुत्तरतरं तदरूपमनामयम्।
ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति।

इति **श्वेताश्वतर**श्रुतेश्चायमर्थः—आत्मान्याविषयकमात्मविशेषकज्ञानत्वेन मोक्षजनकत्वम्। न च मनःसंयुक्तसमवायप्रत्यासत्त्या आत्मत्वस्यापि भाने बाधकाभाव इति वाच्यम्; आत्मान्यविषयकज्ञानत्वं निदिध्यासनस्य प्रतिबध्यतावच्छेदकमित्यभ्युपगमात्। नचैवमपि तादात्म्यसम्बन्धेनात्मप्रकारकात्मविशेष्यकज्ञानस्य हेतुत्वं दुर्वारमात्मा[न्य]विषयक-

त्वस्य रक्षणादिति वाच्यम्; सप्रकारकात्मज्ञानत्वस्य प्रतिबध्यतावच्छेदक-मित्यस्य विवक्षितत्वात्। न च एवकारो भिन्नक्रमत्वात् विदित्वेत्यनन्तरं योज्यः, कर्मणो मोक्षजनकत्वं व्यावर्त्यमिति वाच्यम्; नान्यः पन्था इत्यत एव तत्सिद्धेः "न कर्मणा न प्रजया धनेन" इत्यनेन मोक्षनिषेधाच्चेति **प्राञ्चः**। नव्यास्तु "एवकारभङ्ग आवश्यकः। यथाश्रुतेऽपि सप्रकारकात्मज्ञानस्य वारयितुमशक्यत्वादात्मान्याविशेष्यकज्ञानस्य तदर्थत्वाद् घटत्वेन घटं जानातीत्यादौ विशेष्यत्वस्यैव द्वितीयार्थत्वात्।

न च विषयतामात्रं तदर्थः,शत्रुधननाशेच्छायां शत्रुधनमिच्छतीत्यादेरप्रयोगात्। अत एव "आत्मा द्रष्टव्यः" इत्यादितोऽप्यात्मत्वविशिष्टस्य ज्ञातव्यत्वलाभः। अतः परमात्मनोऽसाधारणधर्मेण निश्चयोऽप्रामाण्यशङ्काकलङ्कशून्यः प्रारब्धातिरिक्तविद्यमाननिखिलपापनाशकोऽपवर्गहेतुः, परमात्मगतधर्माभाने तदसाधारणधर्मकथनस्य वेदे वैयर्थ्यापत्तेः" इत्यादिकमाहुः।

यत्तु "एकमेवानुद्रष्टव्यमेतदप्रमयं शिवम्।
तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैव सेतुः।
यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः क शोक एकत्वमनुपश्यतः॥

तमेव विदित्वातिमृत्युमेति" इत्यादिश्रुतिभिर्ब्रह्मस्वरूपमात्रगोचरनिर्विकल्पस्यैव मोक्षहेतुत्वम्। तथा ह्यासामयमर्थः–एकमेव केवलब्रह्मविषयकं यथा स्यात्तथानुद्रष्टव्यं श्रवणाद्युत्तरसाक्षात्कर्त्तव्यमेकमेव वाक्यद्वयेऽप्येवकारद्वयमेकपदार्थस्याशुद्धाविषयकत्वस्यानुवादः। तवैवं कदाचिदद्वैतदर्शनं कदाचिद्द्वैतदर्शनम्।

ननु युगपदेवोभयं सन्तमंशं बहुना लोकयोरिव विरोधादिति **विवरणोक्तेर्**विरोधः, प्रपञ्चविषयकत्वेऽपि केवलविषयकत्वसम्भवात्, तस्य समूहालम्बनसाधारण्यात्।

न बुद्धिं मर्दयन् दृष्टो घटो न त्वस्य वेदिता।
उपमृद्नाति चेद्बुद्धिर्ध्यातासौ न तु तत्त्ववित्॥

इति **विद्यारण्योक्तेश्**च घटपटोभयविषयकज्ञानस्यापि घटतत्त्वज्ञानत्वानपायात्तस्माद्भ्रमनिवृत्त्यादिदर्शनाच्चेति वाच्यम्; केवलात्ममात्रजिज्ञासाकालीनात्मज्ञानस्य केवलात्मविषयकत्वात्, तादृशजिज्ञासायाश्च मुमुक्षोः प्रायेण सत्त्वात्तादृशेच्छाभिप्रायेण तस्या योजनीयत्वात्। अथ यथाश्रुतार्थकत्वे आग्रहस्तथापि न क्षतिः, एकत्वेन......केवलात्मान्याविषयकं

यथास्यादित्यर्थसम्भवात्। यस्मिन्काले सर्वाणि भूतान्यात्मैवाभूत् स्वकालपूर्वकालवर्त्तिविज्ञानात्मनस्तादात्म्यवत्येवकारबलान्न तु तादृशतादात्म्यशून्यानि तत्र काले को मोहः कः शोकः, मोहादेः स्वकालपूर्ववर्तितासम्बन्धेन विज्ञानात्मन्यभावः। स्वकालेत्यत्र स्वपदं सर्वभूतपरम्। एकत्वमनुपश्यत एकात्मदर्शनहेतुकः, शतृप्रत्ययस्य हेत्वर्थकत्वात्। न च कालेत्याद्यर्थकल्पनमदृष्टपूर्वमिति वाच्यम्; बाधकाले शुक्तावारोपितं रजतादिकं ज्ञातशुक्तिरभूदित्यादौ लोकेऽपि तादृशार्थप्रतीतेः। आत्मपदं च केवलात्मपरमेकत्वमित्यग्रिमानुरोधात्। तमेवेत्यादौ तदन्याविषयकज्ञानोत्तरं मृत्युमतिक्रामतीत्यर्थः। **विवरणोक्तेः** पूर्वोक्तार्थाभिप्रायकत्वे तु अन्नमेव भुक्त्वा यस्तृप्यतीत्यादावेतदीयतृप्तावन्नेतरभोजनत्वेन न हेतुः किन्त्वन्नभोजनत्वेनेतिधीरिव मोक्षे आत्मेतरज्ञानवत्त्वेन हेतुत्वं किन्त्वात्मज्ञानत्वेनेतिधीः। अतः समूहालम्बनसाधारण्यं विषयान्तरज्ञानस्य सत्त्वेऽपि मोक्ष प्रत्यप्रयोजकत्वेनोक्तार्थस्याबाधितत्वात्। सविकल्पकज्ञानं घटत्वादिविशिष्टस्य निर्विकल्पकं तु घटत्वस्येत्यादाविवान्यविषयत्वानिरूपिताविषयकताकज्ञानस्य धीर्वा वस्त्वन्तरस्य विषयत्वेऽप्यात्मविषयतायास्तन्निष्ठविषयत्वानिरूपितत्वादिति। तत्रेदं वक्तव्यम्—घटपटोभयज्ञानकाले घटमेव जानातीत्यादेरप्रयोगाद्घटत्वप्रकारतानिरूपितघटविशेष्यताकज्ञानमात्रसत्त्वे च तत्प्रयोगात्। घटान्यविशेष्यकज्ञानज्ञानत्वं घटमेव जानातीत्यादिसमभिव्याहारज्ञानस्य कार्यतावच्छेदकं कल्प्यते, न तु घटान्यविषयत्वनिरूपितविषयताकज्ञानत्वम्, विशिष्टज्ञाने विशेष्यत्वप्रकारत्वयोः परस्परं निरूप्यनिरूपकभावसत्त्वात्तदानीं घटमेव जानातीति प्रयोगानुपपत्तेः। अत एव निर्विकल्पकाभिप्रायेणापि न तथा प्रयोगः। निर्विकल्पकं घटत्वस्यैवेत्यादौ शब्दे तु निर्विकल्पकीयघटत्वादिविषयतायाः घटादिविषयतानिरूप्यत्वे मानाभावाद् घटत्वान्यविषयत्वस्यैव बाधेन व्यवच्छेत्तुमशक्यत्वादुक्तनिरूप्यस्यैव व्यवच्छेद इति वैषम्यम्। एवमात्मेतरज्ञानत्वेन हेतुत्वव्यवच्छेद इत्यप्ययुक्तम्। आत्मविषयकत्वाभाववद्वृत्तिविषयिताकान्यज्ञानस्यैवात्मेतरज्ञानत्वात्। आत्मान्यमात्रविषयकत्वस्य तदर्थबाधकस्योक्तत्वाच्च। आत्मैवाभूदित्यस्यार्थोऽप्ययुक्तः। स्वकालेत्यादिसम्बन्धस्य मिथ्यात्वसिद्ध्युत्तरकालीनत्वमिथ्यात्वे प्रमाणाभावेन दूरपराहतत्वात्। सर्वभूतेषु रागद्वेषप्रहाणस्योक्तवाक्यार्थत्वाच्च।

यस्मात्परमित्यस्य त्वयमर्थः—अपरमात्मभिन्नं किमपि वस्तु यस्मादात्मनः परं पूर्वकालवृत्तिर्नास्ति नित्यत्वादात्मनस्तत्पूर्व-

कालस्याप्रसिद्धेः। यद्वा यस्मात्परमुत्कृष्टं नास्ति नित्यज्ञानादिमत्त्वात्। यद्वा यस्मादिति जीवपरं द्वितीयार्थे निरुपाधिप्रियत्वात्सङ्गतिः। न चानाकाङ्क्षिताभिधानमीश्वरज्ञानमात्रस्य न मुक्तिहेतुत्वमित्यर्थकत्वात्। यस्मात्किञ्चिदणीयो नास्ति दुर्ज्ञेयत्वात्। न च ज्यायोऽस्ति व्यापकत्वादहमिति प्रत्ययबोधत्वेऽपि तस्यातिरिक्तविषयकत्वासिद्धेः। प्रागभावप्रतियोगित्वमात्रस्याद्यव्याख्याने लाभेऽपि ध्वंसाप्रतियोगित्वस्यालाभादाह—वृक्ष इवेति। हि विस्रब्धो वृक्ष इवेत्यनपह्नवीयत्वसूचनम्। एकं तिष्ठतीत्यनेन च जन्यद्रव्यासंयुक्तस्यावस्थानलाभादर्थाद् ध्वंसाप्रतियोगित्ववारणम्, यथाश्रुतार्थस्य सर्वैरप्यनङ्गीकार्यत्वात्। विभुत्वलाभार्थमाह—तेनेदमिति। न च ज्यायस्त्वनिषेधेनैव तत्सिद्धिः, तदर्थव्याख्यानतयैवोपपत्तेः। प्रकृतमाह—तत इति। उत्तरतरमतिश्रेष्ठम्। परमात्मनो जीवात्मापेक्षयोत्कर्षहेतुमाह—यदरूपमनामयमिति। रूपपदं साधकप्रमाणपरम्; रूप्यतेऽनेनेति व्युत्पत्तेः। न च करणाधिकरणयोश्चेति ल्युटाबाधितत्वात्करणे घञ् दुर्लभ इति वाच्यम्; रूपयतीति पचादित्वादच्प्रत्ययस्यैव संभवात्। यद्वा न विद्यते रूपो रूपणं साक्षात्कारो यस्य सामान्यस्य विद्याशेषपरत्वाज्जीवस्येव परमात्मनः प्रत्यक्षाभावात्। अन्यदप्याह—अनामयमिति। दुःखरहितमित्यर्थः। स्पष्टमन्यत्। यत्तु जीवेशभेदज्ञानं मुक्तिहेतुरिति मतमाभाष्य तद्विरोधनिरासायाह—यस्मादित्यादि। यस्मादपरन्तु नास्ति परमित्यस्य तुशब्दसमानार्थत्वात्। जीवोऽणुरीशो महानिति तयोरखण्डैक्यज्ञानं न मोक्षहेतुरत उक्तमतविरोध आवश्यक इति भ्रान्ति निरस्यति— यस्मान्नाणीय इत्यादि। किञ्चिदपि वस्तुस्वरूपं यस्मादात्मनो न ज्यायो न चाणीयोऽस्ति यदात्मस्वरूपंमुमुक्षुभिर्ज्ञेयं तस्याणीयस्त्वं ज्यायस्त्वं चौपाधिकं न स्वाभाविकमिति वस्तुतस्तन्नास्तीति भावः। ईशज्ञानादेव मोक्ष इति **पाशुपता**दिमतं निरस्यति—वृक्ष इवेत्यादि। तत ईशरूपाद्युत्तरतरमधिष्ठानतयानन्दघनसद्रूपतया च श्रेष्ठतरमित्यादि, तच्चिन्त्यम्; परशब्दस्य भिन्नक्रमत्वापत्तेः ज्यायस्त्वादिनिषेधस्य वास्तवत्वनिषेधपरत्वे च मानाभावात्। तेनेदं पूर्णमित्यादिविरोधाच्च। न च पूर्णत्वस्योत्तरतरत्वस्य चाविद्यकस्याविद्यादशायां शुद्धब्रह्मस्तुत्यर्थमुक्तत्वान्न दोष इति वाच्यम्; आविद्यकत्व एव विवादस्य प्रक्रान्तत्वात्।

यदपि **विष्णुपुराणे**—

सितनीलादिभेदेन यथैकं दृश्यते नभः।
भ्रान्तिदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक्॥

  

एकं समस्तं यदिहास्ति [किञ्चित्] दच्युतो नास्ति परं ततोऽन्यत्।
सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥ इति।

तस्याप्ययमर्थः–एकमेव नभो यथा भ्रान्तैर्नाना दृश्यते तथा पृथक् पृथक् सन्नात्मा भ्रान्तदृष्टिभिरेकोऽद्वितीय इति दृश्यते। तथा चाद्वैतज्ञानमेव भ्रम इति स्पष्टमेवोक्तम्। एकस्मिन्नेव ज्ञानभिन्ने ऐक्यज्ञानस्यापि भ्रमत्वाविशेषात्। न चोत्तरार्द्धेऽपि भेदज्ञानस्यैव भ्रमत्वमिति वाच्यम्; अप्रयोजकत्वात्, चरम निर्दिष्टज्ञानस्य प्रमात्वं पूर्वनिर्दिष्टस्य भ्रमत्वमित्यस्य पूर्वार्द्धे दर्शनाच्च। प्रमाणान्तरसंवादाच्च। "यदिहास्ति किञ्चित्तदच्युतः" इत्यस्य तात्पर्यं तु "नास्ति परं ततोऽन्यद्" इत्यनेनैवोक्तम्। तदपेक्षश्रेष्ठत्वस्यैवान्यत्र निषेधात्। तथा च व्यापकत्वादिना गौणं सामानाधिकरण्यमिति भावः। तदेवाह–सोऽहमित्यादि। तस्माद्भेदे ··· भेदो नास्तीति भ्रमं माकार्षीदित्यर्थः। अथ ज्ञानस्य भ्रमत्वं भेदविषयकत्वप्रयुक्तमेव लभ्यते, भेदमोहपद-माहात्म्यात्। घटभ्रमपदेन घटाभावभ्रमस्य स्वारस्यादप्रतीतेरित्याग्रहस्त-थापि न क्षतिः, उत्सर्गस्य बाधे सत्यकिञ्चित्करत्वात्, भेदसंशयं त्यजेदित्यर्थ-सम्भवाच्च। तत्त्यागस्य भेदाभावकोटित्यागेनापि सम्भवाद् विनिगमकस्योक्त-त्वात्, मोहपदस्य विपरीतज्ञानमात्रवाचित्वात्।

तत्र च त्रिविधो मोहः सम्भवः सर्वपाप्मनाम्।
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिति त्रिकम्॥

इति **स्मृतिकल्पतरौ** देवलवाक्याच्चेति दिक्। तमेवेत्यादिश्रुत्यर्थः॥

सत्यं ज्ञानमनन्तमित्यत्राऽनन्तपदमपि न मिथ्यात्वे मानम्। यत्तु अन्तपदस्य भेदार्थत्वादनन्तपदेन ब्रह्मणि भेदनिषेधे भेदव्याप्यानां दृश्यस्वरूपाणामपि निषेधस्यार्थिकत्वाद्भेदसामान्यस्यैव दृश्यसामान्यस्यापि मिथ्यात्वसिद्धिः, व्यापकनिषेधे व्याप्यनिषेधस्यावश्यकत्वाद्भेदप्रतियोगित्वस्यैव दृश्यसामान्यस्यापि निषेधमादाय दृश्यभेदप्रतियोगित्वनिषेधस्य पर्यवसा-नसम्भवेन बाधकाभावादविनिगम्यत्वाच्च दृश्यमानस्यैव निषेधसंभवात्। न च भेदत्वेनैव भेदोऽनन्तपदेन निषिध्यत इति न दृश्यनिषेधे पर्यवसानमिति वाच्यम्; देशकालवस्तुघटितत्वेनैव परिच्छेदानां त्रैविध्यव्यवहारात्। प्रपञ्चस्यापि वस्तुगत्यापरिच्छेदशून्यत्वेनानन्तत्वापत्त्या स्वसमानसत्ताकपरिच्छेदविशिष्टप्रतियोगित्वानां दृश्येष्वेव प्रसिद्धानां मतपदार्थंतया तच्छून्यमनन्तपदबोध्यमिति। तत्तत्स्वसमसत्ताकानां भेदादि-

प्रतियोगित्वानां तादृशत्वेनैव निषेध्यत्वात् । किञ्चिद्वस्तुनिष्ठतादात्म्यावच्छिन्न-प्रतियोगिताभावत्वस्यैव भेदत्वेन सामान्यतस्तादात्म्यत्वस्यानुगतस्याभावेन दृश्यतादात्म्यमादायैव प्रकृते निषेधात् तादात्म्यस्य भेदत्वस्य वातिरिक्तत्वेऽपि दृश्यमात्र एव स्वाश्रयभिन्नभेदत्वसत्त्वात्तन्निषेधः सिध्यत्येव। अधिकरणमेव भेद इति मते तु सुतरामिति, तदसत्; भेदस्य केवलान्वयितया प्रतियोगि-विशेषाविशेषितरूपेण निषेधानर्हत्वात्। न च केवलान्वयित्वमेव तस्य मया नाङ्गीक्रियत इति वाच्यम्; अप्रसक्तप्रतिषेधत्वापत्तेः, व्यवहारदशायां त्वयापि तदभ्युपगमाच्च। तज्ज्ञानस्य भ्रमत्वं नास्तीत्यत्रैव परमस्माभिः सह त्वद्विवादात्। ततश्च भेदे प्रतियोग्यपेक्षायां आत्मभिन्नत्वं दृश्यत्वं वा तत्र प्रतियोगित्वेनान्वयोपगमे तु सिद्धसाधनापत्तेः। अतो दृश्यत्वविच्छिन्न-प्रतियोगिताकभेदानुयोगित्वाभावस्तावन्नार्थः। नापि दृश्यवृत्तिभेदप्रतियोगि-त्वाभावः। अतोऽन्यदार्त्तमित्यादि श्रुतौ ब्रह्मप्रतियोगिकभेदवत्त्वेन दृश्य-मात्रस्याभिधानात्।

यत्तु स्वसमानसत्ताकेत्यादि, तदत्यन्तमसत्; सत्ताभेदस्य मिथ्यात्व-सिद्धेः। प्रागसिद्धया प्रपञ्चस्य पारमार्थिकभेदप्रतियोगित्वादानन्त्यत्वापत्तौ दृश्यसमानसत्ताकभेदप्रतियोगित्वानामनन्तपदार्थत्वे उक्तिसम्भवाभावात्। उक्तश्रुत्यैव मिथ्यात्वस्य साधयितुं प्रक्रान्तत्वात्। एतेन तस्मादन्तपरिच्छित्तिः सा चाभावीयतैव हि निषेध्यं प्रतियोगित्वमभावीयमतोऽखिलमिति परास्तम्। ध्वंसप्रतियोगित्वरूपकालपरिच्छेदस्यात्यन्ताभावप्रतियोगित्वरूपदेशपरिच्छे-दस्य कथंचित्प्रतिषेधसम्भवेऽपि भेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य निषेध इति वक्तुमशक्यत्वात्। पौराणिकानन्तपदव्याख्यानविरोधाच्च। स्मर्य्यते **हरिवंशे**—"देवैर्नादृष्टश्चान्तस्तेनानन्त इति स्मृतः" इति। **मत्स्यपुराणेऽपि** वराहप्रादुर्भावे—

यस्माद् ब्रह्मादयो देवा मुनयश्चोग्रतेजसः।
न ते तमधिगच्छन्ति तेनानन्तस्त्वमुच्यसे ॥ इति।

न चास्यापि त्वदुक्तरीत्या व्याख्यानं शक्यम्, दृष्टपदवैयर्थ्यात्। तस्मा दनन्तपदस्यानवयवमित्येवार्थः। अतो भ्रान्तस्येति सूत्रेऽयमन्तशब्दोऽ-स्त्येवावयववाची। तद्यथा "वस्त्रान्तो वसनान्त" इति **महाभाष्यदर्शनात्**। यद्वा अन्तशब्दस्य ध्वंसपरतया ध्वंसप्रतियोगित्वाभाव एवानन्तपदार्थः। "अन्तं प्रतीतिके नाशे स्वरूपेऽतिमनोहरे" इति **विश्वप्रकाशः**। यदप्युक्तम्—अति

अदि बन्धने इति धातुसिद्धस्यान्तपदस्य बन्धनार्थकतया बन्धनस्य यत्किञ्चिद्देशकालसंसर्गविरोधिस्वरूपतया संसर्गाभावप्रतियोगित्वरूपत्वमिव क्वचिद्वस्त्वैक्यरूपमिलनविरोधितया भेदप्रतियोगित्वरूपत्वं संभवतीति, तदप्यन्तपदार्थप्रकृतेर्निषिध्यते इति, तदप्यसत्; बन्धनस्य किञ्चिद्देशसंसर्गविरोधित्वेऽपि किञ्चित्कालसंसर्गविरोधे मानाभावात्। बन्धनाभावे यस्य यद्देशसंसर्गित्वं प्रसक्तं तद्देशसंसर्गस्य बन्धनसत्त्वेऽप्यनपायात्। अत एव किञ्चिद्वस्त्वैक्यरूपमिलनविरोधितयाभेदप्रतियोगित्वमपि तदर्थ इति परास्तम्। यद्वस्त्वैक्यबन्धनाभावे नास्ति तदैक्यस्य बन्धनदशायामप्यभावेन तस्य बन्धनाबन्धनसाधारण्यादिति दिक्। अयन्तु श्रुत्यर्थः॥

**बृहदारण्यके श्रूयते—**

"इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ इमा आपः सर्वेषां भूतानां मध्वासामपां सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मय स्तेजोमयोऽमृतमयः पुरुषोऽयमेव सयाऽयमात्मैवेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ इमा दिशः सर्वेषां भूतानां मध्वासां दिशां सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिंश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युते सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति

तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयं स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ इदं सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ इदं मानुषं भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ अयमात्मा सर्वेषां भूतानां मध्वस्य आत्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्॥ स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्। दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। आथर्वणायाश्विनौ दधीचेऽश्व्यं शिरः प्रत्यैरयतम्। स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति। स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम्॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्।

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति। अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्'' ॥

अयमत्रार्थः--मैत्रेयीब्राह्मणे ह्युक्तं शरीरेन्द्रियसम्बन्धादेवात्मनि ज्ञानाद्युत्पत्तिः, मुक्तौ तु तदभावान्नेति प्रागेव व्याख्यातम्, तदेव मधुब्राह्मणेन प्रपञ्च्यते। तथा हि–पृथिवीजलवायूनां शरीरेन्द्रियभेदेन त्रैविध्यं नत्वाकाशस्येत्याकाशमादित्यादिभिर्विच्छिद्य पृथिव्यादिचतुष्टयमेवापूर्वं प्रथमं निर्दिश्यते। तत्राप्यस्यादिशरीरस्य पृथिवीसमवायित्वतामेव पूर्वमाह—इयं पृथिवीति। सर्वेषां भूतानां जलतेजोवायूनां मधु तद्वदुपकारिका मधुपदमुपकार्योपकारकभावपरमित्यस्य तैरप्युक्तत्वात्। अस्याः पृथिव्याः सर्वाणि भूतान्युक्तानि। मधु उक्तप्रायार्थं उपकारश्चैककार्यानुग्राहकत्वं मानुषशरीरे पृथिवीसमवायिकारणं जलतेजोवाय्ववयवास्तूपष्टम्भकतया निमित्तमात्रम्। एवं जलादि शरीरेष्वपि योज्यं विस्तरो **द्रव्यकिरणावल्यादौ** द्रष्टव्यः। एवञ्च पृथिव्यादीनां परस्परमुपकार्योपकारकभावः सिद्धः। तेजोमयो ज्ञानप्रचुरो नित्यज्ञानवानिति यावत्। तैरपि चित्परत्वेनैव तेजःपदस्य व्याख्यानात्। अमृतमयो···· विना हीनः पुरुषः परमात्मा तथा चोद्दालकब्राह्मणे श्रूयते "यः पृथिव्यां तिष्ठन् पृथिव्यामन्तरो पृथिवीं न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरोपमयेतियत आत्मान्तर्याम्यमृत'' इति। अस्यायमर्थः—पृथिव्यां तिष्ठन्नपि पृथिव्या अन्तरोऽबाह्य उत्पत्यादिनियामकत्वेन पृथिव्यां तिष्ठन्नित्युच्यते न तु घटादिवत्तद्वृत्तित्वमिति "अन्तरं बहिर्योगोपसंव्यानयोः'' इति सूत्रे तरशब्दस्य बहिरर्थत्वप्रसिद्धेः। पृथिवी भूम्यधिष्ठातृदेवता यं न वेद न जानाति परैरपि तथैव व्याख्यातत्वात्। यस्य पृथिवीशरीरं पृथिव्यवच्छेदेन परमात्मनो भोगाभावेऽप्यवच्छेदकत्वमात्रेण शरीरत्वोपचारः। एतावतोऽप्यर्थस्य जीवसाधारण्येन संभावना स्यादत आह—यः पृथिवीमन्तरो यमयतीति। अन्तरोऽबाह्य उदासीन एव सन् पृथिवीं यमयत्युत्पत्तिस्थितिप्रलयैर्योजयति स्वकार्यसंबद्धाश्च करोति। पृथिवीत्वावच्छेदेन चैतन्न जीवसाध्यमिति परमात्मलाभ इति भावः। एष एव प्रष्टव्यत्वेन तद[दे]वोद्दालकस्य संबन्धी अन्तर्यामीपदवाच्य आत्मा अमृत इति स्वरूपकथनम्। एवमेव तत्रत्येषु योऽप्सु तिष्ठन्नित्यादिषु व्याख्येयम्।

प्रकृतमनुसरामः। यश्चायमध्यात्मे सुखाद्यवच्छेदकविशिष्टः शारीरः शरीरभोक्ता तेजोमय इत्यादिपदद्वयं पूर्ववत्। ज्ञानांशे नित्यत्वत्यागमात्रं विशेषः। योऽयमात्मा जीवः स अयं शारीरत्वेनोक्त एव, न तु पृथिवीनियामकत्वेनोक्तः। अतो जीवपरमात्मानौ भिन्नावेवेत्याशयः। यत्तु पृथिवीनियामकत्वेन तत्संबन्धकृतागन्तुकविशेषानुपहित एवोक्तस्तमधिकृत्याह—इदममृतमिदं ब्रह्मेदं सर्वमिति। इदमिति ब्रह्मशब्दसामानाधिकरण्यापेक्षं क्लीबत्वम्। यद्वा तदुद्देशेन ब्रह्मत्वस्य विधेयत्वात्। "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इतिवद्विधेयलिङ्गोपादानम्। तदुक्तं **कैयटादिभिः** "उद्देश्यप्रतिनिदेश्ययोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत" इति। कदाचिदुद्देश्यात्तल्लिङ्गस्य कदाचिच्च विधेयगतलिङ्गस्य विवक्षावशात्प्रयोग इति तस्यार्थः। यद्यपि जीवोऽपि मरणहीन एव तथाप्यात्मविशेषगुणजनकमनःसंयोगार्थः प्रागेवोक्तः।

यत्तु व्याचक्षते अयमेव सर्वबुद्धेर्द्रष्टैव स पृथिव्यां शरीरे चोक्तो यः अयमेव स इति सामान्यत उक्तम्, विशेषेणाह—योऽयमात्मेति। स्पष्टम्। नन्वात्मा चेज्जीवस्ततोऽस्य संसारित्वेन मरणं स्यादत आह—इदममृतम्। चिज्जीवत्वेनाभिमतो भवत आत्मा स एवेदं शास्त्रैकगम्यं मरणशून्यरूपममृते ब्रह्मैवेत्यत आह–इदं ब्रह्मपदे तदमृतत्वेनोक्तमात्मतत्त्वं पदे चेदं सत्यज्ञानादिलक्षणं जगज्जन्मादिकारणम्। न ततोऽन्यत्किञ्चिदप्यस्तीत्यत आह—इदं सर्वं स्पष्टमित्यादि, तच्चिन्त्यम्; पृथिव्यां शरीरे च य उक्तस्तदन्यस्यानिर्देशेनोद्देश्यत्वविधेयत्वानुपपत्तेः। न च पृथिव्यां शरीरे च य उक्तस्तमुद्दिश्याप्ययमेव स इत्यनेन सर्वबुद्धेर्द्रष्टारमभिधाय तदभेदो विधीयत इति वाच्यम्; स इत्यनेन द्वयोर्निर्देशानुपपत्तेस्तदभेदस्य चासिद्धेः, यत्पदाध्याहारे मानाभावाच्च। मन्मते तु योऽयमात्मेत्यस्योद्देश्यसमर्पकत्वमयमेव स इत्यस्य च विधेयपरत्वम्। इदंपदञ्च शारीरत्वेन निर्दिष्टपरम्, निर्देशपौर्वापर्यापेक्षया यत्तच्छब्दयोगस्योद्देश्यविधेयभावे स्पष्टतरं निर्णायकत्वात्। योऽयमात्मेत्यत्र इदंपदन्तु यच्छब्दसमानार्थमेव यच्छब्दाव्यवहितोत्तरं प्रयुज्यमानास्तदिदमादाय शब्दा उद्देश्यपरा एवेति **काव्यप्रकाशादौ**—

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताक्षैस्तदा तेन नूनं तदपि हारितम्॥

इत्यादौ तथैव दर्शनात्। इत्यलं बहुना। रेतस इति। यद्यपि शरीरे पृथिव्या इव रेतसि जलस्य न समवायित्वं जलादिशरीरमयोनिजमेवेति

मूलव्याख्याने "शुक्रशोणितयोर्नियमेन पार्थिवत्वात् पार्थिवं न च पार्थिवीयानारम्भाद्" इति **किरणावल्यां** दर्शनात्। तथापि पञ्चाग्निविद्यायां "सोमाद् वृष्टिर्वृष्टेरापोऽद्भ्योऽन्नमन्नाद्रेतस्ततः पुरुष" इति दर्शनात्तत्रोक्तम्, यद्वा रेतस्यपामधि देवतात्वात्। अत एवार्त्तभागब्राह्मणे "याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी शरीरमाकाशमात्मौषधी······वाङ्मयइति रेवायं पुरुष इति वाग्ज्योतिः सम्राडिति होवाच" इत्यादौ श्रूयमाणत्वात्। प्राण इति पञ्चवृत्तिस्तत्संबन्धी। चाक्षुषश्चक्षुःसंबन्धी। आदित्यस्य तदधिदेवतात्वाच्च। श्रौत्र इति। श्रोत्रस्य संबन्धी, तज्जन्यज्ञानसमवायित्वात्। एवं चाक्षुषादावपि यथायोग्यमूह्यम्। प्रातिस्वित्कः प्रतिश्रवणावसरंभवः इति तद् व्याख्या। मानसो मनःसंबन्धी। विद्युत्प्रसिद्धा। तैजसस्तेजःसंबन्धी। स्तनयित्नुः मेघनिनाद इति व्याख्या। शाब्दः शब्दानुभविता, सौवरः स्वरानुभविता, स्वरशब्दस्य द्वारादिषु पाठादैजागमः। सौवरः समभ्यस्त सम्रम्य इति शाब्दिकप्रयोगोऽपि। शब्दपदं वर्णात्मकशब्दपरं स्वरपदं च ध्वन्यात्मकतत्परं ······पुण्डरीकावकाशं तस्य जीवस्थानत्वात् तदवच्छिन्न इत्यर्थः। धार्मः धर्मस्य समवायित्वात्, अधर्मस्याप्येतदुपलक्षणं ताभ्यां शरीरपरिग्रहात्। सात्यः शास्त्राविरुद्धवचनस्य संबन्धी तत्प्रयोगहेतु ज्ञानवत्त्वात्। तथा च **स्मृतिः**—

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः।

धर्मपदस्यादृष्टपरत्वेन व्याख्यानानुपपत्तिः। वेदान्तिनस्तु धर्मपदेन तद्धेतुमभिसन्धाय धर्मसारसर्वस्वज्ञापनार्थं सत्यस्य पृथक्कारणमित्याहुः। मानुषं मनुष्यत्वजातिः इति तद्व्याख्या। मानुषो मनुष्यत्वजात्यवच्छिन्नशरीरावच्छेद्यज्ञानादिमान्, शरीरान्तराणां मानुषशरीराधिकातिरिक्तकर्मजन्यादृष्टमूलकत्वात्प्राधान्येन मानुषस्य पृथगुपादानम्। अयमात्मा जीवः सर्वेषां भूतानां मधु सर्वोत्पत्तिमन्निमित्तादृष्टाश्रयत्वम्। अस्य जीवस्य सर्वाणि भूतानि मधु भोग्यत्वात् सर्वस्य चेतनभोगार्थत्वात्। यथायमस्मिन् जीवात्मनि तद्भोगहेतुप्रपञ्चजनकत्वेन स्थितः पुरुषः। तथा च **वैशेषिकभाष्यं** "ततः पुनः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धवृष्टेभ्यस्तत्संयोगेभ्यः पवनं परमाणुषु कर्मोत्पत्तौ" इत्यादि।

यश्चायमात्मा पूर्वोक्तो जीवः। पूर्ववदन्यत्। मधु ब्राह्मणस्य जीवादीनां भेदविषयकं तात्पर्यं निगमयति—स वा इति। अयं परमात्मा यश्चतुर्दशसु पर्यायेषु नियामकत्वेन सर्वभूतस्थत्वेनोक्तः। सर्वेषां भूतानामधिपतिस्तत्प्रेरकत्वात्। तन्मात्रस्थादुक्तसाधारण्यादाह—सर्वेषां भूतानां राजेति। स्वातन्त्र्येण नियामकः। ईश्वरत्वोपादानत्वभ्रमं निरस्यन्नेव भेदं व्यनक्ति—तद्यथेति। रथपदं तदङ्गचक्रपरं तस्य नाभिर्मध्यम्, नेमिः परिधिः, अरा दीर्घकीलाः एवमेवास्मिन्परमात्मनि सर्वाणि भूतानि नियम्यत्वादिना सर्व आत्मानो जीवाश्च भोगद्वारानुग्राह्यत्वेन समर्पिताः। एवं च रथचक्रनेमिनाभीनामराणां च नोपादानोपादेयभावः। न वा तादात्म्यं किन्तु भेदः किञ्चित्कार्यनिबन्धनश्च संश्लेषस्तथाभूतजीवपरमात्मनापीति तात्पर्यम्। एवमुक्ताभिप्रायाया मधुविद्यायाः प्राशस्त्यार्थमर्थवादमाह मन्त्रद्वयेन—इदं वा इति। दध्यङ् तत्सज्ञः आथर्वणोऽथर्वसंज्ञस्य मुनेरपत्यम्। अश्विभ्यां देवभिषग्भ्यामुवाच प्रोक्तवान् तत्र वृत्तमर्थमृषिर्वेदः अवोचत् मन्त्रेण प्रतिपादितवान्। मन्त्रमाह—तद्वामिति। वां युवयोः तल्लोकोत्तरमुग्रं रौद्रप्रायं सनये मधुविद्याया लाभार्थमिदं स आथर्वणशिरश्च्छेदादिकं वक्ष्यमाणं कर्म आविष्करोमि प्रकाशयामि। कं किमिव तन्यतुः सशब्दः पर्जन्यो वृष्टिमिवेति **बृहदारण्यके** · · · · · ·आविष्कृणोमि तन्यतुर्न वृष्टिमिति मन्त्रे तन्यतुर्गर्जितमिति "स वां वृष्टिन्न तन्यतुः" इति मन्त्रे तन्यतुर्मेघ इति, "दिवश्चित्रं न तन्यतुः" इति मन्त्रे च तन्यतुरशनिरिति व्याख्यातं तदेवाहोत्तरार्द्धं "ह प्रसिद्धं दध्यङ्ङाथर्वण उक्तार्थमश्वस्य शीर्ष्णा शिरसा यन्मधु प्रोवाच ईमित्यनर्थको निपातः। यद्वा ईं इति उच्चारयन्नश्वो रे[ह्रे]षां कुर्वन् प्रोचाच तदाकृतं कर्मेति शेषः। दध्यङ्ङाथर्वण इन्द्राय मधुविद्यामचे तत इन्द्रेणोक्तं जघन्यस्मै इमां विद्यां वक्ष्यसि ता शिरस्ते छेत्स्यामीति तं कदाचिदश्विना ऊचतुर्मधु विद्यामावयोर्ब्रूहीति। स इन्द्रवृत्तान्तं प्राह। ततस्ताभ्यामुक्तं तव शिरः छित्त्वा स्वमायया क्वचिन्म्लानमेव स्थापयिष्यावः, अश्वस्य शिरः छित्त्वा त्वदङ्गे योजयिष्यावः। तादृशेन त्वयास्मत्सकाशे वाच्या। ततोऽश्वशिर इन्द्रेण छिन्ने त्वदीयमेव शिरो योजयिष्याव इति, ततस्तथैव तेन कृतम्" इति **प्रवर्ग्यब्राह्मणम्**। इति मन्त्रसमाप्तिद्योतनार्थः। द्वितीयमन्त्रपूर्वार्धं स्पष्टार्थम्। अश्वशिरोयुक्तश्च स दध्यङ्ङाथर्वणो मधु वक्ष्यामीति प्रतिज्ञाय वां युवाभ्यां मधु प्रावोचत्। कीदृशं ऋतायं मधु वक्ष्यामीति प्रतिज्ञारूपस्य सत्यवचनस्य आयः प्राप्तिस्तदर्थम् अन्यथा तद्भङ्गापत्तेः। त्वष्टा आदित्यः

तस्येदन्त्वाष्ट्रं प्रवर्ग्यं कर्म विज्ञानं कक्ष्यं गोप्यमात्मतत्त्वज्ञानाख्यमपि मधु ब्राह्मणतात्पर्यव्याख्यानार्थौ मन्त्रौ। पुर इति। द्विपदा पदद्वययुक्ता पुरः शरीराणि मनुष्यहीनां चक्रे प्राधान्यादेषां पूर्वमभिधानं चतुष्पदो गवादिशरीराणि तेषां यज्ञादिसाधनत्वात्। अपदां बहुपदां चेदमुपलक्षणम्। इदं च सर्गाद्यकालाभिप्रायं पुरः पूर्वं स परमात्मा पक्षी इच्छाप्रयत्नाभ्यां पक्षप्रायाभ्यां युक्तो भूत्वा तयोर्नित्यत्वेऽपि सहकारिसमवधानं विना फलानुपधानात्तदानीमेव तद्वैशिष्ट्यम्। पक्षीपदस्य परेषामपि ज्ञानक्रियाशक्तिपरत्वेन विज्ञानमयो भूत्वेत्यर्थः। लाभाय लाक्षणिकत्वात् पुरःपुरस्सर्वाणि स्वसृष्टानि जीवभोग्यानि शरीराण्याविशत्। तत्तदिष्टानिष्टप्रवृत्तिनिवृत्त्यादिमन्ति कृतवान्। तेषां स्वतस्तदनुकूलज्ञानाद्यभावादावेशोक्तिः। तच्च स्पष्टम्। अग्रिममन्त्रं व्याख्यास्यामः। वीप्सार्थं प्रकटयति—स वा एष पुरुष इति। पुरि शेते उक्तसम्बन्धेनेति व्यत्ययात्परमात्मनोऽपि पुरुषपदवाच्यत्वम्। जीवस्य तु तदवच्छेदभोगवत्त्वेनेति तात्पर्यम्। नैतेन किंचनानावृत्तं स्वजन्यकार्यान्वितं न कृतं तेन नित्यानामप्यावृतत्वलाभः। व्यापकत्वमाह—नैतेन किञ्चनासंवृतमिति। सर्वमेव तदधिकपरिमाणाभावादिति भावः।

ननु शरीरमात्रे सृष्टे सर्गाद्यकाले जीवानां कार्यकारणभावानभिज्ञत्वेनेष्टसाधनत्वज्ञानाधीनप्रवृत्त्यनुपपत्तेः सर्वेषां तादृशत्वेनोपदेशकजीवान्तराभावेन परे[च्छा]धीनप्रवृत्तेरप्यनुपपत्तेः कथं लोकयात्रानिर्वाह इत्यत आह—रूपं रूपमिति। द्वितीयो मन्त्रः रूपरूपव्यवहारत्वावच्छिन्नं प्रति वीप्सायां प्रतेः कर्मप्रवचनीयत्वाद् द्वितीया। रूपयति ज्ञापयतीति रूपो ज्ञापको बभूव परमात्मनोऽर्थाल्लाभः। तेनैव व्यवहारसमर्थास्तदानीं जीवात्मानः कृतास्तद्धेतुशब्दसङ्केतावगमादिद्वारेति भावः। यद्वा प्रतिरूपोऽनुकूलः सन् रूपं रूपं सर्वान् व्यवहारान् बभूव प्राप्तवान् "आधृषाद्वा" इत्यधिकारे चुरादिषु भूप्राप्तावित्यस्य पाठात्, णिजभावपक्षे परस्मैपदम्। ··· [सां]कल्पिकं तथा च **कल्पद्रुमे** भूङ् भूञ् प्राप्तौ इति। व्याख्यातं च **कामधेनौ** भावयतेऽत्र भवति भवते इति, एतेन छान्दसत्वादिति परास्तम्। ईश्वरस्य ईश्वरेऽस्य ···येन व्यवहारवत्त्वमित्याकाङ्क्षायामाह—तदस्येति। तद्व्यवहारानुरूपमस्येश्वरस्य रूपं प्रतिचक्षणायानभिज्ञानां जीवात्मनां शब्दशक्तिग्रहकार्यकारणभावज्ञानादिरूपज्ञानार्थं भवतीति शेषः। "अस्तिर्भवन्तीपरः" इति **कात्यायनोक्तेः**। तत्तदनेकशरीरपरिग्रहेण स्वयमनेकान्व्यवहारान् कृत्वा जीवान् शिक्षयतीति भावः। ईश्वरस्य कथं शरीरोपादानमदृष्टाभावादत

आह—इन्द्र इति। मायाभिर्जीवादृष्टैः पुरुरूपो बहुदेहस्सन्नीयते। ईङ् गताविति देवादिकस्य रूपम्। तदुक्तमाचार्यैः—

इत्येषा सहकारिशक्तिरखिला माया दुरुन्नीतितो
मूलत्वात्प्रकृतिः प्रबोधभयतो विद्येति यस्योदिता॥ इति।

स्वादृष्टाभावेऽपि जीवादृष्टबलादेव शरीरं परिगृह्णाति। तद्व्यवहाराच्च व्युत्पत्तिर्जीवानामुदेति, इदानीन्तनवृद्धव्यवहारदर्शनादिव बालानामित्यर्थः। तदुक्तमाचार्यैः 'मायावत्समयादय" इति। "प्रयोज्यप्रयोजककार्याधिष्ठातुरीश्वरस्यैव व्यवहारान्मायादिव्यवहारवत्तद्दर्शी व्युत्पन्नो भवति" इति उपायकृतः। अत एव "नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः" इत्यादि श्रुतयः संगच्छन्ते। नन्वेकस्य युगपदनेकशरीरेन्द्रियसंबन्धः कथमित्यत आह—युक्ता ह्यस्येति। दश शतानीति बहूनामुपलक्षणम्। हरय इन्द्रियाणि युक्ताः सम्बद्धाः। इन्द्रियाणि हयानाहुरित्यादौ हरित्वेनेन्द्रियाणां निरूपणात्। योगिनामपि स्वेच्छयानेकदेहाधिष्ठानं योगसामर्थ्यादुपपद्यते किं पुनरीश्वरस्येति भावः। अत एवेन्द्रियादीनां तदधीनत्वमाह—अयं वै हरय इति। गौणं सामानाधिकरण्यं तन्मतेऽप्येतादृशस्थले मुख्यार्थत्यागस्यावश्यकत्वात्प्रक्रमानुरोधाच्च। दश शतपदं बाहुल्यपरमिति स्पष्टयति—अयं वै दशसहस्राणि न बहूनि वानन्तानि चेति। तावदुक्तशरीरावच्छिन्नाभिन्न इत्यर्थः। उपसंहरति—तदेतद् ब्रह्मेति। अपूर्वं न विद्यते पूर्वं यस्मात् अविद्यमानपरस्वध्वंसाधिकरणकालवृत्तिवस्तु यस्य किञ्चिद्वस्त्वधिकरणकालवृत्तिध्वंसाप्रतियोगीत्यर्थः। अनन्तरं च भेदहीनं द्वितीयनिष्ठात्यन्ताभावप्रतियोगिवदिति यावत्। आत्मीयरहितं वा श्रा[रा]गादिराहित्याद्, अन्तरात्मरहितं वा नियामकान्तराभावादिति जीवाद् वैलक्षण्यम्। "अन्तरमवकाशावधि परिधानान्तभेदतादर्थ्ये" इत्यमरः। अवाह्यमिति बहुव्रीहिणा व्यापकत्वलाभः। अयं परमात्मा ब्रह्म बृहत्त्वात्सर्वानुभूतः सर्वविषयकानुभवाश्रयः। अतो दृग्दृश्ययोः संबन्धानुपपत्त्या कुतर्कानवकाशो निराकरिष्यते च विशिष्य तत्सर्वमित्यास्तां विस्तरः। अत्रैव तात्पर्यमुपसंहरति—इत्यनुशासनं वेद तात्पर्यमित्यर्थः।

यत्तु आद्यचरणेन नानारूपप्राप्तिर्ब्रह्मणोक्ता तत्किमर्थमत आह—तन्नानारूपत्वमस्यात्मना प्रतिचक्षणाय प्रतिख्यापनाय प्रज्ञानघनस्य हि निरुपाधिकस्वभावस्य नानारूपत्वेनैव संसारिरूपेणाचार्यादिज्ञेयब्रह्मरूपेण

वा प्रतिख्यापनं नान्यथा। अतोऽयं नानारूपत्वादिन्द्रः परमेश्वर एकरूपोऽपि मायाभिर्मिथ्यारूपैरभिन्नः पुरुरूप ईयते ज्ञायते। कथं नानारूपत्वं मायायास्तत्राह—हि यस्मात् अस्यात्मनो रथिस्थानीयस्य हरयोऽश्वा इन्द्रियरूपा रथस्थानीये शरीरे विषयरूपदेशप्राप्तये आगन्तुकतया युक्ताः सम्बद्धाः। तथाहि **काठकश्रुतिः**—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिञ्च सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्॥ इति।

अतश्च हर्यादीनामागन्तुकत्वादात्मैव हरयः अयमेव च दशादिरूपा विषयाः। नात्मान्यदस्ति तत्तसमा· · ·र्याद्युपाधिशून्यत्वादेतदात्मस्वरूपं ब्रह्मेत्यादि, तच्चिन्त्यम्; प्रतिचक्षणपदे णिजन्तर्भावेन व्याख्यानेऽप्यायादेशापत्तेः। शुद्धस्य तु अनञो प्रतिषेधो वक्तव्य इति तदभावोपपत्तेः। "बहुलं सञ्ज्ञाछन्दसोः" इत्यस्याश्रयेऽपि गौरवात्। मायाभिरित्यभेदार्थतृतीयापेक्षया कारकविभक्तित्वेन करणे तृतीयाया एव युक्तत्वाच्च। इन्द्रियाणामागन्तुकतया युक्तत्वेऽप्यागन्तुकस्य मिथ्यात्वमित्यस्य पूर्वमसिद्धतया नानारूपत्वमिथ्यात्वे हेतुत्वानुपपत्तेश्च। अयं वै हरय इत्यादौ सर्वत्र बाधाय सामानाधिकण्ये गौरवाच्च। एतेन तदेतद्ब्रह्मेत्यत्र तदेतच्छब्देनाविद्यककार्यमुद्दिश्य तस्य ब्रह्मत्वं विधीयत इति व्याख्यानमपि निरस्तमिति दिक्। तदेतन्मध्वित्यादि श्रुत्यर्थः॥

अतोऽन्यदार्त्तमिति श्रुतिरपि न मिथ्यात्वे मानम्, अनित्यत्वपरतया परकीयैरेव व्याख्यानात्।

यत्तु आत्मन्यस्य सर्वस्य नाशित्वबोधनेन तेन हेतुना मिथ्यात्वानुमाने तात्पर्यं धूमोऽस्तीत्यादेर्वह्न्यनुमानवदिति, तन्न; वह्न्यादिस्वरूपस्य प्रमाणान्तरसिद्धत्वेन धूमादेश्च तथात्वेनावगततथात्वेऽपि मिथ्यात्वस्य तथात्वाभावेन तत्र श्रुतितात्पर्यस्य वक्तुमशक्यत्वात्। यदप्यार्त्तत्वं पीडचमानत्वं तथा चान्यत्सर्वं मतम्। आर्त्तमेतज्ज्ञाननिवर्त्यमिति, तदप्यसत्; इदं पदस्य तज्ज्ञानेन लक्षणापत्तेः। नचेमं ज्ञात्वेति ल्यब्लोपपञ्चम्या निर्वाहः, समानकर्तृकत्वाभावात्। अन्यत्वे प्रतियोग्यन्वयार्थमत इत्यस्यावृत्त्यापत्तेश्च। "स्वात्मबन्धहरः सर्वथाद्वैतरहितः आनन्दरूपः सर्वाधिष्ठानसन्मात्र" इति **तापनीयादिश्रुतेरप्ययमर्थः**—स्वात्मनो जीवस्य बन्धहरः

ईश्वरतत्त्वज्ञानेन संसारनिवृत्तेः द्वैतपदस्य प्रपञ्चसम्बन्धप्रयुक्तदुःखादिपरतया तच्छून्यः सर्वाधिष्ठानत्वञ्च सर्वप्रेरकत्वादिरूपं सन्मात्रत्वं सर्वदा सत्त्वमिति। यदप्यत एव सम्बन्धाद········दार्तं पीडितं वितथीकृतं दृक्संबन्धाद्दृश्यं मिथ्यासंबन्धानिरूपणादिति, तदप्यसत्, एतत्संबन्धलक्ष[णा]या आवृत्तेश्च सत्त्वादात्मनो दृग्रूपत्वे मानाभावाच्च। संबन्धनिरूपणबाधकानां च निराकरिष्यमाणत्वादन्यपदस्य प्रतियोग्यंशे उत्थिताकाङ्क्षत्वेन तदन्वयस्यान्तरङ्गत्वाच्च।

वस्तुतः "अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतंचलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद् भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण" इति प्रक्रम्य "सोऽब्रवीत्पतंचलं काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रं विद्यात्तवान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स यज्ञवित् स भूतवित् स आत्मवित् स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणमिमा ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यति" इत्यादिनान्तर्यामिप्रश्नयः। "पृथिव्यां तिष्ठन्" इत्यादि "य आत्मनि तिष्ठन्" इत्यन्तमुक्त्वा "अदृष्टो द्रष्टाश्रुतः श्रोतामतो मन्ता नान्योऽस्ति विज्ञातैष त आत्मान्तर्य्यम्यमृतोऽतोऽन्यदार्त्तं होद्दालक आरुणिरुपरराम" इति श्रूयते। ततश्च द्वैतेनोपक्रमादमृतत्वस्यात्मन्युक्त्या तदन्यस्मिंस्तद्व्यतिरेकरूपस्यानित्यत्वस्यैव बो[धकत्वा]वात् तदन्यत्वावच्छेदेन चानित्यत्वान्वयस्यायोग्यतया तदन्यत्वसामानाधिकरण्यमात्रेणान्वये दोषाभावात्। संभवति यमयोरपदार्थत्वेन तात्पर्यगम्यत्वात् वेदतात्पर्यस्य च बाधिते व्यतिरेकनियमात्। यद्वा अन्योन्यदित्यनेन प्रतियोगिसजातीयस्यैव भेदानुपयोगिनो लाभात्। आर्त्तपदस्य च दुःखाश्रयपरत्वान्न दोषः। न च जीवत्वावच्छेदेनापि न दुःखाश्रयत्वमुक्तं जीवे तदभावात्। दुःखाश्रयवृत्तिद्रव्यविभाजकोपाधिमत्त्वविवक्षायां त्वीश्वरबहिर्भावानुपपत्तिरात्मत्वजातेस्तत्रापि सत्त्वादिति वाच्यम्; कालानवच्छिन्नसमवायसंबन्धेन दुःखाश्रयत्वविवक्षायां प्रयोजनाभावेन कदाचिद्दुःखवत्त्वेनैवावच्छेदकावच्छेदेनान्वयरक्षणात्। "यत्तदेष त आत्मा नान्योऽस्ति द्रष्ट" इत्यादौ जीवैक्यापन्नब्रह्मण एव प्रकृतत्वेन तस्यैवातः शब्दार्थत्वात्तदन्यत्वेन जीवोपादानमनुपपन्नमिति, तन्न; न वेत्यस्यत्वस्पष्ट इत्यर्थकत्वाज्जीवब्रह्मणोरैक्यस्यासिद्धेश्च। "यस्योभयं हविरार्त्तिमाछेदः" इत्यादावर्थवशादार्त्तशब्दस्य नाशार्थत्वेऽपि दुःखविशेष एष तच्छक्तेः। "कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु"

"रुद्रेषु विद्रावितमार्त्तमारात्" "नृपाः स्मरार्त्ताः शरणं प्रपद्य" इत्यादिदर्शनात्। मत्तोन्मत्तार्त्तव्यसनेति याज्ञवल्क्योक्ते "आर्तो व्याधिना" इति विज्ञानेश्वरव्याख्यानाच्च। एतेनोच्चस्तन्नाह्मणस्थमप्यतोऽन्यदार्तमितिवाक्यं व्याख्यातमिति दिक्। अतोऽन्यदार्त्तमिति श्रुत्यर्थः॥

अदृष्टो द्रष्टेतिश्रुतेस्त्वयमर्थः—दृष्टादिपदं भावार्थकक्तप्रत्ययान्तचक्षुरादिजन्यज्ञानपरं निषेधप्रतियोगित्वेन बहुव्रीहिणा व्याख्येयम्। तृप्रत्ययप्रकृतिभूतदृश्यादिपदानि च तत्समानफलज्ञानमात्रपराणि। तथा च चाक्षुषज्ञानरहितोऽपि तत्तुल्यज्ञानफलकज्ञानाश्रय इत्यादि। "पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुत्यन्तरेणैकवाक्यत्वात्। मतिपदं मानसपरं विज्ञानपदं पूर्वोक्तान्यज्ञानपरम्। यद्वा अदृष्टः प्रत्यक्षात्मकज्ञानविषयोऽपि द्रष्टा तादृशज्ञानाश्रयः, प्रलये जीवानां तद्विषयज्ञानाभावेऽपीश्वरस्य सर्वं विषय[क]ज्ञानसत्त्वात्। अश्रुतः शब्दादिविषयोऽपि श्रोता तत्समानाकारकज्ञानवान्। मतिपदमनुमितिपरं विज्ञानपदमुपमितिपरं पारिशेष्यात्। अथवा द्रष्टा दर्शनानुकूलकृत्याश्रयः चैत्रो जानातीत्यादौ ज्ञानानुकूलतत्समवेतकृतेरप्रसिद्ध्या आख्यातस्याश्रयलाक्षणिकत्वोपगमेऽपीश्वरकृते कार्यमात्रजनकत्वादत्र लक्षणायां प्रमाणाभावात्। न चानुकूलत्वमसाधारणमेव धात्वर्थकृत्योः संसर्गतया भाति, ईश्वरकृतेस्तु ज्ञानादौ नासाधारणमनुकूलत्वं कार्यत्वावच्छिन्नजन्यतानिरूपितहेतुताशालित्वादिति वाच्यम्; तत्र प्रयोगवशात्तथात्वेऽप्यत्रानुकूल्यस्य साधारण्येऽपि क्षतिविरहात्। न च कर्त्राख्याततादृश्यादिप्रकृतिके आश्रयत्वप्रकारकबोधत्वमेव कार्यतावच्छेदकं क्लृप्तं तत्कथं कृतिप्रकाराश्रयत्वसंसर्गबोध इति वाच्यम्; चक्षुर्जानातीत्यादौ ज्ञानजनकसंयोगरूपव्यापारस्यैवाख्यातार्थतया तत्प्रकारकाश्रयत्वसंसर्गकबोधस्याप्यभ्युगतत्वात्। किञ्च भवद्भिरप्यदृष्टो नयनज्ञानाविषयः द्रष्टा नयनव्यापारस्य कर्त्ता, अश्रुतः श्रोत्रज्ञानस्याविषयः श्रोता श्रोत्रव्यापारस्य कर्त्ता, इत्यादिरीत्या व्याख्यातम्। ततश्च दृश्यादीनां नयनादौ लक्षणेति लक्षणाचतुष्टयमिति गौरवम्। अथादृष्टत्वादिकं चाक्षुषादि[वृत्ति]फलावृत्तिविषयत्वात्। द्रष्टृत्वादिकं चाक्षुषादिवृत्त्यवच्छिन्नचित्तात्म्यादित्याद्यभिप्राय इत्युच्यते, तदपि न; दृशिधातूत्तरकर्मप्रत्ययस्य यथोक्तफलविषयत्वार्थत्वस्वीकारे आत्मा द्रष्टव्य इत्यदावन्वयापत्तेः, इत्यादि बोध्यम्। अतः परमात्मनाभिन्नः द्रष्टा चाक्षुषानुकूलकृतिमान्नास्ति तेन चक्षुरादेस्तदनुकूलव्यापार-

वत्त्वेनापि न क्षतिः। श्रोता शब्दप्रत्यक्षानुकूलकृतिमानपि नास्तीत्यादिकं योज्यम्।

यत्तु अतोऽन्तर्यामिणः अन्यो वस्तु भिन्नो द्रष्टा श्रोता च नास्ति तयोरैक्यादिति, तन्न; वस्तुत इत्यस्य कल्पने मानाभावात्, वास्तवभेदस्य तन्मतेऽप्रसिद्धेः। व्यावहारिकभेदानिषेधे च तेषामपि व्याघातात्। एतेन श्रोता श्रोतुर्जीवस्य स्वरूपमित्यपि निरस्तम्, लक्षणापत्तेः। येन रूपेण तस्य श्रोतृत्वं तदवच्छिन्नानुयोगिताकभेदस्य च तैरपि स्वीकारात्। एवं च "एतद्वै तदक्षरं गार्गि दृष्टं द्रष्टृ: श्रुतं श्रोतुर्मतं मन्तुर्विज्ञातं विज्ञातुरिति" गार्गीब्राह्मणस्य "न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीथा" इत्युषस्तब्राह्मणस्थश्चैतत्समानार्थकमेव बोध्यम्। अदृष्टो द्रष्टेति श्रुत्यर्थः॥

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**बृहदारण्यकीयानां वाचामर्थनिरूपणम्॥**

—:*:—

# षष्ठोंऽशः

यत्तु श्रुतिस्मृत्यादिषु दृश्यमसद्वस्त्वपरमार्थमतात्त्विकमविद्यमानं स्वप्नसमं मायामयमित्यादि निर्दिश्यते तद्भोक्तृभोग्यानां स्वकं प्रत्यविनाशित्वनियमादस्थिरत्वाभिप्रायम्। त्वदुक्तिमिथ्यात्वेऽसदादिपदानां वृत्तेरभावात्, कल्पनस्य च मानान्तरविरोधानुपपत्तेः। यत्तु भागवतम्—

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते
माया तदुद्यदपि यत्सदिवावभाति ॥ इति।

तस्यार्थः—असत्स्वरूपमित्यस्य तात्पर्यमाह—स्वप्नाभमिति। स्वप्नवदाभातीति स्वप्नाभमल्पकालभोग्यमित्यर्थः। अर्थाप्रतिबद्धा धिषणा तत्त्वधीर्येन तथापि रागविषय इति यावत्। सुखस्यापि दुःखसंभेदमित्याह—पुरुदुःखदुःखमिति। नित्यसुखज्ञानाश्रयेऽनन्ते नित्ये च नित्यानां घटत्वादीनामपि नित्यघटादिवृत्तित्वादुभयत्र नित्यपदोपादानम्। त्वय्येव कारणे मायातो जीवादृष्टैरुद्यदपि सदिव नित्यवस्तुवदनुरागविषयोऽवभाति रागिणामिति यावत्। तस्माद्विषयेषु नात्यासक्तिः कार्येति तात्पर्यम्। अत एव भारते—

सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे।
अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारत ॥ इति।

इदं हि असत्त्वस्य मिथ्यात्वे तात्पर्यमिति भ्रमनिरासार्थम्। स्वातन्त्र्यमन्यान्वयाद्यनुविधायिवृत्तिमत्त्वम्। तच्च कृष्णे परमात्मनि न त्वपरे जीवे अदृष्टेच्छाद्यधीनत्वात् तत्प्रवृत्तेः। अस्वातन्त्र्यादन्याधीनप्रवृत्या[त्ति]मत्त्वादेव तेषामसत्त्वमित्युच्यते न तु मिथ्यात्वाभिप्रायेणेत्यर्थः।

यत्तु स्वातन्त्र्यं तत्त्वज्ञानाभावप्रयुक्तस्थितिकत्वरूपपारतन्त्र्यशून्यत्वमिति, तन्न; मानाभावात्। स्वाधीने च स्वतन्त्रशब्दस्य कोषप्रयोगादिना सिद्धेः। अन्यानधीनत्वे लक्षणायामप्यर्थसन्निकर्षात्। यत्तु "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सन्" इत्यमरादौ स्वातन्त्र्यस्य सत्यत्वादिभिन्नस्यार्थस्यानुक्तेः स्वातन्त्र्यस्य सच्छब्दार्थत्वे मानाभाव इति, तन्न; साधुत्वप्राश-

स्त्याऽभ्यर्हितत्वानामनुगतत्वेन यत्र यादृशं तद्विवक्षितं तत्र तस्यैव तदर्थत्वात्, स्मृत्युक्तार्थस्य परित्यागे मानाभावाच्च । अवस्तुपदेन तु कथं मिथ्यात्वलाभः ? न हि वस्तुपदं पदार्थमात्रसाधारण्यात् "अगोरणाच्चेति" तदुत्तरसूत्रे वस्तु-शब्दस्य त्वसन्नम्यर्थत्वेन सर्वैरेव विवृतत्वात्, नापि प्रयोगो मानं ब्रह्मभिन्ने-ष्वपि वस्तुपदप्रयोगात् । प्रत्युक्तं हि समन्वयसूत्रे **भगवत्पादैः**—"ननु ज्ञानं हि नाम मानसी क्रिया न, वैलक्षण्यात् । क्रिया नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते पुरुषचित्तव्यापाराधीना च । यथा "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्निति सन्ध्यां मनसा ध्यायेदिति" चैवमादिषु ध्यानं चिन्तनं यद्यपि मानसं तथापि पुरुषेणा-कर्त्तुमकर्त्तुमन्यथाकर्त्तुं शक्यं पुरुषतन्त्रत्वात् । ज्ञानन्तु प्रमाणजन्यं प्रमाणञ्च यथानुभूतवस्तुविषयमतो ज्ञानं कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुमशक्यं केवलं वस्तुतन्त्रमेव तत्र चोदनातन्त्रं तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम् । यथा "पुरुषो वा गौतमाग्निर्योषा वा गौतमाग्निः" इत्यत्र योषित्पुरुषयोरग्नि-बुद्धिर्मानसी भवति केवलचोदनाजन्यत्वात्क्रियैव सा पुरुषतन्त्रा च । या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा नापि पुरुषतन्त्रा किन्तर्हि प्रत्यक्ष-वस्तुतन्त्रैवेति ज्ञानमेव तत्र क्रिया । एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्" इति । **भामत्यामपि** "देवतासम्प्रदानकहविर्ग्रहणे देवतावस्तुस्वरूपानपेक्षा-ध्यानक्रियायोषित्यग्निवस्त्वनुपेक्षाऽग्निबुद्धिः । न ह्यस्माद्विधेः प्राग् देवता-ध्यानं प्राप्तं प्राप्तं त्वधीतवेदस्य विदितपदतदर्थसंबन्धस्य विदितशाब्दन्याय-तत्त्वस्य सदेव सोम्येदमित्यादेस्तत्त्वमसीत्यन्तात्पदसन्दर्भाद् ब्रह्मात्मभाव-ज्ञानशब्दप्रमाणसामर्थ्यादिन्द्रियार्थसन्निकर्षसामर्थ्यादिव प्रणिहितमनसः स्फीतालोकमध्यवर्त्ती कुम्भानुभवः । न ह्यसौ स्वसामग्रीबललब्धजन्मा मनु-जेच्छयान्यथाकर्त्तुमकर्त्तुं वा शक्यो देवताध्यानवत्, येनार्थवांस्तत्र विधिः स्यात् । पुरुषचित्तव्यापाराधीनायाः क्रियाया वस्तुस्वरूपनिरपेक्षता क्वचिद-विरोधिनी यथा देवताध्यानं क्रिया, न ह्यत्र वस्तुरूपेण कश्चिद्विरोधः । क्वचिद्वस्तुस्वरूपविरोधिनी यथा योषित्पुरुषयोरग्निबुद्धिरित्यादि । अन्यत्रा-प्यनुष्ठानं हि किं कल्पते ? न वस्तु" इति । **भट्टपादैरपि**—

तेन भूरितिकर्त्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥

**श्रीहर्षेणापि**—

वस्तु वास्तु घटते न भिदानां यौक्तनैकविधबाधविरोधैः । इति ।

विष्णुपुराणे च—

ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्त्तिर्न च वस्तुभूतः ॥ इति ।

ब्रह्मणो वस्तुत्वाभावोक्तेश्चापरिच्छिन्नत्वस्य वस्तुत्वेन तत्र विवक्षितत्वात् । अशेषमूर्त्तित्वव्यापकत्वाभिप्रायकत्वेन तद्विपर्ययस्य न तु वस्तुभूत इत्यनेन प्रतिपाद्यत्वात् । न च दृश्यमात्रस्य कथमवस्तुत्वोक्तिस्त्वन्मते व्यापकान्तराणां सत्त्वादिति वाच्यम्; न हि तवेव ममापि दृश्यपदमात्मपरं किन्तु वैराग्यसम्पादनार्थत्वात्प्रकृतप्रबन्धस्य भोग्यवस्तुमात्रपरम् । न चाकाशादयो भोग्या इति दोषाभावाद् व्यापकत्वाभावोक्तिरप्यनित्यत्वतात्पर्या । न च परमाणुषु व्यभिचारः कालिकव्यापकत्वस्य विवक्षितत्वात् । सर्वमूर्त्तसंयोगित्वरूपविभुत्वेन तस्याप्याक्षेपात् । यद्वा देशपरिच्छेद एव वस्तुपदेनोक्तः, न च वैयर्थ्यं देशान्तरे तद्विषयस्याभावेन दुःखहेतुत्वे तात्पर्यात् ।

यत्तु स्वप्नादिसाम्यं मिथ्यात्वेन न त्वनित्यत्वादि प्रत्यक्षादिसिद्धित्वेन तदुक्तिवैयर्थ्यादिति, तन्न; अदृष्टे स्वर्गादौ वैराग्यार्थमागमेन तद्बोधनस्यावश्यकत्वात् ।

न च कृतकत्वलिङ्गकानुमानेन तत्रापि गतार्थत्वमाक्षिप्य हेत्वेत्याद्यागमविरोधेन नरशिरःशौचानुमानवत्तस्यानुत्थानात् । आगमसत्त्वे तु तत्सहकारेणानुमानस्य प्राबल्यमिति । उक्तञ्च तथैव **वाचस्पत्यादौ**—"अंशतः सिद्धिश्चावच्छेदकावच्छेदेन प्रवृत्ते माने न दोष इन्द्रजालिकमिव मायं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरमम्" इति । **मैत्रायण्यादिश्रुतेरप्युक्त** एवार्थः । तथाहि—इन्द्रजालजलादिरहितेऽपि जलादिभ्रमहेतुर्विद्याविशेषः । यथा तदानीमेव गजादिनिर्माणम् । इन्द्रजालदृष्टानां वस्तूनां स्वस्वासाधारणार्थक्रियाकारित्वविरहात् । तथा च **मात्स्ये**—

प्रकोपधृतताम्राक्षः कालनेमी रुषातुरः ।
अभवत्कल्पमेघाभः स्फुरद्भूरिशतह्लदः ॥
गम्भीरास्फोटनिर्ह्लादो जगद्धृदयघट्टकः ।
आच्छाद्य गगनाभोगं रविमायां व्यनाशयत् ॥

शीतं ववर्ष सलिलं दानवेन्द्रबलं प्रति ।
दैत्यास्तां वृष्टिमासाद्य समाश्वस्तास्ततः क्रमात् ॥
बीजाङ्कुरा इव म्लाना प्राप्य वृष्टिं धरातले ।
ततश्च मेघरूपी तु कालनेमिर्महासुरः ॥
शस्त्रवृष्टिं ववर्षोग्रां देवानीकेषु दुर्जयाम् ॥

इत्यादिमायामयानां तु तत्कार्यकरित्वान्मायाबद्धेषु तथा तद्दर्शनात्, रावणादिष्वैन्द्रजालिकत्वव्यवहाराभावाच्च । "इन्द्रजालं तु कुसृतिः" इति कोषे तुशब्देन मायातो भेदस्य लाभाच्च । क्वचिदिन्द्रजाले मायापदस्य सत्त्वे च लाक्षणिकत्वाद्विशेषपदादस्त्रादौ नातिव्याप्तिः, न वास्त्राणामपि लक्षत्वं "विहीनमिव मायाभिरस्त्रैरिव बहिःकृतम्" इति भेदोक्तेः । एतेन मिथ्याप्रकृतिकत्वस्य प्रपञ्चसाध्यताकाले तदिन्द्रजाले सिद्धम् । मिथ्यात्वेनानुभूयमानस्य शुक्तिरूप्ययोर्मिथ्याभूताज्ञानोपादानकत्वेन क्लृप्तत्वान्मायाशब्दस्य लोके मिथ्यात्वरूपत्वादिति निरस्तम् । शुक्तिरूप्ययोरतिरिक्तत्वासिद्धेरन्यथाख्यातेर्व्यवस्थापयिष्यमाणत्वात्, शुक्तिरूप्यस्य मिथ्यात्वानुमानाच्च । ततश्च प्रकृते इन्द्रजालपदं तत्प्रकाश्यवस्तुपरं मायामयं भ्रमात्मकज्ञानविषयः । अयन्तु विशेषः तत्र धर्मिणोऽपि तदवच्छेदेनाविद्यमानत्वं प्रपञ्चे तु नित्यत्वांशावभ्रमः । एतेन स्वप्न इवेत्यपि व्याख्यातम् । अत एव तदभिमतमिथ्यात्वपरत्वभ्रमनिरासायाह—कदलीगर्भ इवासारमिति । स्वरूपेणानित्यत्वमुक्त्वा तद्विद्यमानत्वदशायामेव तद्भोगाभावं सूत्रयति—नट इव क्षणवेष इति । विद्यमानेऽपि नटे पश्चाद्भोगस्थानीयवेषस्य निवृत्तेः ।

किं धनेन करिष्यन्ति देहिनः क्षणभङ्गुराः ।
यदर्थं धनमिच्छति तच्छरीरमशाश्वतम् ॥

इति **पुराणे** तदर्थस्य स्पष्टत्वात् । **योगवासिष्ठे**ऽपि—

अजस्रमुपभुक्तेषु त्रैलोक्योदरवर्त्तिषु ।
भोगेषु भजदुद्वेगं बलिरेवमचिन्तयत् ॥
प्रपातमात्रमधुरमावश्यकपरिक्षमम् ।
भोगोपभोगमात्रं हि .......... ॥

इष्टस्य क्वचिन्मिलनमेव नेत्यभिप्रायेणाह—चित्रभित्तिरिव मिथ्यामनोरथमिति । मिथ्येतिफलानुपधानस्य मनोरमेतीच्छाविषयस्य सूचनं "यावदस्य

प्रगल्भपाण्डवस्य जयद्रथरक्षणेनैव मिथ्याप्रतिज्ञावैलक्षण्यसम्पादितमशस्त्रमरणमुपदिशामि" इति **वेणीसंहारे** निःफले मिथ्यापदप्रयोगात् ।

मूर्द्धानुद्वृत्तकृत्ताविरलगलगलद्रक्तधारासहस्रै-
र्धौतेशाङ्घ्रिप्रसादोपनतजगज्जातमिथ्यामहिम्नाम् ।।

इत्यादौ दर्शनाच्च ।

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारस्स उच्यते ।। इति **गीतायाम्** ।

"मिथ्याचारःसत्त्वशुद्धयभावेन फलायोग्यत्वात्पापाचारः" इति **सरस्वतीभि**र्व्याख्यानाच्च । "मृषा मिथ्या च वितथे" **इत्यमरे**ऽपि वितथत्वस्य नैःफल्य एव पर्यवसानात् । "अवितथमदाध्याते रोषान्मुनावभिधावति" इत्यादौ साफल्यस्य तद्विपर्ययत्वेनाभिधानाद्वाक्यस्यापि फलविसंवादित्वेनैव मिथ्यात्वात् । अत एव "भ्रान्तप्रतारकवाक्ये मिथ्यात्वव्यवहारो नास्ति मिथ्याशब्दस्यार्थमाचष्टे" इति **न्यासकृता** व्याख्यातम् । स्वरादिदोषेण हि विवक्षितार्थानुत्पादकत्वान्मन्त्रनैःफल्यमेव—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ।।

इति **शिक्षायाः** पठ्यमानत्वात् । मन्त्रशब्दस्य शब्दमात्रपरत्वमित्याशयेन **महाभाष्ये** "दुष्टःशब्दः स्वरत" इत्यादेः पठितत्वात् । ततश्च "स्वरवर्णादिदोषा एव पदस्य मिथ्यात्वतान्यतात्पर्यात् । अत एव मिथ्याप्रयुक्तो यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन् अत एव तमर्थमाहेत्यर्थः" इति **शब्दकौस्तुभे** । एतेन मिथ्यापदस्य दुष्टार्थकत्वे दुष्टजलादावपि मिथ्यात्वव्यवहारापत्तिरिष्टापत्त्यैव परिहार्या मिथ्योत्तरमिथ्यादौ दुष्टार्थतत्प्रयोगस्य **मिताक्षरा**दिसिद्धत्वात् "मिथ्याप्रव्रजितो रणे" इत्यादिदर्शनाच्चेति दिक् ।

यत्तु **भागवतम्**—"ऋतेऽर्थं यत्प्रतीयेत" ततः प्रत्ययः स्यात् विशेष्यनिष्ठात्यन्ताभावप्रतियोगिधर्मप्रकारकं यज्ज्ञानम् । यदित्यत्र क्रियाविशेषणत्वात्क्लीबत्वं 'इदं गम्यते' इत्यादिवत्सकर्मकत्वेऽप्यविवक्षितकर्मकत्वाद्भावे लकारः, नेह पच्यत इत्यादिवत् । तन्मायापदार्थं विद्यादिति परैरपि व्याख्यातत्वात् । न प्रतीयेत न विश्वस्येत च यत्प्रकारकज्ञाने सति कदाचित् कस्य-

चिदप्रामाण्यज्ञानं भवत्येवेति यावत् । ज्ञानञ्च प्रमा, तेन कस्यचिद् घटविशेष्यकघटत्वप्रकारकज्ञानेऽप्यप्रामाण्यशङ्कोदयेऽपि न क्षतिः । न कस्यचिद्भ्रमेऽप्रामाण्यज्ञानानुदयेऽपि दोषः । अत एवात्मनीत्युक्तम् । यत्किञ्चिदात्मनिष्ठाप्रामाण्यज्ञानस्य तदुपादानेनैव लाभात् । तात्पर्यं तु पूर्वोक्तमात्रं न भ्रमशरीरं संयोगाभावादिप्रमाणमतिव्याप्तेः । किन्तु द्वितीयचरणस्यात्यन्ताभावे प्रतियोगिविरुद्धत्वतात्पर्यतया विशेष्यनिष्ठप्रतियोगिविरुद्धात्यन्ताभावप्रतियोगिधर्मप्रकारकमेवावच्छेदकभेदमन्तरेण वृत्ते संयोगतदभावज्ञानस्य प्रमात्वेन तत्र कस्याप्यप्रामाण्यप्रमाविरहात्, एकावच्छेदेनोभयावगाहने च भ्रमत्वस्य स्पष्टत्वात् । यथाभास इति । आभासशुक्त्यादौ रजतादिज्ञानं तद्भ्रमत्वस्य लोकेऽपि प्रसिद्धत्वादाह—यथा नभ इति । नीलं नभ इति ज्ञानमित्यर्थः । एवञ्च मद्रीत्या भ्रमशरीरस्य समस्तस्य पूर्वार्द्धे लाभात् । यदपि रजतादिभ्रमोपादानाज्ञानस्य शुक्त्याद्यवच्छिन्नचैतन्यमधिष्ठानं वियदाद्युपादानाज्ञानस्य त्वनवच्छिन्नमेव चैतन्यमन्यस्य सविकल्पितत्वादित्याशयेनात्म इत्युक्तम् ।

नन्वेवं स्वप्रकाशस्याधिष्ठानस्य सर्वदा भानात्कथं तत्रारोपस्तत्राह—न प्रतीयेत वात्मनीति । आत्मनि परमानन्दरूपे न प्रतीयेत इति यत्तदपि माया, पूर्णानन्दस्वप्रकाशस्फुरणरूपप्रतीत्यभावरूपमज्ञानं जगदुपादानमपि तादृशमायेति यावत् । तथा च स्वप्रकाशेऽप्रकाशस्य कल्पितत्वात्तन्मूलकोऽन्यस्य सर्वस्यारोपः । अर्थाभावे प्रतीयमानत्वे दृष्टान्तमाह—यथाभास इति । शुक्तिरूप्यादौ रूप्य······भासः । प्रकाशस्वरूपे तदभावत्वेन कल्प्यमाने यथातम इति । मध्याह्नसूर्यालोके तदभावत्वेनोलूकैः कल्प्यमानं तम इत्यर्थ इति, तदपि चिन्त्यम्; न प्रतीयेत इति यत्तदपि मायेत्यनेक पदानां कल्प्यत्वात्, एकस्यैव वाक्यार्थस्यावगम्यमानत्वाच्च । अर्थाभावे प्रतीयमानत्वस्य शुक्तिरूप्यादावसिद्धे च परेण प्रामाणिकरूप्यस्य तत्र प्रतीत्यभ्युपगमात् ।

यत्तु **गौतमसूत्रै**रेव प्रपञ्चो मिथ्या, तथाहि—"एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः । बुद्ध्या विवेचनात्तु भावानां याथार्थ्यानुपलब्धिस्तन्त्वपकर्षेण पटानुपलब्धिवत् । तदनुपलब्धिः स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः । मायागन्धर्वनगरमृगतृष्णावद्वा । मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात्स्वप्नविषयोपलब्धिप्रणाशवत्प्रतिबोधे । बुद्धेश्चैवंनिमित्तसद्भावोपलम्भात् । तद्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ।

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः। दोषनिमित्तं विषयाः संकल्पकृताः। तन्निमित्तं त्ववयव्यभिमानः। विद्याविद्या द्वैविध्यात्संशयः॥" इति चतुर्थाध्यायसूत्राणीति, तदसत्; तेषां पूर्वपक्षसूत्रत्वात्। अहो आश्चर्यं "नाभाव उपलब्धेः" इत्यादिषु स्वसिद्धान्तसूत्रेषु शेषमपि प्रक्षिप्याद्वैतानयनं परकीयाणि च पूर्वपक्षसूत्राण्यादायापि द्वैते तात्पर्यनिरास इति। "अथेमेऽसंख्यैकान्तवादाः" इत्युपक्रम्य "सर्वमेकमद्वैतवादस्य" प्रथममेव **न्यायसूत्रभाष्यादौ** निरासाच्च। तथाच तन्त्रान्ते **तात्पर्यटीकायां वाचस्पतिमिश्रैः** "अद्वैतादिष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेदपि तु काल्पनिकः। न केवलप्रेत्यभावोऽपि तु षोडशापि पदार्थाः। तदेतेषां यत्तत्त्वज्ञानं तस्य विवेकार्थमेकान्तवादा परीक्षिता" इति। उक्तथेतिसूत्रं हि अवयव्यनङ्गीकर्तृविज्ञानवादिनो युक्त्यनुवादः। **यद्वाचस्पत्यं** "यदि हि पटस्तन्तुभ्यो भिन्नो भवेत्तन्तुव्यतिरेकेण गौरवाच्चातिरेकेणोपलभ्येत, न चोपलभ्यते, तस्मात्पट इति मिथ्याबुद्धिरियं तन्तुरित्यपि मिथ्याबुद्धिरंशुभ्यो भेदेनानुपलम्भात्। एवमंशुरित्यपीति। तदनेन क्रमेण परमाणुष्वपि बुद्ध्या विध्या विविच्यमानेषु याथात्म्यानुपलब्धेर्न बाह्यं वस्तु स्थूलं वा क्षोदीयो वास्तीति सर्वा एव बुद्धयः स्वाकारमबाह्यतया आलम्भासमिथ्याभूता" इत्यादि। एतच्च दूषितं व्याहतत्वादहेतुरिति। यस्य विविच्यमानस्य याथात्म्यानुपलब्धिस्तत्कुतश्चिद्विवेचनीयम्, अवध्यभावे तदनुपपत्तेः। तथा च तेनावधिना क्वचिदवस्थातव्यम्, अनवस्थायां त्रुटेरमेयत्वप्रसङ्गादित्युक्तम्। तस्मात्परमाणुषु वा तत्संयोगेषु च तेनावस्थातव्यम्। तथा च—

"यतो विविच्यते भावः स एवास्यावधिर्याथात्म्येनोपलभ्यत" इति।

बुद्ध्यविवेचनस्य सर्वभावानुपपत्त्या व्याघात एवं प्रमाणस्यापि सर्वभावान्तर्गतत्वे तदनुपपत्तौ सर्वभावानुपपत्तेरनुपपत्तिः। अपृथग्ग्रहणस्यादित्यस्यापि कोऽर्थः, किं विलक्षणबुद्ध्यवेद्यत्वम्, उत देशभेदाभावः, किं वा तन्तुव्यतिरेकेण देशान्तरेऽनुपलम्भ इति। नाद्यः, पटबुद्धेस्तन्तुबुद्धिवैलक्षण्यात्। न द्वितीयः, तत्तु पदयोरंशुतन्तुरूपदेशभेदात्। नान्त्यः, तन्तुभ्योऽन्यत्रादर्शनस्य भेदेऽपि तदाश्रितत्वेनोपपत्तेः। प्रमाणस्यानुपपत्तौ सर्वभावानुपपत्तेरनुपपत्तिरित्यत्र विज्ञानवादिप्रत्यवस्थानं स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमान इति, अत्रापि **वाचस्पत्यव्याख्या** "न खलु वास्तवप्रमाणप्रमेयभावः किन्त्वनादिवासनानिबन्धनकल्पनाधीनः। यथा हि न स्वप्ने

सन्ति परमार्थतो विषया अथ च प्रतिभान्ति कल्पनामात्रेण तस्मात्सांवृते- नैवापरमार्थसत्ताप्रमाणप्रमेयभावेन बाह्यार्थशून्यता सिद्ध्यति परमार्थसती प्रत्ययानां मिथ्याप्रत्ययानामपि तत्त्वप्रतिपत्तिहेतुतादर्शनाद्रेखागवयादिना सत्यगवयादेरवगमात्।

ननु स्वप्नप्रत्ययानां मिथ्यात्वेऽपि न जाग्रत्पदार्थतो तथात्वं तेषामत्य- न्तवैलक्षण्यादत आह विज्ञानवादी–मायागन्धर्वमृगतृष्णावद्वे ति। जाग्रत्प्रत्य- यवादसिद्धिरित्यनेन यद् **वाचस्पत्यं** स्वप्नज्ञानस्यायाथार्थ्यमिच्छता बाधक- मन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्ययोऽस्य बाधको वक्तव्यः। न चासावसमीची- नस्तद्बाधयितुमुत्सहते इति समीचीनत्वं जाग्रत्प्रत्ययस्याभ्युपगन्तव्यमित्यादि। **माध्यमिकस्तु** मिथ्याबुद्धिदृष्टान्तेन बाह्यापह्नवं कृत्वा तेनैव दृष्टान्ते विज्ञाना- भावं कृत्वा विचारासहत्वं भावानां तत्त्वमिति मेने। तद्दूषणाय सूत्रम् "बुद्धेश्चैवं निमित्तसद्भावोपलम्भाद्" इति। अर्थे निषिद्धे हि भवेदप्येतत्, तद्व्यवस्थापने तद्वदेवाप्रत्यूहं बुद्धिसद्भावोऽपि सिध्यति। नचैवं वादिनः प्रमाणमस्ति असता सप्रमाणेन विचारासहत्वं भावानां व्यवस्थापयन् श्लाघनीयप्रज्ञो देवानां प्रिय इति। न च कल्पनामात्रनिर्मित उपायस्तत्त्व- ज्ञानाय पर्याप्तः। न च वनस्पतितत्त्वज्ञानस्य मिथ्याहस्तिज्ञाननिबन्धनम्, अपितु प्रणिहितमनस इन्द्रियार्थविशेष एव। न चासौ मिथ्याज्ञानसमय आसीत्, न च मोहाभ्याससमीचीनाय ज्ञानाय कल्प्यते स हि मोह एव दृढयतीत्यादि माध्यमिकोऽनुभूय मानी मिथ्याबुद्धिं नापह्नोतुमर्हतीति। तथा च मिथ्याबुद्धिं प्रतिपद्यमानेन तस्यानिमित्तं वक्तव्यमित्युक्तम्। तत्त्वप्रधानभेदाच्च मिथ्यामिथ्याबुद्धिं प्रति द्वैविध्योपपत्तिः। अत्रमिथ्याबुद्धि- पदं तन्निमित्ते लाक्षणिकम्, अन्यथा व्याघातात्। तथा च मिथ्याबुद्धि- निमित्तस्य द्वैविध्यमित्यर्थः। प्रस्तावे द्वितीयाह्निके च मिथ्याज्ञाननिरूपणे "केचिदद्वैतसाक्षात्कारस्तत्वज्ञानमि ····· 'सत्त्वपुरुषान्यताख्यातिरित्यपरे, धर्मपुद्गलनैरात्म्यज्ञानमित्यन्ये। धर्मनैरात्म्यं हि भावनैरात्म्यम्, पुद्गलनै- रात्म्यं तैर्थिकाभिमतात्मनि स्वभावमित्यर्थः। शरीरेन्द्रियाद्यनित्यत्वातिरिक्त- नित्यात्मदर्शनमिति वृद्धाः" इत्युल्लापादिमतानि निरस्य "अनात्मग्रहोऽहम- स्मीति मोहोऽहंकार" इति वार्त्तिकमुपादाय सर्वस्येयमात्माशीः कृमेरपि मानुभूवं प्रयासमिति सोऽयमीदृशोऽभिनिवेशः शरीरादीनात्मत्वेनाध्यवस्यतो भवति, नात्मतत्त्वं विदुषः। स खल्वहिर्निर्ल्वयिनीमिव। अहिः स्वतो व्यतिरिक्तं शरीरादि पश्यन् न तत्र स्निह्यति स्नेहविरहान्न तप्यते नाप्यनुशोचति, इत्थं

तत्त्वज्ञानवतः संसारस्तद्वतस्तन्निवृत्तिरिति वाचस्पत्योक्तार्थम्। "दोषनिमित्तानां तत्त्वज्ञानदहङ्कारनिवृत्तिः" इति सूत्रम्। तत्र शरीरादिष्वात्मबुद्धौ निवर्त्तयितव्याया तत्त्वज्ञानाख्यं प्रसंख्यानं विषये सुकरमिति। तत्रैव प्राथमिकस्य प्रथमं प्रयत्नो युक्त इति। "दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः" मिथ्याज्ञानं संकल्पः तेन विषयीकृता इत्यर्थः। विज्ञानवादिसौत्रान्तिकवैभाषिकास्त्वर्थजीवनमनङ्गीकुर्वतोऽर्थाभावज्ञानमेव प्रसंख्यानमाहुस्तन्निराकरणाय सूत्रम्। तन्निमित्तं त्ववयव्यभिमाननिमित्तं तन्त्वादितद्विशिष्टविषया सञ्ज्ञा। प्रियायाः कामुको दन्तौष्ठनासिकादीनवयवानभावयंस्तस्यां प्रसक्तो भवति। अवयवानुव्यञ्जनं तेषामनुव्यञ्जनं सादृश्यं तदारोपः। तथा च स्त्रैणानां व्यवहारः—

द्रवत्कनकनिर्मलद्युतिरनङ्गलीलैकभू-
र्महेभकटविभ्रमस्तनभरालसाङ्गी यदि।
प्रिया न परिरभ्यते तुलितसिद्धसंजीवनी
सहेमहि कुतोऽन्यतो विषमबाणबाणव्यथाम्॥

मदनसरितमेनां गाहमानो जनोऽयं जघनपुलिननाभीमण्डलावर्त्तरम्याम्।
मुखमलिनसनाथामुल्लसद्भ्रूनतोर्मि चिरविरहहुताशायासमुद्गांचकार॥

विवेकिनस्त्वशुभसञ्ज्ञां भावयन्तः प्राहुः—

मज्जामस्थ्नामथ प्लीहायकृतां शकृतामपि।
पूर्णाः स्नायुशिरास्यूताः स्त्रियः सर्गप्रसेविकाः॥

ऋषयोऽप्यूचुः—

स्थानाद्बीजादुपष्टम्भान्निस्पन्दान्निधनादपि।
कायमाधयशौचत्वात्पण्डिता ह्यशुचिं विदुः॥

तस्माद्द्विविधस्यासौ कामिनीलक्षणो विषयः। तथा रामादिप्रहाणार्थमववादिसञ्ज्ञागोचरत्वं परित्यज्याशुभसंज्ञागोचरत्वमेवोपादेयवैराग्योत्पादनार्थं यथाविषसम्पृक्ते मधुनि विषसञ्ज्ञेति। अवयविसंशयोपपत्त्यर्थं विद्याविद्याद्वैविध्यात्संज्ञानसूत्रं "विद्याविद्ये उपलब्ध्यनुपलब्धी सत्खलूपलभ्यते यथा तडागे तोयम्, असद्वा यथा मरुमरीचिकायाम्, सदपि नोपलभ्यते यथा चिरनिखातं भूमौ निध्यादि, असच्च तथा यथा भूतले दृश्यमाने तुल्योपयो-

न्यतो घटादि। यथैव यद्यवयव्युपलभ्यते तथापि संशयः। अथ नोपलभ्यते तथापि संशय इत्यर्थः। अवयवी चैकदेशेनावयवे वर्त्तत इत्यवयवसमूहमात्रमवयवी प्राप्नोति" इति **वार्तिकम्**। तत्र **टीका** "अवयवे वर्त्तमानो ह्यवयवीत्युच्यते। अवयव्येकदेशाश्चेदवयवेषु वर्त्तन्ते एकदेशा एव तर्ह्यवयविनः, ते च नानेति अवयवसमूहमात्रमवयवी प्राप्नोति। नावयवी क्वचिदवयवे वर्त्तते तदेकदेशानां तत्रावयवे वृत्तेः। यत्रावयवेऽवयविन एकदेशो वर्त्तते तत्रैव ग्रहीतव्यः तथैकस्मिस्तन्तौ पटैकदेशो वर्त्तते इति तन्तावेकस्मिन्पटो दृश्येत। सिद्धान्तवाद्याह—एकस्मिन्भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः। एकदेशावयवी न स्वावयवेषु वर्त्तते, इत्यत्र प्रतिज्ञार्थेऽवयवान्तराभावादित्यहेतुः। कस्माद्यद्यवयवान्तरमेवावयविनो भवति तथाप्यवयवान्तराण्येवावयविनोऽवयवान्तरेषु वर्त्तन्ते किमापतितमवयविवृत्तेरिति। एवञ्चानेकत्र वर्त्तत इति प्रतिजानानः किङ्कार्त्स्न्येन किमेकदेशेनेति नानुयोज्यः। कस्मा उभयेन कार्त्स्न्येनैकदेशेन वा नानात्वैकार्थसमवायिना एकस्यावयविनो व्याघातात्" इत्यादि।

प्रकृतमनुसरामः। न च स्वकल्पनयैव सूत्रमद्वैतपरत्वेन व्याख्येयमिति वाच्यम्; अद्वैतनिराकरणपरस्पष्टार्थकसूत्रविरोधात्। प्रमाणादितत्त्वज्ञानेन निःश्रेयसप्रतिपादकाद्यसूत्रविरोधाच्च। चतुर्थाध्यायप्रथमाह्निके शून्यत्वोपादानं त्वनिरस्य "ईश्वरःकारणं पुरुषकार्यफलदर्शनाद्" इति। अस्यार्थः—माभूदयं प्रपञ्चशून्योपादानो भविष्यति ब्रह्मैव हि प्रपञ्चरूपेण परिणमते, मृत्तिकैव घटशरीरोदञ्चनादिभावेन। न चैवं नित्यत्वव्याघातः परिणामेऽपि तत्त्वाविघातात्तल्लक्षणत्वाच्च नित्यतायाः। यदा ह्यस्मिस्तत्त्वं न विहन्यते तदपि नित्यमिति परिणामवादः। विवर्त्तवादस्तु ब्रह्मैवानाद्यविद्योपधानभेदान्नामरूपप्रपञ्चभेदेन विवर्त्तते मुखमिवैकमनेकमणिकृपाणदर्पणादिभेदान्नैकविधप्रतिविम्बभेदेनेति।

न च जीवकर्मनिबन्धन एव नामरूपप्रपञ्चोऽस्तु इति वाच्यम्; पुरुषश्चेच्चैतयेन्नैव निष्फलकर्मारम्भे ततः निःफलत्वं त्वविद्वान्प्रवर्त्तमानः कथञ्चेतनो नाम, तस्मात्पुरुषकर्माल्पदर्शनात्तस्मादीश्वरः कारणमित्येतद्दर्शनद्वयाकरणाय सूत्रम् "न पुरुषकर्माभावे फलानिष्पत्तेः" इति। इदमत्राकूतम्—न तावन्मृत्तिकेव नामरूपप्रपञ्चभेदेन ब्रह्म परिणमते, तद्धि सर्वात्मना वा परिणमते एकदेशेन वा? नाद्यः, तत्त्वव्याघातादनित्यत्वापत्तेः। नान्त्यः,

सावयवत्वेऽनित्यत्वादन्यथा व्याघातात्। अथ तत्त्वेनानुगतस्य परिणामः, तत्त्वं ब्रह्म न तर्हि ब्रह्मणः परिणामः, न च निर्भाग्यस्यैव त्वस्य स्वसंवेदनप्रत्यक्षस्य विपरीतज्ञानगोचरत्वसम्भवः। सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपेण विभ्रमो दृष्टः, शुक्तिकादौ न जातु शुक्तिस्वरूपं विद्वान् रजतमिति पर्यवस्यति। न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति। तस्मादीश्वरो जगद्भेदेन विवर्त्तत इत्ययुक्तमित्यस्याकरे व्यवस्थितत्वात्। तस्माद्गौतमस्याद्वैते तात्पर्यमिति कल्पनं साहसमात्रम्।

यत्तु चतुर्थाध्यायान्ते आरम्भादिप्रक्रियाया हेयत्वमद्वैतमतस्य च ग्राह्यत्वं सूत्रभाष्ययोरुक्तमिति, तदप्यसत्; तत्त्वज्ञानोत्पत्तिविवृद्धिपरिपालनोपायस्यैव तत्रोक्तत्वेनाद्वैतमतस्यांशतोऽपि बाह्यत्वानुक्तेः। तत्र हि दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम्, तत्र तत्त्वज्ञानोत्पत्तिर्न तावदागमतो वानुमानतो वाहङ्कारनिवृत्तिपर्याप्तदोषनिमित्तेषूत्पन्नतत्त्वज्ञानानामपि पूर्वमत्याहृतस्य मनसस्तत्त्वबुभुत्साविशिष्ट आत्मना संयोगः प्रत्याहृतस्येति विक्षेपनिवृत्तिः। इन्द्रियेभ्यः प्रत्याहृतस्य मनसः क्वचित्पुण्डरीकैकदेशे आत्मनि निजौकसि धारकेन प्रयत्नेन धार्यमाणस्यात्मना संयोग इत्यर्थः। सुषुप्तिवारणाय तत्त्वबुभुत्साविशिष्ट इति। तदभ्यासश्च तद्विषयधारकप्रयत्नोत्पादपौनरुक्त्यम्। तस्मादादरनैरन्तर्यदीर्घकालसेविता तत्त्वबुद्धिरुत्पद्यते इत्यर्थः। तत इन्द्रियविषयैरपहृतस्य मनसो न धारणा तदभ्यासाभावान्न तत्त्वसाक्षात्कार इत्याशङ्क्य समाधानसूत्रम्—"पूर्वकृतफलानुबन्धात्तसिद्धिः"। पूर्वकृतः समाधेः फल संस्कारस्तस्यानुबन्धः स्थेम्ना, तस्मादित्यर्थः। कस्मात्तत्कल्पमिति चेन्न; प्रयत्नविशेषा हि विशरारवो बहवोऽपि परस्परं न संभवन्तो न तत्त्वसाक्षात्काराय पर्याप्ता तत्संस्काराणां तु स्थेम्ना संभवति, संभूयकारित्वं समाधिविशेषमात्रस्य तत्त्वज्ञानसंहननत्वध्यवच्छेदाय सूत्रम्—"तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः" समानमाश्रमिणो धर्मसाधनमहिंसासत्यमस्तेयं ब्रह्मचर्यं इति यमः। आश्रमिणामसाधारणो धर्मोपायो नियमः। संस्कारस्त्वधर्महानं धर्मोपचयश्च। योगपदं पातञ्जलपरम्, अध्यात्मविधिस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति। इन्द्रियविशयेषु च प्रसंख्यानाभ्यासो रागद्वेषनिषेधार्थः। उपायो योगाचारविधानं एकाकिता आहारविशेषः एकत्रानवस्थानमित्यादि। एतेषां तत्त्वज्ञानोत्पादद्वारेणापवर्गसाधनत्वम्।

नन्वेवमान्वीक्षिकीवैयर्थ्यात्ततः सूत्रम्—"ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः" तदर्थमित्यस्यानुवृत्तिः। ज्ञानमान्वीक्षिकीरूपात्मविद्या तस्याः ग्रहणमध्ययनं धारणं चाभ्यासः सततक्रियातद्विद्यैश्च संवादः प्रज्ञापरिपाकार्थः। प्रज्ञापरिपाकस्तु देहाद्यतिरिक्त आत्मा उत नेति संशयच्छेदनं विज्ञातार्थविबोधावसितार्थाभ्यनुज्ञानमध्यवसितं प्रमाणेन तस्याभ्यनुज्ञानं तर्केण तद्विद्यैस्सह संवाद इत्येतद्विभज्यते। तं शिष्यगुरुसब्रह्मचारिभिरनसूयिभिरभ्युपेयात्। ब्रह्मचारी सहाध्यायी गुरुशिष्यसब्राह्मणेभ्योऽन्यः शास्त्रेण विशिष्टः। श्रेयोऽर्थिनश्च श्रेयसि मोक्षलक्षणे श्राद्धाः, तेषामपवर्गे श्रद्धादर्शनात्तदुपायाभ्यासः प्राग्भावीय इत्यनुमीयते। न तेषामपि प्राग्भावीयसंस्कारवशात्प्रतिभोपासनीयेऽभ्युपेयादभिमुखमुपेयात् गुर्वादिभिस्सहेत्यर्थः। तदनेन गुर्वादिभिर्वादं कृत्वा तत्त्वनिर्णय उक्तः। यदि च मन्येत पक्षप्रतिपक्षपरिग्रहः परस्य गुर्वादेः प्रतिकूलः तस्मान्न वादोऽप्युचित इति, तत्रेदं सूत्रमुपतिष्ठेत "प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे" तमभ्यनुपेयादित्यनुवर्त्तते। पुरतो गुर्वादेः प्रज्ञामुपादित्समानः आत्मनः शरीरादिभ्यो भेदमहद्बुभुत्सेति स्वतत्त्वबुभुत्सां प्रकाश्य च पक्षमनवस्थापयन् गुर्वादिकृताद्विचारात्पूर्वपक्षोदयेन सिद्धान्तव्यवस्थापनलक्षणात्स्वदर्शनं परिशोधयेत्। अन्योऽन्यप्रत्यनीकानि च प्रावादुकानां दर्शनान्ययुक्तपरित्यागेन युक्तपरिग्रहेण परिशोधयेत्। बुध्यवादस्यैवेयमीदृशी दशा तत्त्वनिर्णये दत्तजलाञ्जली तर्हि जल्पवितण्डे। अतः स्वपक्षरागेण चैके न्यायमतिवर्त्तते "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवद्" इति सूत्रम्। अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदित्यर्थः। न केवलमिदमेव किन्तु जल्पवितण्डयोः प्रयोजनान्तरमप्यस्तीत्याह—विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य "ताभ्यां विगृह्य कथनम्" इति सूत्रम्। यस्तु कुदर्शनबलाहितमिथ्याज्ञानावलेपपटुविदग्धतया सिद्धविद्यावैराग्याद्वा लाभपूजाख्यात्यर्थया कुहेतुभिरीश्वराणां जनाधाराणां पुरतो वेदब्राह्मणपरलोकादिदूषणप्रवृत्तस्य प्रतिवादी समीचीनं दूषणप्रतिभया अपश्यन् जल्पवितण्डेऽवतार्य जल्पवितण्डाभ्यां विगृह्यातत्त्वकथनं करोति। विद्यापरिपालनाय माभूदीश्वराणां मतिविभ्रमेण तच्चरितानुवर्त्तिनीनां धर्मविप्लव इति, इदमपि प्रयोजनं जल्पतिण्डयोर्नतु लाभख्यात्या दृष्टं नहि परहितप्रवृत्तः परमकारुणिको मुनिर्दृष्टार्थं परमासनोपायमुपदिशतीति तत्र सर्वैकवाक्यतया फलितार्थः। अद्वैतविद्याया ग्राह्यत्वंमत्र न कुत्राप्युक्तमित्यास्तां तावत्।

यत्तु यदग्ने रोहितं रूपमिति श्रुत्यर्थो "बुद्ध्याविवेचनाद्" इति सूत्रेणोक्तः अत एवोक्तसूत्रार्थस्तोटकाचार्यैरुक्तश्रुत्यर्थत्वेनोक्तः प्रतिदर्शयिषुर्वसनस्य यथा वितथत्वमापास्यति तन्तुगुणमपकृष्य तु तन्तुसंमंत्रितं यं ज्वलनप्रमुखस्य तथोक्तवतीति यदग्नेरित्यादि श्रुतिरितिशेषः। मायेत्यादिना इन्द्रजालमिव मायामयमित्यादि श्रुत्युक्तः, मिथ्येत्यादिना यत्र हि द्वैतमिव भवतीत्यादिश्रुत्युक्तः, संकल्पकृता इत्यादिना एतत्सर्वं मन एवेत्यादिश्रुत्युक्तश्चाऽपरिहार्यस्तर्क उक्त इति, तदप्यसत्; विज्ञानवाद्युक्तयुक्तेरेव तैरनूदितत्वात्, अनुवादानुवादत्वे प्रमाणाभावात्। वस्तुतो वेदान्तिनामपि सैव युक्तिः, तदंशे ब्रह्मवादिविज्ञानवादिनोरविशेषात्। "अयमेव सौगतब्रह्मवादिनोर्विशेषः" इत्यादिना **खण्डनादौ** आत्मनस्तात्त्विकत्वोपगममात्रेण वेदान्तिनां सौगताद्विशेषोक्तेः। कथञ्च लोके पटस्य मिथ्यात्वं बुबोधयिषुः सूत्रमपाकरोतीति निर्णीतं महापटनाशस्यैव तेन बोधयितुं शक्यत्वात्। पटवत्येव तद्वृत्तित्वनियामकसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यैव भवन्मते मिथ्यात्वदूषणपरतयैव व्याख्याताः। यदग्नेरित्यादिश्रुतेर्मिथ्यात्वप्रतिपादकश्रुतेर्मिथ्याप्रतिपादकत्वमपि पूर्वमेवापास्तमित्यास्तां विस्तरः। एवमन्या अपि श्रुतयः स्मृतिपुराणेतिहासाश्च सुधीभिर्व्याख्येयाः।

तुल्यस्तत्र यथाश्रुतार्थविरहोऽस्माकं परेषामपी-
त्येषा रीतिरुरीकृता बहुविरोधानां तिरोधायिका॥

अपि च असत्त्वमिथ्यामनोरथत्वमायामयत्वादि यदुक्तमस्मिन् तैरैहिकामुष्मिकभोगरागत्यागायत्यसदायतित्वम्। अत एव **पार्थसारथिमिश्रैरुक्तं** "तस्माद् ब्रह्मणः प्रशंसार्थेऽस्थायित्वेनासत्त्वमुपचरद्भिरौपनिषदैर्वाक्यैस्तदनुसारिभिश्चेतिहासपुराणैर्भीतानां वाक्यतात्पर्यमजानतां न्यायाभियोगशून्यानां प्रलापोऽयमद्वैतवाद इत्युपेक्षणीय" इति। **न्यायसूत्रमालायां न्यायपञ्चाननैरप्युक्तं** "तमेव भान्तमनुभाति सर्वं एतस्यैवानन्दस्य नित्यज्ञानम्" इत्यादिश्रुत्या ब्रह्मणो ज्ञानादिरूपता। तदपि रूपं कल्पितमिथ्याधर्मिमात्रं सत्यमित्यादिकं यथाश्रुतं बलसिद्धं प्रमाणगम्यस्य मिथ्यात्वं तदवगम्यस्य ... मननदशायां न्यायविदर्थश्रुत्यर्थविचारनिर्णयमिति।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥
किं पुनर्ब्राह्मणाः पुण्या भक्ताराजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्॥

इति । तस्मा एवमौपनिषदः · · · · भिलाषीयायां श्रुतिं प्रणिदधाति भादाभिधाने अस्थान एव रभसा · · · · · मासासाश्रुतापृथग्देवहन्ति । एतेन यत्खण्डनकृद्भिरुक्तं "श्रुतिरद्वैते प्रमाणमिति ब्रूमः श्रूयते खल्वेकमेवाद्वितीयं नास्ति किञ्चनेत्यादि सिद्धार्थानां श्रुतीनामन्यपरत्वमपि स्यात् तथापि पदसमन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरीभवनात्, धियां स्वतः प्रामाण्यस्य बाधकैकापीडचत्वात्" इति, तत्सर्वमपास्तम्, बाधकानां पूर्वमेव प्रपञ्चितत्वात्, पदसमन्वयस्य च द्वैतपरत्वेनैव सम्भवेऽस्याद्वैतपरत्वे प्रत्युत प्रातिकूल्यस्यैव बहुशो दर्शितत्वाच्च । यदप्युक्तम्—

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।
आस्ते न धीरवीरस्य भङ्गः संगरकेलिषु ॥ इति ।

तत्राप्येवं प्रतिवक्तव्यम्—

ब्रह्मास्त्रमालनयतो दशदाडिमानीत्याद्यां गिरं समरसीमनि तद्बलेन ।
तद्वेदिभिःसह समागममागतस्य जागर्त्ति वागपि जयं प्रतिरागतः किम् ॥

आपाततो यदिदमद्वयवादिनीनामद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्स्वप्रकाशपरमार्थविदेव भूत्वा निष्पीडितादहह निर्वहते विचारात् ॥

इत्यपि परास्तम्, तत्र ह्येवमस्माभिः पठनीयम्—

आक्षेपतोपि न यदद्वयवादिनीनामद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्स्वप्रकाशपरमार्थविदेव भूत्वा निःपीडितात्किमिति निर्वहते विचाराद् ॥

इति । अथ पदसमन्वयमप्यनादृत्य मदभिमतार्थः श्रुतिबोध्य इति चेत्, सत्यम्; मानविरोधिन्यर्थे तात्पर्यमुदीर्य सम्मतं पूर्वमपदार्थोऽपि तदुक्तामिथ्यावादित्वमादिशद्बुधाः । यत्तु तन्नोक्तमद्वैते किं प्रमाणमिति प्रश्नादेवाद्वैतसिद्धिरिति, तन्न; प्रश्नस्याप्रमाणत्वात् । न च प्रश्नापेक्षिताद्वैतज्ञानोपपादककथकत्वेन तदाक्षेप इति वाच्यम्; न हि प्रमाणावगतस्यैव प्रश्नापेक्षणीयत्वं त्वद्व्याख्यावगतस्यैवाद्वैतस्य तथात्वापत्तेः । तत्साधकप्रामाण्ये च विप्रत्तिपत्तेः सुलभत्वात् । अन्यथा शृङ्गस्य कथं शशीयत्वमित्यादितोऽपि शशशृङ्गादिसिद्धिप्रसङ्गात् । एतेन तवाद्वैतज्ञानं यदुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तुं प्रमित्यत्र यमानियमादिति परास्तम् । ग्रन्थारूढत्वद्वादादेव ममाद्वैतज्ञानोत्पत्तेः स्ववाक्यप्रामाण्यस्य त्वयावश्यमुपपाद्यतया तदर्थं त्वदभियोगस्यावश्य-

कर्त्तव्यत्वात् स्ववाक्यप्रामाण्यस्य त्ववस्थापयितुमशक्यत्वे तव भङ्गप्रसङ्गात्। यदप्ययुक्तपंचयमनिर्वचनीयं साधयामः किन्तु चिदात्मनि स्वप्रकाशे भरमालम्ब्य सुखमास्महे इति, तन्न; अकथकत्वेन त्वदुक्तदूषणानां कथाबहिर्भावादसाधकत्वापत्तेः। इतिदिक्।

वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।
अद्वैतश्रुतितात्पर्यं शब्दगत्या निराकृतम्॥

सद्विद्वत्पदवाक्यमाननिगमाकूपारपारङ्गम-
श्रीलक्ष्मीधरलब्धबोधजनुषा विश्वेश्वरेणोदिते।
अस्मिंस्तर्ककुतूहले परिहृतप्रत्यर्थिकोलाहले
मिथ्यात्वस्य कदर्थितोऽर्थवशतः श्रुत्यर्थताविभ्रमः॥

॥ भवानीशङ्कराभ्यां नमः॥

॥ इति प्रथमः परिच्छेदः॥

—:*:—

# तर्ककुतूहलम्

## सप्तमोंऽशः

कर्कटज्वलदर्कोऽग्रतर्कसम्पर्ककर्कशे ।
पथि पाथोधरच्छाया काचिदालम्बनं मम ॥ १ ॥

अध्यक्षादिविगानतः पदगतेर्मर्यादया च श्रुते-
रद्वैतावगमेऽन्तरिक्षसुमनःसब्रह्मचारीकृते ॥
तच्छायामुपजीव्य लब्धपदतामासेदुषामद्वये
मानानां प्रमितिं प्रति प्रवणता तत्सौरभोरस्यभूत् ॥ २ ॥

यत्तु "प्रत्यक्षमेव मिथ्यात्वे मानं घटोऽस्तीत्यादावस्ति त्वशाब्देन ब्रह्मसत्तायां प्रतिपन्नस्य घटादेर्घटो नास्तीति प्रत्यक्षेण तस्यामेवाभावावगाहनमिति" **विवरणोक्तेः** स्वसमानाधिकरणस्यावच्छिन्नवृत्तिकात्यन्ताभावस्य प्रतियोगित्वं हि मिथ्यात्वम्। न चोक्तप्रतीतौ वस्तुतो घटाधिकरणं सत्ता भातापि तत्त्वेन न भातेति न मिथ्यात्वशरीरभानमिति वाच्यम्; तथापि फलतो मिथ्यात्वभानस्यावश्यकत्वात्। घटोऽस्तीति ज्ञानानन्तरं जायमाने घटो नास्तीति ज्ञाने अस्तित्वांशे घटतदभावयोर्भाने बाधकाभावात्। प्रत्यक्षज्ञाने शब्दव्युत्पत्तिविरोधासंभवात्। तत्त्वज्ञानां प्रपञ्चाधिकरणत्वेन गृह्यमाण एव तदभावप्रत्यक्षाच्चेति, अत्रोच्यते;

अस्तिनास्तीति धीर्भावाभावसत्तां विगाहते ।
नार्थभेदो दवीयान्स्यादुल्लेखोल्लिख्यमानयोः ॥

उक्त प्रत्यक्षस्य तदुक्तार्थविषयकत्वे मानाभावः। घटोऽस्ति घटो नास्तीत्यस्य च क्रमेण घटे सत्तामभावप्रतियोगित्वं चावगाहमानत्वात्। घटे सत्ताश्रयत्वविषयकप्रत्यक्षेण सत्तायां घटाधिकरणत्वं सत्ताविरहावगाहिना च प्रत्यक्षेण सत्तायां घटाभावाधिकरणत्वमवगाह्यत इति कल्पनस्य विवर्जितत्वात्। सत्ताया ब्रह्ममात्रधर्मत्वस्य चासिद्धेः। प्रत्यक्षेण च घटादिनिष्ठतयैव तद्ग्रहेण वैपरीत्यात्। सत्ताया घटादिनिष्ठात्यन्ताभावप्रतियोगित्वसिद्धावपि हि तत्प्रतीतेर्भ्रमत्वमेव स्यात्। न तु सत्ताया घटाधिकरणत्वविषयकत्वम्

न च घटोऽस्तीति शब्देन तथा बोधेऽपि तदुल्लिख्यमानप्रत्यक्षस्य यथोक्तविषयकत्वमेवेति वाच्यम्; घटप्रकारकभूतलविशेष्यकसंयोगसंसर्गकप्रत्यक्षस्य घटसंयोगप्रकारकभूतलविशेष्यकसमवायसंसर्गकशाब्दधीजनकेन घटवद्भूतलमिति शब्देनोल्लेखेऽपि घटावृत्तिभूतलमित्यादिशब्देनानुल्लिख्यमानत्वात्। अगत्या उल्लेख्यज्ञाने सांसर्गिकविषयतापन्नस्य प्रकारत्वेनोल्लेखकज्ञाने भानेऽप्यत्यन्तविप्रकर्षाभावात्। एतेन घटोऽस्तीति ज्ञानानन्तरमित्याद्यपि परास्तम्। अस्तित्वांशे घटतदभावयोस्तदविषयत्वस्य सर्वानुभवविरुद्धत्वात्। फलतो मिथ्यात्वभानमित्यप्ययुक्तम्; घटो ब्रह्म, अधिकरणमभावः, प्रतियोगित्वमित्यादिवद्विशिष्टशरीरानवगाहिज्ञानस्य तदपर्यवसायित्वात्। स्वाधिकरणावृत्तित्वस्याऽभावांशेऽवच्छिन्नवृत्तिकान्यत्वस्य च तत्र कथमप्यभानाच्च मिथ्यात्वशरीरप्रविष्टप्रतियोगित्वस्य प्रतियोगित्वत्वावच्छिन्नत्वेन, घटो नास्तीत्यत्र संसर्गत्वेन भासमानस्य तु तस्य तदनवच्छिन्नत्वेन भासमानतया वैषम्याच्च यत्किञ्चिद्घटकपदार्थभानमात्रेण स्वकल्पितपदार्थसिद्ध्यभिधाने चातिप्रसंगात्।

किञ्च भवन्मतेऽपि कपालावच्छिन्नसत्तैव घटाश्रयो न तु केवलसत्ता, तत्कथं फलतोऽपि स्वसमानाधिकरणेत्यादिमिथ्यात्वशरीरभानम्। न चोपहितशुद्धयोरैक्यात्तथेति वाच्यम्; कपालान्यावच्छिन्नसत्ताया अपि तादृशत्वेन घटव्यधिकरणात्यन्ताभावप्रतियोगित्वस्य घटेऽवगाहनेनाप्युक्तप्रतीतिपर्यवसानापत्तेः। न हि घटस्य ब्रह्मनिष्ठाभावप्रतियोगित्वरूपं मिथ्यात्वं भवदभ्युपगतम्; इष्टापत्तेः। किन्तु कपालनिष्ठानवच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वमेव। तच्च दुर्लभप्रतीतिकमेव। घटज्ञानस्य कपालविषयकत्वनियमानाभावात्। अथ कपाले घटो नास्तीति प्रत्यक्षं विवक्षितमिति चेत्, मैवम्; किमत्र कपालवृत्त्यभावप्रतियोगित्वं घटस्य विषयः, उत सत्तावृत्त्यभावप्रतियोगित्वम्, अथ कपालावच्छिन्नसत्तावृत्त्यभावप्रतियोगित्वम्? नाद्यः, अविवादात्। अत एव न द्वितीयः, अनुभवविसंवादाच्च। नान्त्यः, कपालसत्तयोरवच्छेद्यावच्छेदकभावस्य तद्विषयत्वे उक्तिसंभवाभावात्।

अपि च कपाले घटो नास्तीति प्रत्यक्षं घटकालावच्छेदेन न भवतीत्युभाभ्यां संप्रतिपन्नम्। उक्तञ्च दीधितौ "इहेदानीं घटो नास्तीति प्रत्यक्षे सामयिकोऽत्यन्ताभावो विषय" इति। पूर्वापरकालयोश्च कपाले घटाभावो मयापि स्वीक्रियत एवेति न तावता मिथ्यात्वप्रत्यक्षनिर्वाहः। यत्तु काल-

विशेषावच्छिन्नवृत्तिक एवाभावस्तत्र भासत इति नाशङ्कनीयम्; कालविशेषावच्छेदेन सम्बन्धानन्त्यकल्पने गौरवात्। अभावस्य सर्वदा सर्वत्र संबन्धाङ्गीकारात्। यद्देशकालावच्छेदेन प्रतियोगी गृह्यते तद्देशकालावच्छेदेन तदभावो न गृह्यत इत्यत्रास्माकमप्यविप्रतिपत्तेः। तत्तत्कालीनसन्निकर्षविशेषादेः शक्तिविशेषेण प्रतिबन्धकत्वात्। अत एवाभावस्यावच्छिन्नवृत्तिकत्वानङ्गीकाराद् घटावच्छेदकदेशकालावच्छेदेन तदभावो वर्तत इति वाक्यस्य न प्रामाण्यम्। घटे घटो नास्तीत्यस्य तु प्रामाण्यमिष्यते परैरपि। उक्तं हि दीधितिटीकादौ—"ज्ञायमानघटत्वादिसामान्यस्यातीतानागतघटादावभावेन व्यभिचरितत्वात् प्रत्यक्षे कारणत्वासंभवेन घटत्वादिसामान्यज्ञानस्य तत्कारणत्वपक्षस्वीकार" इति। घटे प्रागभावध्वंसकालावच्छेदेन तत्प्रतियोगित्ववैशिष्ट्यस्येव घटत्वाभाववैशिष्ट्याङ्गीकार्यत्वात्। घटावच्छेदककालावच्छेदेन घटत्वं घटे नास्तीत्यस्य तु पूर्ववदेवास्माकमप्यप्रामाण्यमित्यादि, तत्रेदं वक्तव्यम्—घटावच्छेदककालावच्छेदेन घटाभावः कपाले न गृह्यत इत्युभाभ्यां संप्रतिपन्नम्। अभावोऽवच्छिन्नवृत्तिरनवच्छिन्नवृत्तिर्वेति त्वन्यदेतत्। एवं स्थिते घटसत्त्वकाले कपाले घटो नास्तीति प्रत्यक्षाभावात्स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्यापि न प्रत्यक्षविषयत्वम्। प्रागेव तूक्ताभावनिष्ठानवच्छिन्नवृत्तिकत्वस्य, तस्मादभावस्यानवच्छिन्नवृत्तिकत्वे तावन्न प्रत्यक्षं प्रमाणम्, नापि युक्तिः, प्रतियोगिदेशावच्छेदेनाप्यभावस्य वृत्तौ चक्षुःसंयुक्तविशेषणताविशिष्टरूपकारणासत्त्वेन तत्प्रत्यक्षापत्तेः। अस्य तत्कालीनसन्निकर्षविशेषादेः शक्तिविशेषेण प्रतिबन्धकत्वमिति चेत्, न; तदपेक्षया विषयाभावादेव तत्र न घटाभावप्रमेत्यस्य युक्तत्वात्। तदभावानां हेतुत्वकल्पने गौरवात्तेषामप्यनवच्छिन्नवृत्तिकत्वापत्त्या प्रतिबन्धककालेऽपि कार्योत्पत्त्यापत्तेश्च। एवञ्च प्रतिबन्धकाभावाधिकरणं यः प्रतिबन्धकाभावसहितकारणकूटाधिकरणक्षणोत्तरक्षणस्तत्त्वस्य कार्यव्याप्यत्वं न तु प्रतिबन्धकाभावः कारणमित्यादिनापि न निस्तारः। प्रतिबन्धकाधिकरणक्षणस्यापि प्रतिबन्धकाभावाधिकरणत्वेनापत्तेर्दृढत्वात्। एवं प्रतिबन्धकाधिकरणावृत्तित्वमपि न प्रतिबन्धकाभावे विशेषणमप्रसिद्धेः। नापि प्रतिबन्धकानधिकरणवृत्तित्वम्; तद्धि प्रतिबन्धकाधिकरणत्वाभाववद्वृत्तित्वमेव। तच्च प्रतिबन्धकाधिकरण एव प्रतिबन्धकाधिकरणत्वाभावसत्त्वात्तदाप्यस्त्येव। तस्यापि त्वया मिथ्यात्वोपगमात्। तस्मादुक्ताभावस्य समयाद्यवच्छिन्नवृत्तिकत्वं विना न निर्वाह इत्यादि योज्यम्।

तत्कालीनसन्निकर्षादेः शक्तिविशेषमवच्छेदकीकृत्य प्रतिबन्धकतैक्य-सम्पादनमप्ययुक्तम्। तत्कालीनत्वं हि प्रतियोगिप्रत्यक्षकालीनत्वं वस्तुगत्या यत्काले तद्देशावच्छेदेन प्रतियोगी वर्त्तते तत्कालीनत्वं वा। सन्निकर्षोऽप्यभावेन्द्रिययोर्वा, इन्द्रियाधिकरणयोर्वा, इन्द्रियप्रतियोगिनोर्वा? न तावद्घटचाक्षुषकालीनचक्षुःसंयुक्तविशेषणतायास्तादृशचक्षुर्भूतलसंयोगस्य तादृशचक्षुर्घटसंयोगस्य वा प्रतिबन्धकत्वमिति त्रय आद्यपक्षाः संभवन्ति। तथाहि प्रथमतो घटचक्षुःसंयोगरूपघटचाक्षुषकारणस्येव चक्षुःसंयुक्तविशेषणतारूपघटाभावचाक्षुषकारणस्यापि सत्त्वात् समूहालम्बनरूपमुभयचाक्षुषं दुर्वारम्, तदानीं घटचाक्षुषाभावेन यथोक्तप्रतिबन्धकाभावसत्त्वात्। न च प्रतियोगिज्ञानविलम्बेन प्रथमं घटमात्रचाक्षुषोत्पत्तिः घटघटत्वयोर्निर्विकल्पकस्य प्रतियोगितावच्छेदकप्रकारकत्वाभावेन तदभावज्ञानानुपयुक्तत्वात्। अनन्तरं च प्रतिबन्धकसंपत्त्यैव न घटाभावचाक्षुषमिति वाच्यम्; यत्र घटचाक्षुषसामग्री घटाभावव्याप्यवत्तापरामर्शश्चास्ति तत्र घटाभावे चाक्षुषहेतुसन्निकर्षस्यापि सत्त्वात्, भिन्नविषयकानुमितिसामग्रीसत्त्वेन घटचाक्षुषानुदयात्समानविषयकप्रत्यक्षसामग्रीसत्त्वेन घटाभावानुमितेरप्यनुदयाद् घटाभाव चाक्षुषस्य दुर्वारत्वात्। परामर्शस्यैव तत्र प्रतियोगिज्ञानस्थानीयत्वात्। इतराविशेषणत्वेन प्रतियोग्युपस्थितेरभावज्ञानानङ्गत्वात्। अन्यथा घटाभावप्रत्यक्षधारानुपपत्तेः। न च तत्र समानविषयकप्रत्यक्षसामग्र्यविशिष्टघटाभावानुमितिसामग्र्यभावेन तदा घटचाक्षुषोत्पत्तौ बाधकाभाव इति वाच्यम्; तावतापि घटतदभावोभयविषयकसमूहालम्बनात्मकचाक्षुषस्यापत्तेरपरिहारात्। सिद्धान्ते तु तत्र घटाभावविरहेण तच्चाक्षुषसामग्र्येव नास्तीति वैषम्यम्। एवमुत्तरोक्तमपि पक्षत्रयं न साधीयः। यदा वस्तुगत्या भूतले सन्नपि घटो न ज्ञातः तदानीं घटाभावचाक्षुषानुपपत्तेः। न चेष्टापत्तिरनुभवविरोधात्। सिद्धान्ते तद् भ्रमात्मकम्, परेषां तु प्रमेति विशेषः।

घटावच्छेदकेत्यादिकमपि विषमम्। परमते देशाद्यंशेऽवच्छेदकत्वावगाहनप्रयुक्तमप्रामाण्यम्, सिद्धान्ते तु घटाभावावगाहनप्रयुक्तम्। ततश्च घटाभावावच्छेदकत्वाभाववति तदवच्छेदकत्वावगाहित्वं तज्जन्यशाब्दस्य भ्रमत्वं तदपेक्षया च घटाभावाभाववति घटाभावावगाहित्वरूपस्य तस्यावच्छेदकत्वांशराहित्येन लघुत्वात्। घटे घटत्वमित्याद्यपि तादृक्। कालविशेषावच्छिन्नविशेषणतासंसर्गकस्यैव तज्ज्ञानस्य सिद्धान्ते प्रमाणत्वात्। परीत्या

तु निरवच्छिन्नविशेषणतयैव तथात्वात्। न चेष्टापत्तिः; घटसत्त्वकालीनघटे घटत्वाभावो नास्तीत्याद्यनेकप्रत्ययानां भ्रमत्वापत्तेः। घटावच्छेदककालावच्छेदेनेत्यादिकमप्ययुक्तम्; घटप्रागभावध्वंसकालावच्छेदकीकृत्य जायमानानां घटे घटत्वं नास्तीत्यादिज्ञानानामप्रामाण्यापत्तेः। एवमिहेदानीं घटो नास्तीत्यादेरप्यप्रामाण्यकल्पनापत्तिरुद्भाव्या। यदपि तद्घटनाशकालावच्छेदेन तद्घटवति तद्घटो नास्तीति तु कालावच्छिन्नाभावावगाहि चेदप्रमाणमेव। मीमांसकमते ककारानुपलम्भकाले इहेदानीं ककारो नास्तीत्यादौ प्रतियोग्युपलम्भत्वरूपेण प्रतियोग्युपलम्भस्य भावमेतद्देश [भवन्मते तद्देश]-कालावच्छिन्नं यथा वगाहते तथा मन्मते एतद्देशकालावच्छिन्नत्वरूपेण प्रतियोग्युपलम्भस्याभावं प्रतियोगिन एव वा, एतद्देशकालावच्छिन्नत्वसंबन्धेनाभावं चेदवगाहते तदा प्रमाणमेवेत्यादि, तदपि चिन्त्यम्; विना बाधकं प्रतीतेर्भ्रमत्वान्यविषयकत्वादिकल्पनायोगात्। तादृशशाब्दस्थले एतद्देशकालावच्छिन्नत्वावच्छिन्नप्रतियोगिताकघटोपलम्भाभावविषयतायाः दुरुपपादत्वात्। उपलम्भरूपस्य तदभावप्रतियोगिनः पदादनुपस्थितत्वात्। लक्षणादिक्लिष्टकल्पनस्य च गौरवकल्पकभावाभ्यां पराहतत्वात्।

किञ्च स्वीयस्य प्रतियोग्युपलम्भस्याभावस्तत्र विषयोऽन्यदीयस्य वा? नाद्यः, व्याघातात्। नान्त्यः, परज्ञानस्य परं प्रत्यतीन्द्रियत्वात्। यत्र च तादृशं चाक्षुषं जायते तत्रोक्तधर्मावच्छिन्नप्रतियोगिताकप्रतियोग्युपलम्भाभावविषयकत्वेन तत्प्रत्ययस्य दुर्लभत्वात्। ज्ञानस्य चक्षुराद्ययोग्यतया तद्भावस्य चाक्षुषाद्यनुपपत्तेः। एतद्देशकालावच्छिन्नत्वस्याभावविशेषणत्वेन प्रतीयमानस्य प्रतियोगितावच्छेदकसंबन्धकुक्षिनिक्षेपानर्हत्वाच्च। इहेदानीं घटाभावो नास्तीत्यादौ तथापि गत्यभावाच्च। तत्रोक्तसंबन्धेन सर्वदा घटाभावस्याभावसत्त्वेन प्रतियोगिसत्त्वकालेऽपि तादृशप्रत्ययापत्तेः। घटाभाववत्त्वेनोभयसिद्धभूतलस्थले च इहेदानीं घटाभावो नास्तीति प्रत्ययस्य सर्वानुभवविरुद्धत्वात्।

यत्तु प्रतियोगिकाले तद्भावसत्त्वेऽप्यौपनिषद्दर्शनापरिशीलिनं पुरुषं प्रत्यावृतत्वस्वीकारादेवावकाशोपपत्तिरत एव गवादौ गोत्वाभावधियो न प्रमात्वमिति, तदसत्; नरविषाणादावप्येवं शपथोपन्यासापत्तेः। गवादौ गोत्वाभावज्ञानानुत्पत्तिप्रसंगात्। तस्य प्रमात्वापत्तेश्च। एवं कारणत्वादेरतिरिक्तपदार्थत्वेऽपि कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वादिबुद्धेस्तद्व्यञ्जकत्वावश्यकत्वात्तत्राप्यनुपपत्तिः। पररीत्या दण्डत्वादेरपि [illegible] पूर्वक्षणावच्छिन्नकपालवृत्त्यभावप्रतियो-

गितावच्छेदकत्वात्। असमसाधारणतज्ज्ञानस्य व्यञ्जकत्वे रासभादेरपि घटादिनिरूपितकारणत्वाश्रयत्वापत्तेः। तत्र वस्तुतः कारणत्वं नास्तीति नोक्त दोष इति चेत्, न; उक्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वस्योभयसाधारण्येन दण्डे कारणत्वमस्ति न तु रासभ इति वैषम्यस्य व्यवस्थापकान्तरविरहेण दुर्वचत्वात्। एतेन सामानाधिकरण्यावच्छेदकरूपव्याप्तिनिरूपकत्वमेव व्यापकत्वम्। अवच्छेदकत्वमखण्डमेव मिश्रादिसम्मतमिति न तत्राप्यभावप्रवेश इत्यादिकमपि निरस्तम्। हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यत्वरूपेण ज्ञानविरहेऽनुमित्यनुत्पत्त्या तद्रूपेण ज्ञानस्यावश्यमपेक्षितत्वात्। तद्रीत्या च तस्य दुर्लभत्वात्। अथ व्यवहारोपयुक्तादत्यन्ताभावादन्य एवात्यन्ताभावो मिथ्यात्वघटकः; तर्हि सुतरां प्रत्यक्षस्य मिथ्यात्वं न विषय इति सर्वथापि मिथ्यात्वे प्रत्यक्षं न प्रमाणमिति स्थितम्।

वेदाविरुद्धयुक्तीनामके तर्ककुतूहले।
प्रत्यक्षविषयीभावो मिथ्यात्वस्य परिक्षतः॥ ७॥

—:*:—

# अष्टमोंऽशः

ननु वेदान्त्यभिमतमिथ्यात्वविरोधिसत्त्वमपि न प्रत्यक्षविषयः। तथाहि प्रमाणविषयत्वं वा सत्त्वम्, तद्योग्यत्वं वा, भ्रमाविषयत्वं वा ? नाद्यः, असति प्रमाणाप्रवृत्त्या प्रमाणप्रवृत्तेः पूर्वमपि सत्त्वस्य वक्तव्यतया तस्य प्रमाणविषयत्वरूपत्वानुपपत्तेः। प्रमात्वस्य सद्विषयकत्वरूपत्वेनान्योन्याश्रयाच्च। रजतमिदं जानामीति भ्रमानुव्यवसायरूपप्रमायां विषयीभूतप्रमात्मकव्यवसायांशे नेदं रजतमिति प्रमायां निषेधांशे च यथाक्रमं विषयत्वप्रतियोगित्वाभ्यां मिथ्याभूतस्यापि रजतादेर्विशेषणत्वेन विषयत्वाच्च। न द्वितीयः, तद्योग्यत्वस्यावच्छेदकरूपान्तराभावादनिरुक्तेः। न तृतीयः, सर्वस्यैव क्षणिकत्वादिना भ्रमविषयत्वात्। अत एव "तत्त्वमनारोपितं रूपमित्यत्रारोपाविषयत्वमप्रसिद्धम्, सर्वस्यैवारोपविषयत्वाद्" इति **द्रव्योपायः**। अत एव नासत्त्वाप्रकारकभ्रमाविषयत्वमपि, अन्योन्याश्रयात्। नापि सत्त्वप्रकारकभ्रमाविषयत्वम्, आत्माश्रयात्। नाप्यसत्त्वप्रकारकभ्रमाविषयत्वम्; अन्योन्याश्रयात्। नापि प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः, आत्माश्रयात्। नापि सत्ताजातिरर्थक्रियाकारित्वं सद्वैलक्षण्यं वा, एषां मिथ्यात्वव्यतिरेकाघटितत्वेन तत्प्रत्यक्षेण मिथ्यात्वश्रुत्यादौ बाधाभावात्। नापि वेदान्त्यभिमतमिथ्यात्वाभावः, तुच्छेऽतिव्याप्तेरिति चेत्, अत्र ब्रूमः; मिथ्यात्वमपि हि त्वया सत्त्वविरोधि वक्तव्यम्, अत्या-[ता]दृशेन सत्त्वानाक्षेपात्। अतस्त्वमपि परिभावय तावत्कीदृशं सत्त्वं प्रत्यक्षविषय इति। तथाहि प्रमाविषयत्वं तावत्सत्त्वं निर्दोषम्। न चोक्तानुपपत्तिः, योग्यत्वस्य विवक्षितत्वात्। न च योग्यतावच्छेदकानिरुक्तिः, ईश्वरज्ञानविषयत्वस्य तथात्वात्। न च तदिच्छाविषयत्वेन विनिगमनाविरहः, प्राचीनमते इच्छादेः स्वातन्त्र्येण सविषयकत्वाभावात्, सविषयकत्वेन तदनुगमाच्च। न च भ्रमविषयस्यापि तथात्वादतिव्याप्तिः, विशेष्यप्रकारयोः सत्त्वस्येष्टत्वात्। तत्संसर्गस्य च ईश्वरज्ञानाविषयत्वात्। न चेश्वरस्य सार्वज्ञानुरोधेन भ्रमज्ञानस्यापि स्वीकार्यतया ज्ञानज्ञानस्य च स्वविषयज्ञानविषयविषयकत्वनियमाद् भ्रमविषयीभूतसंसर्गस्यापीश्वरज्ञानविषयत्वात्तत्रातिव्याप्तिरिति वाच्यम्; ग्राहकज्ञानस्य ग्राह्यज्ञानविशेष्ये तज्ज्ञानप्रकारीभूतधर्मवैशिष्ट्य-

मपि विषय इति व्याप्तौ बाधकाभावस्यापि प्रविष्टत्वात्। अन्यथा भ्रान्ति-भ्रान्तिज्ञसंकरापत्तेः। ईश्वरस्य च विशेषदर्शनरूपबाधकसत्त्वेन तत्संसर्गस्य तज्ज्ञानाविषयत्वात्। ईश्वरज्ञानञ्च वस्तुतो यत्सत्तद्विषयकं न तूक्तयोग्यतायां विशिष्यसत्त्वप्रवेश इत्यात्माश्रयादेर्नावकाशः। मिथ्याभूतस्य रजतादेर्भ्रम-विषयत्वं तु तार्किकं प्रत्यसिद्धमेव। प्रमात्वाश्रयज्ञाननिरूपितविषयतासंसर्गा-वच्छिन्नप्रकारतारूपविषयत्वोक्त्या सुपरिहरं च। अनुव्यवसायरूपप्रमायां रजतस्य विषयत्वेनाविशेषणत्वात्। भ्रमे च तथात्वेऽपि तस्य प्रमात्वाना-श्रयत्वात्।

किञ्च येन सम्बन्धविशेषेण येन चावच्छेदकविशेषेण यदधिकरणता-प्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदकविशेषेण तन्निष्ठात्यन्ताभावप्रतियोगित्वम्। तस्य मिथ्यात्वं परैरङ्गीक्रियते। तथा च संयोगेन घटवति भूतले चक्षुषा गृह्यमाणे संयोगसंबन्धावच्छिन्नप्रतियोगि-ताकभूतलनिष्ठात्यन्ताभावप्रतियोगित्वाभावोऽपि घटे चक्षुषा सुग्रह एव। यदीदं भूतलं संयोगावच्छिन्नप्रतियोगिताकघटात्यन्ताभावाधिकरणं स्यात्, तादृशघटात्यन्ताभाववत्त्वेनोपलभ्येतेत्यापादनसाम्राज्यात्। न हि भूतल-मयोग्यम्, न वा घटो न वोक्ताभावः। भूतले घटो नास्तीति प्रत्यक्षस्य सर्वसिद्धत्वात्। एवं घटोऽयं यद्येतद्भूतलनिष्ठैतत्कालीनसंयोगावच्छिन्न-प्रतियोगिताकात्यन्ताभावप्रतियोगी स्यात्तथात्वेनोपलभ्येतेत्यत्रापि योज्यम्।

अत एव "साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं वा व्याप्तिः। तदुभयमपि योग्यत्वात् प्रत्यक्षेण धूमवह्निसम्बन्धानुभवेन प्रथममवगतमेव। अस्मिन् महानसे योऽत्यन्ताभावोऽन्योन्याभावो वा तत्प्रतियोगी न वह्निर्न वह्निमा-नित्यनुभवाद्" इति **व्याप्तिग्रहमणावुक्तम्**। व्याख्यातञ्च **दीधितौ**— "महति वायौ योग्यायोग्ययोरुद्भूतरूपसामान्यतद्वतोरिव योग्ये वह्नौ तादृश-प्रतियोगित्वसामान्यतद्वतोरप्यत्यन्तान्योन्याभावयोर्योग्यत्वाद्" इति। "एत-न्महानसनिष्ठाभावप्रतियोगित्वस्यातीन्द्रियवृत्तित्वेऽपि योग्ये वह्नौ यद्येतन्म-हानसनिष्ठाभावप्रतियोगित्वं स्यात्तदोपलभ्येतेत्यापादनस्य तद्योग्यतायाश्च संभवात् तदभावो योग्यः" इति च **तद्व्याख्यातारः**। एवं च यदि देशान्तरीय-कालान्तरीयात्यन्ताभावप्रतियोगित्वस्य प्रत्यक्षाभावेन तदभावप्रत्यक्षमनु-पपन्नम्; तदा का नो हानिः स्यात्। तत्कालीनतद्देशीयतत्संबन्धावच्छिन्न-प्रतियोगिताकात्यन्ताभावप्रतियोगित्वाभावस्यैव सर्वदेशकालनिष्ठात्यन्ता-

भावप्रतियोगित्वरूपमिथ्यात्वस्य बाधोपपत्तेः। मिथ्यात्वानुमित्यादावपि तदधिकरणदेशनिष्ठात्यन्ताभावप्रतियोगित्वांशज्ञानस्यैव सत्त्वप्रत्यक्षविपरीतग्राहकत्वात्। तदन्यदेशनिष्ठात्यन्ताभावप्रतियोगित्वस्य तार्किकैरप्यङ्गीकारात्।

नन्वेतदपि घटज्ञानमात्रे न भासत इति चेत्, मा नाम भासिष्ट। तर्हि सर्वदाभासमानमेव बाधकमित्यस्ति नियमः, बाधकज्ञानस्य कदाचिद्भानमात्रेण संपत्तेः। अत एव घटादिचाक्षुषानन्तरं घटाभाववत्ताबुद्धयनुदयः। अत एव यद्वत्त्वेन विज्ञाते यद्वत्त्वं न प्रतीयते तदभाववत्त्वञ्च व्यवह्रियते, तस्यैव तदभावात्मकत्वमित्यादिरभ्युपगमः। यत्तु घटो नास्तीति व्यावहारिकात्यन्ताभावादन्य एवायमनवच्छिन्नवृत्तिको मिथ्यात्वघटकोऽत्यन्ताभाव इति तच्छ्रद्धाजाडयमात्रम्, मानाभावात्। घटाभावविरुद्धस्वभावस्य घटाभावत्व एव मानाभावाच्च। अत एव तत्प्रत्यक्षं प्रत्यविद्यायाः प्रतिबन्धकत्व विशुद्धाशयपुरुषैस्तत्प्रत्यक्षीक्रियत इत्यादिकमपि निर्वजि, प्रतिबध्यप्रतिबन्धकोभयाप्रसिद्धेः प्रत्यक्षस्य शपथमात्रमूलकत्वाच्च तदभिमतमिथ्यात्वप्रत्यक्षं कस्यापि जातमित्यत्र बीजाभावात्।

ननु एकस्मिन् स्वदेशकालवृत्तिनिषेधे ज्ञायमाने देशत्वकालत्वाभ्यां सकलदेशकालानां ग्रहणे तत्रैतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन प्रत्यासत्तीभूतेनोपस्थितानां स्वदेशकालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे ग्राह्यस्ततः सार्वदिक्सर्वदेशीयनिषेधप्रतियोगित्वग्रहणं घटे सुघटमिति सर्वदेशकालवृत्त्यत्यन्ताभावप्रतियोगित्वाभावोऽपि प्रत्यक्ष एवेति चेत्, तत्र वदन्ति; न हि सन्निकर्षाभावेन तदत्यन्ताभावस्यायोग्यत्वमस्माभिरुक्तं येन सामान्यलक्षणारूपसन्निकर्षेणापि तदुपपत्तिस्त्वया क्रियेत, किन्तूक्ताभावप्रतियोगित्वं यदि घटादौ स्यात्तदोपलभ्येतेत्यापादनासंभवः। उक्ताभावप्रतियोगित्वस्य तत्र सत्त्वेऽपि तन्निरूपकाभावानामतीन्द्रियत्वाल्लौकिकसन्निकर्षाभावाच्चानुपलब्धिसंभवात्। अत उक्ताभावप्रतियोगित्वाभावस्य न लौकिकप्रत्यक्षविषयत्वम्। अत एव **दीधित्यादावुक्तम्**—"यथा विद्यमानमपि वह्नित्वे रासभादिदेशनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वं न गृह्यते, अभावदेशविप्रकर्षादिना ग्राहकाभावात्, तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वमपीति नानुपलब्धेः। प्रतियोगिसत्त्वविरोधित्वरूपायोग्यतेति, न तत्सामान्याभावो लौकिकप्रत्यक्षगम्य इति, योग्यप्रतियोगिकस्यैव संसर्गाभावस्य योग्यत्वात्।

ननु कस्तावदस्यार्थः। योग्यप्रतियोगिकान्यः संसर्गाभावो न योग्य इति वा, अयोग्यप्रतियोगिको न योग्य इति वा, अयोग्यधर्मावच्छिन्नप्रतियोगिताको न योग्य इति वा ? नाद्यः, उक्तप्रतियोगित्वाभावस्य योग्यायोग्यप्रतियोगिकत्वेन योग्यत्वापत्तेः। न द्वितीयः, महावायौ योग्यायोग्योद्भूतरूपसामान्याभावप्रत्यक्षस्य दीधित्यादावङ्गीकारात्। न तृतीयः, उक्तप्रतियोगितात्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य प्रत्यक्षवारणेऽपि स्तम्भे पिशाचादेरिव योग्ये घटादावुक्तप्रतियोगित्ववद्भेदस्य प्रत्यक्षसंभवेन मिथ्यात्वानुमित्यादौ बाधसामान्यावारणादिति चेत्, मैवम्; स्वप्रतियोग्युपलम्भापादकत्वयोग्यप्रतियोगिक एवाभावो योग्य इत्यस्य विवक्षितत्वात्। संसर्गपदं तु येन संसर्गेण यत्र यस्य प्रतियोगिन उपलम्भापादकत्वं तेन संसर्गेण तस्याभावः प्रत्यक्ष इति ज्ञापनार्थम्। अत एव पिशाचभेद एव प्रत्यक्षो न तु पिशाचवद्भेदः। पिशाचो यदि स्तम्भानुयोगिकतादात्म्यप्रतियोगी स्यात्तत्त्वेनोपलभ्येत, स्तम्भवदित्यापादनसंभवेऽपि पिशाचवत्त्वेनोपलब्धेरापादयितुमशक्यत्वात्। प्रतियोग्ययोग्यतया तत्संयोगप्रत्यक्षस्याप्रसिद्धेः। ततश्चोक्तप्रतियोगित्वात्यन्ताभाववत्तद्वद्भेदोऽपि न प्रत्यक्षः। अत एव "तदभावो नाध्यक्षः" इति **दीधिति**वाक्यस्य तादृशाभावप्रतियोगितावच्छेदकत्ववद्भेदस्याप्यनध्यक्षत्वे तात्पर्यम्। अन्यथा तस्यैव लौकिकप्रत्यक्षसंभवे विरोधस्फुरणवशाद्धूमत्वादौ गृह्यमाणो धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावो वह्नित्वादावुपनयमर्यादया गृह्यते इत्यस्य वैयर्थ्यापत्तेः। अत एव "मूर्तसामान्यतद्वतोरिवोपाधिसामान्यतद्वतोरप्यत्यन्तान्योन्याभावौ न योग्यौ" इति **व्याप्तिग्रहोपायदीधित्यादा**वुक्तम्। मूर्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्येव मूर्तवद्भेदस्यापि निरुक्तयोग्यताविशिष्टस्य प्रतियोग्यनुपलम्भस्यासत्त्वात्। यदि त्वयोग्यधर्मानवच्छिन्नयोग्यमात्रवृत्तिप्रतियोगिताक एवाभावो योग्यो वाय्वादौ तादृशरूपाद्यभावस्तु न प्रत्यक्षः, किन्त्वनुमेय इति मतमाश्रीयते, तदा यथाश्रुतेऽपि न दोष इति।

एतावत्पुनरिहानुसंधेयम्। किंचिद्देशकालनिष्ठात्यन्ताभावप्रतियोगित्वाभावप्रयुक्त एव सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वाभावः। तद्देशकालनिष्ठात्यन्ताभावप्रतियोगित्वाभावग्रहकाल एव लौकिकप्रत्यक्षेण गृह्यताम्। एकदेशनिष्ठात्यन्ताभावप्रतियोगित्वाभावग्रहे सति यावद्देशनिष्ठात्यन्ताभावप्रतियोगित्वं नास्तीति बुद्धौ बाधकाभावात्। निरूपकीभूतानामभावानामयोग्यत्वेऽपि तदंशे योग्यत्वादेरनपेक्षितत्वेन तस्याकिञ्चित्करत्वात्।

अत एव "द्रव्यनिष्ठमूर्त्तवत्त्वाभावस्यायोग्यत्वेऽपि गुणादौ तदभावो योग्य एवेत्यन्ये" इति **कुसुमाञ्जलिप्रकाशे** उक्तम्। केषाञ्चिन्मूर्तानामयोग्यत्वेऽपि योग्यमूर्ताभावप्रत्यक्षे जायमाने बाधवशादयोग्यमूर्त्ताभावोऽपि गृह्यत इति मूर्त्तसामान्याभावो गुणे प्रत्यक्षः, न तु द्रव्ये। तत्र संयोगो नायोग्यमूर्त्तस्यापि संभवेन बाधाभावादिति तदभिप्रायः। एवमेव महावायौ योग्यायोग्योद्भूत-रूपसामान्याभावप्रत्यक्षवादिनामप्याशयः। अत एव घटेऽपि समवायसंबन्धा-वच्छिन्नप्रतियोगिताकमूर्त्तसामान्याभावप्रत्यक्ष सुलभमेव। अन्त्यावयवित्व-निश्चयेन द्रव्यसामान्यसमवायित्वस्य घटे बाधावधारणात्। एवमेतद्देश-निष्ठात्यन्ताभावप्रतियोगित्वाभावे सिद्धे सति यावद्देशनिष्ठात्यन्ताभावप्रति-योगित्वाभावोऽप्येकदेशबाधद्वारेण लौकिकप्रत्यक्षविषयः स्यादेव। देशान्त-रीयात्यन्ताभावप्रतियोगित्वाभावज्ञानं प्रकृतानुपयुक्तं पुनरुक्तमेवेति सुधीभि-र्विभावनीयम्।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**अध्यक्षगम्यमिथ्यात्वं विरुद्धमिदमीरितम्॥ ८॥**



# नवमोंऽशः

सन्घट इत्यादिप्रत्यक्षविषयस्तु सत्ताजातिः, अनुगतत्वात्। न च सामान्यादौ त्वयापि जात्यनङ्गीकारात् सत्सामान्यमित्यादि प्रतीत्यनुपपत्तिरिति वाच्यम्; सामानाधिकरण्येनोपपत्तेः। न चैवं गुणकर्मणोरपि तथैवास्त्विति वाच्यम्; द्रव्यत्वेन तुल्यव्यक्तिकत्वापत्तेः, बाधकाभावाच्च। यत्तु सर्वत्रैकजातीयसंबन्धेन सत्ताप्रकारकत्वेन मानसिद्धप्रतीतेः सम्बन्धभेदेन सत्ताप्रकारकत्वोपपादनमनुपपन्नम्। न च सदाकारप्रतीतेरेकसंबन्धेन सत्ताप्रकारकत्वमसिद्धमेवेति वाच्यम्; द्रव्यगुणकर्मसु सतायाः साक्षात्संबन्धोऽन्यत्र परम्परेयति हि वैशेषिकादिशास्त्रकल्पना, न तु लोकानुभवोऽन्यथा तच्छास्त्रानभिज्ञस्य द्रव्यादित्रयमेव सदितिधीकाले त्रयान्यत्सामान्यादि सदिति परम्परासंबन्धेन धीः स्यात्। न च त्रयान्यत्र सत्तावतो भेदस्त्रयमेवेत्यत्र प्रकार इति परम्परासम्बन्धेन सत्ताधीर्न जायत इति वाच्यम्; येन सम्बन्धेन त्रये सत्ताप्रकारस्त्रयान्यत्र तत्सम्बन्धेन सत्तावतो भेदस्यैवैवकारेण बोधनात्। एवं परम्परासंबन्धेन सामान्यादिकं न सदितिधीकाले सामान्यादि सदितिधीर्भ्रमः स्यात्। विशेष्यतावच्छेदकावच्छेदेनैकसंबन्धेन सत्ताप्रकारकत्वादिति। तस्माद् द्रव्यादित्रये साक्षात्संबन्धः, अन्यत्र तु परम्परा, उत सामान्यादावेव साक्षात्संबन्धो द्रव्यादित्रये तु परम्परेत्यत्र विनिगमकाभावात्सर्वत्राधिष्ठानभूतब्रह्मसत्तैव सदाकारकप्रतीतिविषयः। अत एव भ्रमाधिष्ठानत्वेन ब्रह्मवच्छुक्तिकादेरपि सत्त्वं स्यादित्यपास्तम्, ब्रह्मण एवाधिष्ठानत्वेन शुक्तिकादेरधिष्ठानतावच्छेदकमात्रत्वेन तदसिद्धेः।

अयन्तु विशेषः—रजतादिभ्रमोपादानाज्ञानविषयत्वं शुक्त्याद्यवच्छिन्नचैतन्यनिष्ठं, वियदाद्युपादानज्ञानविषयत्वं त्वनवच्छिन्नचैतन्यनिष्ठमिति, तत्रेदं वक्तव्यम्; द्रव्यादित्रयमेव सदितिधीर्द्रव्यादित्रये साक्षात्संबन्धेन सत्ताप्रकारिका परम्परासम्बन्धेन वाभिमता ? नाद्यः, तदानीं सामान्यादौ परम्परया सत्तावगाहिबुद्ध्यापत्तेरिष्टत्वात्। नान्त्यः, त्रयान्यत्र परम्परासंबन्धेन सत्तावद्भेदस्यैवकारगम्यतया बाधधीसत्त्वात्। विशेष्यतावच्छेदकावच्छिन्ने येन संबन्धेन विशेषणान्वयस्तत्संबन्धावच्छिन्नप्रतियोगिताक एव विशेषणाभावो यथोक्तसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकविशेषणवद्भेदो वा, इति व्युत्पत्तेः। येन संबन्धेनेत्यादिना स्वयमपि तदुक्तेश्च।

यदप्येवं परम्परासंबन्धेनेत्यादि, तदपि चिन्त्यम्; परम्परासंबन्धेन सत्तावतो भेदस्य सामान्यादौ ग्रहकाले परम्परासंबन्धेन सामान्यादिकं सदिति ज्ञानासंभवेन साक्षात्संबन्धेनैव सत्ताप्रकारकत्वस्यावश्यकतया तद्भ्रमत्वस्येष्टत्वात्। न च मन्मते तत्रापि प्रमात्वरक्षणाद् विशेष इति वाच्यम्; प्रत्युत्तरयिष्यमाणत्वात्। यदपि द्रव्यादिसप्तकं सदेवेत्यादि, तदपि चिन्त्यम्; समवायसामानाधिकरण्यान्यतरसंबन्धेनैवावच्छेदकावच्छेदेन सत्ताप्रकारकत्वात्, न चैवकारसमभिव्याहृतविशेषणस्यैकसंबन्धेनैव विशेष्यतावच्छेदकावच्छेदेनान्वयबोधजनकत्वनियमः, स्फटिकजवाकुसुमे लोहिते एवेत्यादौ व्यभिचारात्, तद्वदत्रापि विशेष्यतावच्छेदकभेदाच्च।

ननु परम्परासंबन्धेनापि स्फटिकावच्छेदेन लौहित्यायोगव्यवच्छेदो नास्तीति चेत्, किं ततः; अंशतस्तद्बोधस्य भ्रमत्वेऽपि व्यभिचारस्य संपन्नत्वात्। अन्यथा "पार्थ एव धनुर्धरः" इत्यादावसंगतिप्रसंगात्। न हि तत्र व्यवच्छेदः प्रामाणिकः, श्रीकृष्णशिवादीनां ततः पार्थभिन्ने धनुर्धरत्वं नास्तीत्येतादृशबुद्धावप्रामाण्यप्रसंजकज्ञानविषयत्वस्य सुलभत्वात्। तत्रान्ययोगव्यवच्छेदोऽत्र त्वयोगव्यवच्छेद इति परं विशेषः। यत्तु ब्रह्मसत्त्वमेवेत्यादि तदत्यन्तमसत्; घटादिनिष्ठत्वेनैव सत्त्वप्रतीतेः। अहोऽनुभवस्वारस्यानुरोधः यत्संबन्धांशेऽपि प्रतीतिवैषम्यमसहमानैरेव प्रकारांशस्यैव विशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वमानीय सदनुभवमात्रस्यैव भ्रमत्वं संपादितमिति। अत एव **दीधितिकारा**दिभिर्विद्यमानत्वस्यैव सदाकारधीविषयत्वमुक्तम्। एतेनैकस्याश्चैतन्यव्यक्तेः सर्वभ्रमाधिष्ठानत्वसंभवेन सद्रूपतासंभवे तदन्यत्र तत्कल्पने गौरवम्, "नेह नानास्ति किञ्चन" इत्यादिश्रुतिस्मृतिविरोधश्चेति परास्तम्। अत्यादेरद्वैतपरतायाः प्रबन्धेनापहस्तितत्वात्। घटः सन्नित्यादिज्ञानानां भ्रमत्वसिद्धौ तदधिष्ठानस्य सद्रूपत्वकल्पनं तत्सिद्धौ च तेषां भ्रमत्वसिद्धिरित्यन्योन्याश्रयाच्च। सत्ताजातेरेकस्या एव तद्विषयत्वात्। तत्समवायस्याप्येकत्वात्। विशेष्याणां च मतद्वयेऽप्यनन्तत्वात्। कपालावच्छिन्नचैतन्यापेक्षया लघोः कपालादेरेव घटाद्युपादानत्वात्। कपालादीनामुपादानतावच्छेदकत्वे कपालत्वादीनां चोपादानतावच्छेदकतावच्छेदकत्वे गौरवात्। ये धर्माः स्वरूपतो न भासन्ते तन्निष्ठावच्छेदकतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमात्। इत्यास्तां विस्तरः। तस्मात्—

द्रव्यादौ समवायेन जात्यादावाश्रयैक्यतः।
प्रतिपत्तौ सदित्यस्यां सत्ताजातिर्विशेषणम्॥

अपि च परमते सद्ब्रह्म, सन्घटः, सच्छुक्तिरूप्यमित्यादौ पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन त्रिविधसत्तायाः भासमानत्वात्कथं विशेषणम्? सोऽप्यनुगतविषयकत्वं प्रत्ययानाम्। आद्या शुद्धचिदैक्यरूपा। द्वितीया मूलाविद्याप्रयुक्तदृश्यतादात्म्यापन्नचिद्रूपा। प्रयुक्तत्वं च तदुच्छेदकज्ञानजन्योच्छेदप्रतियोगित्वमनादिदृश्यसाधारणम्। तृतीया पल्लवाविद्योच्छेदकज्ञानोच्छेद्यदृश्यतादात्म्यापन्नचिद्रूपा। पल्लवाज्ञानानङ्गीकारे तु सर्वदृश्यमिथ्यात्वनिश्चयपूर्वकालीननिश्चयविषयमिथ्यात्वकदृश्यतादात्म्यापन्नचिद्रूपा प्रातिभासिकी। तादृशनिश्चयविषयान्यमिथ्यात्वकदृश्यतादात्म्यापन्नचिद्रूपा तु व्यावहारिकीति तेषां सिद्धान्तात्। न च चिदंशमादायानुगतत्वमिति वाच्यम्; वस्तुतो यत्र विशेषणत्वं पर्याप्तं तद्भेदस्य तथाप्यनिषेधात्। अन्यथा ब्रह्मघटादीनां भिन्नसत्ताकत्वव्यवहारस्य भवदीयस्य विलयापत्तेः। न च सत्तात्वेनानुगम इति वाच्यम्, घटपटयोरपि द्रव्यत्वेनानुगतत्वात्, तज्ज्ञानयोरपि समानविषयत्वप्रसंगात्। कथं वोक्तरूपा सत्ता द्रव्यं सदित्यादिप्रतीतिविषयः, सत्प्रतीतेः सत्तांशेऽन्याप्रकारकत्वानुभवात्। तस्मात्परेषां विशेषणाननुगमो दुरुद्धर एव।

ननु उक्तत्रैविध्यं विभागमात्रार्थं सदाकारप्रतीतौ तु त्रितयानुगतभिन्नैव सत्ताप्रकारः। तथाहि यथा प्रातिभासिके रजते ज्ञातैकसद्रजतत्वमेकम्, व्यावहारिकसाधारणजातेर्दोषादिजन्यतावच्छेदकत्वासंभवात्। प्रमाणव्यापारं विना प्रातिभासिकरजते तद्भानासंभवात्। व्यावहारिकरजतसंबन्धित्वेन रजतत्वस्य प्रमाणवृत्तिवेद्यत्वम्, प्रातिभासिकरजतसंबन्धित्वेन चाविद्यावृत्तिवेद्यत्वमिति कल्पने गौरवात्। तद्व्यक्तित्वादिनाप्युभयानुगतजातेः प्रमाणवेद्यत्वनियमाच्च तदावश्यकत्वात्। व्यावहारिकरजते चाज्ञातसदपरम्। साक्षिमात्रवेद्यस्य प्रातिभासिकस्य रजतत्वादेः प्रमाणवेद्यत्वानुभूयमानत्वानुपपत्तेः। प्रातिभासिकव्यावहारिकयोरेकरूपेण हेतुत्वे प्रातिभासिकादपि व्यावहारिकरजतकार्यापत्तेरुक्तकार्यहेतुत्वावच्छेदकस्य साक्षिमात्रवेद्यभिन्नस्य रजतत्वादेरावश्यकत्वात्। उभयसाधारणञ्च रजतत्वमपरम्। उभयत्रैव रजतशब्दप्रयोगात्। पूर्वोक्तजातिद्वयस्य प्रवृत्तिनिमित्तत्वे नानार्थत्वापत्तेः रजताकारानुगतप्रत्ययाच्च। हर्षविशेषादौ जातिद्वयस्य हेतुतावच्छेदकत्वे गौरवाच्च। न चैकसामान्यस्य प्रातिभासिकव्यावहारिकसबन्धो विरुद्ध इति वाच्यम्; बीजाभावात्। एवम बाध्यत्वरूप सामान्यमारोपितानारोपितसाधारणम्। अन्यदा बाध्येऽपि स्वकालाबाध्यत्वमात्रेणारोपितेऽपि तत्संभवात्। आरोपितानारोपितयोरेकसामान्याभावे प्रवृत्त्याद्यनुपपत्तेः। तदुक्तम्—

आकाशादौ सत्यता तावदेका
प्रत्यङ्मात्रे सत्यता काचिदन्या।
तत्सम्पर्कात् सत्यता तत्र चान्या
व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥इति।

तस्मादाकाशादावारोपिता सत्यतैका, चिदात्मनि चानारोपितापरा, तदुभयानुगता चान्या व्यावहारिकीति, सैव सत्यादिपदप्रयोगनिमित्तमिति। न सद्बुद्धेर्विशेषणांशे विषयभेद इति चेत्, अत्रोच्यते; उक्तोभयसाधारणानारोपितसत्तायास्सदाकारधीविषयत्वे सदित्यनुष्ठानानुवेद्य इति भवत्सिद्धान्तभङ्गापत्तेः। अवान्तरसत्ताद्वयं सत्प्रतीतौ न भासत इत्यस्य शपथनिर्णयत्वाच्च। ब्रह्मप्रपञ्चसाधारण्यैकयैव सत्तयोपपत्तौ परस्परव्यावृत्ततदवान्तरसत्ताद्वयकल्पने मानाभावात्, रजतत्वदृष्टान्तेऽप्यग्रे वक्तव्यमित्यास्तां तावत्।

यत्तु वेदान्तिमतेऽपि सत्स्वरूपस्य नैकं तादात्म्यं समवायैकत्वोक्तदोषात्। न च तादात्म्यत्वेन संबन्धानुगम इति वाच्यम्; तादात्म्यं सदित्यत्र तदभावात्। एकरूपेण संबन्धत्वानुयोगित्वयोरयोगादित्याशङ्क्योक्तम्—समवायः सन्नित्यत्र समवायत्वेनैव रूपेण समवायस्य संबन्धत्वानुयोगित्वयोस्त्वयाप्यङ्गीकारात्, तथैव ममापि समाधिः। तत्र रूपभेदेन तदुभयाङ्गीकारे च मयापि तादात्म्यत्वेन संबन्धत्वम्, तदनुरूपेणानुयोगित्वमिति वक्तुं शक्यत्वात्। यद्वा संबन्धनिरूपितयोः प्रतियोगित्वानुयोगित्वयोरेकरूपावच्छेद्यत्वमेव मया नाङ्गीक्रियते। तेन तादात्म्यत्वेन संबन्धत्वं तदनुयोगित्वं चोपपन्नम्। अत एव सद्ब्रह्मेत्येव व्यवहारो न तु सत्सदित्यपीति, तत्रेदं वाच्यम्—घटाभावो घटाभाववानित्यादौ प्रतियोगित्वानुयोगित्वयोरेकधर्मावच्छिन्नत्वादुक्तनियमोऽप्यनुपपन्न एव, सत्सदित्यपि प्रत्ययो दुरपह्नवो घटो घट इतिवत्। विस्तरस्तु भेदाभेदवादनिरासे प्रकाशनीयः।

यदप्युक्तं सत्स्वरूपप्रतियोगिकं तादात्म्यमेव सत्तास्वरूपसंबन्धेन सदाकारधीविषयः। तादात्म्यं सदित्यत्रापि केवलोपहिततादात्म्ययोः स्वरूपसंबन्धः, तादात्म्ये तादात्म्यान्तरास्वीकारात्। तादात्म्यभिन्नयोरेव केवलोपहितयोस्तादात्म्यस्वीकारात्। अतः सदाकारबुद्धौ नानुगतसंबन्धहानिः। सत्ता

सतीति तु न मे व्यवहार इति, तदप्यसत्; सत्तायाः प्रकारत्वेनानुभूयमानायाः संसर्गकोटौ निवेशः। तत्स्वरूपप्रतियोगिकतादात्म्यस्य चानुभवविरुद्धस्य प्रकारत्वमिति कल्पनस्य सर्वप्रत्ययबाधितत्वात्, सत्ता सतीति व्यवहारस्येष्टत्वात्, **नञ्वाददीधितिव्याख्यात्रादिसंमतत्वाच्च**, शपथमात्रेण दुर्वारत्वात्।

यत्तु प्रसंगादुक्तम् "प्राभाकरादिमते व्याप्तिविशिष्टवैशिष्ट्यबुद्धेरिव मन्मतेऽनुमितौ व्याप्तिस्मृतेरप्यनावश्यकत्वम्, व्याप्तिसंस्कारत्वेनैव हेतुत्वसंभवात्। पर्वत धूमज्ञानोत्तरं व्याप्तिविशिष्टवैशिष्ट्यज्ञानाकल्पन इवात्रापि व्याप्तिज्ञानाकल्पने लाघवात्" इति, तन्न; संस्कारस्य स्वजनकज्ञानविषयविषयकबुद्धावेव हेतुत्वात्, संस्कारत्वावच्छिन्नकारणतानिरूपितकार्यतायाः स्मृतित्वव्याप्यत्वाच्च। अनुद्बुद्धसंस्कारादनुमितिवारणाय नानाविधोद्बोधकानां हेतुत्वे गौरवाच्च। व्याप्तिसंस्कारेण व्याप्तिस्मृतिस्थले त्वयापि तस्यावश्यं वाच्यत्वादनुमितौ तद्धेतुत्वस्यातिरिक्तत्वादव्याप्तिस्मृतिरेव न कल्प्या, इत्युक्ते तु तत्र संस्कारोत्पत्तावेव मानाभावात्। स्वविशिष्टानुमितौ व्याप्तिज्ञानतत्संस्कारयोर्हेतुत्वे च गौरवात्। धूमपरामर्शादौ त्वगत्या तत्स्वीकारात्।

यत्तु उद्बोधकानामपि स्मृताविवानुमितावप्यन्वयव्यतिरेकाभ्यां हेतुत्वमस्तु मा वा, लिङ्गज्ञानमेव वस्तुगत्यानुमित्यव्यवहितपूर्ववत्त्युद्बुद्धसंस्कारसहितं जातिविशेषेण शक्तिविशेषण वा हेतुर्लाघवादिति, तदप्यसत्; लिङ्गज्ञान हि स्वरूपमात्रेण व्याप्तिविशिष्टत्वेन वा ? नाद्यः, तादृशादनुमितेः सर्वथानुपपन्नत्वात्। नान्त्यः, अत एवानुमित्युपपत्तावुद्बुद्धसंस्कारादेरनुमितिहेतुतायां मानाभावात्। न च वस्तुगत्येत्यादिना निर्वाहः, वस्तुगत्यानुमित्यव्यवहितपूर्ववर्तित्वस्यानुमित्युत्पत्त्यधीनत्वात्। अनुमितौ रूपान्तरेण हेतुत्वस्यावश्यकत्वात्। अन्यथा वस्तुतः फलाव्यवहितपूर्ववर्तित्वेन कारणत्वोक्तौ बहुतरकारणताविलयप्रसंगात्। अन्वयव्यतिरेकिणां लिङ्गज्ञानसमानयोगक्षेमाणां बहिर्भावे बीजाभावाच्च। वस्तुगत्यानुमित्यव्यवहितपूर्ववर्तिमनोयोगक्षणविशेषादेरेव हेतुत्वापत्तेश्च। अत एव जातिविशेषः शक्तिविशेषो वा कारणतावच्छेदकत्वेन व्याप्तिज्ञानादावेव मन्तव्यो व्याप्तिज्ञानादेव यत्रानुमितिस्तत्रावश्यक्लृप्तत्वात्। नतूक्तलिङ्गज्ञाने कल्पकाभावात्। किञ्चैवं सति व्याप्याद्यंशे भ्रमत्वधीविषयाद्वह्निव्याप्यधूमवत्ताज्ञानादनुमित्यापत्तिः, व्याप्त्यादिविषयकत्वस्य कारणतानवच्छेदकत्वेन तदंशे भ्रमत्वज्ञानस्याकिञ्चित्करत्वात्। एवं व्यभिचारज्ञानादिसत्त्वेऽपि।

यत्तु ज्ञानद्वयहेतुतामते वह्निव्याप्यधूमवैशिष्ट्यांशे भ्रमत्वग्रहकालेऽप्यनुमितिर्यथा स्वीक्रियते तथोक्तस्थले ममापीति, तन्न; कदाचित्पक्षतावच्छेदकसामानाधिकरण्यमात्रेण कदाचिच्च पक्षतावच्छेदकावच्छेदेनानुमितिरिति नियमस्य तथापि दुरुपपादत्वात्। मन्मते तु यदा शुद्धसंयोगेन व्याप्तिज्ञानं तदा सामानाधिकरण्यमात्रेण, यदा त्ववच्छिन्नसंयोगेन तदावच्छेदकावच्छेदेनेति नियमोपपत्तेः। न च यत्रावच्छिन्नसंयोगेन व्याप्तिज्ञानजन्यः संस्कारस्तत्रावच्छेदकावच्छेदेन, यत्र शुद्धसंयोगेन व्याप्तिज्ञानजन्यस्तत्र सामानाधिकरण्यमात्रेणानुमितिरिति नियम इति वाच्यम्; उभयविधसंस्कारसत्त्वे गत्यभावात्, तद्भेदादुद्बोधकभेदकल्पने मानाभावात्, हेतुतायामप्रामाण्यज्ञानस्यानुत्तेजकत्वात्। एतेन व्याप्त्यादिविषयकज्ञानत्वेनाहेतुत्वेऽप्युक्तभ्रमत्वज्ञानाभावानां हेतुज्ञाननिष्ठहेतुतायामेवावच्छेदकत्वम्, यद्वा स्वातन्त्र्येणैव हेतुत्वमस्तु, इत्यपास्तम्। जनकज्ञानविघटकत्वेनैव ज्ञानस्य प्रतिबन्धकत्वाच्च। मण्यादिवत्स्वातन्त्र्येण तत्त्वे मानाभावाद् गौरवाच्च। हेतुज्ञा निष्ठहेतुतायामवच्छेदकत्वे व्याप्यत्वाभाववति व्याप्यत्वप्रकारकत्वधूमाभाववति धूमप्रकारकत्वरूपद्विविधभ्रमत्वज्ञानाभावानां विशेष्यविशेषणभावे विनिगमकाभावात्। मन्मते तु व्याप्यत्वप्रकारकत्वरूपभ्रमत्वज्ञानाभावानां व्याप्तिविषयकज्ञानांशे धूमीयभ्रमत्वज्ञानाभावानां च लिङ्गज्ञानांशे हेतुतावच्छेदकत्वेनोक्तभ्रमत्वज्ञानाभावानां तदप्रसक्तेः। न च जातिविशेषं शक्तिविशेषं वा स्वीकृत्य तदेवावच्छेदकं कल्प्यते। अतोऽवच्छेदकैक्यात्कारणतैक्यमिति नोक्तविनिगमकाभावो दोष इति वाच्यम्; तथापि बहुषु शक्तिविशेषसंबन्धस्वीकार एव गौरवावतारात्।

यत्तु यस्य हेतुज्ञानस्योक्तभ्रमत्वधीविषयत्वं तत्रानुमितिजनकतावच्छेदको जातिविशेष एव नास्तीति, तदपि चिन्त्यम्; लिङ्गस्यापि ज्ञानहेतुतायां विषयतयावच्छेदकाङ्गीकारस्य वैयर्थ्यापत्तेः। यज्ज्ञानव्यक्तिविशेषादनुमितिस्तत्रैव जनकतावच्छेदकस्वीकारेणातिप्रसंगवारणासंभवात्। अथ यादृशविषयकत्वेन ज्ञानस्यानुमितिजनकत्वमनुभवसिद्धं तादृशविषयकत्वविशिष्ट एवानुगमार्थमवच्छेदकविशेषः कल्प्यते, तर्हि व्याप्तिविषयकत्वानिर्मुक्ते ज्ञानेऽनुमितिजनकत्वं नास्तीति कथं तत्र शक्तिविशेषादेरवच्छेदकस्य स्वीकारः।

एतेन ज्ञानद्वयहेतुतामते वह्निव्याप्याभाववानयमिति धीसत्त्व इव व्यभिचारादिधीसत्त्वे कारणसंपत्त्याऽनुमितेर्मन्मतेऽपीष्टत्वात् संस्कारद्वारानुमितिप्रयोजकधीप्रतिबन्धकधीविषयत्वादेव व्यभिचारादेर्हेत्वाभासत्वसंभवात्। कारणीभूतसंस्काराः यथार्थ[illegible]ज्ञापनार्थं सत्प्रतिपक्षा-

द्युत्थापनार्थं वा। विपरीतनिश्चयस्य संस्कारनाशकत्वमते व्यभिचारादिज्ञानस्य व्याप्तिसंस्कारनाशकत्वेन तादृशव्यभिचारज्ञानार्थं वोपाध्युपन्याससंभवात्। कारणतावच्छेदकीभूतजात्यादेर्व्यभिचारज्ञानोत्तरकालीनज्ञाने सत्त्वे भानाभावेनाखिलदोषपरीहाराच्चेत्यपि परास्तम्। व्याप्तिज्ञानेन द्वारीभूतसंस्कारस्य जनितत्वेन पाश्चात्यव्यभिचारज्ञानस्याकिंचित्करत्वात्। नहि भाव्यप्रामाण्यज्ञानाभावविशिष्टव्याप्तिज्ञानजन्यः संस्कारो हेतुरिति वक्तुं शक्यम्; तत्पूर्वमप्यनुमित्यनुदयापत्तेः। विशेष्यत्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकस्याप्रामाण्याग्रहाभावस्य व्यापारजननकालेऽपेक्षणीयस्य संस्कारजनकव्याप्तिज्ञाने सुस्थत्वात्।

कारणीभूतेत्यादिकमपि चिन्त्यम्; ज्ञानहेतुतायामेवाप्रामाण्यज्ञानाभावस्योपयोगेन संस्कारहेतुतायां तस्यानपेक्षितत्वात्, अत्रैव तन्निवेशे बीजाभावात्। अप्रामाण्यज्ञानास्कन्दितज्ञानजन्यसंस्कारस्यापि स्मृतिहेतुत्वस्य सर्वसम्मतत्वाच्च। व्यभिचारज्ञानस्य ग्राह्याभावग्रहविधयैवानुमितिकरणविघटकत्वाच्च। अनुमितिकरणविघटकत्वेन स्वत एवानुमितिप्रतिबन्धकत्वेन वा विना हेत्वाभासत्वायोगात्।

विपरीतेत्यादिकमप्ययुक्तम्। व्यभिचारज्ञानाव्यवहितोत्तरक्षणेऽनुमित्यापत्तेः। संस्कारस्यापि कार्यसहभावेनानुमितिहेतुत्वे मानाभावादनुमितेः संस्कारनाशस्य च यौगपद्येऽपि क्षतिविरहात्। न चैवं विपरीतनिश्चयाव्यवहितोत्तरक्षणे स्मृतेरप्यापत्तिः, इष्टापत्तेः; संशयात्मकस्मरणस्य तथाप्यनापत्तेः। तत्क्षणे विपरीतसंस्कारानुत्पत्तेः। उत्तरक्षणे च पूर्वमन्यसंस्काराभावात्। न च घटाभावज्ञानोत्तरं घटस्मृतिघटसंस्कारनाशघटाभावसंस्कारोत्पादा एकक्षणे तदुत्तरं घटाभावस्मरणमिति पूर्वोत्पन्नविनश्यदवस्थघटस्मृतिमादाय संशयाकारस्मरणं स्यादिति वाच्यम्; विनश्यदवस्थमेव ज्ञानं संस्कारजनकमितिपक्षे घटाभावज्ञानाव्यवहितोत्तरं घटाभावसंस्कारानुत्पत्तेः। घटस्मृत्यनुव्यवसायस्यैव तदुत्तरक्षणे उत्पत्त्या घटाभावस्मृत्यनुत्पत्तेश्च। स्मृतिसामग्र्या अनुभवसामग्र्यपेक्षया दुर्बलत्वस्य **मिश्रादि**संमतत्वात्। व्याप्तिविशिष्टवैशिष्ट्यानुभवादेव यत्रानुमितिप्रसंगस्तत्र व्यभिचारादेरुपयोगस्य तार्किकरीत्यैव परैरभ्युपगम्यत्वाच्चेत्यलमुच्छृङ्खलत्वेन।

यदपि तमोभावान्तरमेव नत्वालोकाभावश्च रूपम्, नीलं तमश्चलतीति प्रत्ययात्। न चासौ भ्रान्तिः, बाधकाभावात्। नापि पृथिव्याद्यन्तर्भूतम्,

गन्धशीतोष्णस्पर्शाभावेन रूपादिमत्त्वेन च नवद्रव्यवैधर्म्यात्। रूपादिमत्त्वादेव च न गुणाद्यन्तर्भूतम्, तदुक्तम्—

नाभावो भाववैधर्म्यान्नारोपो बाधहानितः।
द्रव्यादिषट्कवैधर्म्याज्ज्ञेयं मेयान्तरं तमः॥ इति॥

द्रव्यचाक्षुषत्वावच्छिन्ने च तमोरूपजात्या तमसस्तादात्म्येन प्रतिबन्धकत्वम्। कपालादौ घटादिरिव घटादौ तदवच्छिन्नचैतन्यगतमूलाविद्यापरिणामश्च तमः। तत्र तत्र तत्तादात्म्यात्तत्काले न चाक्षुषम्, प्रभादौ च तदभावाच्चाक्षुषम्। न च ध्वंसकल्पने गौरवमालोकसंयोगस्यैव तद्ध्वंसरूपत्वादिति, तच्चिन्त्यम्; संयोगस्य व्यासज्यवृत्तितया ध्वंसरूपत्वानुपपत्तेश्च। न च संयोगप्रागभावध्वंसस्य संयोगरूपत्ववदुपपत्तिः, तथापि संयोगध्वंसे तमःसत्त्वापत्तेः। न च तस्यापि तद्रूपत्वं प्रतियोगिध्वंसस्य तत्प्रागभावध्वंसत्ववदिति वाच्यम्; तथापि ध्वंसस्य प्रतियोगिदेशमात्रवृत्तित्वस्वाभाव्येनालोकवृत्तावालोकसंयोगे तमोध्वंसरूपत्वकल्पनानुपपत्तेः। आलोके तमःप्रतीतेः केनाप्यनङ्गीकारात्। तमसस्तादात्म्येन प्रतिबन्धकत्वापेक्षया तमःसमये आलोकसंयोगरूपकारणाभावादेव चाक्षुषानुत्पाद इत्यस्य लघुत्वात्; आलोकसंयोगोत्कर्षेण प्रत्यक्षोत्कर्षत्वाच्चालोकसंयोगस्य हेतुत्वावश्यकत्वात्। तमोऽभावत्वेन चाक्षुषहेतुत्वे गौरवात्तद्धेतुत्वेन द्रव्यान्तरसिद्धिप्रसंगाच्च।

यत्तु तमोऽभाववत्त्वेन न कारणत्वम्, प्रतिबन्धकाभावस्यास्मत्सिद्धान्ते हेतुत्वानभ्युपगमात्। प्रतिबन्धकस्य कार्याभावं प्रति क्षेमसाधारणजनकत्वमात्राभ्युपगमात्। प्रतिबन्धकाभावाधिकरणं यः प्रतिबन्धकाभावसहितकारणकूटक्षणोत्तरक्षणस्तत्त्वस्यैव कार्यव्याप्यतया प्रतिबन्धककाले कार्योत्पत्तिवारणात्। अथवा स्वावच्छिन्नप्रतियोगितानिरूपकत्वेन स्वनिरूपकत्वेन वा संबन्धेन तमस्त्वमभावनिष्ठकारणतावच्छेदकम्। प्रतियोगितायाः स्वावच्छेदकधर्मरूपत्वेनाभावेऽपि तमस्त्वाभिन्नप्रतियोगितानिरूपकत्वसंभवात्। यद्वा तमस्त्वावच्छिन्नाभावव्यक्तिहेतुतायां तद्व्यक्तित्वमेवावच्छेदकम्। न च तद्व्यक्तित्वञ्च सैव व्यक्तिस्तन्निष्ठधीविशेषविषयत्वं वेत्यन्यदेतत्। न च तद्व्यक्तेः स्वरूपतो भानाभावान्नावच्छेदकत्वमिति वाच्यम्; तथात्वेऽप्यवच्छेदकत्वे बाधकाभावादिति, तच्चिन्त्यम्; प्रतिबन्धकस्य कार्याभावं प्रति क्षेमसाधारणजनकत्वापेक्षया तदभावस्य कार्यं प्रति हेतुताया एव युक्तत्वात्, क्षेमसाधारणजनकत्वस्य गुरुत्वात्। कारणकूटे प्रतिबन्धकाभावसाहित्य-

निवेशेऽपि गौरवात् । सिद्ध्यादेः प्रतिबन्धकत्वस्थले उक्तकार्यव्याप्त्यभावाच्च। अनुमित्यधिकरणक्षणाव्यवहितपूर्वक्षणस्य सिद्ध्यभावाधिकरणत्वेऽप्यनुमितिरूपकार्याधिकरणक्षणस्य सिद्धिरूपप्रतिबन्धकाभावानधिकरणत्वात् । न च यत्र त्वया प्रतिबन्धकाभावस्य कार्यसहभावेन हेतुत्वमभ्युपेयते तत्रैव प्रतिबन्धकाभावाधिकरणत्वं क्षणद्वये निवेश्यते । यत्र तु पूर्ववर्तितामात्रेण तत्र पूर्वक्षण एव तन्निवेशो न तु उत्तरक्षणेऽपीति न दोष इति वाच्यम् ; तथापि कारणकूटाधिकरणक्षणोत्तरक्षणमात्रस्य कार्यव्याप्यत्वे लाघवात् । अकिंचित्करस्य प्रतिबन्धकत्वानुपपत्तेश्च । मन्मते तु प्रतिबन्धकेन स्वभावरूपकारणस्यैव विघटनात् । "प्रतिबन्धोऽपि सामग्री तद्धेतुः प्रतिबन्धकः" इत्याचार्योक्तेः । मीमांसकैरपि शक्तिनाशकत्वस्वीकारात् । अथवा स्वावच्छिन्नप्रतियोगितेत्यादिकमप्ययुक्तम् ; एककार्यतावच्छेदकावच्छिन्ने प्रतिबन्धकतावच्छेदककारणतावच्छेदकधर्मैक्यापत्तेः । न चेष्टापत्तिः; तमस्त्वं चाक्षुषत्वावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकमितिव्यवहारविरहात्। एतेन कारणीभूतप्रतिबन्धकीभूतव्यक्त्यभेद एव दोषो न तु कारणतावच्छेदकप्रतिबन्धकतावच्छेदकधर्माभेदोऽपीत्याशङ्कापि निरस्ता ।

यद्वा तमस्त्वावच्छिन्नेत्यप्ययुक्तम्, अभावनिष्ठतद्व्यक्तित्वस्यान्यथासिद्धिनिरूपकत्वमिति सकलप्रामाणिकसिद्धत्वात् । तस्याभावनिष्ठहेतुतायामवच्छेदकत्वायोगात् । न च तन्नादरणीयम्, गौरवादेरपि विलयापत्तेः । तमस्त्वघटत्वान्यतरावच्छिन्नाभावस्यापि तद्व्यक्तित्वेन हेतुत्वापत्तेश्च । तद्व्यक्तित्वस्य स्वरूपतो भानाभावेऽप्यवच्छेदकत्वं स्वरूपेणैवेत्यपि न युक्तम् ; ये धर्माः स्वरूपतो न भासन्ते तन्निष्ठावच्छेदकत्वस्य किंचिद्धर्मावच्छिन्नत्वनियमात् । अत एव घटादेरवच्छेदकत्वं घटत्वाद्यवच्छिन्नं घटत्वादेस्त्वनवच्छिन्नमेवान्यथा बहुविप्लवापत्तिः । यदप्युक्तमं चाक्षुषहेतुत्वेन भावान्तरसिद्धौ तद्भावेन नीलं तम इत्यादि प्रतीतेरनिर्वाहात्तमसोभात्वावश्यकत्वेन तद्भावस्यैवोक्तकारणत्वसंभवे चाक्षुषहेतुत्वेन भावान्तरं न कल्प्यते, गौरवादिति, तदपि चिन्त्यम् ; आलोकस्य चाक्षुषहेतुताया आवश्यकत्वेन तदभावेनैवान्धकारकाले आवश्यकेन तमःप्रतीत्युपपत्तौ तस्य भावत्वकल्पनानौचित्यात् । आलोकाभावतमसोर्भेदकल्पने गौरवादनन्तानयवध्वंसप्रागभावादिकल्पनाच्च । आलोकाभावे तमोविषयकशाब्दं प्रति चाक्षुषसामग्र्याः प्रतिबन्धकत्वकल्पनप्रसङ्गाच्च । न च त्वन्मतेऽपि तदविशेषः । समानविषयेऽपि प्रत्यक्षसामग्र्याः

शाब्दसामग्रीतो बलवत्त्वादिति वाच्यम्; तथापि मन्मते तमः शाब्दं जायतामित्येतादृशेच्छाविरहविशिष्टचाक्षुषसामग्र्याः तद्विषयकशाब्दं प्रत्येकमेव प्रतिबन्धकत्वम्, भवन्मते तु तमश्चाक्षुषेच्छाविरहविशिष्टशाब्देच्छाविशिष्टालोकाभावशाब्दसामग्र्यास्तमश्चाक्षुषे उभयेच्छाकाले चाक्षुषोपपत्तये च चाक्षुषेच्छाविशिष्टचाक्षुषसामग्र्या आलोकाभावशाब्दे प्रतिबन्धकत्वमिति गौरवम्। चाक्षुषेच्छाविरहशाब्देच्छयोर्विशेष्यविशेषणभावे विनिगमकाभावेन गौरवं चेत्यादिकं योज्यम्।

ननु सर्वमिदं प्रामाणिकत्वाददोषः। अन्यथा घटपटादेरपि भेदो न स्यादिति चेत्, न; तद्भेदस्य लोकप्रत्यक्षादिबहुप्रमाणसिद्धत्वात्। न च प्रतीतेर्भ्रमत्वेनाप्युपपादने वस्त्वसिद्धितादवस्थ्यमिति वाच्यम्; अनन्यथासिद्धप्रतीतेरेव वस्तुसाधकत्वात्। अन्यथा नीलं नभो लोहितः स्फटिक इत्यादि प्रतीतावतिप्रसंगात्। क्वचिद् वस्त्वनङ्गीकारे भ्रमत्वेनाप्युपपादनासंभवाच्च। भ्रान्तेरभ्रान्तिपूर्वकत्वनियमात्। अत एव "निषेधस्य यदा कदाचित् प्रतियोगिप्रमापूर्वकत्वनियमाद् द्वैतनिषेधोऽप्रामाणिक एव" इति **वृद्धाः**।

नीलत्वचलनभ्रमत्वप्रकारस्त्वाकरे स्पष्टः। "किञ्च नीलरूपवत्ताप्रतीतिर्यथार्था, अयथार्था वा? नाद्यः, पृथिव्यामेवान्तर्भावापत्तेः। नान्त्यः, आलोकाभावस्यैव भ्रमविशेष्यत्वौचित्यात्" इति **लीलावत्युपाये** स्पष्टमुक्तत्वात्।

ननु कथं पृथिवीत्वापत्तिस्तमस इति चेत्, न; अत्र **द्रव्यकिरणावल्युपायस्थमिश्राभि**प्रायाभिधायि**ठक्कुर**फक्किकाभिरुत्तरस्य वाच्यत्वात्। तथा हि, "**मिश्रास्तु** नीलरूपसमवायिकारणतावच्छेदकं पृथिवीत्वं लाघवादिति, वस्तुतो नीलरूपवत्त्वे तमः पृथिव्येव स्यान्न द्रव्यान्तरम्, तदनुरोधेन परं स्पर्शाद्यनुद्भवो विकल्प्यताम्। तदपेक्षया द्रव्यान्तरकल्पनाया गुरुत्वात्। 'धर्मिकल्पनातः' इति न्यायात्। अनुद्भवकल्पनायाश्चोदीच्यत्वेन फलमुखगौरवस्यादोषत्वात्। तस्माद् वस्तुतो नीलरूपवत्त्वेऽपि न द्रव्यान्तरमिति तदभावस्योभयस्वीकारे आवश्यकत्वादभाव एव तमः, इति वदन्ति"।

नन्वेवमनुष्णाशीतस्पर्शसमवायिकारणतावच्छेदकं लाघवात्पृथिवीत्वमिति वायुरपि पृथिवीविशेषः स्यात्। तथा च तदनुरोधेन रूपाद्यनुद्भवोऽपि कल्प्यताम्। यदि स्पर्शविशेषसमवायितावच्छेदकं पृथिवीत्वं तदा नीलविशेषसमवायितावच्छेदकं तदिति तुल्यमिति चेत्, न; वायोः पृथिवीत्वे उद्भूतरूपापत्तेः। उद्भूतस्पर्शजनकाग्निसंयोगस्योद्भूतरूप-

जनकत्वनियमात् । न च तमसोऽपि पृथिवीत्वे उद्भूतस्पर्शापत्तिरुद्भूतरूपजनकाग्निसंयोगस्योद्भूतस्पर्शजनकत्वनियमादिति तुल्यमेवेति वाच्यम्; तन्नियमस्य त्रसरेणुरूपजनकाग्निसंयोगे व्यभिचारात् । तदीयस्पर्शस्यानुद्भूतत्वात् । निमित्तभेदसंसर्गादित्यादिमतेनैव पूर्वपक्षस्याप्यवतारितत्वेन सिद्धान्तेऽपि तन्मतावलम्बनात् । अस्तु वा त्रसरेणुस्पर्शोऽप्युद्भूतस्तमसोऽप्युद्भूतस्पर्शवत्त्वे इष्टापत्तिः । न च तथा सति तस्य स्पार्शनापत्तिः । त्रसरेणोरिवाश्रयविशेषस्यैव तादृशप्रत्यक्षप्रतिबन्धकत्वात् । अन्यथा त्रसरेणुस्पार्शनस्य दुर्वारत्वापत्तेः । न च त्रसरेणुरपि स्पार्शन एव विविच्य परं न गृह्यते, सजातीयसंवलनरूपदोषादिति वाच्यम्; तमस्यपि तुल्यत्वात् । न च वायोरप्युद्भूतमेव रूपं चक्षुषा तु न गृह्यते, आश्रयविशेषप्रतिबन्धात् । गृह्यत एव वा विविच्य परं न गृह्यते त्वचा तमोवदिति वाच्यम् ; पार्थिवोद्भूतरूपस्य महत्त्वभाना-[समाना]धिकरणस्य विविच्य ग्रहनियमात् । न च पार्थिवस्पर्शेऽप्ययं नियमः, त्रसरेणुस्पर्शे व्यभिचारात् । तथा च सम्यगुक्तं "नीलरूपपत्त्वे तमसः पृथिवीत्वापत्तिरिति दिग्" इति । अत एव "यत् कृष्णं तदन्नस्य" इतिश्रुतिरपि संगच्छते, नीलरूपमात्रस्य पृथिवीसंबन्धित्वं तदर्थ इत्यस्य परैरप्यङ्गीकारात् । अत एव तदुत्तरमेव श्रूयते "यदुत्कृष्टमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः" इत्यादि । विवृतं चैतत्पुरस्तात् । तस्मात् स्थितमेतन्नीलरूपप्रतीतेः प्रमात्वे वा भ्रमत्वे वा न तमो द्रव्यान्तरमिति । उक्तञ्च **लीलावत्याम्**-"अथ रूपाश्रयत्वबुद्धिस्तमसि तदा बाधाबाधाभ्यां न पदार्थान्तरत्वम्" इति । इदमप्यत्रानुसंधेयम्—कपालाद्यवच्छिन्नचैतन्यनिष्ठमूलाविद्यायाः समवायस्थानीयतादात्म्येन घटादाविव घटाद्यवच्छिन्नचैतन्यनिष्ठमूलाविद्यायास्तादात्म्येन तमसि हेतुत्वे घटकाले कपालस्य सत्तायास्त्वयानङ्गीकारेण तमःकाले घटादेरप्यभावापत्तिः । नचेष्टापत्तिः; घटादिस्पार्शनस्य तदा सर्वसिद्धत्वात् वैषम्ये च बीजाभावात् । न च द्रव्ययोरेव तथाङ्गीकारः, तमसोऽपि द्रव्यत्वात् । अन्यथा तत्र गुणक्रियाबुद्धिरयथार्था स्यादिति मूलनाशापत्तेः । न च द्रव्यान्यत्रापि तदङ्गीकर्तुं शक्यम्, अभाव एवान्तर्भावस्यापत्तेः । दशमं द्रव्यमिति **किरणावल्यादिदर्शनाच्च** ।

तमः खलु चलं नीलं परापरविभागवत् ।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥

इति परोक्तेश्च । नाप्यवयवावयविभावमन्तरेण द्रव्यस्य द्रव्यं प्रति समवायेन तादात्म्येन वा हेतुत्वम्, अनन्तद्रव्याणां तादात्म्येन हेतुत्वकल्पने

गौरवं च । एकजातीयद्रव्ये विजातीयद्रव्ययोः समवायित्वानुपपत्त्या जलस्यान्धकारे चाक्षुषप्रत्यक्षापत्तेश्च तादात्म्येन तत्र तमसोऽभावात् । नचालोकाभावादेव तद्वारणम्, तस्य त्वया चाक्षुषहेतुत्वानभ्युपगमात् । तादात्म्यावच्छिन्नप्रतियोगिताकतमस्त्वावच्छिन्नाभावस्यैव चाक्षुषहेतुत्वोपगमात् । आलोकसत्त्वे तादात्म्येन तमोविरहादेव चाक्षुषोपपादनात् । न च तमसि वैजात्यं कल्प्यम्; मानाभावात् । अपि च तिमिराद् घटस्यालोकदेशनयने पूर्वघटदेशावच्छेदेन तमोऽनुभवो न स्यात् । घटव्यतिरेकेण तस्य तत्रानुस्थानानुपपत्तेः । किञ्च तादात्म्येनैव प्रतिबन्धकत्वे चलतीति प्रतीतेर्भ्रमत्वध्रौव्यम् । यत्र यत्र तमस्तत्र तादात्म्येनैव तमस उत्पत्त्यान्यदेशस्थस्यान्यत्र गमनं नास्तीत्यस्यैव पर्यवसानात् । अन्यथा तमःसंयुक्तद्रव्यस्य चाक्षुषापत्तेः । संयोगेनापि प्रतिबन्धकत्वे गौरवम् ।

किञ्च द्रव्यजनकतावच्छेदके वैजात्यं कर्मनिष्ठमेवेति भवदुक्तनिष्कर्षरीत्या निःक्रिये घटादौ कथं तमस उत्पत्तिः ? संयोगहेतुत्वेऽपि तादृशद्रव्यान्तरसंयोगस्य दुर्वचत्वात् । अथ तमोद्रव्यमवयवान्तरारभ्यमेव संयोगेन च तस्य द्रव्यचाक्षुषत्वावच्छिन्ने विरोधित्वमिति कल्प्यते, तदा आकरोक्त दोषा एव दुर्वाराः । अथ तमो नित्यमेव, आलोकाभावश्च तद्व्यञ्जक इति कल्प्यते । तदानवच्छिन्नपरिमाणमेव वक्तव्यम्, अणुत्वस्य प्रत्यक्षविरुद्धत्वात् । तथात्वस्वीकारे सर्वदा तदनुत्पत्तिः स्यात्, अनभिव्यक्तिदशायामपि तत्सत्त्वात् । तमोविषयकचाक्षुषे आलोकाभावहेतुत्वे गौरवञ्च विषयविधया हेतुत्वञ्चोभाभ्यां कल्प्यमिति गौरवम् । एवमालोकान्यत्वं प्रतिबध्यतावच्छेदके निवेश्यम्, अन्यथा तत्रापि समावायेन तत्संयोगसत्त्वाच्चाक्षुषं न स्यात् । आलोकाभावकालीनतमःसंयोगस्य चाक्षुषविरोधित्वादन्यदा चाक्षुषोपपत्तिरिति चेत्, तर्हि सुतरां गौरवम् । किञ्च द्रव्यचाक्षुषत्वस्य प्रतिबध्यतावच्छेदकत्वेऽन्धकारे केवलगुणादिचाक्षुषापत्तिः ।

ननु आलोकसंयोगस्य हेतुत्वपक्षेऽपि तमसि रूपादिचाक्षुषवारणाय द्रव्यान्यसमवेतचाक्षुषत्वावच्छिन्ने स्वविषयसमवेतत्वसंबन्धेन चाक्षुषस्य हेतुत्वकल्पनस्यावश्यकत्वात्,तत एव मन्मतेऽपि नोक्तानुपपत्तिरिति चेत्, मैवम्; तथापि तवोक्तहेतुत्वं, तमसः प्रतिबन्धकत्वं, तमोऽभावस्य हेतुत्वं चेति त्रयम् । मम तु द्रव्यचाक्षुषत्वावच्छिन्ने आलोकसंयोगस्योक्तचाक्षुषस्य च उक्तधर्मावच्छिन्ने हेतुत्वमिति द्वयमेव । चक्षुःसंयोगादेस्तूभयत्रापि साम्यम् । वस्तुत आलोकस्य स्वसंयुक्तसमवेतसमवायसंबन्धेनैव चाक्षुषत्वावच्छिन्ने हेतुत्वं

कल्प्यते। तत एव तस्मिन् रूपादिचाक्षुषवारणात् कपालिकाकपालघटादिक्रमादाय घटरूपरूपत्वेषु तत्समन्वयः। एवञ्च सत्यालोकचाक्षुषमप्यनायासादुपपादयितुं शक्यम्, संयुक्तालोकावयवद्वयसमवेतसमवायस्यालोकमात्रे सुलभत्वात्। एवं चान्धकारे रूपादिचाक्षुषानापत्त्या द्रव्यान्यसमवेतचाक्षुषत्वावच्छिन्ने स्वविषयसमवेतत्वसम्बन्धेन चाक्षुषस्य हेतुत्वं न कल्प्यते, इति त्वन्मते हेतुताकल्पने गौरवम्। अत एव त्रुटिचाक्षुषानुरोधेन परमाणुद्व्यणुकयोः सिद्धिः। चक्षुःसंयुक्तसमवेतसमवायस्य हेतुताया द्व्यणुकघटितसन्निकर्षाद्रूपत्वादिचाक्षुषापत्त्या समवेतांशे चाक्षुषवत्त्वनिवेशस्यावश्यकतया तेन त्रुटिप्रत्यक्षनिर्वाहात्। द्रव्यचाक्षुषत्वावच्छिन्ने चक्षुःसंयोगस्य हेतुत्वावश्यकत्वान्न तेन परमाणुद्व्यणुकसिद्धिरित्यादेरभिधानेऽप्यालोकसंयुक्तसमवेतसमवायहेतुतायां तन्निवेशे प्रयोजनाभावात्। न च तत्र रूपत्वादिचाक्षुषानुरोधेन चक्षुःसंयुक्तसमवेतसमवायस्येन्द्रियार्थसन्निकर्षत्वेन क्लृप्त इति वाच्यम्; उक्तलाघवेनैव तत्कल्पनसंभवात्। एवञ्च त्रसरेणुः सावयवश्चाक्षुषद्रव्यत्वाद् घटवत्। तदवयवः सावयवः, चाक्षुषद्रव्यावयवत्वात्कपालवत्, इत्यनुमानमुक्तलाघवतर्कसहकारेण तत्साधकम्। एतेन परमाणुः सावयवः चाक्षुषद्रव्यावयवावयवत्वात्कपालिकावदित्यपि स्यादित्युच्छृङ्खलोक्तं परास्तम्। तदुत्तरमनुकूलतर्काभावेन वैषम्यात्। एव "त्रसरेणुस्तु विज्ञेयो ह्यष्टौ ये परमाणवः" **इत्यादित्यपुराणा**दिवचनानामप्यत्रानुकूलत्वं बोध्यम्। त्रसरेणोः सावयवत्वं विना तेषामर्थान्तरस्य दुरुपपादत्वात्। न चैवं—

> "जालसूर्यमरीचिस्थं यत् सूक्ष्मं दृश्यते रजः।
> प्रथमं तत्प्रमाणानां [परमाणूनां] त्रसरेणु प्रचक्षते ॥

इति **याज्ञवल्क्योक्तौ** त्रसरेणोः प्राथम्याभिधानमसंगतं स्यादिति वाच्यम्; प्रत्यक्षाभिप्रायत्वात्। एतेन "नातीन्द्रियत्वादणूनाम्" इति सूत्रे जालान्तर्गतमिहिरमरीचिमन्तरेति शेष इति कल्पनमप्यनादेयम्। इत्यास्तामप्रकृतमेतत्॥

भेदाभेदवादोऽपि प्रमाणशून्यः॥ ननु गुणादिकं गुण्यादिभिन्नं समानाधिकृतत्वादिति चेत्, मैवम्; समानाधिकृतत्वादिति हेतोर्हि गुणादौ गुण्यादिभेदधीप्रतिबन्धकप्रमाविषयत्वादित्यर्थः। तथा च स्वरूपासिद्धिः। घटो नील इत्यादौ नीलविशिष्टाभेदस्यैव विषयतया नीलगुणभेदस्य विषयत्वे मानाभावात्। न च विनिगमकाभावः तन्मते,नीले घटप्रतियोगिकौ भेदाभेदौ घटे च नीलप्रतियोगिकौ भेदाभेदौ, नीले भेदासमानाधिकरणो नीलभेदाभावः, घटे च तादृशो घटाभेदः

स्वीकार्य इति षट्। मम तु घटे नीलप्रतियोगिको नीले च घटप्रतियोगिको भेद इति द्वौ, घटे घटाभेदो नीले नीलाभेदश्चेति चत्वार एवेति लाघवात्। न च स्वस्मिन् स्वाभेदो न स्वीक्रियत इति वाच्यम्; अत्यन्ताभेदस्यावश्यमभ्युपगम्यत्वात्। अत्यन्ताभेदे विशेष्यविशेषणभावो नास्तीति वाक्यादेव तथावगमात्। अत एव घटो न घट इति प्रतीतेर्भ्रमत्वं घटे घटाभेदं विना घटभेदप्रत्ययस्य भ्रमत्वे बीजाभावात्। न च शब्दस्थले लक्षणायां गौरवम्, निरूढत्वेन तस्या अदोषत्वात्। गुणवचनानां मतुपो लुगिष्ट इत्यनुशासनाग्रहात्। अत एव तदुपगृहीतं "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति **नामानुशासन**मपि प्रमाणम्। यद्यपीदं विशेषणस्य विशेष्यसमानलिङ्गवचनलिङ्गत्वमित्युत्सर्गसिद्धार्थस्यैवानुवादो न तु गुणविशिष्टपरत्व एव शुक्लादीनां तत्समानलिङ्गत्वं न तु गुणमात्रपरत्वेऽपीत्येतदर्थम्। शुक्लं रूपमित्यादावतिप्रसङ्गात्। उक्तञ्च तथैव **मणिकारादिभिः**। तथापि शुक्लं रूपमित्यादावेतद्बाधेऽपि गुणविशिष्टपरत्वे विशेष्यसमानलिङ्गत्वमित्यस्मिन्नंशेऽनुवादत्वेऽपि च प्रत्ययस्य गुणविशिष्टाभेदमित्यत्र प्रमाणत्वे नैतदुपन्यासेन काप्यनुपपत्तिः। तद्वार्तिकव्याख्यायां **कैयटे**ऽप्युक्तम् "शुक्लादय एवाभिन्नरूपा गुणे तद्वति च द्रव्ये वर्तमाना गृह्यन्ते न तु, रूपादयः सर्वदा गुणमात्रवाचिनः" इति। एतेन नामान्तराविशेषणं शुक्लादिपदं पुंसि, नामान्तरविशेषणं तु तल्लिङ्गमित्येव तद्वतीत्यादेरर्थो न तु शुक्लादिगुणविशिष्टवाचकशुक्लादिपदानां तत्समानलिङ्गत्वमित्यपीत्यपास्तम्। नियमरूपत्वाभावेऽप्युक्तोत्सर्गसिद्धार्थानुवादत्वे बाधकाभावात्। गुणविशिष्टवाचकविशेष्यसमानलिङ्गका एवेति नियमे बाधकाभावाच्च। गुणविशिष्टवाचका एव पुंलिङ्गान्यलिङ्गभाज इति नियमे तु बाधकमस्तीति वैषम्यम्। अत एवानुवादोऽपि सार्थकः। विशेषणपदानां विशेष्यपदसमानलिङ्गकत्वमिति ह्युत्सर्ग एव न तु नियमः। अजहल्लिङ्गवचनेषु व्यभिचारात्। उक्तञ्च **मणिकृता** "भिन्नविभक्तिकयोरिव भिन्नलिङ्गयोरपि सामानाधिकरण्येन विशेषणविशेष्यभावाभावात्। अजहल्लिङ्गे तु लिङ्गनियमानुशासनान्न तथा" इति। एवञ्च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारविधिवाक्यापेक्षितस्य समुदायगते द्वित्वस्योपपादकम्। "य एव विद्वान् पौर्णमासीं यजते यावदुक्थेनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति वाक्यं पौर्णमासीयोगिनां त्रयाणां पौर्णमासी संज्ञा, अमावास्यायोगिनां च त्रयाणां दर्शसंज्ञेति प्रधानयागानां संज्ञाद्वयविधायकं सार्थकम्। तथा उक्तोत्सर्गस्य तु गुणवि-

शिष्टपरशुक्लादिशब्दांशे बाधाभावपरं तद्वतीत्यादिवाक्यं स्वार्थं प्रमाणमेव। अत एव घटादिपर्यायेऽप्येवं नोक्तम् । घटादिविशिष्टपरत्वे घटादिपदानां लक्षणायाः सांप्रतिकत्वेन तदनुरोधेनानुशासनप्रवृत्त्यनुपपत्तेः। मतुबाद्यन्तानाञ्च बाधकाभावादेव विशेष्यसमानलिङ्गत्वसिद्धेः।

ननु तथापि नैतत्सार्थक्यम्, गुणविशिष्टपरत्वेऽपि बाधकाभावादेवोत्सर्गप्रवृत्तिसिद्धेः। न ह्युत्सर्गस्यापि बाधकप्रमाणव्यतिरेके त्याग इति चेत्, सत्यम्; अन्यविशेषणत्वस्य मतुबादिसमभिव्याहारेण झटिति प्रत्ययात्, शुक्लादिपदानां तु घटवदादिपदानां मतुब्लोपाद्यनुसंधानविरहे तथात्वाभावात्। मतुपश्च लोपावश्यकतया श्रूयमाणत्वाभावात् । तदुक्तार्थेऽपि वैयर्थ्यप्रसंगसत्वाच्च। एतेन "गुणवचनेभ्यो मतुपो लुगिष्टः" इत्यनुशासनमपि द्रव्यविशेषणम्। शुक्लादिपदं विशेष्यसमानलिङ्गकमित्येतन्मात्रपरमित्यप्यपास्तम्। द्रव्याविशेषणं तु पुंल्लिङ्गमेवेत्यत्र तात्पर्यस्य वाच्यतया शुक्लं रूपमित्यत्रातिप्रसंगात्। न च यथाश्रुत एवेत्येव तात्पर्यम्, वैयर्थ्यस्योक्तत्वात्। न च गुणविशेषणतायामेव पुंस्त्वमित्यत्र तात्पर्यम्, शुक्लो घट इत्यादावप्रसगात् मतुब्लोपविधानवैयर्थ्यापत्तेः। शब्दानुशासनस्य क्वचिदर्थांशे तात्पर्यस्यैव बलवद्बाधकेनान्यथाकरणस्य सर्वसम्मतत्वात्। "अर्थानादेशनात्" इति समर्थसूत्रे वार्तिकदर्शनात्। उष्ट्रमुख इत्यादेः प्रथममुखपदलोपांशे तात्पर्याभावेऽपि लक्षणायाः तादृशार्थपरत्वस्य **कैयटा**दावुक्तत्वाच्च। तस्मात्—

कूटज्ञदुर्दुरूढस्य धार्ष्ट्यं मापृच्छनुशासनम्।
इति वाचांभवाचार्यः संध्या वन्ध्यास्तु ते पठन् ॥ इति।

यत्तु स्वरविशेषार्थं मतुपो लोपानुशासनमिति, तदसत्; भाष्यादिविरोधात्। अव्यतिरेकात् सिद्धमित्यनेन गुणगुणिनोः सोऽयमित्यभेदाध्यवसायादुत्पत्तिरेव मतुपो नास्तीति लोपवैयर्थ्यमभिधाय दृश्यते व्यतिरेकः। तद्यथा वस्त्रस्य शुक्ल इति ग्रन्थेन तन्निरासात्। तथा च **कैयटः** "गुणा पुनरुपायिनश्चापायिनश्चेति द्रव्याद् भेदेन प्रतीयन्ते शब्देन चाभिधीयन्ते" इति। तथा च लिङ्गवचनसिद्धिरित्यपि व्याख्यातम्। यस्माद्द्रव्ये वर्तमानाः शुक्लादयो यौगिका न तु पञ्चालादिवद्रूढशब्दास्ततो द्रव्यगतलिङ्गसंख्योपादायिनो रूढित्वे तु नियतलिङ्गसंख्यत्वं सर्वत्र वा सर्वलिङ्गसंख्यत्वं प्रसज्येतेति, स्वरे तु न विशेषणान्तेत्यत्र "घृतादीनाञ्च" इत्यन्तोदात्तस्यैव लिखितत्वात्। "एकादेश उदात्तेनोदात्त" इति वचनात्। एवं स्थिते नीलाभेदस्य घटो नील इत्यादौ विषयतायां किं मानम्?

यत्तु तन्मतप्रस्तावे भेदाभेदयोः कथमेकनिष्ठत्वेन प्रतीतिरित्याशङ्क्य **वाचस्पत्ये** उक्तम् "विरुद्धमिति नः । क्व संप्रत्ययो यन्न प्रामाणिकम् । प्रकृते च प्रामाणसत्वान्न विरोधप्रत्ययः । सामानाधिकरण्यप्रत्यये हि भेदाभेदौ भासेते" इति, तच्चिन्त्यम्; नीलाभेदप्रत्यये स्वानुभवस्यैव मानत्वेनोपन्यासानर्हत्वात् । मया चाभियुक्तान्तरानुभवस्य गुणविशिष्टाभेदप्रत्यये मानत्वोक्त्या वैषम्यात् । अत एव घटे नील इत्यादिकमाश्रयाश्रयिभावावगाहिज्ञानं **वैशेषिकशास्त्र**-वासनामात्रमूलम्, न तु लोकानां स्वरसवाहीति परास्तम् । वैपरीत्यस्यैवोक्तत्वात् । नीलाभेदावगाहिप्रत्यये मानस्य तैरेवानुक्तत्वात् । नहि **व्याकरणकारा** अपि तद्वासनामात्रेण कार्यं विदधति । अत एव **मोक्षधर्मे नारदासितसंवादे**—

उपपत्त्या गुणान्विद्धि पञ्चपञ्चसु पञ्चधा ।
रूपं शब्दो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः ॥

तत्रैव **याज्ञवल्क्यजनकसंवादे**ऽपि—

शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च ।
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ॥ इति ।

भवदीयानां कारिकापि—

द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ।
मायायां दुर्घटत्वञ्च स्वतः सिद्ध्यति नान्यतः ॥ इति ।

एवं वादिप्रतिवादितटस्थानामनुभवसिद्धेऽर्थे वासनामात्रमूलत्वम्, स्वकल्पितार्थे च प्रामाणिकत्वमिति । अहो महत्साहसम् । अत एव घटो रूपवानित्यादिरेव प्रत्ययः प्रयोगश्च । रूपत्वरसत्वादिव्याप्यजात्याक्रान्तगुणवाचकपदोत्तरमतुप एव लोपविधानात् । रूपं घट इत्यादि प्रयोगाभावात् । अत एव तादृशलक्षणाप्रयुक्तलक्षणेति सर्वसम्मतम् । उक्तं **चाभियुक्तैः** "काश्चिन्नैवाप्रयोगतः" इति । न च तादृशप्रयोगस्यासाधुत्वेऽपि रूपघटयोरभेदधीर्जायत एवेति वाच्यम्; मानाभावात् । अत एव "रसादिभ्यश्च" इतिसूत्रे रसवान् रूपवानित्यादौ मतुब्विधानं तत्सूत्रस्य नियमार्थत्वनिरासार्थम् । "उर्वशी वै रूपिण्यस्मरसास्पर्शिको वायुः" इति च **भाष्ये**ऽप्युदाहृतम् । अत एव **वामनपुराणे**—

"पृथ्वी सगन्धा सरसास्तथापः, स्पर्शी च वायुर्ज्वलितञ्च तेजः ।" इति,

एतेन नीलत्वादिनैव घटादेरभेदः न तु रूपत्वादिनेत्यपि निरस्तम् ।

व्यापकधर्मस्य केवलभेदप्रतियोगितावच्छेदकत्वे व्याप्यधर्मस्य तदभेदप्रतियोगितावच्छेदकत्वानुपपत्तेः । एतेनाधारतावच्छेदकतानवच्छेदकरूपावच्छिन्नसंबन्धेन गुणाद्यंशे प्रमाप्रकारकत्वादिति हेत्वर्थव्याख्यनमप्यपास्तम्, समवायस्य आधारतावच्छेदकतायास्तदवच्छेदकरूपेणैवोक्तस्थले संबन्धस्य सिद्धेः, प्रमाणस्य चोक्तत्वात् । सामानाधिकरण्यमानं हि धर्मद्वयस्य एकाधिकरणनिष्ठत्वेन प्रतीतिः । तत्र च गुणनिष्ठप्रकारतायां संसर्गविधया भासमानस्य संबन्धस्याधारतावच्छेदकतानवच्छेदकरूपावच्छिन्नत्वमित्युक्तेर्व्याहतत्वात् ।

वस्तुतस्तु नीलो घट इत्यत्राभेदस्य संसर्गत्वमुभयसिद्धमेव । प्रकारता तु गुणस्य तद्विशिष्टस्य वेत्यत्र परं विवादः । तत्र भेदस्य विषयतायां मानाभावः प्रकारत्वविशेष्यत्वाभ्यां तस्याननुभवात् । न च भेदसमानाधिकरणाभेद एव संसर्गः, अनुभवविरोधात् । अत एव नीलभिन्नो नीलाभिन्नश्चेति द्वयोः पृथक् सांसर्गिकविषयतयापि न निर्वाहः । तादृशशाब्दस्थले बोधावृत्तेः स्वीकर्त्तुमशक्यत्वाच्च ।

यत्तु विशिष्टबुद्धिमात्रे विशेषणस्य विशेष्ये भेदसमानाधिकरणः संबन्धो विषय इति कल्पनमावश्यकम्, अन्यथा तद्घटविशेष्यकसंयोगसांसर्गकतद्घटप्रकारकज्ञानस्य प्रमात्वापत्तेः । उक्तरीत्या तु न प्रमात्वम्, तद्घटे तद्घटसंयोगसत्त्वेऽपि तस्य भेदसमानाधिकरणत्वाभावात् । न च तद्घटसंयोगप्रतियोगिनं पटादिमादाय संयोगस्य भेदसामानाधिकरण्यमस्त्येव, उभयवृत्तेः संयोगस्यैक्यादिति वाच्यम्; घटभेदोपलक्षिताधिकरणवृत्तित्वविशिष्टत्वं हि संयोगस्य भेदोपलक्षितत्वम्, तत्राधिकरणांशे भेद उपलक्षणतयैव न विशेषणतया, उक्तवृत्तित्वं तु संयोगांशे विशेषणतयैव । न च घटभेदोपलक्षितपटवृत्तित्वविशिष्टसंयोगो घटे भवितुमर्हति, बाधितत्वात् । अतो न तद्धियः प्रमात्वमिति, तच्चिन्त्यम्; विशेष्ये स्वरूपसत एव विशेषणभेदस्य नियामकत्वोपपत्त्या तद्भानकल्पनस्य प्रमात्वघटकत्वस्य चायुक्तत्वात् ।

यत्त्वेवं सति प्रमात्वं पारिभाषिकमेव स्यात् । प्रमापदस्य प्रकृष्टज्ञानं मुख्यार्थः, प्रकर्षश्चाज्ञाताबाधितविषयकत्वम्, तच्च वस्तुत उक्तज्ञानेऽप्यस्तीति तस्य प्रमात्वमेव स्यात् । भ्रमपदस्यापि प्रमापदार्थविपरीतार्थकतया बाधितविषयकज्ञानार्थकत्वाद् भ्रमत्वमपि मुख्यं न स्यात् । भेदस्य विषयत्वे तु तद्भेदस्य तत्र बाधितत्वात्तदवगाहिन उक्तज्ञानस्य भ्रमत्त्वोपपत्तेरिति, तदसत्; तद्वति तत्प्रकारकत्वमेव हि न्यायमते मुख्यः प्रमापदार्थः । स्वतः प्रामाण्यवादेऽपि तस्यैव स्वतोग्राह्यत्वस्वीकाराच्च । विशेष्यावृत्त्यप्रकारकत्वादेर्व्यवसा-

यानुल्लिखितार्थघटितत्वेन स्वतोग्राह्यत्वविप्रतिपत्तिविषयत्वं नास्तीति तत्र मणिकारादिभिर्निरूपितत्वात्। एवमज्ञाताबाधितार्थविषयकत्वमपि न प्रमापदमुख्यार्थः, न्यायसाम्यात्। स्वतोग्राह्यत्वविप्रतिपत्तिविशेष्यस्यैव तत्त्वेन मीमांसकैरप्यवश्यमभ्युपगम्यत्वात्। तथा च तद्घटस्य यत्र विशेष्यतया विशेषणतया च भानं संयोगस्य च संसर्गतया तत्र न प्रमात्वापत्तिः विशेषणाभाववद्विशेष्यकत्वात्। यत्र तु तद्घटस्य विशेष्यत्वं तद्घटसंयोगस्य च प्रकारत्वं समवायस्य च संसर्गत्वम्, तस्य प्रमात्वमिष्टमेव। तद्घटनिरूपितसंयोगस्य तद्घटे सत्त्वात्। अन्यथा संयोगस्य व्यासज्यवृत्तित्व एव प्रमाणस्य दौर्लभ्यापत्तेः। अत एवालोकनिरूपितसंयोगस्यालोकेऽपि सत्त्वाच्चाक्षुषत्वावच्छिन्ने तत्संयोगहेतुतायां न व्यभिचार इति **प्राञ्चः**। नहि ज्ञानस्य भ्रमत्वेनोपपादनेऽपि तत्संयोगस्य तदवृत्तित्वे उक्तहेतुत्वं सुसाधम्। वस्तुगर्भत्वात्।

इदञ्च वस्तुगतिमनुसृत्योक्तम्। अज्ञाताबाधितार्थविषयकत्वस्य प्रमापदमुख्यार्थत्वेऽपि वस्तुत एव बाधाभावो विवक्षितो न तु बाधाभावत्वादेरपि प्रकारत्वेन भानम्। न वा भ्रमे बाधितत्वेन ज्ञानं सर्वानुभवविरोधात्। एवञ्च भेदस्याविषयत्वेऽपि संयोगेन स्वस्य स्वस्मिन् बाधितत्वात्तादृशज्ञानस्य बाधितविषयकत्वमुपपन्नमेव। न च भेदाभाववति भेदप्रकारकत्वमेवोक्तज्ञानस्य भ्रमत्वम्, तच्च भेदज्ञानं विना नेति वाच्यम्; भेदस्य प्रकारतया भानस्य प्रकृते तैरप्यनङ्गीकारात्। संयोगसंबन्धावच्छिन्नप्रतियोगिताकतद्घटाभाववद्विशेष्यकत्वावच्छिन्नसंयोगावच्छिन्नतद्घटप्रकारताशालितयोक्तज्ञानस्यभ्रमत्वसौलभ्यात्। संयोगादिसंबन्धश्च भेदनियत इत्यन्यदेतत्। न तु विशिष्टबुद्धौ भेदस्य विषयत्वमावश्यकम्, मानाभावात्। अत एव तादात्म्यसंबन्धेन तद्घटे तद्घटप्रकारकं ज्ञानं प्रमैव। येन संबन्धेन यत्र यन्नास्ति तेन संबन्धेन तत्र तत्प्रकारकस्य तत्र तत्संसर्गप्रकारकस्यापि वा ज्ञानस्यैव भ्रमत्वात्।

यत्तु न ह्यत्यन्ताभेदे संबद्धता संभवति, घटो घट इत्यादि प्रत्ययाभावादिति, तन्न; घटे घटात्यन्ताभेद इत्युक्त्वा तत्र तत्तादात्म्यं नास्तीत्युक्तेर्व्याहतत्वात्। भेदनियतसंबन्धस्यैवात्यन्ताभेदेऽनुपपत्तेः। घटो घट इति प्रत्ययस्य च संयोगादिसांसर्गकस्यैव प्रमात्वानभ्युपगमात्। न चैवं घटो घट इति शाब्दबोधोऽपि स्यादिति वाच्यम्; उद्देश्यतावच्छेदकरूपेण विधेयत्वे निराकाङ्क्षत्वात्। विरूपोपस्थितयोरेवाभेदान्वयनियमात्। अत एव घटो घटभिन्नो नेति शब्दाद भेदप्रकारको बोधो भवत्येव। उद्देश्यतावच्छेदक-

भिन्नरूपेण विधेयावगाहित्वात् । न हि घटो घट इति तादात्म्यसंसर्गकज्ञानस्य भ्रमत्वं स्वीकृत्याप्युक्तशाब्दापत्तिर्वारयितुं शक्यते, प्रमात्वाभावेऽपि शाब्दमात्रस्य दुर्वारत्वात् । शाब्दत्वस्य प्रमात्वव्याप्यभावादिति न किंचिदेतत् ।

यत्तु त्वन्मते घटो घट इति शाब्दाभाव आकाङ्क्षाव्यतिरेकप्रयुक्तः । मन्मते योग्यताज्ञानव्यतिरेकप्रयुक्त इति लाघवमिति, तदत्यन्तमसत्; आकाङ्क्षाया हि त्रयो भागाः । एकवाक्यताभिप्रायः, समभिव्याहारोऽननुभावकत्वं चेति । तत्रात्यन्तप्रतिबन्धकाभावतया स्वरूपसदेव आद्ये । द्वयन्तु ज्ञानं कारणमिति निष्कर्षः । तत्र फलतः तद्घटपदस्य तद्घटपदं व्यतिरेकप्रयुक्तान्वयाननुभावकत्वाभावप्रयुक्तः शाब्दाभाव इति प्रकृतपर्यवसानान्न गौरवम् । योग्यता तु ज्ञातैव कारणम् । स्वयं बहुविधा गुरुशरीरा चेति तदभावस्य प्रयोजकत्व एव गौरवम् । अयोग्यताज्ञानं प्रतिबन्धकम् । तदभावश्च स्वरूपसन्नेव प्रतिबन्धकाभावविधया हेतुरिति पक्षेऽपि तथैव । ज्ञानांशस्यापि प्रतियोगिकोटौ निवेशाधिक्याच्च येन रूपेण प्रतिबन्धकता तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनैव प्रतिबन्धकाभावस्य हेतुत्वात् ।

किञ्च अयोग्यताज्ञानमात्रस्य संशयसाधारणस्य ग्राह्यसन्देहपर्यवसितस्य प्रतिबन्धकत्वाभावादयोग्यतानिर्णयस्यैव बाधविषयाविरोधित्वम् । तत्र योग्यताघटकनानापदार्थानामभावांशे प्रतियोगितावच्छेदकतया निवेशः । तादृशभावाभावप्रकारकत्वे सति तादृशाभावप्रकारकत्वरूपनिर्णयस्य पुनरभावांशे प्रतियोगितया तद्घटकपदार्थानाञ्च प्रतियोगितावच्छेदकतया निवेश इति विपरीतमेव गौरवमिति यत्किञ्चिदेवैतत् । अपि च स्वस्मिन् स्वाभेदज्ञानस्य भ्रमत्वे स्वस्मिन् स्वाभेद एव प्रमाणं दुर्लभं स्यात् । नचेष्टापत्तिः; संबन्धाभावसिद्ध्यर्थं स्वस्मिन् स्वाभेदस्य स्वयमेवोक्तत्वात् । नापि यद्विशेष्यकयत्प्रकारकयत्संसर्गकशाब्दबोधो न भवति, तादृशं ज्ञानान्तरमपि न भवत्येवेति, भ्रम एवेति वा नियमः प्रामाणिकः । पुरुषविशेष्यकदण्डप्रकारकसंयोगसंसर्गकशाब्दबोधस्य बाधितत्वेऽपि तादृशचाक्षुषादेर्जायमानत्वात् प्रमात्वेन सर्वानुमतत्वाच्च । दण्डः पुरुष इति शब्दस्य संयोगसंसर्गकशाब्दे स्वरूपायोग्यत्वात् समानविभक्तिकनामार्थयोरभेदसंसर्गकशाब्दत्वमेव कार्यतावच्छेदकमिति नियमात् । दण्डपदस्य तत्संयोगलक्षणायां दण्डी पुरुष इति मत्वर्थप्रत्ययान्तत्वे दण्डसंयोगवानिति संयोगस्यापि पदोपस्थितत्वे वा संयोगस्य प्रकारत्वेनैव भासमानत्वात् । तत् किं घटो घट इति शाब्दस्य भावाभावचिन्तया प्रकृता-

नुपयोगात् ? प्रासंगिकत्वे तूत्तरमुक्त एव। तस्माद्भेदसमानाधिकरणत्वेनैव संबन्धो विशिष्टबुद्धिमात्रे भातीति नियमो व्यर्थो व्यभिचारी चेति सिद्धम्। अत एव केवलान्वयिस्थले प्रमेयत्वे प्रमेयत्वमित्यादौ.................भूतलवृत्तिघटाभाववृत्तिघटाभावयोरैक्यपक्षे घटाभावे घटो नास्तीत्यादौ तदन्यस्थलेऽपि च क्वचिदभेदेऽपि विशिष्टबुद्धिः। तत्र भेदभाने भेदाभाववद्विशेष्यकत्वेनाप्रमात्वापत्तेः।

यत्तु घटप्रतियोगिकाभावत्वस्य विशेष्यतावच्छेदकत्वे घटविरोध्यभावत्वं विशेषणतावच्छेदकम्, एकरूपेण विशेष्यत्वयोरसंभवादिति, तच्चिन्त्यम्; एकरूपेणोभयानुभवविरोधात्। अत एव प्रमेयत्वस्य प्रमाभेदेन नानाविषयतया एकविधप्रमेयत्वविशेष्यकमन्यविधप्रमेयत्वप्रकारकं च ज्ञानमित्यपास्तम्। ईश्वरज्ञानविषयत्वे ईश्वरज्ञानविषयत्वमित्यत्र तदसंभवात्। ईश्वरज्ञानस्य भेदाभावात्, अनङ्गीकारे च सर्वज्ञत्वविरोधात्। प्रमेयत्वस्यापीश्वरज्ञानविषयत्वात्मकत्वात्। अस्मदादिप्रमाविषयत्वस्य केवलान्वयित्वानुपपत्तेः। प्रमाया विषयभेदभिन्नत्वात्।

किञ्च उभयाभावस्यापि घटप्रतियोगिकतया घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य च तद्विरोधितयोक्तरूपेण विषयत्वे तज्ज्ञानस्याभ्रमत्वापत्तिः। घटविरोध्यभावत्वाभाववद्विशेष्यकघटविरोध्यभावप्रकारकज्ञानत्वात्। उभयाभावस्य घटविरोधित्वाभावात्। उभयाभावेऽपि हि घटात्यन्ताभावः स्वीकार्यो युक्तिसाम्यात्। अत एव तत्र घटविरोध्यभावत्वं न विशेष्यतावच्छेदकम्, विशेष्यावृत्तित्वात्। एतेन घटाभावस्तद्वानिति शाब्दबोधस्थल यद्रूपेण घटाभावपदाद् घटाभावोपस्थितिस्तेनैव तत्पदात्प्रतीतावपि सुबर्थैकत्वादिविशेषितरूपेणैव विशेष्यतेत्यपास्तम्। एकत्वविशिष्टघटाभावत्वस्य घटाभावपदादुपस्थितत्वे तत्पदेनाप्येकत्वांशमपहायैव घटाभावत्वेनैव तत्परामर्श इत्यत्र मानाभावात्। तच्छब्देन एकत्वावच्छिन्नघटाभावत्वेनैव तदुपस्थितौ बाधकाभावात्। न चान्यूनानतिरिक्तरूपेण विशेषणविशेष्यत्वानुपपत्तिरेव बाधिका, प्रकृतव्यभिचारेण तन्नियमस्यैव निरस्यमानत्वात्। नह्युक्तनियमो वेदबोधितो येन व्यभिचारस्थलेऽपि तद्बोधितं कारणं कल्पयित्वापि तत्परिहारः क्रियेत। यथा मङ्गलाभावस्थलीयसमाप्तौ जन्मान्तरीयमङ्गलकल्पनया व्यभिचारनिरासः। तत्र तद्धेतुत्वस्य वेदबोधितत्वात्। उक्तञ्च त्रिसूत्रीनिबन्धे "व्यभिचारस्तु आगमेतरप्रमाणगम्यं कारणत्वमपवदति" इति। प्रकृते तु तच्छब्देन एकत्वावच्छिन्नघटाभावत्वेन तदुपस्थापने बाधकान्तरमेव

वक्तव्यम् । तच्च नास्त्येव । घटाभावत्ववदेकत्वस्यापि धर्मितावच्छेदकत्वेन तत्पदजन्यायां घटाभावोपस्थितौ भानसंभवात् । पूर्वमुपस्थितेश्च साधकत्वात् । व्यभिचारस्थलेऽपि स्वकल्पितनियमानुरोधेन तत्परिहारस्य कर्तुं शक्यत्वे च व्यभिचारकथैवोच्छिन्ना स्यात् । एतेन तद्घटज्ञानस्य प्रमात्वसंयोगसंसर्गीयातद्घटनिष्ठा याः प्रतियोगिता तन्निरूपितानुयोगितावद्विशेष्यकसंयोगसंसर्गकतद्घटप्रकारकत्वम् । सा चानुयोगिता घटभिन्न एव स्वीक्रियते न तु घटे, साधकाभावात् । घटाभावस्थले तु विशेषणतासंबन्धीया घटाभावनिष्ठा या प्रतियोगिता तन्निरूपितानुयोगिता घटाभावेऽपि स्वीक्रियते । अनुभवस्य साधकत्वादिति समाधानाभासः परास्तः । उक्तरीत्यैव प्रमात्ववारणादनुयोगितावैलक्षण्ये मानाभावात् । न चोक्तवैलक्षण्यानङ्गीकारे तद्घटः संयोगसंबन्धेन तद्घटे कुतो नास्तीति वाच्यम्; संयोगसंबन्धाद्यवच्छिन्नवृत्तेर्भेदनियतत्वात् । भूतलं घटवदित्यादिज्ञाने तत्कल्पकस्य भेदस्य सर्वसिद्धत्वेन विनिगमकसत्त्वाच्च । अनुयोगिताविशेषकल्पनेऽपि भेदस्यैवोपजीव्यत्वाच्चेति दिक् ।

स्यादेतत् । संयोगेन घटो घट इति लोकानामननुभवात्तद्बलादेव नीलो घट इत्यादौ भेदसिद्धिः । न च तथापि विशेषणविशेष्ययोस्तद्व्यक्तित्वेनैव भेदापेक्षा नतु विशेष्यताविशेषणतावच्छेदकान्तर्भावेन, एकघटविशेष्यकघटान्तरप्रकारकसंयोगसंसर्गकघटो घटवानिति ज्ञानस्यानुभवसिद्धत्वात् । तथा च नीलत्वघटत्वाभ्यां भेदेन भानमिति वाच्यम्; घटो द्रव्यमित्यत्र तद्व्यक्तित्वेनापि भेदाभावात् । विशेष्यविशेषणतावच्छेदकरूपाभ्यामेव भेदस्यापेक्षितत्वात् । घटो घटवानित्यत्रापि पूर्वक्षणवृत्तित्वादिविशिष्टत्वेन कथंचिद् भेदकल्पनादिति चेत्, मैवम्; अभेदान्यसंसर्गकबुद्धौ तद्व्यक्तित्वाभ्यामुभाभ्यां धर्माभ्यामेकधर्मिबोधकत्वरूपसामानाधिकरण्यसंसर्गकबुद्धौ च विशेष्यविशेषणतावच्छेदकयोर्भेदो भेदाभावरूपाभेदसंसर्गकबुद्धौ च विशेष्यविशेषणतावच्छेदकयोरैक्यमपेक्षितमिति नियमात् । भूतलं घटवदित्यादावच्छेदकभेदसत्त्वेऽपि तद्व्यक्तित्वाभ्यामपि भेदसत्त्वात् । घटो घटवानित्यादाववच्छेदकभेदाभावात्तस्य तदनियामकत्वात् । उक्तसामानाधिकरण्यं च गुणगुण्यादिस्थल एव । तत्र च नीलत्वघटत्वयोर्भेदसत्त्वात् । द्रव्यं घट इत्यत्रापि द्रव्यत्वघटत्वयोर्भेदात् । घटो घट इत्येकविशेष्यविशेषणकज्ञाने च न संयोगादिर्न वा उक्तरूपं सामानाधिकरण्यं संसर्गः, किन्तु अभेदमात्रम् । तच्च विशेष्यविशेषणतावच्छेदकभेदाभावादत्यन्ताभेद इति गीयते । तथा च अभेदं [द] संसर्गकज्ञानं

द्वेधा विशेष्यविशेषणतयोर्भिन्नधर्मावच्छिन्नत्वे एकधर्मावच्छिन्नत्वे च। आद्यं सामानाधिकरण्यप्रत्ययः, अन्त्यमत्यन्ताभेदप्रत्यय इति विभागः। यः संबन्धो यादृशयोः सम्बन्धिनोः प्रमाणसिद्धस्तत्र तादृशावेव संबन्धिनावपेक्षिताविति तु रहस्यम्। तथाहि-संयोगे प्रतियोग्यनुयोगिनोरवच्छेदकभेदस्तदभेदो वा नियमेन नापेक्षितः किन्तु व्यक्तिभेदमात्रम्, सामानाधिकरण्यसंबन्धे च प्रतियोग्यनुयोगितावच्छेदकभेदः, अत्यन्ताभेदसंबन्धे च तद्व्यक्तेर्विशेष्यविशेषणतावच्छेदकयोश्च भेदाभाव इति।

यत्तु प्रतियोग्यनुयोगिनोर्भेदाग्रहे संसर्गाग्रहाद् भेदभ्रमे संसर्गभ्रमाच्च संसर्गज्ञाने भेदज्ञानं कारणम्। स्वरूपसत्कारणस्य स्वभ्रमेण कार्यानुपधायकत्वात्। अत एव योग्यताभ्रमेण शाब्दभ्रमोत्पत्त्या योग्यताज्ञानमेव शाब्दे हेतुरङ्गीक्रियते। तथा च घटो द्रव्यमित्यादौ भेदज्ञानं प्रथममवश्यं वाच्यम्। तस्य लाघवात् प्रमात्वमेव युक्तम्। भ्रमत्वस्य गुरुत्वात्तत्कारणदोषादिकल्पनापत्तेश्च। भ्रमत्वकल्पनेऽपि सिद्धान्ते प्रातिभासिकभेदसिद्धेश्च संसर्गप्रतियोग्यनुयोगिनोस्तत्त्वावच्छेदकरूपाभ्यां भेदस्यावश्यकत्वादिति, तदसत्; ययोर्भेदज्ञानं संसर्गज्ञानेऽपेक्षितं तद्भेदस्य सत्त्वात्, यथा द्रव्यं घट इत्यत्र द्रव्यत्वघटत्वयोः। तदवच्छिन्नभेदत्वस्य त्वनुपयुक्तत्वात्। न त्वस्य संसर्गः प्रत्युत विशेष्यैक्ये विशेषणतावच्छेदकभेदस्यैव तत्रापेक्षितत्वात्, प्रतियोग्यनुयोगिभेदज्ञानकार्यतावच्छेदकत्वकल्पने मानाभावात्। तद्घटस्तद्घट इत्यादावुक्तरीत्या व्यभिचारात्। नाप्यत्यन्ताभेदान्यसंसर्गज्ञानत्वं तत्कार्यतावच्छेदकम्, द्रव्यं घट इत्यादौ व्यभिचारात्। एवञ्च घटो द्रव्यमित्यत्र द्रव्यत्वघटत्वाभ्यां घटभेदज्ञानस्यैवानपेक्षितत्वे कुतस्तस्य प्रमात्वादिकल्पने चर्चा।

यत्तु प्रातिभासिकभेदसिद्धिरिति; तत्रापि वक्ष्यामः।

यत्तु द्रव्यप्रतियोगिकघटानुयोगिकत्वेनात्राऽभेदभानात्, द्रव्यघटयोश्च त्वद्रीत्याभेदाभावादतिरिक्तप्रतियोगित्वानुयोगित्वकल्पनापत्तिः। मन्मते त्वौपाधिकभेदस्यैव तद्रूपत्वान्न तथेति, तदसत्; विशेषणविशेष्यतावच्छेदकभेदस्यैव प्रतियोगित्वानुयोगित्वकल्पनया निर्वाहात्। न च तयोर्विशेषणविशेष्यवृत्तित्वनियमादुक्तभेदस्य च तत्त्वावच्छेदकवृत्तित्वेन तन्निष्ठप्रतियोगित्वानुयोगित्वानुपपादकत्वान्नैवमिति वाच्यम्; तथापि घटवृत्तेर्द्रव्यत्वभेदस्य प्रतियोगित्वं घटत्वभेदस्य चानुयोगित्वमिति कल्पनोपपत्तेः। त्वन्मते तूपहितभेदं कल्पयित्वा तस्य प्रतियोगित्वानुयोगित्वकल्पने गौरवात्। उक्तव्यवस्थान्यथानुपपत्त्यन्यप्रमाणेन द्रव्यत्वघटत्वाभ्यां घटभेदस्यासिद्धत्वात्।

यत्तु विशेष्यताविशेषणतावच्छेदकयोर्यो भेद उभयसिद्धः स एव तदुपहितभेदः, अत एव द्रव्यत्व भेदस्य द्रव्यत्व इव स्वोपहिते द्रव्येऽप्यभावान्न द्रव्यं द्रव्यमिति विशिष्टधीः। एवं घटत्वांशेऽपि योज्यम्। भेदप्रतियोगितापि ततदुपहितयोरेकैव लाघवात्, एवं भेदानुयोगितापि। तथा च द्रव्यत्वं न घटत्वमित्यत्र भासमानस्य भेदस्यैव द्रव्यं घट इत्यनुभवे द्रव्यत्वानुयोगिकतया घटत्वतदुपहितप्रतियोगिकतया च भानम्। औपाधिकभेदस्थले तथैवानुभवादिति नातिरिक्तभेदकल्पनमिति, तदप्यसत्; मन्मतेऽपि विशेष्यताविशेषणतावच्छेदकयोर्भेदस्यैव स्वावच्छिन्नाभेदबोधे प्रतियोग्यनुयोगित्वरूपस्वोपपत्तेः। घटत्वं न द्रव्यत्वमितिवद् घटो न द्रव्यमित्यस्याप्यापत्तेश्च।

यत्तु नञ्भेदादिपदाभिलप्यमाने ज्ञाने तादात्म्यविरोधित्वविशिष्टभेदस्यैव विषयत्वम्, उपहितभेदस्य तु न तादात्म्यविरोधित्वम्। अत एव वृक्षे कृष्णसंयोगो नास्तीत्यादिज्ञानेऽपि कृष्णसंयोगविरोध्यत्यन्ताभावस्यैव विषयत्वम्। नञादिपदस्य विरोध्यभावबोधकत्वेन तादृशाभावज्ञानस्यैव तेनाभिलापात्। अत एवोक्तज्ञानानन्तरं घटो द्रव्यमिति न धीः। प्रतियोगिसामानाधिकरण्यरूपाव्याप्यवृत्तित्वविशिष्टसंयोगादिविशिष्टधीविरोधित्वम्। अत एव मूले वृक्षे न कृष्णसंयोग इति धीरपि मूलवृक्षे कृष्णसंयोग इति ज्ञाने नियमेन विरोधिनी। एतेन विशिष्टकेवलयोर्भेदे विशिष्टसत्ता सत्ता नेति प्रमा स्यादिति **शिरोमण्युक्तमपि** परास्तमिति, तदप्यसत्; द्रव्यत्वघटत्वयोर्भेदस्य यथा तयोरभेदे तद्भेदबुद्धेश्च तदभेदबुद्धौ विरोधित्वम्, तथा तदुपहितभेदस्यापि स्यादेव। उपहितभेदस्य प्रतियोगिनोस्तादात्म्ये विरोधित्वं नास्त्युपाधिभेदस्य त्वस्तीत्यभिधाने च उपाधिभेदान्योपहितभेदकल्पना स्वहस्तितैव स्यात्। विरुद्धस्वभावयोरैक्यायोगात्। तदुक्तम्—अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति। नापि प्रतियोग्यनुयोग्यतयोः प्रकृते ऐक्यसंभवः। प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेदस्यावच्छेदकलक्षणे **दीधित्यादिसर्वसम्मतत्वात्**। घटत्वभेदस्य हि प्रतियोगिता घटेतरावृत्तित्वे घटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वे च सति समवेतत्वरूपघटत्वत्वावच्छिन्नाघटभेदस्य प्रतियोगिता तु घटत्वेन स्वरूपत एवावच्छिन्नेति भेदात्। अत एव द्रव्यं घट इत्यत्र द्रव्यत्वत्वघटत्वत्वाभ्यां द्रव्यत्वघटत्वयोरनुपस्थितत्वाद्द्रव्यत्वानुयोगिकतया घटत्वतदुपहितप्रतियोगिकतया च भेदभानमप्यसंभवदुक्तिकमेव।

यत्तु इतरविशेषणीभूते प्रतियोग्यादाववच्छेदकभानस्यानावश्यकत्वादिति, तन्न; प्रतियोगितावच्छेदकरूपेण प्रतियोग्यनवगाह्यभावत्वप्रकारकप्रत्यक्षानुपपत्तेः। प्रतियोगिमिश्रिताभावशाब्दादेरपि प्रतियोगितावच्छेदकावगाहित्वनियमाच्च। इतरविशेषणीभूत इत्यस्य च कोऽर्थः? किं भेद विशेषणीभूत इति, अद्रव्यविशेषणीभूत इतिवा। नाद्यः, तत्रैवावच्छेदकावगाहनस्यावश्यकत्वात्। नान्त्यः, द्रव्यांशे जातेर्निरवच्छिन्नप्रकारतासंभवेऽपि भेदांशेप्रतियोगितासंबन्धावच्छिन्नप्रकारताया निरवच्छिन्नत्वानुपपत्तेः। तथाचोक्तं शब्दपरिच्छेदे "समवायस्वाश्रयतादात्म्याभ्यामेव जात्यंशे निरवच्छिन्नप्रकारताकमते**र्मिश्रादि**सम्मतत्वाद्" इति। अन्यथा पटे घटो नेत्यादौ घटनिष्ठविशेष्यतानिरूपितसमवायसंसर्गकघटत्वांशे निरवच्छिन्नप्रकारताकघटत्वोपस्थित्या, अत्यन्ताभावांशेऽपि प्रतियोगितासंबन्धेन निरवच्छिन्नयैव प्रकारतया घटत्वस्य भानं स्यात्। न चेष्टापत्तिः; घटस्यैव पटवृत्तित्वाभावबोधात्। घटत्वे पटवृत्तित्वाभावस्य पटे घटत्वात्यन्ताभावस्य वा तत्राविषयत्वात्। द्रव्यं घट इत्यादि शाब्दस्थले च इतरविशेषणत्वेनोपस्थितस्य द्रव्यत्वघटत्वादेरनुपयोगित्वप्रतियोगित्वाभ्यां भेदान्वयस्यैवानुपपत्तेः। भेदस्यैव पदानुपस्थितत्वेन तदन्वयशङ्काया एवानुपपत्तिः।

ननु "यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेतधर्मसमवायित्वं वा वक्तव्यम्" इति **दीधिति**वाक्ये भेदप्रतियोगितावच्छेदकीभूतानुभवत्वत्वघटकत्वेनानुभवान्यासमवेतत्वस्योपस्थित्या अनुभवान्यासमवेतत्वांशस्य च वैयर्थ्येन प्रतियोगितावच्छेदककोटावप्रवेशादनुभवत्वान्येत्यस्य सकलानुभवसमवेतत्वावच्छिन्नप्रतियोगिताकान्योन्याभावाश्रयेत्यर्थपर्यवसानात्तत एव ज्ञानत्वादिवारणेऽनुभवान्यासमवेतेति पृथगुपादानवैयर्थ्यमित्याशङ्क्य "भेदोपरि स्वरूपत एवप्रतियोगितासंबन्धेनानुभवत्वं प्रकारः" इति व्याख्यातम्। तथा चात्रापि भेदप्रतियोगित्वानुयोगित्वे निरवच्छिन्नयोरेव द्रव्यत्वघटत्वयोः संभवाद् एवेति चेत्, सत्यम्; तत्रानुभवत्वजातेः पदोपस्थितत्वेन कथंचित्संभवेऽपि प्रत्यक्षादौ तदसंभवात्। वस्तुतस्तत्रापि न तथा प्रमाणम्। अत एव तत्र कैश्चि**ट्टीकाकारैः**"अनुभवान्यासमवेतत्वे सति सकलानुभवसमवेतत्वावच्छिन्नप्रतियोगिताकभेदस्य सकलानुभवसमवेतत्वावच्छिन्नप्रतियोगिताकभेदस्य न भिन्नत्वात्, सत्यन्तविशिष्टावच्छिन्नप्रतियोगिताकभेदस्य च ज्ञानत्वेऽपि सत्त्वात् तद्वारणाय विशेषण-

न्तरसार्थक्यम्। अखण्डाभावतया च न वैयर्थ्यमित्युक्तम्। **अन्यैस्त्वनुभव**-शक्यतावच्छेदकत्वेनेवानुभवत्वीया प्रतियोगितावच्छिद्यते" इत्युक्तम्।

ननु तथाप्यत्र समवायसंबन्धावच्छिन्नद्रव्यत्वघटत्वनिष्ठविशेष्यतानिरूपिताया निरवच्छिन्नत्वमुभयसिद्धम्। तस्या एव प्रतियोगित्वानुयोगित्वे प्रत्यपि तादृशं विषयत्वं संभवत्येव। अत एव पर्वतो वह्निमानित्यत्र पक्षतावच्छेदकावच्छेदेनानुमितावच्छिन्नत्वसंबन्धेन साध्यनिष्ठविशेष्यतानिरूपिता समवायेन पक्षनिष्ठविशेष्यतानिरूपिता च पक्षतावच्छेदकनिष्ठा प्रकारता एकैव स्वीक्रियते। अत एव पर्वतः पर्वतत्वीयवह्निमानित्यनुमितेराकारः। पर्वतत्वीयवह्निव्याप्यधूमवान्पर्वत इत्यादिपरामर्शजन्यानुमितावुभयविशेष्यतानिरूपितप्रकारतयोर्भेद एव तथात्वादिति चेत्, मैवम्; तत्रापि विवादात्। अनुमितेरवच्छेदकत्वावगाहित्वस्य प्रकारान्तरेणोपपादितत्वात्। अत एव कर्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवचनत्वमित्यस्य व्याख्याने सामानाधिकरण्यमात्रस्य भावप्रत्ययार्थत्वे इतरविशेषणत्वेनोपस्थितयोर्नीलत्वोत्पलत्वयोः प्रत्ययार्थान्वयो न स्यादित्यादिकं शङ्कन्ते। वस्तुतस्तु द्रव्यत्वं न घटत्वमित्यत्र भेदप्रकारतानिरूपिताद्रव्यत्वविशेष्यताद्रव्यत्वत्वावच्छिन्ना तत्र द्रव्यतानिरूपिता घटत्वप्रकारता च घटत्वत्वावच्छिन्ना। तत्र द्रव्यं घट इत्यत्र द्रव्यत्वानुयोगिकतयाभानं भेदस्य न संभवति। जातिनिष्ठाविशेष्यत्वस्य निरवच्छिन्नस्यास्वीकारात्।

नन्वत्र रजतत्वमिदं रजतमिति ज्ञानयोः कारणतावच्छेदकैक्यनिर्वचनार्थम्, स्वरूपतः प्रकारत्वस्येव स्वरूपतो विशेष्यत्वस्यापि संभवादिति कैश्चि**च्छब्दालोकव्याख्यातृभि**रुक्तत्वाज्जातेरपि विशेष्यत्वं निरवच्छिन्नं स्वीक्रियत एवेति चेत्, न; तस्यापि सर्वानभिमतत्वात्। अतएवा**नुमानदीधितौ** व्यापकताज्ञानस्य व्यभिचारबुद्धिविरोधित्वाभावप्रदर्शनार्थमुक्तम् "वह्न्यभाववद्वृत्तिर्धूम इति ज्ञाने हि वह्नित्वं स्वरूपेण प्रतियोगित्वं तदनवच्छेदकत्वं च संसर्गमर्यादया भासते धूमसामानाधिकरण्याभावप्रतियोगितानवच्छेदकवह्नित्वमित्यत्र वह्नित्वत्वेन वह्नित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वविशिष्टभाव इति विषयविरोधिविरहात्" इति। आस्तां वा तथा कलहः तथापि द्रव्यत्वत्वस्य प्रकृते विशेष्यतावच्छेदकत्वमावश्यकम्। तथा सति यैव द्रव्यत्वं न घटत्वमित्यत्रानुयोगिता सैव घटत्वं न द्रव्यत्वमित्यत्र प्रतियोगितेति, तयोरैक्यकल्पनेन लाघवात्। न च भेदविशेष्यतानिरूपितप्रतियोगितासंबन्धावच्छिन्नजातिप्रकारताया उभयत्राप्यनवच्छिन्नत्वमेव स्वीक्रियते। तथा च द्रव्यत्वविशेष्यताया निरव-

च्छिन्नत्वेऽपि घटत्वेन द्रव्यत्वमित्यत्र प्रतियोगितायास्तदैक्यं संभवत्येवेति वाच्यम्; तथा सति द्रव्यत्वं घटत्वमित्यादिज्ञानस्य द्रव्यत्वं न घटत्वमित्यादि ज्ञानान्निवृत्त्यनुपपत्तेः। घटत्वप्रतियोगिकभेदप्रकारकत्वस्योभयत्वावच्छिन्न-भेदज्ञानसाधारण्येन तदभेदज्ञानप्रतिबन्धकतावच्छेदकानाक्रान्तत्वात्।

द्रव्यं घट इत्यत्र द्रव्यत्वत्वेनानुपस्थितद्रव्यत्वानुयोगिकतया घटत्वत्वे-नानुपस्थितघटत्वप्रतियोगिकतया घटत्वोपहितप्रतियोगिकतया च द्रव्यत्वं न घटत्वमित्यत्र भासमानो भेद एव प्रतीयत इति वक्तुमयुक्तम्, भानसाम-ग्रीवैषम्यात्। अनुभवस्यापि शपथमात्रमूलकत्वात्। एवं तयोरैक्यमपि नास्ति, अवच्छेदकभेदेनावच्छेद्यससंबन्धिकपदार्थस्य भेदोपगमात्। अन्यथा घट-पटादीनामप्यभावैक्ये सर्वविप्लवापत्तेः। एवमत्रापि पूर्वोक्तरीत्या प्रतियोगि-तावच्छेदकभेदात्, समवायस्वरूपसम्बन्धरूपप्रतियोगितावच्छेदकसंबन्ध-भेदाच्च द्रव्यं घट इत्यत्र भासमानभेदस्य द्रव्यत्वं न घटत्वमित्यत्र भासमान-भेदादभेद एवेत्यत्यन्तमेवायुक्तम्। तथा च उपाधिभेदेनैव क्लृप्तेनानिर्वाहे स्वोक्तव्यवस्थान्यथानुपपत्त्योपहितभेदस्त्वयातिरिक्त एवावश्यकल्पनीयः। तस्य च प्रतियोगित्वानुयोगित्वरूपत्वं कल्प्यमिति गौरवम्। तदपेक्षया च पूर्वोक्तरीत्या शङ्कितोऽनुयोगिताविशेषोऽपि स्वव्यावृत्तः कल्पयितुं शक्यो लाघवात्। द्रव्यत्वादिघटभेदयोरेव तद्रूपत्वे तु सुतरामेव लाघवम्। एतेन यत्रास्माभिरौपाधिको भेद उच्यते तत्र प्रतियोगित्वानुयोगित्वे तार्किकैरतिरिक्त एव कल्प्ये। न च तथापि निर्वाहः, तद्घटादिप्रमात्वं तद्घटभिन्नावृत्तिसंयोगा-दिघटितं द्रव्यं घट इत्यादेश्च प्रतियोगित्वानुयोगित्वघटितमिति वैरूप्यापत्तेः। तत्प्रतियोगिकभेदेति नाम विहाय तत्प्रतियोगिकसंयोगानुयोगीतिनामान्तर-करणमात्रे पर्यवसानाच्चेति परास्तम्। तत्प्रतियोगिकभेदस्य त्वयातिरिक्त-स्यैव स्वीकार्यत्वाद् गौरवस्य दुर्वारत्वात्। प्रमात्वस्य भेदघटितत्वे माना-भावस्योक्तत्वाच्च। प्रतियोगित्वानुयोगित्वयोर्विशेष्यविशेषणतावच्छेदकभेद-रूपत्वस्य व्यवस्थापितत्वाच्च।

न च भूतलं घटवदित्यादौ विशेष्यविशेषणयोरेव भेदस्य प्रतियोगित्वानु-योगित्वरूपत्वम्, द्रव्यं घट इत्यादौ च विशेष्यविशेषणतावच्छेदकयोर्भेदस्येति, वैषम्यमिति वाच्यम्; भवन्मतेऽपि तत्रानौपाधिकभेदस्य प्रतियोगित्वानुयोगि-त्वरूपत्वम्, द्रव्यं घट इत्यादौ त्वौपाधिकभेदस्येति वैषम्यस्य जागरूकत्वात्। प्रतियोगिविरोधित्वविशिष्टस्यैवाभावस्य नञ्पदेनाभिलाप इति नियमेऽपि न किंचिन्मानं घटवति घटो न स्त इति शब्देन घटविरोधिरहितस्याप्युभया-

भावस्य सर्वैर्ग्रन्थकारैरभिलप्यमानत्वात्, घटत्वेन पटो नास्तीति शब्देन प्रतियोग्यविरोधिनोऽपि व्यधिकरणधर्मावच्छिन्नाभावस्योल्लेखाच्च। एतेन विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणसंयोगादिरूपस्य तद्घटसंबन्धस्याश्रये संयोगादिसंबन्धेन तद्घटप्रकारकज्ञानत्वं तद्घटप्रमात्वं निर्वाच्यम्। न चैवं तद्घटस्तद्घटीय इत्यपि प्रमा स्याद्, द्रव्यत्वादिविशिष्टतद्घटत्वावच्छिन्नाभेदस्य त्वद्रीत्या सत्त्वादिति वाच्यम्; द्रव्यत्वादिविशिष्टस्य तद्घटत्वोपहितादन्यत्वेनोक्तज्ञाने तस्य विशेष्यत्वाभावात्। विशेष्यविशेषणतावच्छेदकयोः भेदस्तु न प्रमात्वघटकः। घट इत्यादिविशिष्टबुद्धावेकत्र द्वयमिति रीत्या घटभूतलत्वोभयप्रकारिकायां भूतलं घटवदिति विशिष्टवैशिष्ट्यबुद्धौ च विशेष्यताया अनवच्छिन्नत्वेन तदसंभवात्। यद्यपि निरवच्छिन्नविशेषणताकायां विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति रीत्या प्रमायां विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकभेदेत्यादिकमपि न संभवति, तथापि विशेष्यविशेषणीभूतव्यक्त्योस्तद्व्यक्तित्वावच्छिन्नप्रतियोगितानुयोगिताकभेदघटितं तद्व्यक्तिप्रमात्वमित्येकोक्तिः संभवत्येव। प्रमामात्रे एकजातीयप्रमात्वव्यवहारादित्यादिकमप्यपास्तम्। येन संबन्धेन यत्र यदस्ति तेन संबन्धेन तदवगाहित्वमित्यादेः शब्दानुगमस्य प्रत्यक्षेऽपि संभवात्। तस्मादुपाधिभेदादुपहितस्यापि भेदस्वीकारो निष्फल एवेति सिद्धम्। एवञ्च—

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः।
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयोः॥

अविरुद्धं परस्परात्यन्ताभावासमानाधिकरणं द्रव्यत्वघटत्वादि, तत्प्रभवत्वं तदुपहितत्वं विशिष्टयोर्द्रव्यघटयोः एकतात्यन्ताभेदः, इत्यादिकमपि चिन्त्यमेवेत्यास्तां प्रपञ्चः।

एतेन अवयवावयव्यादीनामपि भेदाभेदश्चिन्त्यः। हेमकुण्डलमित्यत्र सुवर्णत्वजातेरवयवायविवृत्तित्वात् सुवर्णत्वावच्छिन्नप्रतियोगिताकभेदाभावस्यैव विषयत्वात्। कपालं घट इत्यादेश्चाभेदप्रत्ययस्याभावात्कपालत्वजातेर्घटत्वविरुद्धत्वात्। कपालत्वावच्छिन्नप्रतियोगिताकभेदस्यैव घटे सत्त्वात्तत्राभेदप्रमाया बाधादित्युभयत्रापि भेदाभेदभाने मानाभावात्। एतेन कपालं घट इत्येव स्वारसिकी बुद्धिर्न तु कपाले घटः इति। किन्तु काणादमतवासनामात्रमित्यपास्तम्। कपाले घट इति प्रतीतेरेव सर्वानुभवसिद्धत्वात्।

यत्तु भामत्युदाहृतकारिकायाम्—

"कार्यात्मना तु नानात्वं न भेदः कारणात्मना ।
हि [हे]मात्मना यथाभेदः कुण्डलाद्यात्मना भिदा" ॥ इति;

तद्व्याचक्षते । कारणतावच्छेदकरूपेणाभेद एव कार्यतावच्छेदकरूपेण भेद एवेति नार्थः । अवच्छेदकभेदनिरपेक्षयोरेव भेदाभेदयोस्तन्मते वाच्यत्वात् । वृक्षे कपिसंयोगं तद्भेदं च स्वीकृत्य न चैवं भेदाभेद इति, भेदाभेदमतमापाद्यावच्छेदकभेदो न तत्सत्त्वाभ्युपगमादिति तदापत्तेश्चिन्तामणिकारेण परिहृतत्वात् । भेदाभेदवादिभिरप्यवच्छेदकभेदेनैव तदङ्गीकारे च तेन तदापत्तेः । परिहारानुपपत्तेरवच्छेदकभेदनिरपेक्षमेव भेदाभेदमतमित्युन्नयनात् । न च मणिकारोक्तौ भेदाभेद इत्यनन्तरं दोष इति शेषं दत्त्वावच्छेदकभेदस्वीकारे भेदाभेदो न दोष इत्येवार्थो वाच्य इति वाच्यम्; अवच्छेदकभेदेन गुणगुण्यादिषु भेदाभेदानुमाने तार्किकादीन्प्रति क्रियमाणे सिद्धसाधनापत्तेः । कुण्डलादौ हेमत्वाद्यवच्छिन्नाभेदस्य तार्किकैरप्युपगमात् । अभेदावच्छेदकरूपेणैव भेदस्य वाच्यत्वाच्च । रूपान्तरेण भेदसत्त्वे रूपान्तरेणाभेदप्रत्ययानुदयात् । द्रव्यत्वघटत्वाभ्यां भेदेऽपि घटः कलश इति प्रत्ययाभावात्, द्रव्यं घट इत्येव प्रत्ययाच्च । तस्मात् कार्यात्मना कटकत्वकुण्डलत्वादिभिः कार्यमात्रवृत्तिधर्मैस्तेषां मिथो भेद एव कटकं कुण्डलमित्यप्रतीतेः । कारणात्मनेत्यत्र कार्यात्मनेत्यस्यानुषङ्गः । कारणगतेन कार्यमात्रगतेन च धर्मेणेति तदर्थः । अभेद इत्यत्र नानात्वमित्यस्यानुषङ्गः । अभेदो भेदोऽपीति तदुभयार्थः । ततश्च हेमत्वकुण्डलत्वादिभ्यां भेदोऽभेदश्चेत्यर्थ इति । तत्रापीदं विचार्यं द्रव्यं घट इत्यत्रोक्तन्यायेनैव सामानाधिकरण्यनिर्वाहे हेमत्वावच्छिन्नभेदस्वीकारः कुण्डलादौ व्यर्थ एव । कटकादीनां हाटकत्वादिरूपेण कुण्डलाभेदस्वीकारे तु नास्माकं धृतिः, अनुयोग्यवृत्तिधर्मस्यैव भेदप्रतियोगितावच्छेदकतया कटकादिप्रतियोगिकहाटकत्वावच्छिन्नप्रतियोगिताकभेदस्य तत्रानभ्युपगमात् । कटकत्वावच्छिन्नप्रतियोगिताकभेदस्यापि कुण्डले उभाभ्यामेवाभ्युपगमात् । अपि च एकरूपावच्छिन्नप्रतियोगितानुयोगिताकयोर्भेदयोः कथमेकत्र धर्मिणि संभवो विरोधात् ।

यत्तु सामान्यतो विरोधेऽप्यव्याप्यवृत्तेः संयोगादेरभावेन सामानाधिकरण्यं स्वीक्रियते तथात्रापि । एतावान् परं विशेषः, तत्रावच्छेदकभेदेनैव तत्प्रतीत्या सोऽपि कल्प्यते । अत्र तु तद्भेदानपेक्षप्रतीतिबलान्नावच्छेदकभेदकल्पनमिति, तन्न; धीबलस्य निरस्तत्वात् । नियमेन भेदभाने मानाभावात् ।

यत्तु घटो न नील इति ज्ञानं प्रति घटो नील इति बुद्धेर्घटविशेष्यकाभेदसांसर्गकनीलगुणप्रकारकज्ञानत्वं मन्मते प्रतिबन्धकतावच्छेदकम्, तव तु तादृशनीलविशिष्टप्रकारकज्ञानत्वमिति गौरवमिति, तन्न; समवायसंसर्गकघटविशेष्यकनीलगुणप्रकारकज्ञानत्वस्यैव मन्मते प्रतिबन्धकतावच्छेदकतया प्रकाशांशे नीलवैशिष्ट्यस्यासंनिवेशात्।

नच घटो नील इति शाब्दस्थले शक्त्या लक्षणया वा नीलविशिष्टस्यैव नीलपदार्थत्वात् तज्ज्ञानस्य यथोक्तप्रतिबन्धकतावच्छेदकानाक्रान्ततया घटविशेष्यकाभेदसांसर्गकनीलविशिष्टप्रकारकज्ञानत्वेन भिन्नापि प्रतिबन्धकता त्वया वाच्येति वाच्यम्; अनुशासनस्य त्वयाप्यवश्यं प्रामाण्याभ्युपगमात्। उक्तलक्षणया तत्र नीलपदस्य नीलविशिष्टपरतायास्त्वयापि वाच्यत्वात्। अयन्तु विशेषः—मन्मते नीलगुणसमवायवांस्तत्र नीलपदार्थः, त्वन्मते तु नीलगुणाभेदः। तथा च तत्प्रकारकज्ञानस्य तत्सांसर्गकज्ञानेनानुपसंग्रहात्। घटत्वावच्छिन्नविशेष्यताकनीलसमवायत्वावच्छिन्नप्रकारताकस्वरूपावच्छिन्नसांसर्गिकविषयताकत्वेन प्रतिबन्धकत्वं मया वाच्यम्। त्वया तु नीलाभेदत्वावच्छिन्नत्वं नीलसमवायत्वावच्छिन्नस्थाने प्रकारताकत्वे निवेशनीयमित्येव भेदः। अन्यत्तद्वदेव। अथाभेदस्य संसर्गत्वप्रकारत्वे विषयतात्वेनानुगमय्य प्रकारकरत्वपक्षोयं च संसर्गमनिवेश्य एकमेव प्रतिबन्धकत्वं कल्प्यम्: तदा ममापि समवायस्य संसर्गत्वप्रकारत्वे तथैव निवेश्ये इत्यादि समानमेव। अप्रामाण्यज्ञानाद्युत्तेजकत्वानुरोधादिना पृथगेव प्रतिबन्धकतेत्यादिकमपि तुल्यमेवेत्येषा दिक्।

इदमप्यत्र विचारणीयम्। भेदाभेदमतमप्यवच्छेदकसापेक्षमेव प्रत्यक्षखण्डीयमण्यादिग्रन्थपर्यालोचनया तथैव लाभात्। तथा हि अन्योन्यत्वाभावत्वं स्वकालावच्छिन्नस्वात्यन्ताभावसमानाधिकरणवृत्तिरनित्याभाववृत्त्यभावविभाजकोपाधित्वात्। अत्यन्ताभावत्वादिति भेदाभेदवाद्यनुमानदूषणपरायाः, श्यामावच्छिन्नस्य तस्यैवान्योन्याभावस्तत्रैव रक्तावच्छिन्ने तदन्योन्याभावाभावश्च श्यामावच्छेदेनेति **मणिकारफक्किकायाः** सिद्धसाधनोपदर्शनार्थकत्वेन पृथगवच्छेदकावच्छिन्नमात्रवृत्तिवृत्तित्वरूपोपाधिदर्शनपरत्वेन व्याख्यानं कृत्वा नीलस्यान्योन्याभावो घटत्वावच्छेदेनेति नीलाद् घटस्याभेदोक्तः, अभेदस्तु नीलान्योन्याभावाभावरूपो न घटे घटत्वावच्छेदेनैव विरोधात्। एकावच्छेदेन भावाभावयोरेकत्रावृत्तेरज्ञानाच्च। नाप्यवच्छेदकान्तरेण घटत्वावच्छिन्ने घटे तदभावात्, तदज्ञानेऽपि नीलो घट इत्यनुभवाच्च,

न चान्योन्याभावरूपो भेदोऽस्तु; अभेदस्तु न भेदाभावः किन्त्वन्य एवेति वाच्यम्; "अभेदव्यवहारे तस्याहेतुत्वाद्" इति ग्रन्थमभिसंधाय **पक्षधरमिश्रै**रुक्तम् "भेदाभेदवादिमतेऽभेदस्य विरोध एव नास्ति क्वचिदप्यसमावेशाभावादिति नाशङ्कनीयम्, गवाश्वभेदे तदभेदासमावेशस्य तैरपि स्वीकारात्। न चोभयोर्ब्रह्माभिन्नत्वेन तदभिन्नतयाभेदसत्त्वात्तत्राप्युभयसमावेश एवेति वाच्यम्; तैरपि गोत्वादिना भेदो ब्रह्मत्वेनाभेद इत्यवच्छेदकभेदेनैव तदुभयसमावेशस्वीकारात्। तदुक्तमवच्छेदकभेदेनेति। प्रतियोगितावच्छेदकभेदेनाधिकरणतावच्छेदकभेदेन च" इति। तत्र **टीकाकृतः**— "न च गोत्वाद्यवच्छिन्नप्रतियोगिताकावेव भेदाभेदौ तन्मते स्वीकार्याविति वाच्यम्; अपसिद्धान्तात्। **ब्रह्ममीमांसा**द्वितीयाध्यायप्रथमचरणे हि परिणामवादाभिप्रायं सूत्रं पठ्यते "भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदिति", तदर्थस्तूपादानोपादेयभावसामर्थ्यरूपतर्केण ब्रह्मजगतोरभेदे सिद्धे भोग्यस्य भोक्तृजीवाभिन्नब्रह्माभिन्नतया भोक्तृजीवादप्यभेदापत्तिः। तथा च भोक्तृभोग्यभेदव्यवहारोच्छेदः स्यात्, इत्यन्तेन पूर्वपक्षः, सिद्धान्तस्तु "स्याल्लोकवद्" इति पूर्वसूत्रस्थम्। व्याख्याता इतिपदमत्रैकवचनान्तत्वेन परिणमय्यानुषञ्जनीयम्। लोकवदेव भेदो व्याख्यातः। यथा समुद्रत्वावच्छिन्नप्रतियोगिताकभेदविरहिणोरपि फेनबुद्बुदयोः परस्परमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्तथा ब्रह्मत्वावच्छिन्नप्रतियोगिताकभेदाभाववतोरपि भोक्तृभोग्ययोः परस्परवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदवत्त्वं नानुपपन्नम्। ब्रह्मत्वावच्छिन्नप्रतियोगिताकभेदाभावापादने त्विष्टापत्तिरेवेति।

ननु यदि तन्मतमवच्छेदकभेदनिरपेक्षं न स्यात्तदावच्छेदकभेदाभावेन तद्दूषणं **मणिकृतो**रप्यनुचितं स्यात्, निरनुयोज्यानुयोगत्वापत्तेः। न चावच्छेदकभेदेऽपि भेदाभेदयोः समावेशस्य भेदस्य व्याप्यवृत्तित्ववादिभिर्नैयायिकैरनुपगमात्तद्भेदसत्वेऽपि भेदाभेदयोः समावेशो नेति दूषणग्रन्थार्थं इति वाच्यम्; संयोगभेदीयाव्याप्यवृत्तित्वस्यावच्छेदकभेदपुरस्कारेणैव **मणिकारे**णाङ्गीकारात्। न च प्राचीननैयायिकमताभिप्रायेणैवात्रत्यो ग्रन्थः। अत एव सम्प्रदायमत इदम्। मणिकृन्मते तु "यथान्योन्याभावस्याव्याप्यवृत्तित्वं तथा व्याप्तिवादे सुव्यक्तम्" इति **प्रगल्भेन** कण्ठत एव व्याख्यातमिति वाच्यम्; अवच्छेदकभेदमङ्गीकृत्य भेदाभेदसमावेशस्य परसंमतत्वे तस्यैव तत्राभावोऽवच्छेदकभेदेन वर्त्तते ज्ञायते चेति दूषणग्रन्थानुपपत्तितादवस्थ्यादिति चेत्, मैवम्; उक्तग्रन्थस्यावच्छेदकभेदेन स्थलविशेषे भेदाभेदयोः समावेश

उभयसिद्ध इति प्रदर्शनार्थकत्वेन प्रकृते तदभिमतस्यावच्छेदकभेदस्योत्तर-फक्किकाद्वयेनैव प्रत्याख्यानात्। तथाहि घटत्वस्य भेदाधिकरणतावच्छेदकत्वेन तदभावाधिकरणतावच्छेदकं घटत्वविरुद्धमेव वाच्यम्; परस्परात्यन्ताभावावच्छेदकत्वरूपविरुद्धाधिकरणतावच्छेदकवत्तदवच्छेदेन विरुद्धप्रतियोगितावच्छेदकावच्छेदेन च तदुभयप्रतीतिनियमात्।

न च घटत्वावच्छिन्ने घटे घटत्वात्यन्ताभावावच्छेदकः कश्चिद्धर्मोऽस्तीति, घटत्वावच्छिन्ने घटे तदभावादिति फक्किकार्थः। घटनिष्ठौ किंचित्संयोगतदभावावेव घटे नीलभेदाभेदयोरवच्छेदकौ स्यातामिति तु नाशङ्कनीयम्, संयोगतदभावप्रतीत्यापि नीलो घट इति प्रत्ययात्। अस्याभयावगाहित्वे च यथोक्तावच्छेदकभेदप्रतीतिव्यतिरेकेण भेदाभेदावगाहित्वानुपपत्त्या तद्विरोधादिति च तदज्ञानेऽपीति द्वितीयफक्किकार्थ इति पूर्वोक्तदोषानवतारात्। अन्यथोक्तग्रन्थेन भेदाभेदमते दोषस्य दुर्वचत्वात्। परमतस्यावच्छेदकभेदनिरपेक्षत्वे हि तस्यैव तत्रेत्यादेरुत्तरस्यासङ्गतेः स्पष्टत्वात्।

किञ्च पूर्वोक्तानुमानखण्डीय**मणिकार**व्याख्यानमयुक्तम्। तत्प्रकरण एव **कुसुमाञ्जलिप्रकाशे** "मूले वृक्षः कपिसंयोगवान्नेत्यबाधितानुभवादवच्छेदभेदेन संयोगवदन्योन्याभावस्याप्यव्याप्यवृत्तित्वात्" इत्यवच्छेदकभेद पुरस्कृत्यैव भेदावभिधाय "न चैवं भेदाभेदपातः" इति शङ्कमान**वर्द्धमानोपाध्यायै**रवच्छेदकभेदगर्भस्यैव भेदाभेदवादस्य सूचितत्वात्। न चावच्छेदकभेदेन भेदाभेदस्वीकारान्न भेदाभेदापात इति पूर्वोक्तावच्छेदकभेदप्रयोजनकथनमेवेदम्,नत्वापत्तिपरमिति वाच्यम्;अनतिप्रयोजनत्वात्। स्पष्टीकरणार्थत्वापेक्षयाधिकाशङ्कापरत्वस्याभ्यर्हितत्वात्। न च तादृशस्यावच्छेदकभेदमादाय तदुपगमादिति न तदुत्तरफक्किकयोक्तदोषपरिहारो न स्यात्, अवच्छेदकभेदेऽपि प्रसक्तशङ्कायास्तेनैव समाधानानुपपत्तेरिति वाच्यम्; प्रतियोगितावच्छेदकभेदेनाधिकरणतावच्छेदकभेदेन च भेदाभेदौ मणिकारैरभ्युपगम्येते, आद्यभेदमात्रेण तु भेदाभेदवादिभिरिति हि वस्तुगतिः। अत एव "गोत्वावच्छिन्नप्रतियोगिताक एव भेदो स्वीक्रियते" इति परमतमुपन्यस्य तदुक्तमित्यादिना **मिश्रै**रेवावच्छेदकभेदेनेति मूलवाक्यं तत्रोपष्टम्भकत्वेनोपन्यस्तम्। प्रतियोगिताभेदेनेत्यंशमादाय तत्सम्मत्यभिधानमिति च तत्र **टीकाकारै**र्व्याख्यातम्। अन्यथा प्रतियोगितावच्छेदकभेदस्यापि नैयायिकमात्रसंमतत्वे भेदाभेदवादिमते तद्वाक्यसंमत्याभिधानस्यासंगति-

प्रसंगात् । एवं च प्रकृतेऽपि प्रतियोगितावच्छेदकभेदेऽप्येकाधिकरणताव-च्छेदकावच्छेदेन भेदाभेदस्वीकारे परमतापत्तौ शङ्कितायां प्राधकरण-तावच्छेदकभेदपुरस्कारेणैव तदुपगमान्न तथेति समाधानफक्किकार्थः । अत एव मूले वृक्षः कपिसंयोगवान्नेति वाक्यं संयोगात्यन्ताभावावच्छेदक मूलरूपावच्छेदकपुरस्कारेणैव संयोगवदन्योन्याभावो न तु वृक्षत्वरूपाव-च्छेदकपुरस्कारेणैवेत्येतदर्थकं संगच्छते । अत्यन्ताभावप्रतियोगिनोरिवान्यो-न्याभावप्रतियोगितावच्छेदकयोरबाधितसामानाधिकरण्यसत्त्वेनेति **दीधिति**-वाक्यस्यापि संयोगतद्वद्भेदयोरेकाधिकरण्यं शाखामूलरूपाधिकरणताव-च्छेदकभेदगर्भतयेत्यत्रैव तात्पर्यम् । अत एव व्यभिचारिणि साध्यतदभाव-सामानाधिकरण्ययोर्विरुद्धयोरप्युपाधि तदभावाभ्यामवच्छेदकाभ्यामुपपत्ति-रित्यादिकं तत्र व्यक्तम् । अत एव भेदप्रतियोगितावच्छेदकमपि तत्र संयोग-वत्त्वम्, अभावप्रतियोगिभेदप्रतियोगितावच्छेदकं तु वृक्षत्वमित्यपि ग्रन्थेषु तत्राग्रे स्पष्टम् । एवं स्थितेऽवयवावयविस्थले प्रतियोगितावच्छेदकभेद-मात्रपुरस्कारेण भेदाभेदौ परेषामभिमताविति पूर्वोक्तकारिकाया हेमत्वाव-वच्छिन्नप्रतियोगिताको भेदाभाव एव । कुण्डलत्वाद्यवच्छिन्नप्रतियोगिताकस्तु भेद एवेत्यर्थः । स चोत्तरार्द्धे इति स्पष्टः । अत एव तन्मतोपक्रमे "कटकादय इवाभिन्ना हाटकाद्यात्मना भिन्नाश्च कटकाद्यात्मना" इति **भामत्यामुक्तम्** । तथा पश्चादपि "अथ हाटकत्वेनैवाभेदो न कटकत्वेन, तेन तु भेद एव कुण्डलादेः" इति तन्मतमाशङ्कितम् । "कटकस्य हि द्वे रूपे स्तो हाटकत्व कटकत्वञ्च । तत्र हाटकरूपेणास्य कुण्डलादिभिर-भेद इष्ट एव, न कटकरूपेण । व्यावृत्तत्वात्तस्येति स्वप्रक्रियया शङ्कते" इति च **कल्पतरुकारै**रवतारितमिति द्रष्टव्यम् । नचावयवावयविस्थले भेदाभेदा-नुमानस्य तार्किकान्प्रति सिद्धसाधनापत्तिः, अवच्छेदकावच्छेदेनानुमितौ तदनवकाशात् । कपालत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभावस्य घटादौ तार्किकैरप्यङ्गीकारात् । अवयवावयविवृत्तिजातिस्थल एव तथात्वात् । न च घटः कलश इति प्रत्ययाभावादभेदावच्छेदकरूपेणैवाभेदो वाच्य इति वाच्यम्; तादृशस्थले वस्तुतः प्रतियोग्यनुयोगित्वावच्छेदकयोर्भेदापेक्षयैव प्रसंगादित्यास्तमितिविस्तरः ।

यदप्याकाशादीनां ध्वंसप्रागभावप्रतियोगित्वमिवात्यन्ताभावप्रति-योगित्वमपि नास्ति, मानाभावात्, इहाकाशो नास्तीति प्रत्ययस्यासंभवात्, अनु-माने चानुकूलतर्काभवात् सामान्यतो दृष्टमात्रेण ध्वंस प्रागभप्रतियोगिवा-

त्वस्यापि सिद्धिप्रसंगात्तद्व्यतिरेकेण कस्यचित्कार्यस्यानुपपत्तेरभावाच्चेति, तच्चिन्त्यम्; भूतलादिवृत्तित्वं तन्निष्ठान्यन्ताभावप्रतियोगित्वं च विना तृतीयप्रकाराभावाद् वृत्तित्वबाधेन तदत्यन्ताभावस्य तद्वृत्तित्वसिद्धेः। घटादावुक्तान्यतरव्याप्तेर्निरुपाधिकत्वादत एव च ध्वंसादिप्रतियोगित्वसिद्धचनवकाशात्। अन्यथा आकाशवान् घटादित्यादौ घटस्य साध्याभाववद्वृत्तित्वरूपव्यभिचारित्वं न स्यात्। न च तत्र बाध एव विरोधीति वाच्यम्; दोषसांकर्यस्याभ्युपगतत्वादत्यन्ताभावप्रतियोगित्वं विना बाधविरहेण घटकुट्यां प्रभातमित्यस्य प्रसङ्गाच्च। यत्त्वभावप्रतियोगितायाः सम्बन्धत्वावच्छिन्नत्वे मानाभावः, संबन्धभेदेनाभावभेदकल्पने गौरवात्। मन्मते घटात्यन्ताभावत्वेनैव घटविरोधित्वकल्पनात्। तज्ज्ञानत्वेनैव तज्ज्ञानविरोधित्वकल्पनाच्च। तथा हि सहानवस्थानरूपो विरोधो द्विधा—साक्षाद् ज्ञानद्वारा च। तत्राद्यो यद्देशकालावच्छेदेन येन सम्बन्धेन यद्रूपावच्छिन्नस्य प्रतियोगिनो वृत्तिस्तदवच्छेदेन तत्संबन्धतद्रूपावच्छिन्नप्रतियोगिताकाभावस्यावृत्तिरिति त्वया वाच्यः। मया तु घटवति देशे घटात्यन्ताभावो नास्तीत्येव, एकसंबन्धेन घटवति संबन्धान्तरेणापि तदभावानभ्युपगमात्। द्वितीयोऽपि यद्धर्मावच्छिन्नविशेष्यताकमत्संसर्गकयद्रूपावच्छिन्नप्रकारताकज्ञानकाले तद्धर्मावच्छिन्नविशेष्यताकसंसर्गतद्रूपावच्छिन्नप्रतियोगिताकाभावस्य ज्ञानाभावः। ज्ञाने तत्पुरुषीयत्वं तु बोध्यम्। तत्र प्रतियोगिताविषयतायां संबन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वविषयत्वयोर्निवेशे विनिगमनाविरहाद् गौरवम्।

न च प्रतियोग्यंशे प्रकारीभूतधर्मस्यैवाभावांशे प्रतियोगितावच्छेदकत्वेन भानात् प्रतियोगित्वांशे घटत्वावच्छिन्नत्वविषयत्वं प्रतिबन्धकतावच्छेदके न देयम्, किन्त्वभावांशे घटत्वावच्छिन्नप्रकारतैवेति वाच्यम्; व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमे तदसंभवात्। संयोगाद्यवच्छिन्नप्रकारताया अप्यभाव एव निवेशौचित्यात्। मया तु घटत्वावच्छिन्नत्वविषयत्वप्रतियोगितांशे निवेश्यमिति लाघवम्, संबन्धावच्छिन्नत्वनिवेशप्रयोजनाभावात् इति, तच्चिन्त्यम्; घटसंयोगिन्यपि समवायेन घटो नास्तीति प्रतीतेरभावप्रतियोगितायाः संबन्धावच्छिन्नत्वावश्यकत्वात्। संयोगेन घटाभावबुद्धेरपि समवायेन घटोऽस्तीति बुद्धिविरोधित्वापत्तिश्च। न च प्रतियोगितांशे संबन्धावच्छिन्नत्वावगाहिबुद्धिर्न विरोधिनीति वाच्यम्; समवायेन घटो नास्तीति बुद्धेरप्यविरोधित्वापत्तावनुभवविरोधात्। न च घटसमवायत्वावच्छिन्नप्रतियोगिताकाभाव एव समवायेन

घटो भूतले नास्तीति प्रतीतिविषयः, तादृशाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलादिविशेष्यताकत्वेन रूपेणैव च तस्याप्रतिबन्धकतेति प्रतियोगितायाः संबन्धावच्छिन्नत्वं व्यर्थमिति वाच्यम्; घटादेः प्रतियोगित्वानुभवविरोधात्।

न च शिखी चैत्रो नष्ट इत्यादौ शिखादिनिष्ठं नाशप्रतियोगित्वं यथा चैत्रे भाति तथा घटसमवायादिनिष्ठमेव प्रतियोगित्वं घटादिनिष्ठतयात्र भातीति वाच्यम्; सविशेषणे हीति न्यायेन विशेष्यनाशबाधात्, विशेषणे नाशस्वीकारात्, प्रकृते च बाधकाभावात्। न च प्रतियोगितायाः संबन्धावच्छिन्नत्वापत्तिरेव बाधिका, तद्बलेन प्रतीतेरनपवादादन्यथा सर्वविप्लवापत्तेः। किञ्चैवं समवायस्य प्रतियोगित्वं समवायत्वस्य घटस्य च प्रतियोगितावच्छेदकत्वं घटत्वस्य च प्रतियोगितावच्छेदकतावच्छेदकत्वं वाच्यम्। तत्र समवायनिष्ठप्रतियोगितायाः संबन्धावच्छिन्नत्वे विवादेऽपि समवायत्वस्यावच्छेदकतायां स्वरूपसंबन्धस्य घटीयोक्तावच्छेदकतायां च समवायस्यावच्छेदकत्वं कल्प्यमिति महदेव गौरवम्। तद्वरं घटस्य प्रतियोगित्वं घटत्वस्य च तदवच्छेदकत्वं समवायस्य च स्वरूपेणैव तदवच्छेदकत्वमेव कल्प्यताम्, पूर्वोक्तरीत्या प्रतिबन्धकतावच्छेदके विनिगमकाभावेऽपि तदपेक्षया गौरवाभावात्। व्यासज्यवृत्त्यवच्छेदकत्वमाश्रित्य तत्परिहारस्य सुलभत्वाच्च शरीरगौरवस्य च दुर्वारत्वात्। वस्तुतस्तु, अभावज्ञाने प्रतियोगितायाः समवायघटत्वाद्यवच्छिन्नत्वयोश्च संसर्गमर्यादयैव भासमानत्वात्संसर्गकोटिनिविष्टविशेषणानां चैकत्र द्वयमिति रीत्यैव भानोपगमात्प्रतिबन्धकतायामपि तादृशत्वेनैव निवेशान्नोक्तविनिगमनाविरहशङ्कापीति तत्त्वम्।

न च घटसमवायाभावज्ञानस्य प्रतिबन्धकत्वं त्वयापि कल्प्यत एव, परन्तु समवायावच्छिन्नप्रतियोगिताकघटाभावज्ञानस्य तत्कल्पनं तवाधिकमिति वाच्यम्; समवायेन घटविशिष्टबुद्धौ तद्विरोधिताया नव्यैरनङ्गीकारात्।

न च घटसमवायप्रकारकबुद्धौ तदावश्यकत्वं प्रतिबध्यतावच्छेदकभेदेन प्रतिबन्धकताद्वयावश्यकत्वे तदोभयत्र प्रतिबन्धकतावच्छेदकशरीरगौरवम्, मम त्वेकत्रैवेति, विशेषसत्त्वात्। न च घटप्रकारत्वावच्छिन्नसमवायविषयताशालिज्ञानत्वेन प्रतिबध्यतावच्छेदकैक्यं कल्प्यमिति वाच्यम्; तादृशबाधकाले कालिकादिसंबन्धेन समवायविशिष्टबुद्धेरप्यनुत्पत्तिप्रसंगात्। एवञ्च घटसमवायाभावज्ञानकालेऽपि समवायेन घटविशिष्टबुद्ध्यनुदयस्यानुभविकत्वात्तत्रावच्छेदकधर्मदर्शनविधया घटसमवायाभावज्ञानस्याप्रतिबन्धकत्वं

कल्प्यम् । तदपेक्षया एकप्रतिबन्धकत्वकल्पनमेव युक्तमित्यादेः पर्यालोचनेऽपि न क्षतिः । अपि च घटसमवायाभावबुद्धेः स्वरूपसंबन्धावच्छिन्नां समवायेन घटाभावबुद्धेः समवायावच्छिन्नां च प्रतियोगितामन्तर्भाव्य विरोधित्वं मया कल्प्यते, तत्र प्रतियोगित्वतदवच्छेदकसंबन्धत्वाभ्यां मदभिमतयोरर्थयोः प्रतियोगितावच्छेदकत्वं प्रतियोगित्वञ्च कल्पयित्वा तादृशाभावधीत्वेन विरोधित्वं त्वया कल्प्यम्, प्रतियोगितावच्छेदकत्वेन मदभिमतसंबन्धस्य ज्ञानबहिर्भावेऽनुभवविरोधापत्तेः । तथा च प्रथमायाः घटसमवायस्वरूपसंबन्धाभावविषयकत्वेन, द्वितीयस्याश्च घटसमवायाभावविषयकत्वेन विरोधित्वे क्व लाघवलेशस्याप्यवकाशः । एवञ्च घटे समवायस्वरूपसंबन्धत्वघटसमवायत्वरूपप्रतियोगितावच्छेदकभेदेन तदवच्छिन्नाभावभेदापत्तिरपि दुर्वारेति योज्यम् । एवं कपाले घटो नास्तीति शब्दात्संयोगावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावस्य भूतले घटो नास्तीति शब्दाच्च समवायावच्छिन्नतादृशाभावस्य च ज्ञानं सर्वसिद्धम् । संयोगसंसर्गिकायाः समवायसंसर्गिकायाश्च घटप्रकारकबुद्धेः तदुत्तरमनुदयात् । तत्र घटसंयोगाभावो घटसमवायाभावो वा संयोगवद्घटाभावः समवायवद्घटाभावो वा विषय इति न शक्यं वक्तुम्, पदादनुपस्थितस्यार्थस्य शाब्दबोधे सांसर्गिकान्यविषयत्वेनाभाननियमात् । मन्मते तु संबन्धावच्छिन्नत्वस्य ससर्गतयैव भानान्न पदजन्योपस्थितिरपेक्ष्येति वैषम्यम् । अपि च वह्निमान् वह्न्यभाववानित्याकारकपरोक्षताज्ञानवारणाय वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वीया याभावत्वावच्छिन्नावच्छेदकता तन्निरूपिता या प्रतियोगिता संसर्गावच्छिन्नावच्छेदकतदवच्छेदकत्वसंसर्गेण परोक्षताज्ञानत्वावच्छिन्नं प्रति वह्नित्वभेदस्य हेतुत्वं कल्प्यते । अत्र प्रतियोगितायां संयोगावच्छिन्नत्वस्यैव निवेशः । वह्निसंयोगाभावस्य तद्विषयत्वे तु अभावत्वावच्छिन्नावच्छेदकतानिरूपिता प्रतियोगितासंसर्गावच्छिन्ना या संयोगत्वावच्छिन्नावच्छेदकता तन्निरूपितप्रतियोगितासंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वसंसर्गेणेति वक्तव्यत्वापत्त्या मध्येऽवच्छेदकत्वान्तरनिवेशे गौरवम् । न च संयोगत्वभेदस्यैव हेतुत्वमिति वाच्यम् । वह्निमान् घटसंयोगाभाववानित्यस्याप्यनुपपत्तेः । नापि वह्निसंयोगत्वभेदस्य हेतुत्वम्, तदपेक्षया वह्नित्वसंयोगत्वभेदस्य हेतुतायां लाघवात् । संयोगविशिष्टवह्न्यभावस्य विषयत्वेऽपि संयोगावच्छिन्नत्वांशं परित्यज्य प्रत्यक्षोक्तावच्छेदकतामात्रनिवेशे संयोगसांसर्गावच्छिन्नवह्निविशेष्यतावच्छेदकसमवायविशिष्टवह्न्यभाववानिति ज्ञानस्याप्यनुपपत्तिः स्यात् ।

तत्संसर्गेण तज्ज्ञानत्वावच्छिन्नस्य वह्नित्वेऽपि सत्त्वात्, वह्नित्वभेदस्य च तत्रासत्त्वेन इष्टापत्तेरसंभवात्। अतश्च अभावत्वावच्छिन्नावच्छेदकतानिरूपिता संयोगत्वावच्छिन्नप्रकारतानिरूपिता विशेष्यत्वीया च यावच्छेदकता तदवच्छेदकत्वसंसर्गेणेति वक्तव्यत्वादतीव गौरवम्। एवं समवायस्यैव प्रकारताप्रतियोगितोभयावच्छेदकत्वस्थलेऽपि द्रष्टव्यम्।

किञ्च वह्नित्वादिधर्मोऽपि प्रतियोगितायामवच्छेदको मास्तु, तादृशावच्छिन्नत्वेन पराभ्युपगता या प्रतियोगिताव्यक्तिस्तत्संबन्धेन प्रतियोगिविशिष्टाभावस्य प्रतियोगिविरोधित्वम्। तत्संबन्धावच्छिन्नप्रतियोगिताप्रकारतायाश्च तद्ज्ञानविरोधिनावच्छेदकत्वमित्यस्य वक्तुं शक्यत्वात्, अनुभवस्य च संबन्धावच्छिन्नत्वेऽपि सत्त्वादित्याशङ्क्य स्वयमेवोक्तं जले वह्निर्नास्तीतिवज्जले द्रव्यं नास्तीत्यपि ज्ञानं प्रमा स्यात्। तत्प्रतियोगिताव्यक्तिविशेषसंबन्धेन वह्निविशिष्टो योऽभावस्तस्य तत्संबन्धेन द्रव्यात्मकवह्निविशिष्टत्वात्। न च सा प्रतियोगिता वह्नित्वावच्छिन्नप्रतियोगिताकैव न तु द्रव्यत्वावच्छिन्नप्रतियोगिताकेति वाच्यम्; अभावप्रतियोगित्वीयप्रतियोगितायां वह्नित्वावच्छिन्नत्वकल्पनापेक्षयाभावप्रतियोगितायामेव तत्कल्पनस्य युक्तत्वात्। यद्वा विशिष्टस्य वैशिष्ट्यमिति ज्ञाने विशेषणतावच्छेदकस्यापि विशेषणान्विते विशेष्ये भानम्। दण्डिमदिदमित्यादौ साक्षात्संबन्धेन दण्डादेरिदमंशे बाधेऽपि स्वाश्रयसंयोगादिरूपपरम्परासंबन्धेन तदंशे भानात्। "अभावज्ञानस्यापि प्रतियोगिविशेषिताभावज्ञानं तु विशिष्टवैशिष्ट्य[बोध]मर्यादां नातिशेते" इत्यभियुक्तोक्तरीत्या विशिष्टस्य वैशिष्ट्यमित्यात्मकत्वात्। वह्नित्वस्य वह्नाविव तदभावेऽपि भानं वक्तव्यम्। तच्च न स्वनिष्ठप्रतियोगितानिरूपितानुयोगित्वसंबन्धेन वह्न्यभावे वह्नित्वप्रतियोगितानिरूपितानुयोगित्वस्य बाधितत्वात्। नापि स्वाश्रयप्रतियोगितानिरूपितानुयोगित्वेन तेन संबन्धेन वह्नित्वस्याभावे विशेषणत्वोक्तौ जले द्रव्यं नास्तीत्यस्यापि प्रमात्वापत्तेः। द्रव्यत्वाश्रयवह्निनिष्ठप्रतियोगितानिरूपितानुयोगित्वसंबन्धेन द्रव्यत्ववैशिष्ट्यस्य वह्न्यभावे सत्त्वात्। अतो वह्नित्वस्य स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगित्वसंबन्धेनैव भानं वाच्यमन्यस्यैकजातीयसंबन्धस्य दुर्वचत्वादिति सिद्धं प्रतियोगिताया वह्नित्वावच्छिन्नत्वमिति। न त्वेतावतापि निर्वाहः। संयोगेन वह्निर्नास्तीति ज्ञाने वह्निसंयोगत्वस्य प्रतियोगितावच्छेदकत्वेन भानस्वीकारे वह्नित्वावच्छिन्नेत्यादिसंबन्ध-

स्याप्रसिद्धेः । न चात्र वह्निसंयोगत्वस्यैव स्वावच्छिन्नेत्यादि संबन्धेनाभावांशे भानम्, वह्निर्नास्तीति ज्ञानाभिप्रायेण तु वह्नित्वावच्छिन्नेत्यादिसंबन्धोक्तिरिति वाच्यम्; प्रतियोगितावच्छेदकसंबन्धाविषयकाभावप्रतीतेर्मयानङ्गीकारेण सर्वत्रैव प्रतियोगिनं विशेषणीकृत्य संबन्धस्य प्रतियोगितायास्त्वया वाच्यतया वह्नित्वस्य प्रतियोगितावच्छेदकत्वस्थलस्य दौर्लभ्यात्। प्रतियोगितावच्छेदकत्वेन मदभिमतसंबन्धस्याभावबुद्धौ कथमप्यनन्तर्भावितत्प्रतीत्यनुपपादनापत्तेः।

किञ्च स्वव्यापकप्रतियोगितानिरूपितानुयोगितैव घटत्वस्य घटाभावे एकजातीयः संबन्धः। जले द्रव्यं नास्तीत्यत्र प्रतियोगितायाः द्रव्यत्ववत्पृथिव्यादिनिष्ठात्यन्ताभावप्रतियोगित्वेन तद्भानस्य प्रमात्ववारणात्। न च व्यापकत्वरूपमेवावच्छिन्नत्वं तथा च घटकुट्यां प्रभातमिति वाच्यम्; अभावप्रयोगितायां भासमानस्यावच्छिन्नत्वस्य स्वरूपसंबन्धविशेषात्मकत्वेन व्यापकत्वरूपत्वाभावात्। कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमन्निष्ठात्यन्ताभावाप्रतियोगितायां सत्त्वेऽपि तस्याः कम्बुग्रीवादिमत्त्वावच्छिन्नत्वाङ्गीकारात्। व्यधिकरणधर्मावच्छिन्नाभावस्थले प्रतियोगितायास्तदवच्छेदकाभाववृत्तित्वेऽपि तदवच्छिन्नत्वव्यवहाराच्च। अत एव "धर्मावच्छिन्नत्वेऽप्यनुभव एव प्रमाणम्" इत्युक्तं **दीधितिकृता**। "यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिरनुभवो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्यम्" इति **चक्रवर्तिलक्षणे** तद्व्याख्यातृभिरप्युक्तम्। "व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितायाः संबन्धानवच्छेद्यत्वे व्यधिकरणसंबन्धावच्छिन्नप्रतियोगितायाः प्रकारानवच्छेद्यत्वापत्तिः। तस्मात्प्रतीतिरेव प्रकारस्याप्यवच्छेदकतायां मानम्" इति। न हि व्यधिकरणधर्मस्य नियमेन प्रतियोगिनि वैशिष्ट्यं गृहीत्वैव यदवच्छिन्नाभावा बुद्धिरुदेति। घटो वह्नित्वाभाववानिति ज्ञानकाले ऽपि वह्नित्वेन घटो नास्तीति प्रतोतेः। नापि प्रतियोग्यंशे विशेषणतया भासमानस्य स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावांशे भाननियमः। उक्ताभावप्रतीतौ घटत्वे व्यभिचारात्।

न च तदपि प्रतियोगितावच्छेदकमेवेति वाच्यम्; सर्वानुभवविरोधात्। साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्तीत्यादितद्घटितव्याप्तिलक्षणविलयापत्तेः। नहि घटत्वेन वह्न्यभाववति पर्वतादौ धूमस्य वृत्तित्वज्ञाने वह्नित्वावच्छिन्नप्रतियोगिताकत्वेन वह्न्यभावभाने च वह्न्यनुमितिर्भवितुमर्हति, व्यभिचारज्ञानस्य सम्पन्नत्वात्। प्रमेयघटो नास्तीत्यादौ

प्रमेयत्वस्यातदनवच्छेदकस्यापि घटांशे भानात्, शृङ्गत्वस्य सामग्रीबलाद् भानेऽपि शशीयत्वमेव तदभावप्रतियोगितावच्छेदकमिति स्वीकाराच्च। "नेह नानास्ति" इति श्रुतौ नानापदोपात्तं वृत्तिविषयत्वं निषेधप्रतियोगितावच्छेदकम्। किंचनपदोपात्तं मूढधीविषयत्वं प्रतियोग्यंशविशेषणमात्रमिति भवदुक्तेश्च। एवं च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावज्ञानसाधारणं वह्नित्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वावच्छिन्नप्रकारताकज्ञानत्वं वह्नित्वावच्छिन्न……प्रकारताकविशिष्टबुद्धिनिष्ठप्रतिबध्यतानिरूपितायां प्रतिबन्धकतायां नावच्छेदकमिति, तन्निर्वाहाय प्रतियोगितायाः संबन्धावच्छिन्नत्वमावश्यकम्। वह्नित्वेन घटाभावीयप्रतियोगितायाः संबन्धत्वावच्छिन्नत्वे मानाभावेन तद्व्याप्यावृत्तिसिद्धेः। अत एव **दीधितिव्याख्यातृभि**रुक्तम् "एकसम्बन्धेन घटत्वावच्छिन्नवति सम्बन्धान्तरेण तदवच्छिन्नभावसत्त्वात् तेन तेन तदवच्छिन्नवति तेन तेन तदवच्छिन्नभावविरोधकल्पनात्। संबन्धानवच्छिन्नप्रतियोगिताकाभाववृत्तौ बाधकाभावाद्" इति।

यदप्युक्तम्। विशिष्टस्य वैशिष्ट्यमिति ज्ञानस्य विशेष्ये विशेषणम्, तत्र च विशेषणान्तरमिति ज्ञानाद्वैलक्षण्यार्थं तत्र विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन विशेषणसंबन्धो भातीति कल्प्यते। घटवदित्यादौ घटत्वावच्छिन्नप्रतियोगिताकत्वेन संयोगभानात्। एवमनुमितेरपि विशिष्टस्य वैशिष्ट्यमित्यात्मकत्वनियमात् तत्रापि घटादेरनुयोगित्वरूपोऽभावसंबन्धो घटत्वावच्छिन्नप्रतियोगिताकत्वेन भासत इति; तदपि चिन्त्यम्; व्यापकतावच्छेदकसंबन्धेनैव व्यापकभानस्यानुमितौ सर्वसिद्धत्वात्तत्र वह्नित्वावच्छिन्नप्रतियोगिताकत्वेन तत्संयोगस्य भानानुपपत्तेः तस्य व्यापकतावच्छेदकसंबन्धत्वे मानाभावात्। यत्संबन्धावच्छिन्नायां हेतुसामानाधिकरण्यात्यन्ताभावप्रतियोगितायामनवच्छेदकं साध्यतावच्छेदकं तस्यैव व्यापकतावच्छेदकसंबन्धत्वात्। धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसामानाधिकरण्यविशिष्टधूमवत्ताज्ञाने संयोगस्य सामानाधिकरण्यघटकत्वेऽपि संयोगसंसर्गकवह्निप्रकारकत्वस्य तत्रासत्त्वाद्भवदुक्तबीजस्य वक्तुमशक्यत्वात्। एतेन संयोगेन रूपं नास्तीत्यादौ रूपसंयोगादेरप्रसिद्धावपि रूपीयत्वेन संयोगाभावो भासते। प्रतियोगिविशेषणतानापन्नस्यैव व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वोपगमान्न भ्रमत्वम्। प्रतियोगिवृत्तित्वेन भासमानस्यैव प्रतियोगितावच्छेदकत्वनियमे तु व्यधिकरणधर्मावच्छिन्नाभावधीमात्रस्य प्रतियोग्यंशे तादृशधर्मप्रकारकत्वरूपभ्रमत्वस्वीका-

रादत्रापि तदंशे भ्रमत्वे इष्टापत्तेरिति निरस्तम्। संयोगस्य प्रतियोगितावच्छेदकत्वं स्वीकृत्य सर्वांशप्रमात्वसंभवे आंशिकभ्रमत्वकल्पनस्याप्यनुपपत्तेः। संयोगे रूपीयत्वबाधदशायामुक्तबोधापलापापत्तेश्च। बाधसत्त्वे भ्रमस्याप्यनुपपत्तेः संयोगसंसर्गकरूपविशिष्टबुद्धौ तद्धीविरोधित्वानुपपत्तेश्च। संयोगेन संयोगो नास्तीत्यत्र संयोगे संयोगनिष्ठप्रतियोगितानिरूपकत्वसत्त्वाच्च तदधिकस्य रूपीयत्वेन संयोगाभावज्ञाने रूपीयपदार्थत्वेऽपि मानाभावात्, इत्यास्ताम्।

एतेन समवायविशिष्टघटत्वावच्छिन्ना च या प्रकारता तन्निरूपिताभावप्रकारताकज्ञानत्वेन समवायेन घटाभाववदित्यस्य समवायेन घटवदिति बुद्धौ विरोधित्वम्। एवञ्च प्रतियोगितायां धर्मसंबन्धयोरवच्छेदकत्वं नास्त्येव, प्रयोजनाभावात्, इत्यादि परास्तम्।

समवायविशिष्टे घटत्वस्य प्रकारत्वं विरोधितावच्छेदके निवेश्यते उतैकत्र द्वयमिति रीत्या समवायघटत्वयोस्तद्? इति विनिगमनाविरहेण विरोधिताभेदात्। न च घटत्वांशे निर्द्धर्मितावच्छेदकज्ञानस्यैव विरोधित्वेनोभयसम्मतत्वान्न समवायविशिष्टे घटत्वस्य प्रकारत्वेन निवेश इति वाच्यम्; तथापि घटत्वविशिष्टे समवायस्य प्रकारत्वसंभवात्। अथ घटो न समवायीति ज्ञानकालेऽपि यथोक्तविरोधिधीसम्पत्तये एकत्र द्वयमिति रीत्या प्रकारीभवद्भ्यां समवायघटत्वाभ्यामवच्छिन्नैवाभावांशे प्रकारताविरोधितावच्छेदिका। घटत्वधर्मितावच्छेदककस्योक्तसमवायाभावज्ञानस्य घटत्वावच्छिन्नधर्मिताके शुद्धघटविशेष्यकघटत्वसमवायोभयप्रकारकज्ञाने विरोधित्वाभावेनोक्तबाधधीकालेऽप्युक्तधीसंभवादिति चेत्, मैवम्; घटत्वधर्मितावच्छेदककसमवायाभावज्ञानस्यैव समवायेन घटवदिति ज्ञानविरोधित्वसंभवादुक्तबाधधीकाले एकत्र द्वयमिति रीत्या भवदभिमतसमवायघटत्वोभयप्रकारकज्ञानावत्यादेरपि [ज्ञानानुत्पादेऽपि] क्षतिविरहात्। ग्राह्याभावावगाहित्वेनैव ज्ञानस्य प्रतिबन्धकत्वमित्यस्येदानीमनङ्गीकारात्। अन्यथा घटसमवायाभावज्ञानस्य समवायसंसर्गकघटप्रकारकज्ञानविरोधित्वोक्त्यादेरनुपपत्तेः, एकत्र द्वयमिति रीत्या घटत्वसमवायोभयावच्छिन्नप्रकारताकाभावज्ञानस्यापि तद्विरोधित्वानुपपत्तेश्च। एतेन संबन्धावच्छिन्नप्रतियोगितावादिमते तदन्तर्भावेनैव विरोधित्वाद् घटसमवायाभावज्ञानीयप्रतिबन्धकतायां समवायत्वावच्छिन्नत्वस्वरूपसंबन्धावच्छिन्नत्वयोः समवायेन घटाभावज्ञानीयप्रतिबन्धकतायां च समवायावच्छिन्नत्व-

घटत्वावच्छिन्नत्वयोः प्रतियोगितायां निवेशे विशेषणविशेष्यभावे विनिगमकाभावात् प्रत्येकं प्रतिबन्धकताद्वयेन प्रतिबन्धकताचतुष्टयम्, मम तु आद्ये घटसमवायाभावधीत्वेन द्वितीये च समवायविशिष्टघटाभावधीत्वेन तदिति द्वयमेवेति लाघवमित्यप्यपास्तम्।

यदपि समवायविशिष्टघटाभावो घटसामान्याभाव एव तत्समनियतत्वादिति तद्धीः कथं घटसंयुक्तादौ प्रतियोगितासमवायस्य न संबन्धः किन्तु स्वाश्रयसमवेतत्वम्, तथा च घटसामान्याभावरहितेऽपि घटसंयुक्ते उक्तसम्बन्धेन समवायविशिष्टघटाभावोऽस्तीति चेत्तर्हि तद्विषयताया विरोधितावच्छेदककोटिनिवेशे गौरवमित्याशङ्क्योक्तम्—यत्प्रतियोगिताव्यक्तौ यत्संबन्धयद्धर्माभ्यामवच्छिन्नत्वं त्वयोच्यते तस्या एव मया ताभ्यामवच्छिन्नं प्रतियोगिनं प्रति संबन्धत्वस्वीकारात्। तस्या एव प्रतियोगितायास्तदुभयात्मकत्वस्वीकाराच्च। समवायवद् घटात्यन्ताभावस्य न घटसामान्याभावत्वम्, अत एव समवायवद् घटाभावस्येव नीलघटाभावस्यापि धीः समवायेन घटवदिति धीविरोधिन्यस्त्वित्यपास्तम्। तव प्रतियोगितावच्छेदकयोरेव मम प्रकारतावच्छेदकतया निवेशादिति, तदपि चिन्त्यम्; तथापि यस्यां प्रतियोगितायां समवायेन घटत्वेन चावच्छिन्नत्वमित्यभिमतं तत्प्रतियोगिताव्यक्तिप्रकारतां स्वरूपसंसर्गावच्छिन्नामादाय प्रतियोगिताविशिष्टघटाभावज्ञानत्वेन समवायविशिष्टघटाभावज्ञानत्वेन वा प्रतिबन्धकत्वमिति विनिगमनाविरहस्य सुलभत्वात्, अन्यादृशप्रतियोगिताव्यक्तेः प्रकारतावच्छेदकत्वेन न निवेश इत्यस्य सुवचत्वात्। अभावनिष्ठविशेष्यतानिरूपितप्रतियोगिनिष्ठप्रकारतायां च प्रतियोगितासामान्यस्यैव संसर्गताया वाच्यत्वात्। प्रतियोगितावच्छेदकयोरेव प्रकारतावच्छेदकतया निवेश इत्यस्य प्रतियोगितावच्छेदकत्वाभिमतसमवायस्य ज्ञातबहिर्भाव इत्यस्य चाप्रयोजकत्वात्। एवं कम्बुग्रीवादिमान्नास्तीत्यादौ घटत्वस्यैव प्रतियोगितावच्छेदकतया तत्र घटत्वावच्छिन्नप्रकारतानिवेशे बाधः। यत्र च संयोगसंबन्धावच्छिन्नैव प्रतियोगिता समवायावच्छिन्नत्वेन भासते तस्या मया समवायावच्छिन्नत्वानभ्युपगमात्तादृशज्ञानस्य समवायेन घटवदिति धीविरोधित्वं न स्यात्। अथ यद्धर्मयत्संबन्धाभ्यामवच्छिन्नत्वेन प्रतियोगिताया भानं त्वयोच्यते तयोरेव प्रकारतावच्छेदकत्वेन मया निवेशः कार्य इति चेत्, न; प्रमेयघटो नास्तीत्यत्र घटत्वस्यैव प्रतियोगितावच्छेदकतया तत्र समवायविशिष्टघटत्वावच्छिन्नप्रकारतानिवेशे बाधात्।

अथ प्रकारतायाः घटत्वावच्छिन्नत्वं घटत्ववृत्त्यवच्छेदकताकत्वमात्रं न

तु तत्पर्याप्त्यधिकरणकावच्छेदकताकत्वमपीति चेत्, न; तथापि नीलघटवानिति ज्ञानस्य घटाभाववान्नीलघटाभाववानिति ज्ञानसाधारणं नीलत्वान्यघटत्वान्यधर्मानवच्छिन्नप्रतियोगिताकाभावप्रकारकज्ञानत्वं प्रतिबध्यतावच्छेदकम्, त्वया तु समवायान्नीलत्वाद् घटत्वाच्चान्येन धर्मेणानवच्छिन्नप्रकारताकाभावज्ञानत्वं यदि तथात्वेन वाच्यम्, तदा प्रमेयनीलघटो नास्तीति ज्ञानस्य तद्बहिर्भावापत्तिः। प्रमेयत्वान्यत्वस्यापि निवेशेऽभिधेयत्वप्रकारकतज्ज्ञानस्य प्रमेयत्वप्रकारतानिरूपितघटविशेष्यताशालित्वं न स्यात्। न च तत्र प्रमेयो घट इत्याकारकज्ञानसाधारणी प्रमेयत्वप्रकारतानिरूपितघटविशेष्यता तिष्ठत्येव। अभावनिष्ठविशेष्यतानिरूपतघटत्वावच्छिन्नप्रकारतारूपा विशेष्यता तु प्रमेयत्वप्रकारतानिरूपिता नास्त्येव। अतो घटत्वाद्यन्यधर्मानवच्छिन्नत्वमभावनिष्ठविशेष्यतानिरूपितघटप्रकारतायामक्षतमेवेति वाच्यम्; प्रमेयत्वप्रकारतानिरूपितविशेष्यताया एवं अभावनिष्ठविशेष्यतानिरूपितप्रकारता—रूपत्वसंभवेन तद्भेदे मानाभावात्। एव "हेतुसमानाधिकरणात्यन्ताभावज्ञाने प्रकारतानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः" इति त्वया वाच्यम्। तथा च वह्निमान् धूमादित्यादावव्याप्तिः। पर्वतो वह्नचभाववानिति भ्रमे वह्नित्वस्य प्रकारतावच्छेदकत्वात्।

न च प्रमायामिति ज्ञानस्थले वाच्यम्; ततोऽपि गौरवप्रसंगात्, व्याप्तेरप्रत्यक्षत्वापत्तेश्च, मन्मते तूक्ताभावप्रतियोगितानवच्छेदकमित्यादेर्वस्तुगर्भस्य वाच्यत्वान्न काप्यनुपपत्तिरिति, तिष्ठतु विस्तरः।

यत्तु संयोगतदभावयोर्नैकाधिकरण्यम्, अग्रे वृक्षः कपिसंयोगी मूले नेति प्रतीतेरग्रमूलयोरेव संयोगतदभाववत्तयोपपत्तेरिति, तच्चिन्त्यम्; मूले कपिसंयोगी नेति प्रत्ययस्यान्योन्याभावविषयकतया संयोगनिष्ठावच्छेदकतानिरूपित संयोगिनिष्ठप्रतियोगित्वावगाहितया च संयोगप्रतियोगिकात्यन्ताभावविषयकत्वेनोपपादयितुमशक्यत्वात्। शिखी नष्ट इत्यादौ तु विशेषण प्रतियोगिकत्वेऽपि ध्वंसस्य प्रतियोगित्व क्षणाद्वैषभ्यम। तादृशशाब्दस्थले संयोगस्य प्रतियोगित्वे नात्यन्ताभावस्यान्वयानुपपत्तेश्च। अत एव "मूलावच्छेदेन कपिसंयोगवद्भेदज्ञानस्य कपिसंयोगात्यन्ताभावविषयकत्वेनैवोपपत्तावन्योन्याभावस्याव्याप्यवृत्तित्वं न कल्प्यत" इति प्राचीनमतमप्युक्तविधयैव **दीधितिकृता** निरस्तम्। नच यत्र संयोगात्यन्ताभाव एव विषयस्तदभिप्रायेणैवावयवनिष्ठ संयोगात्यन्ताभावविषयकत्वोक्तिः; उक्तस्थले च संयोगवद्भेद एवावयवनिष्ठत्वेन भासतामिति वाच्यम्; अन्योन्याभावग्रहे प्रतियोग्यनु-

योगिनो: समानविभक्तिकत्वस्यापेक्षितत्वात् । यदपि संयोगेन रूपं नास्तीत्यादौ रूपादौ संयोगाद्यभावः प्रतीयते घटत्वेन पटो नास्तीत्यादौ पटे घटत्वाभाववदिति, तन्न; रूपे संयोगो नास्तीति प्रत्ययापेक्षया संयोगेन रूपं नास्तीति प्रत्यये वैलक्षण्यस्य सर्वानुभवसिद्धस्य शपथमात्रेण वारयितुमशक्यत्वात् । घटत्वेन पटो नास्तीति शब्दाच्चोक्तबोधानुपपत्तिरेव । नामार्थात्यन्ताभावप्रकारकबोधे प्रतियोगिनो विशेष्यतया प्रथमान्तपदजन्योपस्थितेरनुयोगिनश्च सप्तम्यन्तपदजन्योपस्थितेरपेक्षितत्वात् ।

यत्तु तृतीयार्थस्य वैशिष्ट्यस्याभावस्तत्र भाति, तत्र प्रतियोगिनो नामार्थत्वाभावेन तदभावबोधे प्रथमान्तपदजन्योपस्थितेरनपेक्षितत्वादिति, तन्न; कालिकादेर्घटत्ववैशिष्ट्यस्य पटेऽपि सत्त्वेन निषेधानर्हत्वात् । सुबर्थप्रकारकबोधं प्रति नञ्पदजन्योपस्थितिहेतुत्वकल्पनापत्तेश्च ।

न च भूतले न घट इत्यादौ भूतलवृत्तित्वाभाववान्घट इति बोधस्यापि तात्पर्यसत्त्वे स्वीकारान्न दोष इति वाच्यम्; तत्र भूतलवृत्तिर्घटो न वेति संशयनिवृत्त्याद्यनुरोधेन तथा स्वीकारेऽपि पटो घटत्ववैशिष्ट्यवान्न वेति संशयनिवृत्त्यादेरनुभवानारोहेण तथा कल्पने मानाभावात् । वस्तुतो वैशिष्ट्यमत्र न तृतीयार्थः । यद्यपि तत्र विशेषणोपलक्षणसाधारणे वैशिष्ट्ये इत्थंभूतलक्षणा तृतीयेत्युच्यते तथापि घटत्वेन पट इत्यत्र नञनुपसंदाने तृतीयायाः प्रसक्तिरेव नास्ति । प्रत्याय्य व्यावृत्य समानाधिकरणस्य तदुभयायोगात् । कालिकादिवैशिष्ट्यसंभवेऽपि तन्निषेधस्यानभिमतत्वात् । तदर्थं एव तृतीयां कृत्वा नञ्समभिव्याहारे समवायादिलक्षणायां च मानाभावात् ।

न चाभावं प्रति प्रतियोगिन उपलक्षणत्वाङ्गीकारात्तद्व्यावृत्त्यपेक्षयैव तृतीया स्यादिति वाच्यम् ; त्वद्रीत्या घटत्वस्य प्रतियोगित्वाभावात् । न चाभावबुद्धौ प्रतियोगिविशेषणतापन्नप्रतियोगितावच्छेदकस्य स्वावच्छिन्नप्रतियोगितानिरूपितानुयोगितासंबन्धेनाभावांशे प्रकारत्वोपगमादभावापेक्षया घटत्वस्य विशेषणतया तत्पदे तृतीयेति वाच्यम् ; प्रतियोगिताया धर्मावच्छिन्नत्वाङ्गीकारापत्तेः । मन्मते त्ववच्छेदकत्वरूपे वैशिष्ट्ये तृतीयोपपत्तेः । एवं घटत्वेन घटो नास्तीत्यादौ परमतोक्तबोधानुपपत्तिरिति प्रतियोगित्वस्यावच्छिन्नत्वमावश्यकमिति दिक् ।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले ।**
**पुरस्तादुपयुक्तेन परोक्तार्थकदर्थनम् ॥ ६ ॥**

# दशमोंऽशः

ननु विमतं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाद्वा, शुक्तिरूप्यवदिति चेत्, मैवम्; विमतपदस्य विप्रत्तिपत्तिविषयतावच्छेदकावच्छिन्नपरतया विप्रतिपत्तेरेवात्र दुष्टत्वात्। अथ ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं विद्भिन्नमिति पक्षार्यवसानम्। अत्र द्वितीयविशेषणं तुच्छे बाधवारणाय, तृतीयं ब्रह्मण्यसिद्धिवारणाय तयोः पक्षबहिर्भावार्थम्, पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितेरुद्देश्यत्वे भास्करादिमते शुक्तिरूप्ये सिद्धसाधनवारणाय सत्यन्तमवच्छेदकावच्छेदेनानुमितेरुद्देश्यत्वे तु तत्र देयमेव, तत्र सामानाधिकरण्येन सिद्धेऽपि विरोधित्वात्। किन्तु तत्रोत्तरद्वयमेव पक्षतावच्छेदकम्, तयोरन्यतरस्यैव तथात्वे ब्रह्मतुच्छयोः साध्यहेत्वभावधियो विरोधित्वेन बाधासिद्ध्योरापत्तेः। अवच्छेदकावच्छेदेन विशिष्टबुद्धौ सामानाधिकरण्येनापि बाधबुद्धेर्विरोधित्वात्। पक्षतावच्छेदकसामानाधिकरण्येन बुद्धेर्विरोधित्वात्; पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावज्ञानस्य च भागासिद्धिविधयावच्छेदकावच्छेदेनानुमितौ विरुद्धत्वादिति चेन्न; अस्य नैयायिकसाधारण्याभावात्। उभयवादिसिद्धस्यैव धर्मिणः पक्षत्वमिति सर्वतन्त्रसंमतत्वात्। अबाध्यत्वं हि यदि प्रतिबध्यज्ञानाविषयत्वं तदाप्रसिद्धिः। न च सविलासाज्ञाननिवृत्तिरूपबाधयोग्यत्वं, तच्च पल्लवाज्ञानतत्कार्यान्यतरत्वम्। तेन ब्रह्मज्ञानपूर्वमबाधिते प्रातिभासिकविशेषे न सिद्धसाधनम्। पल्लवाज्ञानानङ्गीकारे तु प्रातिभासिकान्यत्वमेव सत्यन्तार्थ इति वाच्यम्; ज्ञानेन वस्तुनिवृत्तेरज्ञानस्य च नैयायिकासिद्धत्वात्। प्रातिभासिकत्वस्य त्वद्रीत्या ब्रह्मज्ञानात्पूर्वमेव निश्चितमिथ्यात्वकदृश्यतादात्म्यापन्नचित्स्वरूपस्य मिथ्यात्वघटितत्वात्, पक्षतावच्छेदककोटिप्रवेशानर्हत्वाच्च। न चैकमिथ्यात्वकोटिकविप्रतिपत्त्यादावपरविधमिथ्यात्वं निवेश्यमिति वाच्यम्; मिथ्यात्वमात्रे विवादेन तथा वक्तुमशक्यत्वात्। यत्र पदार्थे न विवादः किन्तु धर्मिविशेषस्य तद्वत्तायामेव तत्रैव तादृशरीतेः संभवात्। नापि तथापि त्वदिष्टासिद्धिः, उक्तस्थले सिद्धसाधनतादवस्थ्यात्। यस्य प्रातिभासिकस्य ब्रह्मज्ञानात्पूर्वं मिथ्यात्वनिश्चयो न जातः तस्यापि ब्रह्मज्ञानात्पूर्वमेव निश्चितमिथ्यात्वकं यद्दृश्यं प्रातिभासिकान्तर तदन्यत्वसत्त्वात्। पल्लवाज्ञातानङ्गीकारपक्ष एव यथोक्तप्रातिभासिकत्वाङ्गी-

कारात । चिद्भिन्नपदेन च न ब्रह्मव्यावृत्तिः, मया ज्ञानब्रह्मणोराश्रयाश्रयिभावस्वीकारात् । त्वयापि श्रुत्यादिसिद्धधर्मधर्मितानिर्वाहार्थं कल्पितभेदोपगमात् । उक्तं हि **औपनिषद्वृद्धैः**—"आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इति । न च मन्मते वृत्त्यवच्छिन्नचैतन्यस्यैव ज्ञानतया चित्पदं न तदर्थकमिति वाच्यम् ; तथाप्युपहितचिद्भेदस्यापि शुद्धचिति त्वयाभ्युपगमात्, पक्षान्तर्भावे बाधादेर्दुर्वारत्वात् । न च शुद्धचिदेव भेदप्रतियोगित्वेन निवेश्या, तस्याः प्रतियोगित्वादिधर्मरहितत्वेन तन्निष्ठप्रतियोगिताकभेदस्याप्रसिद्धेः ।

न च कल्पितभेदप्रतियोगित्वादिसत्त्वान्निर्वाहः, शुद्धचिद्भेदस्यापि कल्पितत्वेन ब्रह्मणि तदावश्यकत्वात् । कल्पितमात्रं ब्रह्माधिष्ठानकमिति त्वयोपगमात् । न च चित्त्वावच्छिन्नप्रतियोगिताक एव भेदो निवेश्यः, स च न ब्रह्मणि तद् व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदेनैव धर्मतानिर्वाहादिति वाच्यम् ; धर्मतानिर्वाहकान्यभेदे मानाभावात् । न च प्रतियोगिताव्यधिकरणभेदनिवेशान्निस्तारः, तस्यापि त्वन्मतेऽप्रसिद्धेः प्रतियोगिताधिकरणे ब्रह्मणि भेदमात्रस्य स्वीकार्यत्वात् ।

यत्तु चित्प्रतियोगिकत्वविशिष्टभेदस्य चिद्वृत्तित्वे मानाभावात् स एव पक्षतावच्छेदकः, अत एव महाकालभेदविशिष्टघटादीनां महाकालादिवृत्तित्वं नास्तीति तार्किकाभ्युपगम इति, तन्न ; तस्य मिथ्यात्वासिद्धिप्रसंगात् । अत एव प्रतियोगिताव्यधिकरणत्वविशिष्टभेदस्य पक्षतावच्छेदकत्वमप्यनाशङ्क्यम् । दृष्टान्तस्तु विषमः । न्यायमते हि सामानाधिकरण्यघटकसंबन्धाभ्यां यस्य विशेषणविशेष्योभयवत्त्वं तत्रैतादृशं विशिष्टाधिकरणत्वम् यथा गुणकर्मान्यत्वविशिष्टसत्ता द्रव्य एवास्ति । वैशिष्ट्यघटकविशेषणतासमवायसंबन्धाभ्यां द्रव्ये गुणकर्मान्यत्वस्य सत्तायाश्च सत्त्वात् । गुणे तु तादृशविशेषणतया गुणान्यत्वाभावान्नोक्तविशिष्टसत्ता । एवञ्च दैशिकविशेषणताविशेषेण महाकालभेदो महाकाले नास्तीति महाकालभेदविशिष्टघटादिर्महाकाले नास्ति । महाकालभेदविशिष्टघटादिर्महाकालेऽस्तीति प्रतीतिस्तु यदि प्रामाणिकी तदा कालिकविशेषणतामेव भेदांशेऽप्याश्रित्य समर्थनीयेति सिद्धान्तः । त्वन्मते तु चित्प्रतियोगिकत्वं सामानाधिकरण्यसंबन्धेन भेदेन विशेषणम्, ब्रह्मण एव पक्षत्वापत्तेः । किन्तु स्वरूपसंबन्धेनैवेति कथं चित्प्रतियोगिकत्वविशिष्टभेदश्चिति न स्यात् । न च यथा तत्प्रतियोगिकत्वविशिष्टसंयोगस्तस्मिन्नास्ति तद्वदयमपि ब्रह्मभेदे ब्रह्मप्रतियोगिकत्वस्याभावा-

दिति वाच्यम् ; स्वप्रतियोगिकभेदस्यापि स्ववृत्तित्वात् तस्यैव मिथ्यात्वाभावप्रसंगाच्च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपरोधप्रसंगे भवत्सर्वस्वविलयापत्तेश्च । एतेनोपहितवृत्तेः शुद्धवृत्तित्वनियमेऽपि चित्प्रतियोगिकत्वविशिष्टभेदस्य न चिद्वृत्तित्वम्, तदन्यस्थल एव तन्नियमादित्यपि निरस्तं वैषम्ये बीजाभावाच्चेति दिक् ।

नापि द्वितीयविशेषणेन तुच्छव्यावृत्तिः, तत्साधारण्यात् । बाधधीविधुराणां शशशृङ्गं सदिति प्रत्ययदर्शनात् । सदसतोः संबन्धानुपपत्तिरिति **बौद्धाधिकारवाक्यं** तु वस्तुगत्यभिप्रायम् । अत एव "भ्रमस्थले संसर्गोऽसन्नेव भासते" इति **टीकाकृतां** पक्षः । न चैवम् "असत्ख्यातिनिरासात्" इति **दीधितिफक्किकायां** सत्त्वस्य ख्यातिविषयनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वनिरासादित्यर्थकथनमनुपपन्नम्, असतोऽपि ख्यातिविषयकत्वे सत्त्वस्य तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्यावश्यकत्वापत्त्या तन्निरासस्य बाधितत्वादिति वाच्यम्; ख्यातिपदस्य तत्र प्रमापरत्वात् । "यदसत्तन्न प्रमेति, यथा व्योमकमलम्, असच्च पुरावर्त्ति रजततादात्म्यमित्यनुमाने गगनकमलस्यापि शब्दाभासप्रतिभासत्वेन दृष्टान्तस्य साध्यविकलत्वात्" इति **लीलावत्यामुक्तत्वात्** ।

न चात्रापि प्रतीतिपदेन प्रमैव ग्राह्येति वाच्यम्; सत्त्वप्रकारकप्रमाविशेष्यत्वेनोपस्थितौ तत्र मिथ्यात्वासिद्धौ बाधापत्तेः । न च व्यावहारिकप्रमापरम्, तद्भेदस्येदानीमसिद्धेः व्यावहारिकतात्त्विकोभयसाधारणप्रमात्वस्य त्वयानङ्गीकाराच्च । अत एव "तद्धैक आहुरसदेवेदमग्र आसीत्" इति **छान्दोग्योपनिषदि** असतः सत्त्वेन प्रतीतिरनूद्यते । नास्तिकमतविशेषानुवादार्थत्वात् । "नानुपमृद्य प्रादुर्भावात्" इत्यत्र **न्यायवार्त्तिकतात्पर्यटीकादौ** तन्मतस्यापि दर्शनात् । तथा च तत्रोक्तम् "तत्र तावदेके प्राहुरभावाद् भावोत्पत्तिः, कुतः नानुपमृद्य प्रादुर्भावो यस्तस्मादित्यर्थः । विश्वं हि शून्यताया एव जायते । एवं किल श्रूयते असदेवेदमग्र आसीत्" इत्यादि ।

यत्तु संगतिग्रहणाभावाच्छशशृङ्गादिपदानामबोधकतेति **बौद्धाधिकारवाक्यं** तदखण्डशक्त्या बोधकत्वाभावपरम् । तथा च "पञ्चमेन सता पदार्थो व्यभिचरति" इति **महाभाष्यमुपादाय कैयटेनोक्तम्** "अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगाः । तस्माद् बुद्ध्यारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारे-

त्यर्थः । सैव तु सत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतया भासते" इत्यादि। तन्मतोपसंहारश्चोक्तः "तस्मादसदुपादानं विश्वमिति सिद्धम्" इति। अत एव "अभावात्पुनर्नाचितनत्वादेव कार्यानुपपत्तिरपि तु निरुपाख्यत्वात्" इति **पञ्चपादीवाक्ये**ऽपि "न च निरुपाख्योपादानतां जगतः सदन्वयात्" इति **विवरणाचार्य**-वाक्य "निरुपाख्यकारणवादिनं प्रति निरुपाख्यत्वादिति हेत्वसंभवादाह" इति **तत्वदीपनकारै**रवतारितम्। एतेन" यदि निरुपाख्यं कारणं वदेत्तदोक्तहेत्वसंभवः" इति तदभिप्रायवर्णनमपास्तम्, यथाश्रुतस्यैव सम्यत्क्वात्। पश्चादप्युक्तम् अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः"इति। "अनुपाख्यस्यार्थक्रियाजनकत्वाभावेऽप्यनिष्टप्रसंगान्तरमाह—अनुपाख्यस्येति । एतत् पटानुत्पत्तिक्षणे यद्येतत् पटोत्पादकानुपाख्योत्तरक्षणः स्यादेतत् घटाधिकरणं स्यात्" इति तत्र **वर्द्धमानोपाध्यायाः** ।

अत एव **न्यायकुसुमाञ्जला**वप्यकस्मादेव भवतीति वाक्यस्यार्थविकल्पेऽनुपाख्यहेतुत्वमपि शङ्कितम्।

"हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च।
स्वभाववर्णनान्नैवमवधेर्नियतत्वतः" ॥ इति तत्रोक्तत्वात्।

यत्तु "अस्थिरात् कार्यमिच्छन्तोऽर्थाभावाद्भावोत्पत्तिमाहुः"इति **भामतीफक्किका**व्याख्यायाम् "अभावस्यार्थक्रियाकारित्वानभ्युपगमात्, कथमभावाद्भावोत्पत्तिस्तत्सिद्धान्तत्वेनानूद्यते, तत्राह अस्थिरादिति। आपाद्यानुवादोऽयमिति वदिष्यन् क्षणिकस्य कारणत्वासंभवमाह-युक्तमेतत्"इति **कल्पतरुकारै**रुक्तम्, तच्चिन्त्यम्; तद्वादिना अभावस्यैव कारणत्वाभ्युपगमात्। तन्मतानुवादत्वे बाधकाभावेनापाद्यानुवादत्वे प्रमाणाभावात् । उक्तश्रुत्यर्थस्तु पूर्वपरिच्छेद एव परीक्षित इत्यलं पल्लवेन। एवं साध्यमपि दुर्वचम्।

ननु मिथ्याशब्दोऽनिर्वचनीयतावचन इति ग्रन्थदर्शनात् सदसत्त्वानधिकरणत्वमेव मिथ्यात्वम् । यद्यप्यसत्त्वविशिष्टसत्त्वाभावसाधने सिद्धसाधनं सत्त्वमात्राश्रये जगत्यसत्त्वविशिष्टसत्त्वाभावस्य परेषामिष्टापत्तिग्रस्तत्वात्, तथापि सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावः साध्यः । यद्वा सत्त्वात्यन्ताभावोऽसत्त्वात्यन्ताभावश्चेति द्वयं मिलितत्वेन साध्यम्। न च व्याघातः। सत्त्वाभावो ह्यत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेकः, असत्त्वाभावश्च क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वरूपासत्त्वव्यतिरेकः। न चैतौ

परस्परविग्रहरूपौ, परस्पराप्रतियोगिकत्वात्। तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वं पर्यवसितं साध्यमिति चेत्, मैवम्; आत्मभिन्नत्वे सति सत्त्वेन प्रतीयमानत्वरूपस्यास्यास्मदिष्टत्वात्। न हीदं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपस्यास्मत्सिद्धसत्त्वस्याभावमवगाहते। अथ वैलक्षण्यं बाध्यत्वं तथा च ज्ञानजन्योच्छेदप्रतियोगित्वमर्थः, स च न त्वदिष्ट इति चेत्, विशेषभागवैयर्थ्यात्। तुच्छस्य त्वन्मतेऽपि ज्ञानजन्योच्छेदप्रतियोगित्वविरहात्तृतीयमिथ्यात्वाविशेषापत्तेश्च। तस्माद्यादृशं सत्त्वं घटादेर्यादृशमसत्त्वं च शशशृङ्गादेर्मया स्वीक्रियते तदुभयाभाव एव मां प्रति साधनीयः। तत्र च व्याघातः स्पष्ट एव। परस्परविरोधे तु तत्प्रकारान्तरस्थितिरिति न्यायात्। एतेन सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम्। तथा चोभयात्मकत्वेऽन्यतरात्मकत्वे वा तादृग्भेदासंभवेन ताभ्यां नार्थान्तरम्। न चासत्त्वव्यतिरेकांशस्यासद्भेदस्य च सिद्धत्वादंशतः सिद्धसाधनमिति वाच्यम्; मिलितप्रतीतेरुद्देश्यत्वात्। अत एव गुणादिकं गुण्यादिभिन्नाभिन्नं समानाधिकृतत्वादिति भेदाभेदवादि प्रयोगे भेदांशस्य तार्किकादिसिद्धत्वेऽपि न दोष इति परास्तम्, पूर्वोक्तदोषसाम्यात्। नित्यभेदोऽनित्यभेदश्च यदि साध्यः तदा स्वव्यतिरिक्तनित्यानित्यव्यक्तिभेदमादाय सर्वत्र सिद्धसाधनम्। अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकभेदद्वयस्य साध्यत्वे तु व्याघातः। आत्मभिन्नत्वे सत्यनित्यत्वावच्छिन्नप्रतियोगिताकभेदस्य त्वाकाशादौ सिद्धसाधनम्। अवच्छेदकावच्छेदेनानुमितेरुद्देश्यत्वेऽपि तत्र बाधः, ज्ञाननिवर्त्यत्वस्य तथात्वेऽप्यसद्भेदसाधनवैयर्थ्यात्, इत्यादि स्वयमूह्यम्।

किञ्च ब्रह्मणो निर्धर्मकत्वात्त्वन्मते सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेनोक्तमिथ्यात्वस्य तत्रातिव्याप्तिः। ननु अबाध्यत्वोपलक्षितं तत्स्वरूपमेव ब्रह्मणः सत्त्वम्, तस्य ब्रह्मभिन्नत्वे मिथ्यात्वापत्त्या ब्रह्मणो वस्तुगत्या सत्त्वानुपपत्तेः। "प्राणा वै सत्त्वं तेषामेष सत्त्वः।" "नित्यो नित्यानां चेतनश्चेतनानाम्" "अणोरणीयान् महतो महीयान्" इत्यादिश्रुतिभिर्व्यवहारकालाबाध्यत्वरूपप्रपञ्चसत्यत्वापेक्षयाबाध्यत्वोपलक्षितब्रह्मस्वरूपात्मकत्वेन ब्रह्मसत्त्वस्योत्कर्षोक्तेः। तथा च सत्त्वं ब्रह्मणो न धर्म इति चेत्, सत्यम्; तथापि कल्पितस्य धर्मधर्मिभावस्यावश्यकत्वात्। अन्यथा "अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य" इति भाष्योक्तस्य देहादौ ब्रह्मधर्माध्यासस्यानुपपत्तेः। अत एव पूर्वोक्तौपनिषद्वाक्ये चकारः सत्त्वशुद्धत्वविमुक्तत्वादिपरः, तथा च सत्त्वादि-

संबन्धस्योपहित एव वृत्तेः। शुद्धे तदभावः सुलभ एव। न चैवं शुद्धस्य सत्त्वादिधर्मकत्वव्यवहारानापत्तिः, उपहिततादात्म्येन शुद्धे तत्संभवात्। न चैवमभावोऽपि स्वोपहित एव न शुद्ध इति वाच्यम्; भावाभावयोरन्यतरस्यावश्यकत्वात्। अन्यथा धर्माभाववत्त्वरूपनिर्द्धर्मकत्वस्याप्यनुपपत्तेः।

यत्तु निर्धर्मकभिन्न एव भावाभावयोरन्यतरनियमः, तुच्छे तदन्यतरादर्शनात्। न चैवं शुद्धब्रह्मणो निर्धर्मकत्वानुपपत्तिः, धर्माभावाश्रयोपहिततादात्म्यादेव तत्संभवात्। अतो न निर्धर्मकत्वश्रुतिविरोधः। तथा च शुद्धे नातिव्याप्तिरिति, तदसत्; उपहिततादात्म्यस्यापि तत्रानुपपत्तेः। कल्पितस्य धर्माश्रयतादात्म्यस्य संभवे तु तादृशस्य धर्मस्यापि सत्त्वे बाधकाभावात्। निर्धर्मकत्वग्राहकप्रमाणस्यैवाभावरूपधर्माश्रयत्वग्राहकत्वेनोपजीव्यविरोधाच्च। तुच्छस्य च धर्माभावानाश्रयत्वे निर्धर्मकत्वव्यवहारविरोधात्। असुतव्यावृत्तेर्वन्ध्यासुतवृत्तित्वेन **बौद्धाधिकारादौ** व्यवहृतत्वात्। "अभावरूपस्य विकल्पविषयत्वरूपस्य च धर्मस्य तुच्छेऽपि स्वीकारात्" इति **लघुचन्द्रिकायां** स्वयमेव लिखितत्वाच्च निर्धर्मकतादात्म्याङ्गीकारेऽपि व्याघातः।

यत्तु सत्त्वसंबन्धवत्प्रतियोगिकतादात्म्याभाव एव साध्यत्वेन निवेश्यो न तु सत्त्वाभावः, उक्ततादात्म्यं चोपहितवृत्त्यपि शुद्धेऽस्त्येव। शुद्धोपहितयोस्तादात्म्याङ्गीकारात्। अन्यथा शुद्धस्याशुद्धोपरागेण भानानुपपत्त्या संसारकाले स्वप्रकाशत्वं न स्यात्, तदा शुद्धस्य पृथग्भानाभावात्। तथा च "तमेव भान्तमनुभाति सर्वम्" इति शुद्धप्रतिपादिका श्रुतिः "अनुकृतेस्तस्य च" इति सूत्रं चानुपपन्नं स्यात्, ब्रह्मणः स्वान्यसर्वभासकत्वं स्वान्याभास्यत्वं चोक्तश्रुत्यर्थं इत्यस्य तदधिकरणे स्थापितत्वात्। न च तथाप्युक्ततादात्म्यस्य कल्पितत्वेन शुद्धे तदभावोऽप्यस्तीत्यतिव्याप्तिरेवेति वाच्यम्; प्रतियोगिव्यधिकरणस्योक्ताभावस्य निवेशादिति, तदप्यसत्; सत्त्वसंबन्धवत् प्रतियोगिकतादात्म्यस्य प्रपञ्चेऽपि सत्त्वादव्याप्तेः। सत्त्वसबन्धोपहितस्यैव ब्रह्मण आकाशाद्युपादानत्वात्। सत्त्वोपहितकपालादेर्घटाद्युपादानत्वाच्च। प्रपञ्चमात्रस्य सत्त्वप्रतीतेस्तत्रोक्ततादात्म्यमेव विषय इति सिद्धान्तात्।

ननु स्वाभाविकसत्त्वसंबन्धवत्त्वमुपहितकेवलभावेन तादात्म्यञ्च निवेश्यम्, तच्च प्रपंञ्चे नास्ति सत्त्वोपहितब्रह्मतादात्म्यस्य प्रपञ्चे सत्त्वेऽपि तस्य केवलब्रह्मरूपत्वाभावादिति चेत्, मैवम्; स्वाभाविकत्वं हि सत्त्वे विशेषणं संबन्धे वा ? नाद्यः, तत्संबन्धस्य शुद्धे विरहादतिव्याप्तेः। नान्त्यः, अप्रसिद्धेः। संबन्धस्य त्वन्मते कल्पितत्वात्। यदपि शुद्धब्रह्मणि

धर्माङ्गीकारपक्षे सत्त्वमबाध्यस्वरूपत्वं तदभावश्च प्रतियोगिव्यधिकरणो ग्राह्यः। बाध्यवृत्तिः सत्त्वाभाव इति यावत्। तेन प्रपञ्चे सत्त्वाभावस्योपाधिकसत्त्वसामानाधिकरण्येऽपि नाव्याप्तिः। बाध्यत्वे च ज्ञानजन्यो ज्ञानात्मको वा यो ध्वंसस्तत्प्रतियोगित्वम्, तेन मिथ्यात्वरूपबाध्यत्वघटिततयात्माश्रयानवकाश इति, तदपि चिन्त्यम्; बाध्यवृत्त्यभावस्यैव लक्षणत्वे भागान्तरवैयर्थ्यात्। न च ज्ञानप्रागभावे सिद्धसाधनम्, अवच्छेदकावच्छेदेनानुमितेरुद्देश्यत्वात्। एतदनुमानात्प्राग्ब्रह्मान्यस्य ज्ञानजन्यत्वं ध्वंसप्रतियोगित्वासिद्धेश्च। न च ब्रह्मान्यत्वमेव बाध्यत्वमिति वाच्यम्; ब्रह्मान्यत्वस्योक्तरीत्या ब्रह्मवृत्तित्वात्। यदपि धर्मिसमानसत्ताकस्य सत्त्वाभावस्याश्रयत्वमेवात्र वाच्यम्; धर्मिसमानसत्ताकस्यासत्त्वाभावस्याश्रयत्वं तु लक्षणान्तरम्, तादृशाभावश्च प्रपञ्च एवास्ति न तु ब्रह्मणि। सत्त्वाभावस्य व्यवहारिकी सत्ता ब्रह्मणस्तु पारमार्थिकीति सत्तावैषम्यादिति, तदप्यसत्; सत्ताभेदस्य संप्रत्यसिद्धेः।

यत्तु वदन्ति यद्यपि संबन्धवत्प्रतियोगिकतादात्म्याभावस्य प्रपञ्चे सिद्धसाधनम्, ब्रह्ममात्रविषयकतद्धीविषयत्वावच्छिन्नप्रतियोगिताकस्योक्ततादात्म्याभावस्य च प्रपञ्चे सत्त्वात्। उक्तज्ञानविशेष्यत्वाभावस्य प्रपञ्चे मयापि स्वीकारात्। न ह्युक्ततादात्म्यावच्छिन्नाभाव एव साध्यः, मन्मते तादृशतादात्म्यस्य ब्रह्ममात्रवृत्तितया लाघवेन तत्तादात्म्यव्यक्तिमात्रविषयकधिय एव तद्व्यक्तित्वेन विषयतासंबन्धेन प्रतियोगितावच्छेदकतया गुरुभूततादात्म्यत्वावच्छिन्नाभावस्याप्रसिद्धेः। तथाप्युक्ततादात्म्यत्वव्यापकविषयताकमुक्ततादात्म्यत्वव्यापकं यद्विषयत्वं वा? तद्वृत्त्युभयावृत्तिधर्मनिष्ठानवच्छिन्ना च प्रतियोगितावच्छेदकता यस्य तादृशाभावः साध्यः तादृशविषयता चास्माकं शुद्धचित्तादात्म्यमित्याकारकज्ञानीया, परेषामुक्ततादात्म्यं सर्वं प्रमेयमित्याकारकज्ञनीया। द्वितीयेऽप्युक्तबाध्यत्वव्यापकविषयताकमबाध्यत्वव्यापकं यद्विषयत्वं वा तद्वृत्त्युभयावृत्तिधर्मनिष्ठेत्यादि वाच्यम्। तादृशविषयता चास्माकं बाध्य इत्याकारकज्ञानीया परेषामबाध्यस्वरूपं सर्वं मेयमित्याकारकज्ञानीया च। अत्र च न सिद्धसाधनम्। उक्ततादात्म्यत्वव्यापकस्योक्तधीविषयत्वस्य मेयमात्रे तैः स्वीकारात्। ब्रह्मणीव प्रपञ्चेऽपि तादृशमिथ्यात्वविरोधिप्रमाविषयत्वाबाध्यत्वसत्यत्वप्रकारकोक्तज्ञानप्रतियोगिकस्य विशेष्यतासंबन्धावच्छिन्नतद्धीव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्यानङ्गीकारात्। न चैवं प्रपञ्चे तादृशज्ञानविषयत्ववादितार्किकादीन् प्रति तादृशन्यायप्रयोगवैयर्थ्यम्, बाधेन तेषामनुमित्यनुदयादिति

वाच्यम्; विप्रतिपत्त्यधीनात्पक्षे साध्यसंशयात्, वादिनोर्बाधनिश्चयभावात्। न चोक्तज्ञानविशेष्यताभ्युपगमः प्रपञ्चे परेषामस्तीति पूर्वोक्तयुक्त्यापत्तिः, अनिश्चितप्रामाण्यमेव तादृशधियमादाय सिद्धसाधनप्रसक्त्या तन्निषेधात्। अन्यथा शब्दो नित्यो न वेत्यादावपि न्यायप्रयोगो न स्यात्, विप्रतिपत्त्या वादिनोरपि बाधनिश्चये भ्रमत्वसंशयादनुमितिर्मध्यस्थादीनां तु स्वरसेनैवेत्यस्य प्रकृतेऽपि साम्यात्। यत्र तत्तद्धीव्यक्तित्वनिष्ठाप्रतियोगितावच्छेदकता घटादितादात्म्यविषयकवृत्तिधर्मत्वेनावच्छिन्ना तादृशाभावमादाय घटादौ सिद्धसाधनवारणायानवच्छिन्नेति। ननु तथापि ज्ञानानां ज्ञानाविषयत्ववादिप्राभाकरमतेंऽशतः सिद्धसाधनम्, पक्षतावच्छेदकावच्छेदेनानुमितेरुद्देश्यत्वेऽपि प्रपञ्चस्य सत्त्वेऽपि ज्ञानस्वरूपत्वसिद्ध्यार्थान्तरम्। भवति हि प्रपञ्चस्य ज्ञानरूपत्वे ऽबाध्यं सर्वं मेयमित्याकारकज्ञानविषयत्वाभावस्य पक्षे उपसंहार इति चेत्, मैवम्; ज्ञानरूपतया स्वीकार्ये प्रपञ्चे उक्ताव्यापकबाध्यत्वादिव्यापकस्येच्छादिविषयत्वस्यावश्यं स्वीकारात्। ज्ञानेषु ज्ञानाविषयत्ववादिनापीच्छाविषयत्वस्य स्वीकारात्। तथा च ज्ञानाविशेषितस्योक्तरूपविषयत्वस्याभावो ज्ञानात्मके प्रपञ्चे बाधान्नोपसंहर्तुं शक्य इति ज्ञानरूपत्वसिद्ध्या नार्थान्तरमिति।

न च तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वरूपव्यापकत्वं त्वन्मते नास्ति, त्वया तद्वत्यपि तदभावस्वीकारादिति वाच्यम्; लौकिकव्यवहारोपयुक्ताभावस्य विशेषणतासंबन्धानामन्यतमत्वादिरूपेण निवेशात्। साध्यसामानाधिकरण्या-
वच्छेदकरूपव्याप्तिनिरूपकत्वस्य वा व्यापकत्वस्य वाच्यत्वात्, अवच्छेद-
कत्वमखण्डमेवेति **मिथ्यादिसंमतत्वात्तस्याभावाघटितत्वाच्चेति**। अत्रेदं
वक्तव्यम्—एवमप्यर्थान्तरं तदवस्थमेव, उक्तविषयत्वावच्छिन्नाभावस्येच्छा-
विषयेष्वपि ज्ञानेषु सिद्धिसंभवात्। अबाध्यं सर्वं मेयम्, मे भवत्विती-
च्छाया अनुभवविरुद्धत्वात्। अबाध्यं सर्वं मेयम्, घटो मे भवत्वितीच्छा-
विषयत्वं च नाबाध्यत्वव्यापकम्। अबाध्यत्वप्रकारतानिरूपितविशेष्यत्वं हि
तथात्वेन वाच्यम्। अन्यथा बाध्यं सर्वं मेयं भूतलं घटवदिति समूहाल-
म्बनमादाय तत्प्रकारकज्ञानाविषयत्वस्य प्रपञ्चे सिद्धसाधनापत्तेः।
अबाध्यं सर्वं मेमित्येवं च नेच्छान्तर्गतम्, उक्तयुक्तेः। किन्तु तदंशो
ज्ञानस्वरूपान्तर्गत एव ज्ञानेच्छाविषयतानां च परस्परं निरूप्यनिरू-
पकभावविरहादित्यवधेयम्।

किञ्च बाधोऽपि निराबाध एव। न हि शुक्तौ रजतत्वाभावं व्यवस्थाप-

यता बाधकसहस्रेणापि तस्या इदं रजतमिति ज्ञानविषयत्वाभावः साधयितुं शक्यः। एवञ्च प्रपञ्चे तादृशधीविशेष्यतास्वीकारिणां तार्किकादीनां न कथंचिदपि तदभावानुमितिसंभवः। किं बहुना, औपनिषदस्यापि न तादृशानुमितिः संभवति। नहि चैत्रीयं रजतत्वाभाववद्विषेष्यकरजतत्वप्रकारकज्ञानं जानतोऽपि मैत्रस्य शुक्तिविशेष्यकरजतत्वाभावज्ञानं जातु समुदेति, चैत्रीयतादृशज्ञानरूपबाधकसत्त्वात्। शब्दो नित्यो न वेत्यादौ तु नैयायिकेन नित्यत्वाभावो मीमांसकेन नित्यत्वं च न्यायेन प्रतिपाद्यते।

ननु नित्यत्वानित्यत्वान्यतरप्रकारकज्ञानविषयत्वाभावे नित्यत्वादिप्रकारकज्ञानविषयत्वज्ञानं चानित्यत्वाद्यनुमितौ न बाधकम्, अनित्यत्वेऽपि शब्दस्य भ्रमात्मकनित्यत्वप्रकारकज्ञानविषयत्वसंभवादिति वैषम्यम्। एतेन भेदगर्भद्वितीयसाध्ये ज्ञानानिवर्त्यरूपसद्भेदस्य निवेशपक्षेऽस्मन्मते ब्रह्ममात्रविषयकतद्धीविषयत्वस्वरूपस्यैव लाघवेनोक्तभेदप्रतियोगितावच्छेदकत्वेन ज्ञानानिवर्त्यत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेरुक्तधीविषयत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे सिद्धसाधनापत्तिः। किन्तु सत्यं सर्वं बाध्यमित्याकारकपराभ्युपगतस्य कस्यचिज्ज्ञानस्य यद्विषयत्वं तद्व्यक्त्यवच्छिन्नप्रतियोगिताकत्वेन सद्भेदस्य निवेशः। तादृशज्ञाने चास्मदभ्युपगतबाध्यत्वविरोधिसत्यत्वप्रकारकत्व परैः स्वीक्रियते तदीयमुख्यविशेष्यताव्यक्तेर्भेदादिसाधने सिद्धसाधनं तैर्वक्तुमशक्यम्। ब्रह्मणीव प्रपञ्चेऽपि तैस्तस्याः स्वीकारादित्यादिकमप्यपास्तम्। अन्यथा ब्रह्म पक्षीकृत्य मयापि त्वां प्रत्युक्तभेदात्यन्ताभावयोः साधनापत्तेः। बाधान्यबाधकस्य तत्रापि वक्तुमशक्यत्वात्। वस्तुतो यादृशं घटत्वाद्यंशे किंचिदवच्छिन्नप्रकारताकमुक्तज्ञानीयं प्रपञ्चनिष्ठविषयत्वं तदभावो घटत्वादितत्तदसाधारणधर्मांशे निरवच्छिन्नप्रकारताकघटः सत्य इत्यादिरूपज्ञानदशायां घटादौ मयापि स्वीक्रियते, इति सिद्धसाधनं दुर्वारम्। वस्तुतस्तु, अभावीयविशेषणताविशेषसंबन्धेनोक्तविषयत्वाभावस्य केवलान्वयित्वात् सिद्धसाधनम्, विषयत्वस्य भावरूपतयोक्तसंबन्धेन तस्य कुत्राप्यवृत्तेः।

न च स्वरूपसंबन्ध एव प्रतियोगितावच्छेदकतया निवेश्य इति वाच्यम्; तथापि विषयत्वस्य समवेतत्वसिद्ध्यार्थान्तरान्नहि समवायसंबन्धावच्छिन्नप्रतियोगिताक उक्ताभावः साधयितुं शक्यः, सिद्धसाधनापत्तेः। न च विषयत्वस्यापि पक्षकोटिप्रविष्टतया स्वरूपान्यसंबन्धराहित्यं विशेषणं बाधस्फोरणार्थं देयमिति वाच्यम्; पक्षतावच्छेदकस्य पदार्थान्तरसाधारण्यानुपपत्तेः।

विशिष्टविषयत्व एव तद्विशेषणस्य दातुमशक्यत्वात् । न च नैयायिकाभिमतसंबन्धान्यसंबन्धेनावृत्तित्वं विशेषणं देयमिति वाच्यम्; गगनादीनामवृत्तीनां पक्षबहिर्भावापत्तेः । न च यस्य येन संबन्धेन वृत्तिमत्त्वं तत्सम्मतं तदन्यसंबन्धेनावृत्तित्वं तदर्थ इति वाच्यम्; स्वात्यन्ताभावसामानाधिकरण्य-[ण्या]भावविशिष्टसंयोगादिनैव घटादीनां वृत्तिमत्त्वस्य नैयायिकाभिमततया तदभावसिद्धौ बाधस्यैवापत्त्यास्माकं कृतार्थत्वात् । वह्निमानित्यादिज्ञाने वह्न्यभावाधिकरणावृत्तित्वरूपो विरोधः संसर्गतया भासत इत्यभ्युपगमस्याप्यत्रानुकूलत्वात् । तथा च विषयत्वेऽर्थान्तरवारणार्थं प्रवृत्तेन पक्षतावच्छेदकावच्छेदेनैव बाधः समानीत इति महद्भवतामनिष्टम् । तदेतदुच्यते वृश्चिकभिया पलायमानस्याशीविषमुखनिपात इति । न च नैयायिकस्थाने वेदान्तिपदं देयमिति वाच्यम्; व्यावहारिकभावाभावयोर्विरोधस्य तैरपि तावदभ्युपगमात्, मिथ्यात्वस्य चैतदनुमानात्पूर्वमसिद्धत्वात्, बाधपर्यवसानस्यावश्यकत्वात् ।

वेदाविरुद्धयुक्तीनामके तर्ककुतूहले ।
टीकाकथितमिथ्यात्वं प्रथितं पथि तत्त्वगे ॥१०॥

———

# एकादशोंऽशः

यत्तु "प्रतिपन्नोपाधौ त्रैकालिकात्यन्ताभावप्रतियोगित्वं तत्। लक्षणत्वपक्षे तुच्छे व्यभिचारवारणाय विशेष्यान्तम्। ध्वंसप्रागभावकाले तदधिकरणेऽपि तदत्यन्ताभावस्य सिद्धत्वात् त्रैकालिकेति। अत्यन्ताभावपदञ्च स्वान्यूनसत्ताकत्वरूपं यदात्यन्तिकत्वं तद्विशिष्टसंसर्गाभावपरम्, अन्यथा कपाले घटो नास्तीति भ्रमसिद्धं प्रातिभासिकात्यन्ताभावमादाय सिद्धसाधनापत्तेः, व्यापकान्तेनैव ध्वंसादिवारणेऽत्यन्तपदार्थघटकसदातनत्ववैयर्थ्यापत्तेश्च, भेदस्य सत्त्वव्यापकत्वसिद्ध्यार्थान्तरवारणाय संसर्गपदम्" इति, तदप्यसत्; आकाशादौ स्वप्रकारकधीविशेष्योपाधेरप्रसिद्धेः। न च ब्रह्मैव तादृक्, निराकरिष्यमाणत्वादेतदनुमानात्पूर्वं तदसिद्धेश्च। न च "आत्मन आकाशः संभूतः" इति श्रुत्यैव तत्सिद्धिः, नहि घटादेर्जन्यत्वमपि मिथ्यात्वानुमानात्पूर्वं न गृह्यत इति वाच्यम्; तस्या उक्तार्थकत्वनिरासात्, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकप्रभावमादाय सर्वत्र सिद्धसाधनाच्च। तस्योक्तसत्त्ववन्निष्ठात्यन्ताभावाप्रतियोगित्वाद् व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावस्य केवलान्वयित्वमिति **मणिकारोक्तेः** प्रातिभासिकस्य व्यावहारिकापेक्षयान्यूनसत्ताकत्वमित्यादिभेदस्येदानीमसिद्धत्वाच्चेत्, न; प्रातिभासिकाभावे व्यावहारिकपारमार्थिकान्यतरप्रतियोगिकत्वं व्यावहारिकाभावे पारमार्थिकप्रतियोगिकत्वं चेत्यन्यतरवत्त्वमेव प्रातिभासिके स्वन्यूनसत्तायाः परमतेऽप्रसिद्ध्या प्रतियोग्यपेक्षया न्यूनसत्ताकत्वस्यादुर्ग्रहतया दृष्टान्तस्य साध्यवैकल्याच्च। एतेनाभावस्य स्वप्रतियोगिन्यूनसत्ताकत्वं ततश्च व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं पारमार्थिकनिष्ठं च यद्व्यावहारिकाभावप्रतियोगित्वं तद्भिन्नत्वे सति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति फलितार्थः। व्यावहारिकः पारमार्थिको वायं घटः स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगीति ज्ञानकालेऽप्येतद्घटे मिथ्यात्वव्यवहारविरहात्। पारमार्थिकमिदं पारमार्थिकान्यस्य स्वसमानाधिकरणस्यात्यन्ताभावस्य प्रतियोगीति ज्ञानकाले इदं मिथ्येति व्यवहाराभावाच्च यथोक्तप्रतियोगित्वद्वयस्य क्रमेण भेद प्रतियोगितया निवेशः, इत्यपि परास्तम्। वस्तुतः परमतेऽपि पारमार्थिकत्वस्य

मिथ्याभिन्नत्वरूपत्वादात्माश्रयः। न च ज्ञाननिवर्त्यत्वाभावरूपपारमार्थिकत्वमेव घटकं, तादृशपारमार्थिकत्वघटितस्यास्यैव मिथ्यात्वलक्षणत्वानुपपत्तेः। ज्ञाननिवर्त्यत्वस्यैव लक्षणत्वसंभवादन्यांशवैयर्थ्यात्।

यत्तु ज्ञाननिवर्त्यत्वस्य पूर्वोक्तप्रतियोगित्वे विशेषणतया तदभावस्य लक्षणत्वान्न वैयर्थ्यं धूम प्रागभाववदखण्डाभावत्वादिति, तच्चिन्त्यम्; तथा हि समानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वमेव व्यर्थविशेषणत्वम्, यथा नीलधूमे नीलस्य। धूमप्रागभावस्य तु धूमत्वरूपव्याप्यतावच्छेदकान्तरघटितत्वेऽपि धूमप्रागभावत्वरूपव्याप्यतावच्छेदकस्य धूमत्वरूपव्याप्यतावच्छेदकसामानाधिकरण्याभावाद् व्याप्यत्वमस्त्येव। अत एव **प्रामाण्यवादे मिश्रै**रुक्तम् "लघ्ववच्छेदकव्याप्यस्यैव गुर्ववच्छेदकस्य व्यर्थविशेषणताबीजत्वात्" इति। **द्रव्योपायटिप्पण्याम**पीन्द्रियलक्षणे तैरुक्तम् "अत्र तु न नानाधर्मिणि व्याप्तिग्रहः किन्तु तादृशसंयोगाश्रयत्वरूपे धर्मे एकस्मिन्" इति। अत एवेन्द्रियलक्षणे "धर्मिभेदसंपादनाय ज्ञानकारणमनःसंयोगसमानाधिकरणशब्देतरोद्भूतविशेषगुणाश्रयत्वाभावो लक्षणम्" इति व्याचक्षते।

ननु नीलधूमेऽपि कथं व्याप्तिविरहः, अव्यभिचरितसामानाधिकरण्यस्य तत्र सत्त्वादिति चेत्; **अत्रोपाध्यायाः** "साध्यसामानाधिकरण्यावच्छेदकं हेतुतावच्छेदकमेव व्याप्तिः, सैवानुमितिहेतुः, अत एव यो धूमवान् स वह्निमान् इत्युदाहरणेन साधनवदवच्छेदेन साध्यसत्त्वं दर्शयता इयमेव व्याप्तिर्दर्श्यते। एतदभावश्च व्याप्यत्वासिद्धिर्नीलधूमत्वादौ गौरवेण तस्यानवच्छेदकत्वात्। व्याप्तित्वप्रकारकव्याप्तिज्ञानस्यानुमितिहेतुतया तदवच्छेदकत्वस्यापि परामर्शविषयत्वात्। तादृशावच्छेदकत्वाभावस्य परामर्शविषयाभावत्वरूपासिद्धिलक्षणाक्रान्तत्वात्" इति। **मिश्रास्तु** "अनधिकदेशत्वरूपमवच्छेदकत्वं नीलधूमत्वेऽप्यस्ति, न चान्यूनवृत्तित्वं तदिति वाच्यम्; वह्निसामानाधिकरण्यवदालोकावृत्तितया धूमत्वस्याप्यवच्छेदकत्वापत्तेः। न च तत्रावच्छेदकान्तराघटितत्वमपि विशेषणम्, तथात्वे व्याप्त्यन्तरापेक्षया गुरुत्वेनैव व्याप्तिज्ञानस्यानुमितिहेतुत्वानुपपत्त्या तत्प्रतिबन्धकस्यावच्छेदकत्वाभावज्ञानस्य हेत्वाभासत्वानुपपत्तेः। अवच्छेदकान्तराघटितत्वगर्भव्याप्तेरुदाहरणादवगमस्य शङ्कितुमप्यशक्यत्वाच्च। न च स्वरूपसत एवावच्छेदकान्तराघटितत्वविशेषणस्याभावादत्र व्याप्त्यभावः, अनुमितिजनकं तु तद्रहितव्याप्तिज्ञानमेवेति वाच्यम्; पारिभाषिकव्याप्तिविरहेऽपि हेत्वाभासत्वानुपपत्तेरनुमितिहेतुज्ञानविरोधिज्ञानविषयस्यैव तथात्वात्। अतो नीलधूमत्वाव-

च्छिन्नव्याप्त्यभाव एव व्याप्यत्वासिद्धिः। सा च तदवच्छिन्नलिङ्गकानुमिति प्रतिबन्धकत्वेन हेत्वाभासः। न च प्रतियोग्यप्रसिद्धिः, कस्तूरिकादहनत्वावच्छिन्नप्रतियोगिकाया व्याप्तेः प्रसिद्धेः। न च तादृशव्याप्तिर्नीलधूमेऽस्त्येव वह्नित्वावच्छिन्नप्रतियोगिकनीलधूमत्वावच्छिन्नव्याप्तिश्च प्रसिद्धैवेति वाच्यम्; प्रकृते वह्नित्वनिष्ठस्य नीलधूमत्वावच्छिन्नव्याप्तिप्रतियोगितावच्छेदकत्वाभावस्यैवासिद्धत्वात्"इति वदन्ति। इत्यलं बहुना।

प्रकृतमनुसरामः। **दूषणोद्धारकृतस्तु** "समानाधिकरणत्वविशेषणम्, अप्रामाणिकत्वात्, धूमप्रागभावो न, हेतुप्रागभावादीनां व्यर्थत्वादिति **मणिकृतैव** लिखितत्वात्। अतो नियतोपस्थितिकयोर्लघुगुरुधर्मयोर्मध्ये लघोरेवावच्छेदकत्वं कल्प्यते न गुरोरित्येव नियमः। सत्तावच्छेदकान्तरघटित समानभिन्नाधिकरणधर्मसाधारण एव" इत्याहुः। अत एव **अद्वैतचन्द्रिकायामपि** "विश्वसत्त्वानुमानभङ्गे व्याप्यतायाः कारणत्वादिव स्वरूपसंबन्धरूपेणातिरिक्ते वावच्छेदकत्वेन घटितत्वाद्, व्याप्तेश्च स्वविशिष्टव्यापकसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकरूपतया तादृशावच्छेदकत्वस्य गुरुधर्मेऽनभ्युपगमात्। उक्तावच्छेदकत्वशून्यहेतुतावच्छेदकरूपव्यर्थविशेषणत्वस्य व्याप्यत्वासिद्धिविधया हेत्वाभासत्वम्, अतो नीलधूमादिवद्धूमप्रागभावस्यापि वैयर्थ्यमेव। समानाधिकरणविशेषणस्य **दीधित्यादौ** दत्तस्य निर्मूलत्वात्" इत्युक्तम्। अथ व्यर्थविशेषणेऽपि व्याप्तिरस्त्येव। दोषत्वं तु तस्य विशेषणनिर्मुक्तावस्यैव साधकत्वे परार्थानुमानेऽधिकोपादाने प्रयोक्तृनिग्रहसंपादकत्वेनैवेति **आकर** एव स्पष्टत्वात्। अत एव शब्दप्रामाण्यविचारे निराकाङ्क्षवाक्यस्थले पदार्थसंसर्गसिद्धिवारणाय घटपदादिनिरूपिताकाङ्क्षादिमत्पदास्मारितत्वादिति हेतौ देयम्। न च योग्यतानिवेशस्यावश्यकतया तत एव व्यभिचारवारणे तद्वैयर्थ्यं स्वार्थानुमाने व्यर्थविशेषणत्वस्य हेतावदोषत्वादित्युपगते इत्यालोच्यते, तदपि व्याप्तिग्रहानौपयिकमात्रेऽभियुक्तसंमतमिति धूमप्रागभावेऽपि तुल्यमेव। अत एव **सूत्रमुक्तावल्यामपि** "जन्माद्यस्य यतः"इति सूत्रे "विवर्तोपादानत्वे सति निमित्तत्वम्"इति ज्ञानलक्षणे "धूमप्रागभाववन्न वैयर्थ्यम्" इत्युक्त्वा वस्तुतस्तु इत्यादिना प्रकारान्तरेण तैरेव समाहितं तत्कथमत्रोक्तरीत्या सार्थक्यं स्यात्। वस्तुतस्तु धूमप्रागभावत्वं व्याप्यतावच्छेदकमित्यस्यापि मूलग्रन्थेषु बहुशो दर्शनात्। तत्पक्षेऽपि ज्ञाननिवृत्तित्वाभावरूपं पारमार्थिकत्वे नैतन्मिथ्यात्वलक्षणघटकं ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वस्यापि विवादग्रस्तत्वात् तदभावरूपपारमार्थिकत्वस्यात्र निवे-

शयितुमशक्यत्वात् । तार्किकाभिमतस्य ज्ञानप्रागभावादिवृत्तिज्ञाननिवर्त्य-
त्वमात्रस्य निवेशे तु पटादीनामपि तदभावरूपपारमार्थिकत्वाश्रयत्वात् ।
यदपि अविनाशित्वरूपं पारमार्थिकत्वं निवेश्यमिति, तदपि न; गगनादिसा-
धारण्यात् । एतेन प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणात्यन्ताभाव-
प्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणस्यात्यन्ता-
भावस्य प्रतियोगित्वं तयोरन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्षोऽपि निरस्तः ।
ब्रह्मज्ञानात्पूर्वमेव निश्चितमिथ्यात्वकदृश्यतादात्म्यापन्नचिद्रूपस्य प्रातिभा-
सिकत्वस्य मिथ्यात्वघटितत्वाच्च, गगनादिसाधारण्याभावाच्च ।

किञ्च प्रातिभासिकस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपम्,
विनाशिनस्त्वप्रातिभासिको यः स्वसमानाधिकरणोऽत्यन्ताभावस्तत्प्रतियोगि-
त्वरूपं मिथ्यात्वमिति मिथ्यात्वद्वयस्य भिन्नरूपत्वात् पक्षदृष्टान्तसाधारणसाध्यं
दुर्लभमेव । न च तदन्यतरवत्त्वेन द्वयोरैक्यसंपादनमिति वाच्यम्; प्रातिभा-
सिकनिष्ठत्वेन विनाशिनिष्ठत्वेन च यथोक्तप्रतियोगित्वस्य पूर्ववाक्यादेव
लाभे प्रातिभासिकविनाशिनोस्तादृशप्रतियोगित्ववत्त्वस्यापि समानवृत्तिवे-
द्यत्वन्यायेन ज्ञातत्वात् । निराकाङ्क्षतया तदन्यतरवत्त्वांशस्य शाब्दबोधा-
जनकत्वाल्लक्षणत्वासंभवात् । न च प्रातिभासिकनिष्ठत्वं विनाशिनिष्ठत्वञ्चा-
पहायैव लक्षणं वक्तुं शक्यम्; व्यावहारिकात्यन्ताभावप्रतियोगिनि ब्रह्मण्य-
तिव्याप्तेः । एवं विनाशिपदेन ब्रह्मान्यस्यैव त्वया वाच्यतया पक्षीकृते
तस्मिन् विनाशिनिष्ठं यदप्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियो-
गित्वं तदंशस्य भानपर्यवसाने अनुमितेरेवानुपपत्तिः । विनाशिनिष्ठत्वेनोक्त-
प्रतियोगित्वबोधस्य साध्यस्वरूपज्ञानेनैव सिद्धत्वात् । न चाविनाशिनि
यथोक्तप्रतियोगित्वस्य साध्यज्ञानदशायां ज्ञातत्वेऽपि तावन्मात्रस्य ब्रह्मसाधारण-
त्वेनोद्देश्यासिद्ध्या विनाशिनिष्ठत्वविशिष्टमुक्तप्रतियोगित्वं पक्षे साध्यत
इति वाच्यम्; उक्तप्रतियोगित्वस्याविशिष्टतया तस्य विनाशिनिष्ठस्य
मिथ्यात्वरूपत्वं न तु ब्रह्मनिष्ठस्येत्यत्र बीजाभावेन पारिभाषिकमिथ्यात्वमात्रे
पर्यवसानात् । अस्माकं तथापि क्षतिविरहादित्यास्तां विस्तरः । किञ्च
संयोगेन रूपाद्यभावमादाय रूपादौ सिद्धसाधनम्, एवं व्यधिकरणसंबन्धेन
तत्तदधिकरणसत्त्वव्यापकत्वादन्यत्रापि बोध्यम् ।

यत्तु स्वावच्छिन्नप्रकारकधीविशेष्यसत्त्वव्यापकात्यन्ताभावप्रतियोगिता-
त्वपर्याप्त्यधिकरणधर्मवत्त्वमुक्तलक्षणार्थः, तथा च न सिद्धसाधनम्,
संयोगेन रूपं नास्तीति ज्ञाने संयोगरूपत्वोभयधर्मावच्छिन्नाभावस्य

  

विषयत्वाद् व्यधिकरणस्य संयोगरूपत्वोभयस्य प्रतियोगितास्वरूपत्वेन यथोक्तप्रतियोगितात्वपर्याप्त्यधिकरणस्य संयोगरूपत्वोभयस्यैकाधिकरणाप्रसिद्धेः। एवं पटत्वेन पटाभावमादायापि न तत्, तत्रापि घटत्वपटत्वोभयावच्छिन्नप्रतियोगिताकाभावभानोपगमेन तादृशप्रतियोगितात्वपर्याप्त्यधिकरणस्य घटत्वपटत्वोभयस्यैवाधिकरणाप्रसिद्धेरिति, तदपि चिन्त्यम्; उक्तरीत्या बोधस्य निराकृतत्वात्।

यत्तु, अस्या अभावव्यक्तेः सद्वृत्तिभेदप्रतियोगितावच्छेदकत्वमनवच्छिन्नं नास्ति तत्प्रतियोगित्वमेव मिथ्यात्वम्, एवं च घटसंयुक्तादौ समवायादिना घटादेरभावसत्त्वेऽपि न तदभावव्यक्तिमादाय सिद्धसाधनम्। पटसमवायिनि तद्व्यक्तेरवृत्त्या तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य तदभावव्यक्तिनिष्ठस्य निरवच्छिन्नस्यैव संभवात्, केवलान्वय्यत्यन्ताभावव्यक्तिं विना साध्यापर्यवसानादिति, तदपि चिन्त्यम्; कालिकातिरिक्तसंबन्धेन विरुद्धधर्मद्वयावच्छिन्नप्रतियोगिताकप्रमेयमात्रे सत्त्वेन सिद्धसाधनात्। अभावीयविशेषणताविशेषसंबन्धेन घटाद्यभावव्यक्तिकेवलान्वयिनीमादाय सिद्धसाधनाच्च। इदं चात्र विचारणीयम्—मिथ्यात्वघटकोऽत्यन्ताभावस्तात्त्विकोऽतात्त्विको वा? नाद्यः, अद्वैतभङ्गापत्तेः। नान्त्यः, अत्यन्ताभावनिषेधे प्रतियोगिसत्त्वापत्तेः।

यत्तु प्रपञ्चात्यन्ताभावत्वविशिष्टरूपेण निषेधस्य मिथ्यात्वं केवलरूपेण च ब्रह्मापेक्षस्यात्यन्ताभिन्नत्वमतो नाद्वैतहानिः,भावस्य स्वाश्रयब्रह्मरूपत्वात्। न चैवमभावस्य तात्त्विकत्वे प्रतियोगिनोऽपि तात्त्विकत्वापत्तिः, निरूप्यनिरूपकयोः समानसत्ताकत्वनियमादिति वाच्यम्; तात्त्विकस्वरूपकाभावप्रतियोगी तात्त्विक इति व्याप्तेः। तात्त्विकाभावप्रतियोगिनिरुक्तरूप्ये तात्त्विकत्वाभावेन व्यभिचारात्। निरूपकं निरूप्यतावच्छेदकविशिष्टसमानसत्ताकमेवेति व्याप्तेस्त्वस्माभिरभ्युपगमे क्षतिविरहात्। विशिष्टोक्तरूपेण प्रपञ्चतदत्यन्ताभावयोर्मिथ्यात्वादिति, तच्चिन्त्यम्, येन रूपेण ययोर्निरूप्यनिरूपकभावस्तद्रूपेणैव भिन्नसत्ताकत्वमपेक्षितम्। अत्यन्ताभावस्यात्यन्ताभावत्वरूपेणैव प्रतियोगिनिरूप्यत्वात्तेनैव च प्रतियोगिविरोधित्वात्। केवलब्रह्मरूपेण भिन्नसत्ताकत्वस्वीकारस्य व्यर्थत्वादिति, तेनैव दूषितत्वात्।

यत्तु व्यावहारिक एवायमत्यन्ताभावः, न चाभावस्य पारमार्थिकत्व एव प्रतियोगिनः पारमार्थिकत्वाभावः, एकाधिकरणे भावाभावयोः परस्पर-

[पार]मार्थिकत्वाभावात्। निषेधसत्ताया व्यावहारिकत्वे तस्य प्रतियोगिनिष्ठस्याधिकसत्तायामविघातकत्वात्। तथा च प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वापत्तिः। अत एव स्वसमानाधिकरणस्वाधिकसत्ताकात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं न तु स्वाधिकसत्त्वनिर्मुक्तम्। स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगित्वेन ज्ञातेऽपि शुक्त्यादौ मिथ्यात्वव्यवहारविरहादिति वाच्यम्; न हि प्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमप्रातिभासिकत्वस्य व्यावहारिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमव्यावहारिकत्वस्य वा व्याप्यम्, स्वप्ने आरोपितस्य रजतादेः स्वप्न एवारोपितं तदभावमादाय तस्य मिथ्यात्वव्यवहारदर्शनात्। किन्त्वप्रातिभासिकनिष्ठं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमप्रातिभासिकत्वस्य पारमार्थिकनिष्ठं स्वसमानाधिकरणव्यावहारिकात्यन्ताभावप्रतियोगित्वं पारमार्थिकत्वस्य च व्याप्यम्। प्रकृते च स्वसमानाधिकरणव्यावहारिकात्यन्ताभावप्रतियोगित्वस्य ब्रह्मावृत्तेः प्रपञ्चनिष्ठस्य पारमार्थिकत्वव्याप्यत्वाभावेन व्यावहारिकात्यन्ताभावप्रतियोगिनोऽपि प्रपञ्चस्य पारमार्थिकत्वानापत्तेः। अप्रातिभासिकत्वस्य चास्माभिरभ्युपगमात्। तथा च प्रातिभासिकनिष्ठं यत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं यच्च ब्रह्मावृत्तिस्वसमानाधिकरणप्रातिभासिकान्यात्यन्ताभावप्रतियोगित्वं तयोरन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्षः। पूर्णानन्दसंबन्धिनो मन आदिनिष्ठात्यन्ताभावस्य प्रतियोगिनि ब्रह्मणि मिथ्यात्वाभावाद् ब्रह्मावृत्तीति। न चैवं शुक्तिरूप्यादिप्रतियोगिताकव्यावहारिकात्यन्ताभावस्य मिथ्यात्वं न स्यात्तस्य स्वसमानाधिकरण प्रातिभासिकात्यन्ताभावस्यैव च प्रतियोगित्वादिति वाच्यम्; तदत्यन्ताभावस्य व्यावहारिकमत्यन्ताभावान्तरं स्वीकृत्यैव तन्मिथ्यात्वसिद्धेरिति, तच्चिन्त्यम्; सत्ताभेदस्य मिथ्यात्वानुमानात् पूर्वमसिद्धेः, तदङ्गीकारेण भावाभावयोरेकाधिकरण्यविरोधस्य परिहर्तुमशक्यत्वाच्च। तथा हि शुद्धचिदैक्यरूपा पारमार्थिकी सत्ता, मूलाविद्याप्रयुक्तं यद्दृश्यं तत्तादात्म्यापन्ना चिद्रूपा व्यावहारिकी। न चैवमनादिदृश्येष्वव्याप्तिः, तेषां मूलाविद्याप्रयुक्तत्वाभावादिति वाच्यम्; तदुच्छेदकज्ञानजन्योच्छेदप्रतियोगित्वस्यैव तत्प्रयुक्तत्वात्। अस्ति चेदमनादिष्वपि दृश्येषु मूलाविद्योच्छेदकखण्डब्रह्मसाक्षात्काररूपज्ञानेन तेषामप्युच्छेदोपगमात्। पल्लवज्ञानोच्छेदकज्ञानोच्छेद्यं यद्दृश्यं शुक्तिरूप्यादि तत्तादात्म्यापन्नचिद्रूपा प्रातिभासिकी, पल्लवाज्ञानानङ्गीकारे तु सर्वदृश्य-

विषयत्वाद् व्यधिकरणस्य संयोगरूपत्वोभयस्य प्रतियोगितास्वरूपत्वेन यथोक्तप्रतियोगितात्वपर्याप्त्यधिकरणस्य संयोगरूपत्वोभयस्यैकाधिकरणाप्रसिद्धेः। एवं पटत्वेन पटाभावमादायापि न तत्, तत्रापि घटत्वपटत्वोभयावच्छिन्नप्रतियोगिताकाभावभानोपगमेन तादृशप्रतियोगितात्वपर्याप्त्यधिकरणस्य घटत्वपटत्वोभयस्यैवाधिकरणाप्रसिद्धेरिति, तदपि चिन्त्यम्; उक्तरीत्या बोधस्य निराकृतत्वात्।

यत्तु, अस्या अभावव्यक्तेः सद्वृत्तिभेदप्रतियोगितावच्छेदकत्वमनवच्छिन्नं नास्ति तत्प्रतियोगित्वमेव मिथ्यात्वम्, एवं च घटसयुक्तादौ समवायादिना घटादेरभावसत्त्वेऽपि न तदभावव्यक्तिमादाय सिद्धसाधनम्। पटसमवायिनि तद्व्यक्तेरवृत्त्या तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य तदभावव्यक्तिनिष्ठस्य निरवच्छिन्नस्यैव संभवात्, केवलान्वय्यत्यन्ताभावव्यक्ति विना साध्यापर्यवसानादिति, तदपि चिन्त्यम; कालिकातिरिक्तसंबन्धेन विरुद्धधर्मद्वयावच्छिन्नप्रतियोगिताकप्रमेयमात्रे सत्त्वेन सिद्धसाधनात्। अभावीयविशेषणताविशेषसंबन्धेन घटाद्यभावव्यक्तिकेवलान्वयिनीमादाय सिद्धसाधनाच्च। इदं चात्र विचारणीयम्–मिथ्यात्वघटकोऽत्यन्ताभावस्तात्त्विकोऽतात्त्विको वा? नाद्यः, अद्वैतभङ्गापत्तेः। नान्त्यः, अत्यन्ताभावनिषेधे प्रतियोगिसत्त्वापत्तेः।

यत्तु प्रपञ्चात्यन्ताभावत्वविशिष्टरूपेण निषेधस्य मिथ्यात्वं केवलरूपेण च ब्रह्मापेक्षस्यात्यन्ताभिन्नत्वमतो नाद्वैतहानिः,भावस्य स्वाश्रयब्रह्मरूपत्वात्। न चैवमभावस्य तात्त्विकत्वे प्रतियोगिनोऽपि तात्त्विकत्वापत्तिः, निरूप्यनिरूपकयोः समानसत्ताकत्वनियमादिति वाच्यम्; तात्त्विकस्वरूपकाभावप्रतियोगी तात्त्विक इति व्याप्तेः। तात्त्विकाभावप्रतियोगिनिरूपितरूप्ये तात्त्विकत्वाभावेन व्यभिचारात्। निरूपकं निरूप्यतावच्छेदकविशिष्टसमानसत्ताकमेवेति व्याप्तेस्त्वस्माभिरभ्युपगमे क्षतिविरहात्। विशिष्टोक्तरूपेण प्रपञ्चतदत्यन्ताभावयोर्मिथ्यात्वादिति, तच्चिन्त्यम्, येन रूपेण ययोर्निरूप्यनिरूपकभावस्तद्रूपेणैव भिन्नसत्ताकत्वमपेक्षितम। अत्यन्ताभावस्यात्यन्ताभावत्वरूपेणैव प्रतियोगिनिरूप्यत्वात्तेनैव च प्रतियोगिविरोधित्वात्। केवलब्रह्मरूपेण भिन्नसत्ताकत्वस्वीकारस्य व्यर्थत्वादिति, तेनैव दूषितत्वात्।

यत्तु व्यावहारिक एवायमत्यन्ताभावः, न चाभावस्य पारमार्थिकत्व एव प्रतियोगिनः पारमार्थिकत्वाभावः, एकाधिकरणे भावाभावयोः परस्पर-

[पार]मार्थिकत्वाभावात्। निषेधसत्ताया व्यावहारिकत्वे तस्य प्रतियोगिनिष्ठस्याधिकसत्तायामविघातकत्वात्। तथा च प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वापत्तिः। अत एव स्वसमानाधिकरणस्वाधिकसत्ताकात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं न तु स्वाधिकसत्त्वनिर्मुक्तम्। स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगित्वेन ज्ञातेऽपि शुक्त्यादौ मिथ्यात्वव्यवहारविरहादिति वाच्यम्; न हि प्रातिभासिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमप्रातिभासिकत्वस्य व्यावहारिकस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमव्यावहारिकत्वस्य वा व्याप्यम्, स्वप्ने आरोपितस्य रजतादेः स्वप्न एवारोपितं तदभावमादाय तस्य मिथ्यात्वव्यवहारदर्शनात्। किन्त्वप्रातिभासिकनिष्ठं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमप्रातिभासिकत्वस्य पारमार्थिकनिष्ठं स्वसमानाधिकरणव्यावहारिकात्यन्ताभावप्रतियोगित्वं पारमार्थिकत्वस्य च व्याप्यम्। प्रकृते च स्वसमानाधिकरणव्यावहारिकात्यन्ताभावप्रतियोगित्वस्य ब्रह्मावृत्तेः प्रपञ्चनिष्ठस्य पारमार्थिकत्वव्याप्यत्वाभावेन व्यावहारिकात्यन्ताभावप्रतियोगिनोऽपि प्रपञ्चस्य पारमार्थिकत्वानापत्तेः। अप्रातिभासिकत्वस्य चास्माभिरभ्युपगमात्। तथा च प्रातिभासिकनिष्ठं यत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं यच्च ब्रह्मावृत्तिस्वसमानाधिकरणप्रातिभासिकान्यात्यन्ताभावप्रतियोगित्वं तयोरन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्षः। पूर्णानन्दसंबन्धिनो मन आदिनिष्ठात्यन्ताभावस्य प्रतियोगिनि ब्रह्मणि मिथ्यात्वाभावाद् ब्रह्मावृत्तीति। न चैवं शुक्तिरूप्यादिप्रतियोगिताकव्यावहारिकात्यन्ताभावस्य मिथ्यात्वं न स्यात्तस्य स्वसमानाधिकरण प्रातिभासिकात्यन्ताभावस्यैव च प्रतियोगित्वादिति वाच्यम्; तदत्यन्ताभावस्य व्यावहारिकमत्यन्ताभावान्तरं स्वीकृत्यैव तन्मिथ्यात्वसिद्धेरिति, तच्चिन्त्यम्; सत्ताभेदस्य मिथ्यात्वानुमानात् पूर्वमसिद्धेः, तदङ्गीकारेण भावाभावयोरेकाधिकरण्यविरोधस्य परिहर्तुमशक्यत्वाच्च। तथा हि शुद्धचिदैक्यरूपा पारमार्थिकी सत्ता, मूलाविद्याप्रयुक्तं यद्दृश्यं तत्तादात्म्यापन्ना चिद्रूपा व्यावहारिकी। न चैवमनादिदृश्येष्वव्याप्तिः, तेषां मूलाविद्याप्रयुक्तत्वाभावादिति वाच्यम्; तदुच्छेदकज्ञानजन्योच्छेदप्रतियोगित्वस्यैव तत्प्रयुक्तत्वात्। अस्ति चेदमनादिष्वपि दृश्येषु मूलाविद्योच्छेदकखण्डब्रह्मसाक्षात्काररूपज्ञानेन तेषामप्युच्छेदापगमात्। पल्लवज्ञानोच्छेदकज्ञानोच्छेद्यं यद्दृश्यं शुक्तिरूप्यादि तत्तादात्म्यापन्नचिद्रूपा प्रातिभासिकी, पल्लवाज्ञानानङ्गीकारे तु सर्वंदृश्य-

मिथ्यात्वनिश्चयात्पूर्वं निश्चितमिथ्यात्वकं यद् दृश्यं तदात्मकचिद्रूपा- प्रातिभासिकीति परेषां सिद्धान्तः। न चेदं मिथ्यात्वसिद्धेः पूर्वं प्रवर्त्तितु- मर्हतीति स्पष्टम्।

यत्तु सत्ताभेदस्यानुमितेः पूर्वमसिद्धावपि मिथ्यात्वविप्रतिपत्त्या भावाभावविरोधस्यापि विप्रतिपत्तिविषयत्वात् संशयात्मकविरोधज्ञानस्या- नुमिता च विरोधान्मिथ्यात्वानुमिता तु सत्तायां पश्चात्तत्राप्रामाण्यशङ्कैव सत्ताभेदकल्पनया निरस्यत इति, तदसत्; मिथ्यात्वस्योक्तरीत्या सत्ताभेद- घटितत्वेन तज्ज्ञानस्यैव भावाभावविरोधनिश्चयादनुपपत्तेः। अत एवोक्तसत्ता- भेदघटितमिथ्यात्वस्य विप्रतिपत्तिरपि दुर्लभा, अन्योन्याश्रयात्साध्यतावच्छेदक- रूपेणैव कोटिप्रसिद्धेस्तत्रापेक्षितत्वात्।

किञ्च स्वाधिकसत्ताकात्यन्ताभावस्य मिथ्यात्वघटकत्वपक्षे भावाभाव- योश्चाविरोधे बाध्यबाधकभावो न स्यादित्याशङ्क्य भिन्नसत्ताकयोर- विरोधेऽपि समानसत्ताकयोर्विरोध एवैकस्मिन्नधिकरणे व्यावहारिकयो- र्घटतदत्यन्ताभावयोरभावनियमात्।

न च शुक्तिरियं न रजतमिति ज्ञानविषयस्याभावस्य व्यावहारिकत्वेन प्रातीतिकरजते कल्पितस्य व्यावहारिकत्वस्योच्छेदेऽपि भिन्नसत्ताकाभावस्या- विरोधित्वेन तद्रजतस्य प्रातीतिकसत्त्वानपहारे बाधोत्तरमपीदं रजतमिति प्रतीतिः स्यात्। अतः समानसत्तामनन्तर्भाव्य प्रातिभासिकान्यात्यन्ता- भावस्यैव भावविरोधित्वं स्वीकृत्य तत्र बाध्यबाधकभावो वाच्यः। ततश्च स्वाधिकसत्ताकात्यन्ताभावस्यापि भावविरोधात् कथं तद्घटितमिथ्यात्व- मिति वाच्यम्; तत्राधिष्ठानप्रमया प्रातीतिकरजतोपादानस्याज्ञानस्यैव निवृत्त्या प्रातीतिकसत्त्वापहारात्। उपादाने निवृत्ते कार्यसत्तानुपपत्तेः। अत एवातितिक्तो गुड इत्यादि परोक्षाधिष्ठानप्रमया भ्रमोपादानाज्ञानस्या- निवृत्त्यातिरिक्तत्वस्य प्रातीतिकत्वानवहारादुक्तभ्रमानिवृत्तिरतः समानसत्तान्त- र्भावेनैव विरोधान्नाधिकसत्ताकाभावघटितमिथ्यात्वानुपपत्तिरिति स्वोक्तिविरोधः।

यत्तु किमिदं बाधकत्वं न तावत्प्रतिबन्धकत्वम्, एकप्रमासत्त्वेऽविद्यादिरूप- दोषादिविरहादेवापरभ्रमानुदयात्। एकभ्रमसत्त्वे च तज्जनकदोषादिनैवा- परप्रमानुदयात्। वस्तुतः प्रतिबन्धकतापक्षेऽपि प्रतियोगिसामानाधिकरण्य- ज्ञानाभावविशिष्टमभावज्ञानं न प्रतिबन्धकं किन्त्वव्याप्यवृत्तित्वज्ञानाभाव-

विशिष्टमेव, तावतैव समुच्चयोत्तरं समुच्चयोत्पत्तिसंभवादिति । अथैकज्ञानस्यापरज्ञाने भ्रमत्वज्ञापकत्वरूपं बाधकत्वम्, तत्रापि स्वान्यूनसत्ताकसन्मात्रनिष्ठाभावप्रतियोगित्वविशिष्टविषयकज्ञानत्वमेव भ्रमत्वम् ।

ननु स्वविरोधिस्वाभाववति स्वप्रकारकधीत्वं शुक्तिरूप्यादिज्ञानस्य तदभावादव्याप्तेः । अत एव समसत्ताकयोरविरुद्धयोरपि स्वाप्नभावाभावयोर्बाध्यबाधकधीविषयत्वं प्रागुक्तमिति तत्रापि न विरोधापेक्षा । यदि च तयोरेकज्ञानस्य परोपादानाज्ञाननिवर्तकत्वं तत् तत्रापि न विरोधापेक्षा प्रत्युताविरोध एव, एकाश्रये परस्य कल्पितत्वात् । अत एव व्यावहारिकरजताभावज्ञानस्य रजतव्यावहारिकत्वापहारकत्वमुक्तम् । तद्विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकविश्वमिथ्यात्वनिश्चयपूर्ववर्तिमिथ्यात्वनिश्चयाभाववत्त्वं तदपहारश्च विशेष्यतया यथोक्तनिश्चयवत्त्वमेव । ततश्चोक्तरजताभावज्ञानेन रजतज्ञाननिष्ठं मिथ्याविषयकत्वरूपं प्रमात्वं ज्ञापितमेवेति, तदपि चिन्त्यम्; समुच्चयोत्तरं समुच्चये व्यभिचारवारणाय विरोधविषयताया एव प्रतिबन्धकतावच्छेदककोटौ निवेशो न त्वव्याप्यवृत्तित्वज्ञानाभावस्याव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वपक्षेऽप्रामाण्यज्ञानाभावादिभिर्विशेषणविशेष्यभावे विनिगमकाभावेन प्रतिबध्यप्रतिबन्धकभावबाहुल्यप्रसंगात् ।

न च वह्निमानित्यादिज्ञाने विरोधस्य विषयत्वाभावात्तस्य विरोधित्वानुपपत्तिः, प्रत्युत संशयस्यैव विरोधित्वापत्तिरिति वाच्यम्; निर्णयेऽपि ब्रह्माभाववदवृत्तिसंयोगादीनामेव संसर्गतया भानोपगमात् । संयोगादिघटितव्यापकत्वावगाहिपरामर्शादिजन्यानुमित्यादावपि बाधाभावादेर्विरोधविषयत्वनियामकत्वात् । विरोधावच्छिन्नसंयोगादिसंसर्गकानुमितौ तत्संबन्धेन व्यापकत्वावगाहिपरामर्षस्य च स्वाव्यवहितोत्तरानुमितावेव हेतुत्वात् । तदभावेऽपि बाधाभावाद्विरोधभानसंभवात् । अन्यादृशसंबन्धभानस्य च तत्संबन्धघटितव्यापकत्वावगाहि परामर्षसहकारित्वं बाधाभावादेः स्वीकृत्यैव वारणात् । समुच्चये च विरोधाविषयकज्ञानेऽव्याप्यवृत्तित्वज्ञानस्य हेतुत्वकल्पनात्, विरोधाभानाभावादिति पक्षस्योपगमात् । भ्रमत्वज्ञापकत्वपक्षेऽपि विरोधोऽवश्यमपेक्षणीयः । बाधितविषयकत्वं विना भ्रमत्वस्यानुपपत्तेः सर्वसम्मतत्वात् । बाधज्ञानस्य च विरोधज्ञानं विनानुदयात् । शुक्तिरूप्यादिकमतिरिक्तं लौकिकं वेति त्वन्यदेतत् । एकज्ञानस्येत्यादिकन्तु नैयायिकादीन्प्रत्यसिद्धमेवेति कृतमिदानीं तदुद्भावनेन । एवं तयोरेकज्ञानस्य स्वविषयापेक्षया न्यूनसत्ताकविषयकत्वज्ञापकत्वमेवापरज्ञानस्य बाधकत्वमिति पक्षेऽपि तत्पर-

त्वादिप्राबल्यसापेक्षत्वमेव तस्य, न तु तद्विरोधापेक्षेत्यसावप्युक्तैव गतिरिति बोध्यम्। एतेन यदुक्तं भिन्नसत्तेत्यादिना प्रतिवादिनो लालनमेव कृतं न तु मत्सिद्धान्ते भावाभावयोर्विरोधो निष्प्रयोजनत्वादिति, तदपास्तम्; युक्त्यनुभवसिद्धार्थस्य शपथमात्रेणापह्नोतुमशक्यत्वादत्राप्यन्योन्याश्रयादि-दोषाच्च। तथा हि मिथ्यात्वानुमानसिद्धौ सत्ताभेदसिद्ध्या स्वान्यूनसत्ता-केत्यादिरूपभ्रमत्वसिद्धौ विरोधज्ञानानावश्यकत्वम्, विरोधानावश्यकत्वे च बाधकाभावान्मिथ्यात्वानुमितिसिद्धिरिति। अहो, असिद्धघटितमेव सर्वं भवदीयम्। अतो न द्वैतवादिनां किञ्चिदपि भयम्। तथा च—

"तृणबाणास्तृणधन्वा तृणघटितः कपटपुरुषोऽयम्।
कथमिह कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि॥"

इति न्यायोऽप्यत्र सुलभ इति।

यदप्युक्तं कुत्रापि मन्मते प्रतिबन्धकत्वं न स्वीक्रियते मण्यादिसमवहित-वह्न्यादावप्यव्याप्यवृत्तिशक्तिस्वीकारादिति, तदप्यसत्; शक्तेरव्याप्य-वृत्तित्वस्य धर्मिग्राहकमानाविषयत्वात्।

किञ्च अव्याप्यवृत्तित्वं दैशिकं कालिकं वा? नाद्यः, मणिसहितपुरुषस्य यदवच्छेदेन वह्निसंयोगेऽपि दाहो नोत्पद्यते तदवच्छेदेनैव वह्नेः संयोगेन पुरुषान्तरस्य दाहदर्शनात्। नान्त्यः, अनित्यस्य तदयोगात् "नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुता" इति न्यायात्। एतेन प्रतिबन्धकाभावस्यैव शक्तेर्नित्यत्वेऽप्यव्याप्यवृत्तित्वसंभव इत्यपास्तम्।

किञ्चाकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्त्या प्रतिबन्धकत्वोपपत्त्यर्थमेव शक्तिं स्वीकृत्य शक्तेरव्याप्यवृत्तित्वेन प्रतिबन्धकत्वनिरासे उपजीव्यविरोधः। किञ्च प्रतिबन्धकत्वं न कुत्रापीत्यपसिद्धान्तः, उपासनयाविद्यानिवृत्तिरूप एव ब्रह्मणः संस्कारोऽस्तु "प्रतिक्षीरापनयने न नर्तक्या इव नरेण" इति **वाचस्पत्यादावुक्तेः**। "अनृतेन हि प्रत्यूढाः" "न तं विदाथ य इमा जजनान्यद्युष्माक-मन्तरं बभूव" इत्यादौ ब्रह्मसाक्षात्कारप्रतिबन्धकत्वेनाविद्याप्रतिपाद्यत इति भवद्भिरुपगमाच्च। घटो घटान्य इत्यनाहार्यप्रत्यक्षवारणाय घटत्वावच्छिन्नप्रतियोगिताकभेदनिष्ठविशेष्यताकप्रकारतानिरूपितविशेष्यताव-च्छेदकतासंबन्धेन प्रत्यक्षं प्रति तदिच्छाविरहविशिष्टज्ञानत्वेन घटत्वनिष्ठेनानवच्छिन्नविषयतासंबन्धेन प्रतिबन्धकत्वं तार्किकैः स्वीक्रियते। एवं पूर्णानन्दरूपतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदविशिष्टनिष्ठप्रकारता-

निरूपितविशेष्यतावच्छेदकत्वसंबन्धेन प्रत्यक्षे तदिच्छाविरहविशिष्टज्ञानत्वेन पूर्णानन्दनिष्ठेनानवच्छिन्नविषयतासंबन्धेन विरोधित्वमिति स्वयमेव स्वीकृतत्वाच्च । पूर्णानन्देत्यादेर्नैयायिकैरनभ्युपगमात् । न च व्यवहारदशायामेतदुक्तमिति वाच्यम् ; शक्त्यादेरपि तादृशायामेवान्तर्भावात् , इति दिक् ।

यत्तु मिथ्यात्वनिषेधे प्रपञ्चसत्यत्वापातमाशङ्क्योक्तम् "यत्र निषेधस्य निषेधबुद्धया प्रतियोगिसत्त्वमवस्थाप्यते तत्रैव निषेधनिषेधे प्रतियोगिसत्त्वमायाति, यथा नेदं रजतमिति भ्रमानन्तरमिदं न रजतमिति ज्ञानेन रजतत्वस्य व्यवस्थापनात् । यत्र तु प्रतियोगिनि निषेधयोरुभयोरपि निषेधस्तत्र न प्रतियोगिसत्त्वम् , यथा ध्वंससमये प्रागभावाप्रतियोगिनोरुभयोर्निषेधे प्रकृते च निषेधबोधकेन नेह नानेत्यादि श्रुत्यादिरूपप्रमाणेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य चाभावबोधनान्न प्रपञ्चस्य सत्त्वापत्तिः । निषेध्यतावच्छेदकस्य दृश्यत्वादेस्तदुभयसाधारणत्वात्"इति । यच्च व्याख्यातं "यद्यप्यत्यन्ताभावात्मकनिषेधस्य निषेधे प्रतियोगिसत्त्वापत्तौ कृतायां प्रागभावात्मकनिषेधनिषेधे प्रतियोग्यसत्त्वदृष्टान्तेन तत्खण्डनमसंबद्धं तथापि **प्राचीनतार्किकादिमते** ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानभ्युपगमात् । ध्वंसादिकाले इदं कपालं घटवन्न वेति घटतदत्यन्ताभावोभयकोटिकसंशयरूपारोपोत्तरमत्र घटतदत्यन्ताभावौ न स्त इति निषेधे यथा घटस्य सत्त्वं नायातीति तदर्थः"इति, तदुभयमपि चिन्त्यम् ; तत्रारोपितात्यन्ताभावस्य प्रातिभासिक इत्यस्यापि तार्किकं प्रत्यसिद्धत्वात् , नव्यमते ध्वंसाद्यधिकरणेऽपि तदत्यन्ताभावोपगमाच्च । व्यावहारिकस्यात्यन्ताभावस्य निषेधे प्रतियोगिसत्त्वमित्युक्तौ तद्रीत्यापि समाधानासंभवाच्च । निषेध्यतावच्छेदकं दृश्यत्वादिकं प्रपञ्चतदत्यन्ताभावसाधारणमिति तु आकाशफलभक्षणाशाप्रतीकाशं श्रुतेस्तादृशार्थकत्वस्य प्रबन्धेन प्रागेव जराकृतत्वात् । एतेन, आदिपदात् प्रकृतानुमानीयपक्षतावच्छेदकस्यापि ग्रहणम् । न चास्य निषेधप्रतियोगितावच्छेदकत्वेनाभावात् कथं निषेध्यतावच्छेदकसाम्यनिषेधं प्रति विशेष्यतावच्छेदकत्वस्यापि तदर्थत्वात् । वस्तुतो निषेध्यतावच्छेदकपदं यथाश्रुतमेव । न चोक्तानुपपत्तिः सामान्यानुमानेऽपि स्वावच्छिन्नवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वादेः साध्यत्वादित्यादिकमप्यपास्तम् । दृश्यत्वस्यैव निषेधप्रतियोगितावच्छेदकत्वनिरासे आदिपदसंग्राह्यगवेषणस्य दूरपराहतत्वादिति । एतेन श्रुतेरतात्त्विकावेदकत्वेनाप्रामाण्यमाशङ्क्य, अतात्त्विकमेवातात्त्विकत्वेन बोधयन्त्याः श्रुतेर्नाप्रामाण्यप्रसङ्गः । "स्वर्गकामो-

यजेत" इत्यादिश्रुतिवदस्या अपि श्रुतेर्व्यावहारिकमेव प्रामाण्यम्। तत्त्वावेदकत्वरूपप्रामाण्यं तु "तत्त्वमसि" इत्यादिश्रुतेरेवेत्यपि निरस्तम्। प्रपञ्चस्यातात्त्विकताया मानान्तरसिद्धत्वेनातात्त्विकत्ववद्विशेष्यकातात्त्विकत्वप्रकारकज्ञानजनकत्वस्य श्रुतेरवधारयितुमशक्यत्वात्। तत एव तदवधारणस्य पूर्वं निरासात्। अपि च मिथ्यात्वानुमितेः प्राक् "तत्त्वमसि" इत्यादिवेदसमकक्षे दृष्टान्तो नहि कल्पः, कल्याणे साध्यवैकल्यात्, इत्यलं पल्लवेन।

इदमप्यत्रापरं विभावनीयम्, किं पारमार्थिकत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं साध्यते, उत सकलाभावप्रतियोगिसाधारणेन दृश्यत्वादिनावच्छिन्नप्रतियोगिताको योऽभावस्तत्प्रतियोगित्वम्, किं वा तादृशविशेषधर्मेणाकाशत्वघटत्वादिनावच्छिन्नप्रतियोगिताको योऽभावस्तत्प्रतियोगितात्वम्? नाद्यः, तैरेव दूषितत्वात्। तथा ह्यबाधकत्वं पारमार्थिकत्वं बाध्यत्वञ्च मिथ्यात्वमेवेति मिथ्यात्वस्य भेदप्रतियोगित्वेन पूर्वोक्तात्यन्ताभावप्रतियोगितावच्छेदककोटिनिविष्टतया व्यक्तमितरेतराश्रयत्वम्। अथ पारमार्थिकत्वं नाम नैकमुभयवादिसिद्धं किन्त्वबाध्यं सर्वं मेथमित्याकारकमबाध्यत्वव्यापकविषयताकं ज्ञानमेव, तस्य च तद्व्यक्तित्वेन प्रतियोगितायामवच्छेदकत्वम्, न तु तादृशधीत्वेन तस्य गुरुतयाभावीयप्रतियोगितानवच्छेदकत्वात्। एवञ्च मिथ्यात्वविरोधित्वज्ञानं विनापि यथोक्तपारमार्थिकत्वस्य तद्व्यक्तित्वेनावच्छेदकत्वं सुग्रहमेवेति कुत्रान्योन्याश्रय इति चेत्, मैवम्; तद्धीव्यक्तेः प्रपञ्चविषयकत्वशङ्कायां सत्यां तद्विषयस्तद्व्यक्तित्वेन विशेष्यतासंबन्धेन प्रपञ्चनिष्ठायामभावप्रतियोगितायामवच्छेदकत्वस्य दुर्ग्रहत्वात् घटत्वादिस्वरूपवत्। उक्तधियः प्रपञ्चाविषयत्वरूपविरोधनिर्णयस्यावश्यमपेक्षिततया तदर्थं पूर्वं प्रपञ्चमिथ्यात्वनिश्चयस्यापेक्षितत्वेनान्योन्याश्रयस्य दुर्वारत्वात्। तद्व्यतिरेकेण तद्धियः प्रपञ्चाविषयत्वशङ्काया दुर्लभत्वात्। तद्धीविषयत्वस्याबाध्यत्वव्यापकत्वात्, स्यादेतत्; यथा घटत्वादिस्वरूपाणामवच्छेदकत्वपक्षे स्वावच्छेदकावच्छिन्नवन्निष्ठात्यन्ताभावप्रतियोगित्वमित्याद्युच्यते तथा पारमार्थिकत्वीयावच्छेदकत्वपक्षेऽपि स्वसमनियतधर्मावच्छिन्नवन्निष्ठात्यन्ताभावेत्यादिकं सुवचम्। स्वपदं प्रतियोगितापरम्। स्वव्यापकधर्मावच्छिन्नवदित्यादिमात्रोक्तौ प्रतियोगित्वव्यापकप्रमेयत्वाद्यवच्छिन्नपटादिमन्निष्ठात्यन्ताभावप्रतियोगित्वम्। स्वव्याप्यधर्मावच्छिन्नवदित्यादिमात्रोक्तौ च घटाभावीयप्रतियोगिताव्याप्यतद्घटत्वा-

वच्छिन्नवन्निष्ठस्यैतद्घटत्वावच्छिन्नप्रतियोगिताकघटाभावस्य प्रतियोगित्वं घटादौ सिद्धसाधनग्रस्तं स्यात्, अतः समनियतेत्युक्तम्। ततश्च प्रमेयत्वादेः घटाद्यभावप्रतियोगिताव्याप्यत्वाभावादेतद्घटत्वस्य च घटाभावप्रतियोगिताव्यापकत्वाभावाद्वारणम्। एवं च पारमार्थिकत्वनिष्ठमवच्छेदकत्वं लक्षणेन प्रवेश्यते, प्रयोजनाभावादिति चेत्, सत्यम्; पटत्वेन घटाभावप्रतियोगिताया घटपटोभयत्वाद्यवच्छिन्नप्रतियोगितायाश्च स्वसमनियतं यदन्यतरत्वं तदवच्छिन्नघटपटादिमन्निष्ठाभावीयायाः घटादौ सत्त्वासिद्धसाधनात्, लाघवाच्च स्वाश्रयसमानाधिकरणाभावीया पारमार्थिकत्वावच्छिन्ना प्रतियोगिता निवेश्येत्यन्योन्याश्रयसत्त्वात्। तच्च विषयतासंबन्धेनावच्छेदकं वाच्यम्; अन्यथा कालिकसंबन्धेन पारमार्थिकत्वावच्छिन्नप्रतियोगिताकघटाद्यभावमादाय घटत्वादौ सिद्धसाधनात्। न चाधिकरणान्तवैयर्थ्यम्, स्वानधिकरणे विषयतासंबन्धावच्छिन्नपारमार्थिकत्वनिष्ठप्रतियोगितावच्छेदकताकाभावस्य तद्घटादौ सिद्धत्वात्। न च सामान्यावच्छिन्नप्रतियोगिताकत्वस्य विशेषाभावेऽनभ्युपगमान्न तदिति वाच्यम्; तथापि तमादायार्थान्तरापत्तेः।

किञ्च तादृशधियोऽपि पक्षकोटिनिविष्टतया तस्या अभावः केन रूपेण वाच्यः, घटाद्यभावे घटत्वादेरिवोक्तधियोऽप्यभावे स्वरूपस्य प्रतियोगितावच्छेदकत्वानुपपत्तेः। एकस्या अभावे अन्या तद्धीः प्रतियोगितावच्छेदिका, तस्या अप्यभावेऽन्येत्यादिरीत्या चानवस्थापत्तेः, स्यादेतत्; एकस्यैव धिया स्वभिन्नदृश्यमात्रस्य स्वस्य चाभावो निवेश्य इति नानवस्थेति चेन्न; ज्ञानमात्रस्य स्वविषयकत्ववादिमते बाध्यं सर्वं मेयमिति ज्ञानस्य विषयतासंबन्धेन स्वविशिष्टत्वात्। तादृशज्ञानीयतद्व्यक्तित्वावच्छिन्नविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकाभावसिद्धौ तज्ज्ञानस्य तज्ज्ञानविषयत्वं नास्तीत्यनेनार्थान्तरापत्तेः, मिथ्यात्वपर्यवसानस्य दुर्लभत्वात्। अथैकया तद्धीव्यक्त्या स्वभिन्नदृश्यमात्राभावस्य तदविषयिकया चान्यया तादृशधिया पूर्वधीव्यक्त्यभावस्य प्रतियोगित्वमवच्छिद्यतामिति चेत्, न; प्रतियोगितावच्छेदकद्वयनिवेशे पक्षतावच्छेदकावच्छेदेनैकधर्मावच्छिन्नभावरूपसाध्यस्थापनविरहापत्तेः। न त्वबाध्यत्वव्यापकविषयताकधीवृत्त्युभयावृत्तिधर्मनिष्ठानवच्छिन्ना च प्रतियोगितावच्छेदकता यस्य तादृशाभावो वाच्य इति चेत्, न; प्रपञ्चनिष्ठायां प्रतियोगितायां विषयतासंबन्धेन घटत्वादीनामे-

वावच्छेदकत्वसंभवात्तद्धीव्यक्तीनां गुरुत्वेन तत्रानवच्छेदकत्वाद्बाध्यत्वस्य परमतेऽप्रसिद्धत्वाच्चोक्ताभावस्याप्रसिद्ध्या साधयितुमशक्यत्वात्।

वस्तुतस्तु, अबाध्यं सर्वं मेयमितिधीर्न लौकिकानुभवसिद्धा येन तम इत्यादिधीवत् किंविषयेति विचारं सहेत, किन्तु शास्त्रीयानुभवमूलैव। तत्र च सत्यत्वमेव प्रकार इति नैयायिकमते निर्णीतमेव। अतस्तदवच्छिन्न-प्रतियोगिताकाभावप्रतियोगित्वानुमितिस्तेषां नोदेत्येव, पूर्वोक्तरीत्या बाधनिर्णयस्य प्रतिबन्धकत्वात्। यत्तु, न च प्रपञ्चस्य मिथ्यात्वसंशयकाले प्रकृतानुमानस्यावतारस्तथा च तत्काले तादृशधियः प्रपञ्चविशेष्यकत्वस्य संदिग्धतया प्रपञ्चवति ब्रह्मणि तादृशधीरूपेण प्रपञ्चस्याभावो ज्ञातुमशक्य इति वाच्यम्; उक्तधीरूपेण प्रपञ्चवत्त्वं यत्र निर्णीतं तत्रैव तद्रूपेण प्रपञ्चाभावस्य ज्ञातुमशक्यत्वात्, प्रपञ्चे तादृशधीविशेष्यत्वसंशयप्रयुक्ते ब्रह्मविशेष्यके तादृशधीरूपेण प्रपञ्चसंशये सत्यपि तद्रूपेण तस्य तत्ताभावज्ञाने बाधकाभावात्, ग्राह्यसंशयस्य कदाचित्प्रत्यक्ष एव प्रतिबन्धकत्वादनुमितावविरोधित्वात्। प्रत्युत "संदिग्धे न्यायः प्रवर्तते" इति तदनुगुणत्वादिति, तच्चिन्त्यम्; मिथ्यात्वसंशयसत्त्वेऽपि यादृशस्य बाधनिर्णयो नास्ति तस्यैव साधयितुं शक्यत्वात्। तदुक्तधीविशेष्यत्वेन निर्णीते प्रपञ्चविशेष्यतासंबन्धेन तद्धीव्यक्तित्वावच्छिन्नाभावस्य दुर्ग्रहत्वात्। बाधनिर्णयस्यानुमितिविरोधितायाः सर्वसिद्धत्वात्। एतेन घटत्वाद्यपेक्षया तादृशधीत्वस्य गुरुत्वेऽपि न क्षतिः, तदुपलक्षितज्ञाननिष्ठावच्छेदकत्वस्यैव लक्षणे निवेशात्। यद्वा गुरुधर्मोऽपि प्रतियोगितावच्छेदक एवेत्यादि-कुचोद्योद्भावनेनापि न परेषां निर्वाहः, उक्तविधया प्रतिवादिन्यनुमित्यनुदयेन न्यायप्रयोगवैयर्थ्यात्।

यदपि ज्ञाननिवर्त्यत्वरूपेण स्वस्वेतरसर्वदृश्यानां निषेधप्रतियोगित्वं संभवति तस्याभावीयविशेषणतासंबन्धेन स्वस्मिन्नसत्त्वादिति लाघवात्तदेव निवेश्यत इति नानवस्थेति, तदपि चिन्त्यम्; ज्ञानेच्छादीनां ज्ञाननिवर्त्यत्वस्य न्यायमतेऽपि सिद्धतया तत्प्रतियोगितायास्तदभावेनावच्छेत्तुमशक्यत्वात्।

न चावच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्यमात्रेणासिद्धेरविरोधित्वान्न दोष इति वाच्यम्; तथापि नैयायिकेनाभावस्यापि विशेषणताविशेषसंबन्धेनाभाववृत्तित्वाभ्युपगमात्, तन्निष्ठप्रतियोगितायां स्वस्य व्यधिकरणधर्मत्वाभावेनैकरूपेणावच्छेदकत्वानिर्वाहात्। प्रथममिथ्यात्व-

लक्षणे ज्ञानानिवर्त्यत्वरूपसत्त्वाभावत्वेन निवेशेऽसत्त्वाभावरूपतदन्यांशवैयर्थ्यमाशङ्क्य न तद्रूपेण निवेशः, ज्ञानोच्छेद्यत्वरूपज्ञाननिवर्त्यत्वस्य वक्ष्यमाणस्य सर्ववादिसंमतस्यैकस्याभावेन तदभावस्यैक्यत्वाभावात्, इत्यादेस्तैरेवोक्तत्वेन प्रकृतेऽपि तदैकरूप्यस्य दुर्वचतयैकरूपावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वस्य पक्षतावच्छेदकावच्छेदेन स्थापयितुमशक्यत्वात् । अपि च ज्ञानानिवर्त्यत्वं किं यथाश्रुतं ज्ञानजन्यनिवृत्तिप्रतियोगित्वाभावरूपं प्रकृतेऽवच्छेदकमुत भवद्विवक्षितं वक्ष्यमाणम् ? नाद्यः, घटादौ [त्व]याभ्युपगतस्य सत्त्वाविरोधित्वात् । नान्त्यः, तस्य मिथ्यात्वरूपत्वेन ज्ञाननिवर्त्यत्वरूपसद्भेदीयप्रतियोगितायामिव प्रकृतात्यन्ताभावप्रतियोगितायामपि तदभावस्यावच्छेदकानुपपत्तेश्च । व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकतायामेव गौरवं न बाधकमित्यस्य दुर्घटत्वात्तत्रत्यभवदीयरीत्या ब्रह्ममात्रविषयकतद्धीविषयत्वस्यैव लाघवेनोक्तात्यन्ताभावप्रतियोगितायामवच्छेदकत्वस्य प्रयुक्तत्वाच्च न्योन्याश्रयस्य दुर्वारत्वादित्यास्तां विस्तरः । नापि द्वितीयः, दृश्यत्वस्य हेतुनिरासे दूषयिष्यमाणत्वात् । नापि तृतीयः, अधिष्ठानसाक्षात्कारानन्तरं नेदं रजतमिति प्रत्ययस्य त्वन्मतेऽपि व्यावहारिकरजतात्यन्ताभावावगाहितया शुक्तिरूप्यस्य स्वरूपावच्छिन्नाभावप्रतियोगित्वे प्रमाणाभावेन दृष्टान्तस्य साध्यहीनत्वात् । अत एव नेह नानेति श्रुत्या प्रपञ्चस्य स्वरूपेणैव निषेध इत्यप्यनाशङ्क्यम्; स्वरूपेण तदभावबोधनपर्यन्तं श्रुतेरसाक्षित्वादन्यथैव तदर्थस्य व्यवस्थापितत्वाच्च ।

ननु त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति ग्रन्थस्य न यथाश्रुत एवार्थः; भ्रमबाधयोर्भिन्नविषयकत्वापत्तेः । शुक्तौ व्यावहारिकरूप्यस्य तादात्म्येन ज्ञानत्वरूपायाः प्रसक्तेरभावेन तन्निषेधस्याप्रसक्तप्रतियोगिकत्वापत्तेश्चानुभवविरोधात् । किन्तु व्यावहारिकरजततादात्म्येन प्रतीतप्रातिभासिकरजतं निषेधप्रतियोगीत्येव तदर्थः । इदञ्चापुरोवर्तिदात्म्येनैव रजतप्रतीतिरितिमतनिरासार्थम् । न च व्यावहारिकप्रातिभासिकरजतयोस्तादात्म्यभावेन मात्राभावः, तद्व्यतिरेकेण व्यावहारिकरूप्यार्थिनः प्रातिभासिकरूप्ये प्रवृत्त्यनुपपत्तेः । न च व्यावहारिकनिष्ठत्वोपलक्षितरजतत्वस्य प्रातिभासिकेऽपि सत्त्वात्तदुपपत्तिः, व्यावहारिकनिष्ठस्य रजतत्वादेः प्रातिभासि-

केऽनभ्युपगमात् । अन्यथा प्रातिभासिकादपि व्यावहारिकरजतादिकार्यापत्तेः। प्रातीतिकस्यैव रजतत्वादेस्तत्र संबन्धस्वीकारात् ।

यदि तु व्यावहारिकत्वविशिष्टस्यैव कारणस्य कार्यप्रयोजकत्वदर्शनेन तदन्तर्भावेनैव कारणकूटस्य फलव्याप्यत्वं स्वीकृत्य व्यावहारिकनिष्ठ-रजतत्वादेः प्रातिभासिकसंबन्धेऽपि प्रातिभासिकाव्यावहारिककार्या-पत्तिर्निषेद्धुं शक्या । प्रातिभासिकं तु न कुत्रापि कारणं किन्तु तज्ज्ञानमेव चिद्रूपम् । अत एवोभयविषयकज्ञानाभ्यासेकजातीयप्रवृत्यादिकार्योत्पत्तिरेक-रूपावच्छिन्नहेतुत्वादिति नव्यमतमालम्ब्यते, तदापि का[ दा ]चित्कत्वमेव व्यावहारिकप्रातिभासिकरजततादात्म्यारोपतन्निषेधौ प्राचीनोक्तावुपपाद-नीयाविति चेत्, अत्राहुः; प्रातीतिकव्यावहारिकरजतयोस्तादात्म्यधीर्न युक्ता तयोरेकस्यापराज्ञानाकार्यत्वात्, प्रातीतिकस्य स्वोपादानाज्ञानाश्रयताव-च्छेदकेन सममेव तादात्म्यानुभवाच्च । न हि प्रातीतिकरजतोपादानस्य शक्त्यवच्छिन्नचिद्विषयकस्याज्ञानस्य व्यावहारिकरजतमाश्रयतावच्छेदकं किन्तु शुक्तिरेव तत्साक्षात्कारादेव प्रातिभासिकरजतनिवृत्तिदर्शनात् । शुक्लः पट इत्यादौ तु द्वयोरेकाज्ञानकार्यत्वादेकचिद्रूपसत्तायामेव तदुभया-ध्यासाच्च तादात्म्यारोपः । न चैवं घटपटयोरपि तादात्म्यबुद्ध्यापत्तिः, बुद्धौ सत्यां तस्य निमित्तत्वकल्पनात् । आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति न्यायाद्व्यावहारिकरजतभासकसन्निकर्षादि-विरहाच्च । तस्माद् व्यावहारिकरजतमेव स्वरूपेण शुक्तौ निषिध्यत इत्येव वेदान्तिवृद्धवाक्याभिप्राय इति प्रातिभासिकरूपस्य स्वरूपेण निषेधस्वी-कारेऽपसिद्धान्तो दुर्वार इति ।

यत्तु यद्यदज्ञानाकार्यं तत्तत्तादात्म्यवन्नेतीति न नियमः, रजताज्ञानाकार्ये इदमर्थे रजततादात्म्यस्वीकारात् । ययोरेकमपि नापराज्ञानकार्यं तयोर्न तादात्म्यमित्यपि न, इदं त्वद्रव्यत्वादीनां रजतस्य च मिथोऽज्ञानाकार्य-त्वेऽपि तादात्म्यारोपात् । जबाकुसुमलौहित्यस्य स्फटिकस्य च मिथो ज्ञाना-कार्यत्वेऽपि तादात्म्याध्यासात् । पूर्वसिद्धधर्मिसंबन्धिनो धर्मस्य संसृष्टत-यैवाध्यासात् । लौहित्यस्येन्द्रियसन्निकृष्टत्वेन प्रत्यक्षतासंभवात्तदानीं तदुत्पत्ति-स्वीकारे प्रयोजनाभावात् । दूरस्थवृक्षयोराच्छादितमिथःसंयुक्तप्रान्त-योर्वंशखण्डयोश्च परस्पराज्ञानकार्ययोरपि तादात्म्याध्यासाच्च । तत्र भाव-रूपतादात्म्यं नाध्यस्यते, किन्तु भेदाभाव इत्यस्य प्रकृतेऽपि तुल्यत्वात्, स्वप्नादौ भेदाभावत्वेन ज्ञानमानयोरपि तादात्म्यानुभवाच्च । न च तत्रैका-

ज्ञानकार्यत्वात्तादात्म्यमिति वाच्यम्; भेदधीकालेऽपि तदापत्तेः। तज्जातीय-तादात्म्यसंस्कारात्तज्जातीययोस्तादात्म्यमित्यस्यापि तुल्यत्वादिदं व्यावहारिकरजतमिति संस्कारस्य प्रयोजकत्वात्। अत एव प्रातीतिकस्येत्याद्ययुक्तं प्रातीतिकयोरपि पश्चाद् दूरस्थत्वादिना तादात्म्यानुभवात्,प्रातीतिके सन्निहित-व्यावहारिकरजतादेरपि दोषात्तादात्म्यानुभवाच्च। बुद्धौ सत्यामित्याद्यप्ययुक्तम्, यद्धर्मावच्छिन्नयोस्तादात्म्यधीरनुभवसिद्धा तद्रूपावच्छिन्नयोस्तादात्म्ये संस्कारदोषविशेषादिकं नियामकतया कल्प्यमिति प्रकृते तदर्थः। व्यावहारिकप्रातीतिकयोरपि रजतयोस्तादात्म्यानुभवसिद्धतया संस्कारदोष-विशेषादेरपि तत्तादात्म्योत्पत्तौ विकल्पेन नियामकत्वं न तु तदवच्छिन्ना-श्रयताकाज्ञानकार्यत्वमात्रस्येति स्फुट एव तेष्ववाक्यार्थबोध इति, तत्रेदं वक्तव्यम्; प्रथमव्यभिचारोपयुक्तवन्मते इदमादेरपि रजताज्ञानकार्यत्वात्। उक्तं हि **संक्षेपशारीरके**—

"अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु" इति। तथा च तैरेवोक्तम् "विशेषणसंसर्गयोरिव प्रतियोगित्वोपहितविशेष्य-स्यापि भ्रमकालोत्पत्त्या बाधकालोच्छेदेन चाध्यस्तत्वात्। न च भ्रम-पूर्वमेवेदमादेः सिद्धत्वेनोत्पत्त्यसंभव इति वाच्यम्; उक्तोपहितस्येदमादेः पूर्वसिद्धेदमादितो भिन्नत्वात्" इत्यादि। उक्तोपहितान्यस्येदमादेर्भ्रमे भाने मानाभावात्। उपहितवृत्तेः शुद्धवृत्तित्वनियमेऽपि शुद्धस्य वृथाभावा-नभ्युपगमाद् बुद्धौ सत्यामित्याद्यपि युक्तमेव। प्रातीतिकव्यावहारिक-रजतयोस्तादात्म्यानुभवस्य विवादग्रस्तत्वेन तथाधीबलाभावात्। अन्यथा-भवदुक्तनव्यमतस्यानुत्थानापत्तेः। तथा च "देहादिभिन्नत्वेनात्मनो न प्रत्यक्षं वादिविप्रतिपत्तिदर्शनात्" इति **अद्वैतसिद्धावेवोक्तम्**। अत एव कादाचित्कारोपनिषेधाभ्यां प्राचीनोक्तिसमर्थनमप्यपास्तम्। तुल्याकार-कभ्रमे एकस्थले तद्विषयताविरहेऽपि तत्कार्याद्युपपत्तिस्वीकारे स्थला-न्तरेऽपि तत्सत्त्वे मानस्य दुर्वचत्वादित्यादिकमनुसंधेयमिति दिक्।

ननु प्रतिपन्नोपाधिनिष्ठावच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वासिद्धाव-त्यन्तासत्त्वेनार्थान्तरम्। न चान्योपाधिनिष्ठात्यन्ताभावप्रतियोगित्वासिद्धेर्नैतदिति वाच्यम्; सर्वस्यापि प्रतिपन्नोपाधेर्मिथ्यात्वे निवेश्यत्वादन्यथा किंचित्प्रतिपन्नोपाधिमात्रनिष्ठानवच्छिन्नवृत्तिकात्यन्ताभावप्रतियोगित्वमादायार्थान्तरापत्तेः। तथा **चोक्तमौपनिषदाचार्यैः** "नहि तेषामन्यत्र सत्ता संभविनीति [ भवती ]। तथा चान्यत्रासत्त्वनिश्चयसहकृतेनोक्तानुमानेन

सर्वदेशवृत्तैरवच्छिन्नवृत्तिकान्यस्यात्यन्ताभावस्य प्रतियोगित्वरूपं शशशृङ्गादिसाधारणमत्यन्तासत्त्वं दुर्वारम् । न च शब्दवृत्त्यविषयत्वरूपं निरुपाख्यत्वमेवात्यन्तासत्त्वं न तूक्तप्रतियोगित्वरूपमिति वाच्यम्; निरुपाख्यत्वपदेनैव वृत्तिसंबन्धेन तस्य संबध्यमानत्वात् । नचासन्निरुपाख्यादिपदानामनुभावकत्वरूपाया अलीकविषयिण्या शक्तेरयोगात्कथं तदिति वाच्यम्; तेषामननुभवरूपमलीकविषयकं विकल्पं प्रतियोगेन लक्षणया संकेतविशेषणवानुपस्थापकत्वोपगमात् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति **पातञ्जलसूत्रे** सद्वस्तुविषयकस्य विकल्पस्य शब्दज्ञानजन्यत्वोक्तेः । अत एव "वृत्तयः पंचतय्यः प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति **पातञ्जलसूत्र** एव सद्रूपाधिष्ठानविषयकभ्रमरूपाद्विपर्ययात्पृथगेव विकल्पाख्या वृत्तिरुक्ता । निद्रा सौषुप्ती वृत्तिः । न चालीकस्य निर्धर्मिकत्वात्तत्र पदानां योगादिवृत्त्यसंभव इति वाच्यम्; अभावरूपस्य विकल्पविषयत्वरूपस्य च धर्मस्य तत्र स्वीकारेण योगेन वाचकशब्दरूपोपाख्यविरहस्यालीके प्रसिद्धस्योपस्थित्योक्तविरहाश्रयालीकोपस्थितिसंभवेन लक्षणासंभवात् । अनेन पदेनालीकं बोध्यमिति, वृत्तिसंभवाच्चेति, अलीकस्य पदवृत्त्यविषयत्वं नास्तीति पूर्वोक्तिप्रतियोगित्वमेवात्यन्तासत्त्वमिति स्थितम् । प्राप्यप्रतीयमानत्वमेवासत्त्वम्, असतः प्रतीत्यनङ्गीकारेऽसद्वै लक्षण्यज्ञानस्यासत्प्रतीतिनिरासस्यासत्वदप्रयोगस्य चानापत्तेः । असच्चेन्न प्रतीयेतेत्यनेनानिर्वाच्यख्यातिवादे वक्ष्यमाणस्यासत्त्वप्रतीयमानत्वयोरापाद्यापादकभावस्य भेदनिबन्धनस्यासंगतिप्रसंगाच्च । नापि प्रमाणजन्यप्रत्यक्षाविषयत्वं नित्यातीन्द्रियेष्वतिव्याप्तेरिति चेत्, अत्राहुः; प्रतिपन्नपदस्य स्वतादात्म्यधीविशेष्यार्थकतयोपाधिपदार्थे सद्वस्तुनि प्रपञ्चरूपस्वतादात्म्यधीविशेष्यत्वे शब्दाद् भासमाने प्रपञ्चे सत्तादात्म्येन प्रतीयमानत्वस्यार्थतो लाभान्नात्यन्तासत्त्वेनार्थान्तरम्, तस्य क्वचिदप्युपाधौ सत्त्वेनाप्रतीयमानत्वात् ।

न च माध्यमिकेन क्षणिकत्वभावनानिवर्त्यस्य स्थिरत्वादेरिव शून्यत्वभावनानिवर्त्यस्याबाध्यत्वस्यापि व्यावहारिकस्य स्वीकारादबाध्यत्वोपहितप्रपञ्चे प्रपञ्चतादात्म्यधीविशेष्यत्वस्वीकारात्, तथाप्यर्थान्तरं दुर्वारमिति वाच्यम्; अवश्यक्लृप्तेनार्थक्रियाकारित्वेनैवालीकव्यावृत्तेन सन् घटः इत्यादि प्रत्ययोपपत्त्या **माध्यमिकमतानुयायिभि**रबाध्यत्वोपहितस्य कस्यचिद्वस्तुनोऽनङ्गीकारेण बाध्यत्वोपहितविशेष्यकभ्रमानभ्युपगमात् । क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वस्य शुक्तिरूप्ये प्रपञ्चे वानङ्गीकारात् । शून्यत्वभावनायाश्च

वैराग्यहेतुत्वेनात्महानरूपमोक्षसंपादकत्वेन च तन्मते स्वीकारात् । न च वक्ष्यमाणविशेषानुमानेषु प्रतिपन्नोपाधिविशेषणानुपादानात्तत्रार्थान्तरमिति वाच्यम्; अबाध्योपहितास्वीकारेणेत्यनेन सामान्यानुमानेऽबाध्यत्वोपहित-विशेष्यकभ्रमानङ्गीकारेणेत्यनेन च विशेषानुमानेऽर्थान्तरवारणोपायस्योक्त-त्वादिति, तच्चिन्त्यम्; संवृत्तिसत्त्वस्य तैरप्यङ्गीकारेणार्थान्तरस्य दुर्वार-त्वात् । उक्तञ्च—

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोकसंवृतिसत्त्वञ्च सत्यञ्च परमार्थतः ।।" इति ।

**खण्डनटीकायां** तथा चोक्तम् "तदेतत् संवृतं सत्त्वमिति गीयते" इति वाक्यस्यापातनिकायाम् "सांवृतं सत्त्वमसद्वादिभिर्व्यवहारो-पपादकमिष्टमिति । अत एव कल्पनया त्ववस्तु सत्यां सन्त इव भासन्ते"इति । पूर्वोक्त**वाचस्पत्य**वाक्येऽपि तथैवार्थः श्रूयते "सन्त इवेत्यस्य त्वर्थक्रिया-कारित्वविशिष्टा इवेति नार्थः, तत्र विप्रतिपत्त्यभावात् । किन्त्वबाध्यत्वरूप-सत्त्वप्रकारकप्रतीतिविषया इत्येव । तच्च सत्त्वं व्यावहारिकमेव"इति तन्मतरहस्यम् ।

यत्तु ज्ञाननिवर्त्यत्वमिथ्यात्वं तच्च ज्ञानप्रयुक्तावस्थितिसामान्यविरह-प्रतियोगित्वम् । अतो मुद्गरपातादिना घटादेः स्वरूपावस्थानिवृत्तावपि कारणात्मनावस्थितेर्ब्रह्मज्ञानेनैव निवृत्त्यातीतघटादौ नाव्याप्तिः, उत्तरज्ञान-निवृत्तस्यापि पूर्वज्ञानस्य वारणात्मना मुक्त्यवधिसत्त्वाच्चालीकेऽवस्थिति-सामान्यविरहस्य ज्ञानप्रयुक्तत्वाभावान्नातिव्याप्तिः । उक्तं च **वार्तिककारैः**—

"तत्त्वमस्यादिवाक्योत्थसंबन्धी जन्ममात्रतः ।
अविद्यासहकार्येण नासीदस्ति भविष्यति ।।"इति ।

द्वे हि कार्याणामवस्थे स्वरूपात्मिका संसारात्मिका च । न चान्त्यायां मानाभावः, कार्याणां पूर्वं पश्चाच्च कारणगतसूक्ष्मावस्थाभ्युपगमस्यावश्य-कत्वात्, तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुत्वा प्रलयकाले कार्यमात्रस्यान-भिव्यक्तरूपेण स्थितिबोधनात्, घटो नाशत्वमापन्नः, कटकमेवमुकुटं जातमिति पूर्वावस्थाया उत्तरावस्थातादात्म्यानुभवाच्च । नाशस्य पूर्वावस्थातादात्म्या-पन्नोत्तरावस्थारूपत्वात् । तदवस्थाया एवात्र संस्कारशब्देनाभिधानात् । तस्याश्च तत्त्वज्ञानेनैव निवृत्तेः । न च भिन्नकालीनयोः पूर्वोत्तरयोरवस्थयोः कथं तादात्म्यमिति वाच्यम्; भावाभावयोः प्रतियोगित्वानुयोगित्वसंबन्धस्येव तस्यापि संभवात् । अनुभवस्याविशेषात् । अयमेव **साङ्ख्यानां** सत्कार्य-

वादः । परं त्वस्मन्मते मिथ्येति विशेष इति, तच्चिन्त्यम् ; घटादेः सूक्ष्मावस्थायां मानाभावाद् गौरवाच्च । श्रुतेश्च पूर्वप्रकरण एव व्याख्यातत्वात् ।

यत्तु पराङ्गीकृतध्वंसप्रागभावयोरेव तद्रूपत्वोपगमान्न गौरवम्, एकस्मिन् कनके जायमानकटकमुकुटयोर्मध्ये कटके मुकुटप्रागभावत्वस्य मुकुटे च कटकध्वंसत्वस्य स्वीकारादतिरिक्ततत्कल्पने मानाभावात् । अन्यथा पूर्वापरकालावच्छिन्नस्वसमवायिनिष्ठस्वात्यन्ताभावविषयकत्वेनैव ध्वंसप्रागभावविषयकत्वाभिमतप्रतीत्युपपत्तेरिति; तन्न; मुकुटकटकयोर्यत्र कनके विपरीतक्रमेणोत्पत्तिस्तत्र ध्वंसप्रागभावयोर्वैपरीत्येनैव वाच्यतया ध्वंसप्रागभावविषयकप्रतीतेरनुगतविषयकत्वापत्तेः । प्रतियोग्यंशेऽननुगमस्योभयत्र साम्येऽपि मन्मते ध्वंसप्रागभावांशे विषयानुगमसत्त्वात् । पूर्वापरेत्यप्ययुक्तम् ; तत्प्रागभावाधिकरणकालवृत्तित्वतदधिकरणक्षणध्वंसानधिकरणसमयवृत्तित्वान्यतररूपस्य पूर्वत्वस्य तदधिकरणक्षणध्वंसाधिकरणसमयवृत्तित्वरूपस्य तदुत्तरत्वस्य च ध्वंसप्रागभावानङ्गीकारे दुर्वचत्वात् ।

न च पूर्वत्वादिकमखण्डमेव सप्रतियोगिकं स्वीकार्यम् । ध्वंसप्रागभावकल्पने तत्र ध्वंसत्वप्रागभावत्वरूपधर्मद्वयस्यापि कल्पने गौरवादिति वाच्यम्; ध्वंसप्रागभाववदखण्डयोः पूर्वत्वोत्तरत्वयोरपि प्रतियोगिभेदेन भेदस्यावश्यकतया तत्रापि पूर्वत्वत्वोत्तरत्वत्वरूपधर्मद्वयकल्पनाया आवश्यकत्वात् । धर्मकल्पनबीजस्य तदंशे प्रतीतेरनुगतविषयकत्वानुपपत्त्यादिरूपस्योभयसाधारण्यात् । एवं मुकुटनाशानन्तरं कटकध्वंसप्रत्ययानुपपत्तिः कटकोन्मज्जनापत्तिश्च । ध्वंसप्रागभावानधिकरणसमयस्य प्रतियोग्यधिकरणत्वनियमात् । न च मुकुटसूक्ष्मावस्थैव कटकध्वंस इति वाच्यम् ; तस्यामेव विवादात् । तस्यास्त्वन्मतेऽनादितया कटकोत्पत्तिपूर्वं कटककालेऽपि च कटकध्वंसप्रत्ययापत्तेश्च ।

न च मुकुटध्वंसात्मकावस्थायां मुकुटध्वंसत्वमिव कटकध्वंसत्वमपि कल्प्यते, यथा त्वन्मते प्रतियोगिध्वंसप्रागभावयोः प्रागभावध्वंसध्वंसप्रागभावत्वमिति वाच्यम् ; तद्ध्वंसप्रागभावयोरेकरूपत्वात् । त्वन्मते तूत्तरावस्थानामानन्त्येन तावतोष्ववस्थासु पूर्वपूर्वानेकध्वंसत्वकल्पने गौरवात्, प्रत्ययस्याननुगतत्वापत्तेश्च । एवं पूर्वावस्थायाः प्रागभावरूपत्वेऽपि योज्यम् ।

वस्तुतस्तु, अनुत्पन्नमुकुटेऽपि कनके कटकध्वंसप्रत्ययस्य सर्वानुभवसिद्धत्वान्नैतद्वक्तुमर्हं कटकावस्थाप्रच्यवोत्तरमुकुटोत्पत्तिपूर्वं च कटकध्वंसप्रत्ययस्य मुकुटविषयकत्वेनोपपादयितुमशक्यत्वादवस्थाद्वयमध्ये व्यवधानं नास्ती-

त्यस्य वक्तुमशक्यत्वात् । न च तत्र कनकावस्थैव ध्वंस इति वाच्यम् ; तस्याः पूर्वमपि सत्त्वेनातिप्रसंगस्योक्तत्वात् । न च कटकोत्तरकालीनकनकावस्थैव तथेति वाच्यम् ; उत्तरत्वस्य ध्वंसानङ्गीकारे दुर्वचत्वस्योक्तत्वात् । अत एव कटकं नाशयित्वा मुकुटं कृतमिति स्वरसवाही व्यवहारः । अत एव परिणाम-त्रैविध्यदर्शनं[ न ]प्रस्तावे "सुवर्णकारो वर्द्धमानकं भङ्क्त्वा कुचकमा रचयति इति **तात्पर्यटीकायामुक्तम्** । कटकमेव मुकुटमित्यादिस्तु तत्स-मानविषयक एव यद्यनुभवसिद्धकार्यमात्रवृत्तिधर्मावच्छिन्नप्रतियोगित्वानु-योगित्वकतादात्म्यप्रत्ययो नास्तीत्यस्य भेदाभेदवादे **कारिकाव्याख्यायां** स्वयमेव व्यवस्थापितत्वात् ।

यदप्याहुः "एतेनेहेदानीं घटप्रागभाव इति लोकाननुभवादिहेदानीं घटो नेति बुद्धेः सामयिकात्यन्ताभावविषयकत्वान्न प्रागभावेऽत्यन्ता-भावातिरिक्ते मानमिति **दीधित्युक्तमपास्तम्**" इति, मृदि घटो नेति बुद्धेः प्रागभावावगाहित्वात् । न चेयमत्यन्ताभावविषया, कपालादेर्घटा-दितादात्म्येन घटात्यन्ताभावरूपत्वाभावात् । कपालतादात्म्यापन्नघटप्राग-भावत्वस्यैव तत्र युक्तत्वादिति, तदपि चिन्त्यम् ; इह पटले घटो नेति प्रतीतिविषयेणैवेह मृदि घटो नेत्येतत्प्रत्ययोपपत्त्यातिरिक्तविषयत्वे मानाभावात्, कपालघटयोस्तादात्म्ये मानाभावाच्च । प्रागभावाद्यतिरिक्तो न वेत्यन्यदेतत् । किं च पूर्वोत्तरावस्थयोरेव प्रागभावध्वंसरूपत्वे इह कपाले घटप्रागभाव इह ध्वंस इत्याधाराधेयभावावगाही प्रत्ययो न स्यात् । कथंचिदेतदुपपत्तावपि तदवस्थयोर्घटादितादात्म्ये मानाभाव एव । न हि घटः स्वप्रागभावः स्वध्वंसो वेत्यादिः कस्याप्यनुभवोऽस्ति, प्रत्युत घटः स्वध्वंसाद्भिन्नइत्यादेरेवानुभूयमानत्वात् । अत एवेह घटस्य ध्वंस इह घटस्य प्रागभाव इति व्यवहारे घटतादात्म्यविशिष्टयोः प्रागभाव-ध्वंसयोर्भानमित्यपास्तम् । अत्यन्तभेदावगाहिन्याः प्रतीतेस्तादात्म्याव-गाहित्वोक्तौ भेदमात्रोच्छेदापत्तेः ।

यदपि नश्यतीत्यादौ प्रतियोगित्वादावाख्यातस्य तल्लक्षणास्वीकारे परेषां गौरवम्, अस्मन्मते तु संयुज्यते चलति भातीत्यादिसाधारण्येन तादात्म्ये कृतशक्त्यैवोपपत्तेर्लाघवमिति, तदप्यसत्; दृष्टान्तेऽपि तादात्म्यार्थक-त्वस्यासिद्धत्वाद् भेदाभेदवादस्य निरस्तत्वात् । किञ्च भगतामपि नाख्यातमात्रस्य तादात्म्ये शक्तिः, पचतीत्यादौ तदभावात् । नापि स्थल-विशेषे तत्र लक्षणा संयुज्यते, नश्यतीत्यादिसाधारणस्य जानातीच्छतीत्यादौ

सविषयार्थकधातूत्तरत्वस्येवानुगतधर्मस्याभावात् प्रतियोगित्वस्य भवताप्यभ्युपगमाच्च तादात्म्यस्य भेदघटितत्वनियमात्। एतेन पूर्वावस्थाया अनुपमर्दे यत्रावस्थान्तरतन्नाशौ यथा कपालद्वयाद् घटस्तद्विभागाच्च तन्नाशस्तत्र तत्कालादिविशिष्टावस्थैव तत्प्रागभावध्वंसौ। वस्तुतस्तु तत्र घटः कपालनाशः पश्चादुत्पन्नकपालान्तरं च घटनाश इति निरस्तम्, तत्कालस्य विशिष्टातिरिक्तध्वंसप्रागभावानङ्गीकारे दुर्वचताया उक्तत्वात्। घट एव कपालनाश इति त्वत्यन्तमेवायुक्तम्, घटकाले कपालनाशस्य केनाप्यननुभूयमानत्वात्। असमवायिकारणसंयोगनाशजन्यघटनाशानन्तरं कपालान्तरोत्पत्तिस्वीकारे गौरवाच्च। कपालत्वावच्छिन्नकार्यतानिरूपितकारणतायां कपालिकातदवयवसंयोगादिनिष्ठायां व्यभिचारप्रसंगाच्च। अव्यवहितोत्तरत्वनिवेशे विजातीयकपालत्वस्य कार्यतावच्छेदकत्वाभ्युपगमे वा गौरवाच्च। एकशक्तिमत्त्वेन हेतुत्वस्य च तत्र तच्छक्तितत्संबन्धकल्पनादिगौरवग्रस्तत्वात्। तृणादातु [शु]प्रत्येकगर्भकारणान्तरघटितस्तोमाद्वह्न्याद्युत्पत्तेः सर्वसम्मतत्वाद् वैजत्यादेरिव कारणतावच्छेदकशक्तेरपि स्वीकर्त्तुं शक्यत्वेन वैषम्यात्। अत्र च कपालान्तरोत्पत्तौ हेत्वन्तरे चोभयसंप्रतिपत्तेरभावात्। कपालादेर्घटादिकालीनानन्तसंयोगादिकल्पनगौरवस्य च फलमुखत्वाद् गौरवतारतम्यस्यापि चोक्तत्वात्। पूर्वोत्तरकालीनकपालयोर्भेदे तत्प्रागभावध्वंसभेदस्वीकारे गौरवाच्च।

यदपि कपालनाशस्थले कपालिकाद्यवस्थैव कपालघटयोर्नाशस्तत्रैव लोकेतत्त्वानुभवादिति, तदप्यसत्; तत्र कपालनाशस्यासमवायिकारणनाशजन्यत्वेन प्रत्यक्षत्वं न तु घटनाशस्य समवायिनाशजन्यनाशस्य संयुक्तविशेषणतारूपसन्निकर्षविरहेण प्रत्यक्षाभावादित्यनुभवविरोधात्, भवदुक्तानुभवस्यापि शपथमूलकत्वात्। कुत्रचित्कपालरूपः क्वचिच्च कपालिकारूपो घटनाश इत्यननुगमाच्च। कपालिकानाशस्थले पूवपूर्वावस्थायाः उत्तरोत्तरानेकनाशत्वेऽत्यन्ताननुगमाच्च। यत्तु—

"मही घटत्वं च घटः कपालः कपालिका चूर्णरजस्ततोऽणुः।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र तत्त्वम्॥"

इति **विष्णुपुराणे** घटकपालकपालिकाचूर्णत्रुटीनामेव क्रमिकाणामतत्त्वताप्रतिपत्त्यर्थमनुवादात्तदतिरिक्तध्वंसे मानाभावः। अन्यथा घटकपालावस्थातिरिक्तध्वंसस्य मध्यवर्तिनस्तत्त्वत्वानभिधानान्न्यूनता स्यादिति, तदसत्; मध्यवर्त्तिसर्वावस्थानामत्रानुक्तयोपलक्षणमात्रार्थत्वात्। कपालि-

कायाश्च त्रुटेश्च मध्ये बह्वीनामवस्थानां प्रत्यक्षसिद्धत्वे नापलपितुमशक्यत्वादणुपदस्य त्रुटिपरतायाः स्वयमेवाभिहितत्वात्परमाणुद्व्यणुकयोः रजतत्वस्यात्रानुक्तत्वात्तयोर्न मानमित्यप्ययुक्तम् ; आलक्ष्यत इत्युक्त्या दृश्यानामेवात्रोपादानमित्यस्यापि सुवचत्वात्, तत्सद्भावासद्भावयोः प्रकृतानुपयुक्तत्वाच्च। वस्तुतस्तु घटत्वमित्यस्य घटार्थकत्वं तैरपि कण्ठत एवोक्तम्। घटत इत्यस्य तु घटध्वंस एवार्थः। 'तसु उपक्षये' इत्यस्य दिवादिगणे पठ्यमानस्य भावार्थके क्विप्प्रत्यये घटशब्देन षष्ठीसमासे च तथैव रूपसिद्धेः। एतेन पूर्वावस्थैवोत्तरावस्थां प्रति परिणामितया कारणमत एव तयोस्तादात्म्यमित्यावेदयितुमेकपदासंभवयोरपि तसित्वप्रथमयोर्भिन्नपदगतत्वेनोक्तिरिति निरस्तम्।

यदपि दण्डाद्यभिघातजक्रियया स्वाश्रयघटाद्यवयवकपालादिकं विना विनाश्यस्वोपादानाविद्यायां स्वनाशोत्पत्तिक्षणे त्रुटेरनुत्पादनं चोक्तविष्णुपुराणवाक्यानुसारादिति, तदत्यन्तमसत् ; अणुपदार्थस्य नित्यतया तदुत्पत्तेरसभवात्। एतद्विषये च प्रथमपरिच्छेद एव विचारस्य पल्लवितत्वात्। विष्णुपुराणवाक्यस्य अणोरनुत्पत्तौ प्रमाणत्वाभावात्। पदार्थत्वेन तात्पर्यविषयत्वेन वा तदा स्पृष्टेऽर्थे शब्दस्य प्रामाण्योपन्यासानौचित्यात्। अन्यथोन्मत्तकलहापत्तेः, इति दिक्।

अत एव घटादिकालेऽपि त्रुटेः स्वीकारे तदीयपूर्वसंयोगतन्नाशक्रियाविभागादिकल्पने गौरवमित्यपास्तम्। प्रमाणविरोधे गौरवादेरप्रयोजकत्वात्। अन्यथा ब्रह्मादेरप्यनङ्गीकारापत्तेः। तद्विषयकाविद्यादिकल्पने गौरवापत्तेः। अनन्तत्रुटीनां नाशादिकल्पने तावत् त्रुटिव्यक्त्यपेक्षयैकैकव्यक्तिस्थाने परः परार्द्धत्रुटिव्यक्तितद्ध्वंसप्रागभावादिकल्पने गौरवातिशयस्य जागरूकत्वाच्च।

यत्तु, ननु क्रियारूपा समवायिकारणनाशेन द्वितीयत्रुटेर्नाशापत्त्या क्षणिकत्वं स्यात्, कपालादिक्रियया कपालादीनां च नाशो न स्यात्, न क्रियायास्तत्रासमवायिकारणत्वाभावादसमवायिकारणनाशस्यैव कार्यनाशकत्वादिति चेत्, न; अस्माभिर्द्रव्यनाशकतावच्छेदकवैजात्यस्य क्रियायामेव स्वीकारेणासमवायिकारणनाशस्य द्रव्यनाशकत्वानभ्युपगमात्। अत एव नीलादिव्यक्तीनां जातिवदखण्डनित्यैकत्वेऽपि पाकस्थले तेजोऽभिघातजत्रुटिक्रियया स्वाश्रयत्रुटिं विनाश्य त्रुट्यन्तरं जन्यते। तत्र यथानुभवरूपाद्यन्तरस्यैव

संबन्ध इति स्वीक्रियते, घटे घटत्वस्यैव संबन्धो न पटत्वादेरितिवत्। उक्त क्रियायाः पूर्वरूपनाशकत्वरूपान्तरोत्पादकत्वोपगमे तु रूपादीनां बहूनामुत्पत्तिविनाशयोस्तत्र नानाविधकारणानाञ्च कल्पनापत्त्या गौरवात्। पूर्वद्रव्यनाशकतावच्छेदकतया द्रव्यान्तरजनकतावच्छेदकतया च क्रियायामेकस्यैव वैजात्यस्योपगमे लाघवात्। न च पूर्वद्रव्यनाशोत्पत्तिक्षणे तत्क्रियाया विनश्यदवस्थत्वात्कथं तदुत्तरक्षणे ततो द्रव्यान्तरोत्पत्तिरिति वाच्यम्; क्रियायाः कार्यसहभावेन द्रव्यान्तरहेतुत्वे मानाभावेन विनश्यदवस्थयैव तया द्रव्यान्तरोत्पादे बाधकाभावात्। न च पूर्वद्रव्यनाशद्रव्यान्तरोत्पत्त्योरेकक्षणे संभवेन स्वाश्रयपूर्वद्रव्यनाशाभावेन तत्क्षणे तत्क्रियाया अपि नाशाभावात्तयैव स्वजनितद्रव्यस्य नाशापत्त्या क्षणिकत्वापत्तिरिति वाच्यम्; स्वोपादानत्वसंबन्धस्य नाशकतावच्छेदकतया तत्संबन्धेन तद्द्रव्ये क्रियाविरहात्। न चैवमविद्याया अपि नाशापत्तिः, असाधारणस्योपादनत्वस्य निवेशात्। न च क्रियायास्तादात्म्येन द्रव्यजनकत्वे स्वनाश्यद्रव्यासंयुक्तदेशावच्छेदेनाप्यविद्यायां द्रव्योत्पादकत्वापत्तिः, स्वनाश्यद्रव्यसंबन्धित्वोपलक्षितदेशनिष्ठस्य स्वजन्यनाशवत्त्वस्य कारणतावच्छेदकसंबन्धत्वात्। तादृशदेशश्च त्रुटचवयवो भूतलादिर्वेत्यन्यत्।

एवञ्च पूर्वद्रव्यनाशोत्पत्तिक्षणे द्रव्यान्तरोत्पत्तेर्न भावनापि तत्पूर्वक्षणे पूर्वद्रव्यनाशाभावेन तद्घटितोक्तसंबन्धेन क्रियाया अभावादिति **सूत्रमुक्तावल्यां** प्रतिपादितम्, तत्रेदं वक्तव्यम्—क्रियाया द्रव्यजनकत्वे मानाभावः; आवश्यकसंयोगस्यैव तदौचित्यात्। न च त्वन्मते कपाले संयोगाद्यत्र घटोत्पत्तिस्तत्रापि संयोगस्य द्रव्यजनकत्वं नाङ्गीक्रियत इति वाच्यम्; प्रत्यक्षविरोधादपसिद्धान्ताच्च। उक्तं हि **भगवद्भाष्यकारैः** "कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेन" इति। संयोगहेतुतायां बाधकाभावाच्च।

यत्तु पटादिकार्यं प्रति संयोगस्य नानुगगतमेकं कारणत्वम्, एकस्मिन्नेव कपाले तत्तत्प्रदेशावच्छिन्नसंयोगेभ्यस्तत्र द्रव्योत्पत्तेर्नियन्तुमशक्यत्वात्; किन्तु घटत्वाद्यवच्छिन्नं प्रति जनकतया नानावैजात्यान्यवयवसंयोगनिष्ठानि कल्प्यानीति गौरवमिति, तन्न; यादृशविजातीयसंयोगाद्द्रव्योत्पत्तिर्यथोपगम्यते तादृशवैजात्यावच्छिन्नसंयोगनियामकं भवतापि किंचिदवश्यं कल्प्यम्, द्रव्यहेतुत्वानभ्युपगमेऽपि प्रत्यक्षसिद्धस्य तस्यापह्नोतुमशक्यत्वात्। तथा च कार्यतावच्छेदकतयावश्यकल्प्यस्य संयोगनिष्ठवैजात्यस्यैव द्रव्यजनकतावच्छेदकत्वस्वीकारान्न गौरवम्। तथापि द्रव्यत्वव्याप्यकार्यतावच्छेदक-

धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकतया तत्समानसंख्याकानां वैजात्यानां क्रियानिष्ठानां स्वीकार्यत्वात्। क्रियात्वसामान्यस्यैव नाशकतावच्छेदकत्वे प्रायेण प्रत्यक्षादिविरोधात्। असाधारणं स्वोपादानत्वं नाशकतावच्छेदकसंबन्ध इत्यप्ययुक्तम्, तद्धि भवद्रीत्याविद्यादिषडन्यत्वावच्छिन्नकार्यताप्रतियोगिकोपादानताशालित्वं वाच्यम्। तथा चाविद्यादिषडन्यत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्ना च या कार्यता तत्प्रतियोगिकतादात्म्यसंबन्धावच्छिन्नकारणत्वरूपसंबन्धस्य नाशकतावच्छेदकत्वपर्यवसानादविद्याव्यावृत्तावपि ब्रह्मणो नाशापत्तिः। "एतस्माद्वा आत्मनः" इत्यादि श्रुत्या वायुत्वादेरप्यात्मकार्यतावच्छेदकत्वस्यावश्यकत्वात्। अथ कारणसमसत्ताकत्वस्यापि कार्यतायां निवेशेनोक्तसंबन्धस्य परिणाम्युपादानमात्रवृत्तित्वान्न विवर्तोपादानब्रह्मसाधारण्यम्। यद्वा, उक्तश्रुत्यादिना कार्यत्ववायुत्वादीनां सामानाधिकरण्यमात्रमेव बोध्यते। अवच्छेदकन्तु "यतो वा इमानि भूतानि जायन्ते" इत्यादि पर्यालोचनया लाघवेन चाविद्यादिषडन्यत्वमेवेति चेत्, सत्यम्; तथाप्येतदपेक्षया प्रतियोगितासंबन्धेन द्रव्यनाशं प्रति स्वप्रतियोगिसमवायिसमवेतत्वसंबन्धेनासमवायिकारणनाशहेतुताया युक्तत्वात्।

किंच स्वोपादानत्वसंबन्धेन क्रियाया द्रव्यनाशकत्वं स्वीकृत्य तदुत्पन्नद्रव्यस्य क्षणिकत्ववारणेऽपि तत्क्रियायाः क्षणिकत्वं दुर्वारम्, क्रमोत्पत्तिद्वितीयक्षणे पूर्वद्रव्यनाशवत्कर्मनाशस्यापि संभवात्तदानीमेव द्रव्यान्तरोत्पत्तेः संभवात्। कार्यसहभावेन हेतुताया भवतानभ्युपगमात्। अन्यथा पूर्वद्रव्यनाशोत्तरक्षणे कर्मणो द्रव्यान्तरजनकत्वानुपपत्तेः। न च कर्मनाशे द्रव्यनाशस्य हेतुत्वाद् द्रव्यनाशानन्तरक्षणे एव कर्मनाश इति वाच्यम्; समवेतनाशं प्रति त्वया समवायिनाशहेतुत्वानभ्युपगमात्। न चासमवायिनाशस्यैव तत्र न हेतुत्वम्, समवायिनाशस्य त्वस्त्येवेति वाच्यम्; समवेतनाशत्वस्य तत्कार्यतावच्छेदत्वे प्रकृतस्थले व्यभिचारात्। न च कर्मनाशत्वम्, तथा सत्यपि घटादावुक्ताकार्यतावच्छेदकावच्छिन्नोत्पत्त्या व्यभिचारात्। समवायिनाशजन्यतावच्छेदके द्रव्यजनकतावच्छेदकवैजात्यस्य कर्मविशेषणतया निवेशे तु कर्मान्तरनाशे उत्तरसंयोगादेः कारणत्वान्तरस्य कल्पनापत्तिः। तथा च द्रव्यनाशत्वेन विजातीयकर्मत्वेनैकः कार्यकारणभावः, विजातीयकर्मनाशत्वेन द्रव्यनाशत्वेन चेत्यपरः, तदन्यकर्मनाशत्वेनोत्तरसंयोगत्वादिना चापर इति त्रयं कल्प्यम्। तद्वरं द्रव्यनाशत्वावच्छिन्नेऽसमवायिनाशत्वेन हेतुत्वम्। न च समवायिनाशजन्यनाशे व्यभिचारः, नव्यमते द्व्यणुक-

नाशानुरोधेनावश्यक्लृप्तेनासमवायिनाशहेतुत्वेनैव निर्वाहे घटादिनाशेऽपि समवायिनाशहेतुत्वानभ्युपगमात्। प्राचीनमतेऽपि गुणकर्मसाधारण्येन स्वप्रतियोगिसमवेतत्वं कालिकविशेषणत्वं चेत्येतदुभयसबन्धेन नाशं प्रति समवायिनाशस्य हेतुत्वेन द्रव्यनाशस्याप्युपसंग्रहाच्चेति द्वयमेव कल्प्यताम्। पूर्वोक्तगुरुतरसंबन्धेन कर्मणो द्रव्यहेतुत्वमपेक्ष्य स्वसमवायिसमवेतत्व-संबन्धेन द्रव्योत्पत्तौ समवायेन संयोगस्यैव हेतुतायामयुक्तत्वाच्च। द्रव्यजनक-तावच्छेदकवैजात्यस्य संयोगनिष्ठस्यैव कल्पयितुं युक्तत्वाच्च। न च द्रव्यजनकतावच्छेदकवैजात्यावच्छिन्नसंयोगनिष्ठजन्यत्वप्रतियोगितावच्छेदकत्वेन त्वयापि कल्प्यस्य कर्मनिष्ठवैजात्यस्यैव मया द्रव्यजनकतावच्छेदक-त्वस्वीकाराल्लाघवमिति वाच्यम्; त्वयापि संयोगनिष्ठवैजात्यस्या-वश्याभ्युपगम्यतया तस्यैव मया द्रव्यजनकतावच्छेदकत्वोपगमात्। न च मया द्रव्यनाशकतावच्छेदकमपि तदेव कल्प्यते इति लाघवमिति-वाच्यम्; द्रव्यनाशकतावच्छेदकत्वेन जात्यन्तरस्य मयाप्यनङ्गीकारात् प्रकारस्य चोक्तत्वात्। सर्गाद्यकालीनद्रव्योत्पत्तौ कर्मणस्तत्संबन्धस्य च हेतुत्वतदवच्छेदकत्वयोर्व्यभिचाराच्च। नहि तदा तत्कर्मणः शपथेन निर्णयेऽपि तत्कर्मजन्यद्रव्यनाशघटितोक्तसंबन्धेन कर्मणस्तादृशद्रव्यो-त्पादकत्वं वक्तुं शक्यम्; **मम** तु परमाणुद्वयसंयोगस्येश्वरेच्छाधीनकर्म-वशादुत्पत्त्या द्व्यणुकोत्पत्तिरविरुद्धा, पूर्वद्रव्यनाशादेः कारणतावच्छेदक-संबन्धाघटकत्वेनानपेक्षितत्वात्।

यत्तु "उभयथापि न कर्मातस्तदभावः" इति **वेदान्तसूत्रे** उक्तम्। परमाणुकर्मणि न दृष्टं निमित्तम्, प्रलये प्रयत्नाद्यभावात्। नाप्यदृष्टं तत्सहकारिणश्चेतनाधिष्ठितत्वस्य परमाणावभावात्। प्रलये जीवानां चैतन्याभावादीश्वराधिष्ठानस्य चेश्वरसाधकश्रुत्यनुसारेण मायायामेवा-ङ्गीकर्त्तुमुचितत्वात्। एवं चोभयथा दृष्टमदृष्टं वा परमाणुकर्मणो निमित्तं न संभवति यस्मादतः परमाणोरारम्भकसंयोगाभावादुपादानत्व-मनुपपन्नम्। किं च परमाणोः संयोगो न प्रत्यक्षः, संयोगप्रत्यक्षे आश्रय-प्रत्यक्षस्य हेतुत्वात्। किन्त्वनुमेयः, तेन च दृष्टानुसारिणावयवावच्छिन्नो वाच्यस्तथा च परमाणोः सावयवत्वापत्तिरिति, तदसत्; संयोगस्य हि नावच्छिन्नत्वं कुलधर्मः किन्त्ववयविद्रव्यवृत्तित्वप्रयुक्तम्। तदुक्तं **लीलावत्याम्** "तस्मादवयववर्तिना संयोगाभावेनावयविनि संयोगस्य सादेश्यव्यपदेशविषय-त्वमेवाव्याप्यवृत्तित्वम्" इति। **मतान्तरे**ऽपि स्वसमवाय्यवयवावच्छिन्नत्व-

नियमे घटाकाशसंयोगे यत्किंचित् स्वसमवाय्यवयवावच्छिन्नत्वनियमे चात्मा-काशसंयोगे परमाण्वाकाशसंयोगे त्रुटितत्संयोगे व्यभिचारात्; तथा च परमाणोः संयोगानुमाने कथमवच्छिन्नत्वं विषयः स्यात्, अन्यथा कपालादिप्रतियोगिकत्वादेरपि तत्र सिद्धिप्रसंगात्। तदुक्तं दृष्टान्ते—ईश्वरेच्छावशाददृष्टस्य वृत्तिलाभात् तद्वदात्मसंयोगेन परमाणुषु कर्मोत्पत्तौ बाधकाभावाच्च मायायामेव प्रमाणाभावेन तत्रेश्वराधिष्ठितत्वकल्पनानवकाशात्। एतेन पूर्वोक्तकारणतावच्छेदकसंबन्धोऽप्यपास्तः, अविद्यायामेव मानाभावे तदुपादानहेतुत्वस्य दूरापास्तत्वात्। एतेन "उपादानीभूतमायायां तादात्म्येन प्रत्यासन्नस्येक्षणादेरसमवायिकारणत्वमेव श्रुत्योच्यते" इत्यपि परास्तम्।

यदपि "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" इति सूत्रे उक्तम् "कारणे कार्यसमवायाभ्युपगमादपि परमाणुवादो न युक्तः। तथाहि समवायः संबद्धोऽसंबद्धो वा? नान्त्यः, असंबद्धस्य संबन्धत्वासंभवात्। नाद्यः, स हि समवायः, स्वरूपं वा? नाद्यः, अनवस्थानात्। नान्त्यः, कार्यस्यैव स्वरूपसंबन्धसंभवेन समवायवैयर्थ्यात्। किञ्च समवायस्यैकत्वं न युक्तम्, वायावपि रूपवत्ताबुद्धिप्रसंगात्। न च रूपप्रतियोगिकत्वविशिष्टसमवायस्तत्र नास्तीति वाच्यम्; तदतिरेककल्पनापेक्षया समवायनानात्वस्यैव युक्तत्वात्। रूपादिसमवायस्यापि नाशोत्पत्यनुभवात्तस्य नित्यत्वमप्यनुपपन्नम्। कपालद्वयं घट इति प्रत्ययानिर्वाहकत्वञ्च। अत एव सिद्धान्ते तादृश एव तादात्म्यनामासंबन्धोऽनवस्थादिदोषैरनिर्वचनीयः समवायस्थानीयोऽभ्युपेयत इति" तत्रापीदं वाच्यम्; ब्रह्मणः प्रपञ्चोपादानत्वे प्रमाणाभावः। तथाहि ब्रह्म न प्रपञ्चोपादानं तन्निमित्तत्वात्, यद्यस्य निमित्तं तत्तस्यानुपादानं यथा घटस्य कुलालः। न च हेत्वसिद्धिः। ब्रह्म जगतो निमित्तम्, इच्छापूर्वकजगत्कर्तृकत्वात्, कुम्भकर्तृकुलालवदिति तत्सिद्धेः।

यत्तु ईश्वरासिद्धेराश्रयासिद्धोऽयं हेतुः, न चागमात् तत्सिद्धिरिति वाच्यम्; तेनोपादानत्वनिमित्तत्वाभ्यामेवेश्वरस्य बोधितत्वेनानुपादानत्वस्य धर्मिग्राहकमानबाधितत्वात्। तद्भिन्नस्य च निमित्तस्य स्वीकारे "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्यादि प्रतिज्ञाया "यथा सोम्यैकेन ज्ञातेन सर्वे कठा ज्ञाता भवन्ति"इति गौणत्वेन तन्निर्वाह इति वाच्यम्; अगतिकगतित्वात्। तदुक्तम्—

"न मुख्ये संभवत्यर्थे जघन्या वृत्तिरिष्यते।
न चानुमानिकं युक्तमागमेनापबाधितम्॥"

"सर्वे हि तावद्वेदान्ताः पौर्वापर्येण वीक्षिताः ।
ऐकान्तिकाद्वैतपरा द्वैतमात्रनिषेधतः ।" इति,

तदसत्; तद्वाक्यानामद्वैतपरत्वस्य पूर्वपरिच्छेद एव निराकृतत्वात्। उत्पादनत्वबोधकश्रुतेश्च दुर्लभत्वात् । तदैक्षतेत्यादीनां च व्याख्यातत्वात्।

यत्तु "यतो वा इमानि भूतानि जायन्ते" इत्यनेन प्रकृतावुपादाने पञ्चमी-विधानाद् ब्रह्मण उपादानत्वमिति, तत्र वक्ष्यामः; समवायनानात्वं त्विष्टमेव । रूपसमवायो नष्ट इति तु न स्वारसिकोऽनुभवः, अन्यथा समवायस्य नित्यत्वेऽपि तत्सिद्धेरावश्यकत्वात् । कपालद्वयं घट इत्यपि कल्पितैव प्रतीतिः, अतस्तदनिर्वाहेऽपीष्टापत्तिः । समवायस्थाने तादात्म्यं कल्प्यत इति तु नास्ति विवादो न तु वस्तुनीत्यत्र पर्यवसन्नः । भेदावगाहि-प्रत्ययस्य तेनानिर्वाहाच्च । किंच भवन्मते तादात्म्यं द्वेधा--ब्रह्मणा सहाध्या-सिकविषयतासंबन्धस्थानीयम्, अविद्यया सह समवायस्थानीयम् । तत्रान्त्येन जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन कारणता, अविद्याया अपि द्रव्यत्वात् । तत्साधारणजात्यन्तरस्यावच्छेदकत्वकल्पनाद्वा । तथा च ब्रह्मणो नोपादानत्वम् । समवायस्थानीयतादात्म्येन कार्यानधिकरणत्वात् ।

यत्तु समवायस्थानीयतादात्म्यवदाध्यासिकविषयतासंबन्धोऽपि तादात्म्यमेव। तथा च तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न-कारणत्वमुपादानत्वमविद्यायामिव ब्रह्मण्यप्यक्षतमेवेति न पारिभाषिकमात्रं तदुपादानत्वमिति, तन्न; संबन्धद्वयस्य वस्तुनो भिन्नत्वेन तयोर्नामैक्यकरणेऽपि पारिभाषिकत्वानपायात् । एवञ्च ब्रह्मसत्तायां कार्यस्य समवायस्थानीय-तादात्म्यानङ्गीकारे घटः सन्निति सामानाधिकरण्येन धीर्न स्यादित्याशङ्काया-माध्यासिकविषयतासंबन्धस्थानीयतादात्म्यस्यापि तन्नियामकत्वादिति समाधानमप्यपास्तम्, सदाकारबुद्धेर्विषयैक्यरक्षणानुपपत्तेः । संबन्धविकल्प-स्त्वग्रे निरसनीय इत्यास्तां तावत् ।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले ।**
**प्रकाशात्मोक्तबाध्यत्वे अप्रकाशात्मतां गते ॥११॥**

———

# द्वादशोंऽशः

यत्तु **चित्सुखाचार्यैः** "अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वादितरांशिवत् । न च कस्यचित्पटस्य संयोगेनैतत्तन्तुषु सत्वाद्व्यभिचारः, पक्षसमत्वात् । समवेतस्येव संयुक्तस्यापि तन्निष्ठात्यन्ताभावप्रतियोगित्वसंभवात्" इति तत्र, संयोगसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय सिद्धसाधनात् । न च समवायावच्छिन्नत्वं तद्विशेषणं संयोगसमवायोभयसंबन्धावच्छिन्नाभावेन सिद्धसाधनात् । नापि समवायान्यसंबन्धावच्छिन्नत्वं निवेश्यम्, समवायेन द्रव्यस्याप्यव्याप्यवृत्तित्वपक्षे किंचिदवच्छेदेन तदभावेन सिद्धसाधनात् । यत्त्वव्याप्यवृत्तित्वेनार्थान्तरमाशङ्क्योक्तं पटतदभावयोरैकाधिकरण्ये जगति विरोधविलयापत्तिरिति, तन्न; स्वानुमानप्रतिकूलस्यैव प्रत्युत दर्शितत्वात् । यदपीह तन्तुषु पट इति प्रत्यक्षबाधमाशङ्क्योक्तं चन्द्रप्रादेशिकत्वप्रत्यक्षवत्तस्याकिंचित्करत्वादुक्तप्रत्यक्षस्य त्वादृशैरिव चन्द्रप्रादेशिकत्वप्रत्यक्षस्यापि बहुभिः परीक्षितत्वाद्विचारशूरपरीक्षितत्वस्य दार्ष्टान्तिकेऽप्यभावादिति, तन्न; प्रत्यक्षस्यानन्यथासिद्धतया प्राबल्यमित्यस्य व्यवस्थापितत्वात् । प्रमाणानादरे च विचारशूरत्वस्य दुर्लभत्वादिह पटाभावो नास्तीति प्रत्यक्षाच्च । एतत्त्वं वृत्तिध्वंसप्रतियोगित्वस्योपाधित्वाच्च । पटान्तरादीनामेतत्तन्तुवृत्तिध्वंसप्रतियोगित्वस्य परैरप्यनङ्गीकारात् । एमवयं पटो नैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, एतत्तन्त्वारब्धत्वात्, यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभावो यथा पटान्तरे, इति व्यतिरेकेण प्रतिरोधोऽपि ध्येयः । न चाप्रसिद्धविशेषणत्वं समवायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वस्य स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावो हि प्रकृते साध्यः । स च संयोगसंबन्धावच्छिन्नप्रतियोगिताकैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिन्येव प्रसिद्धो विशेषणाभावप्रयुक्तत्वादिति प्रसिद्धिसौलभ्यात् । पक्ष एव प्रसिद्धेरनपेक्षितत्वात् प्रत्युत प्रतिकूलत्वात् । उक्तं **चाचार्यैः** "प्रसिद्धो हि धर्मो धर्मिणमन्वेति न तु धर्मिण्येव तत्प्रसिद्धिर्मृग्यते" इति । नचात्रैतन्निष्ठप्रागभावप्रतियोगित्वाभाव उपाधिः, एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वस्य पक्षावृत्तेः, पक्षवृत्तितया संदिह्यमानैतत्तन्तु-

"सर्वे हि तावद्वेदान्ताः पौर्वापर्येण वीक्षिताः।
ऐकान्तिकाद्वैतपरा द्वैतमात्रनिषेधतः।" इति,

तदसत्; तद्वाक्यानामद्वैतपरत्वस्य पूर्वपरिच्छेद एव निराकृतत्वात्। उत्पादनत्वबोधकश्रुतेश्च दुर्लभत्वात्। तदैक्षतेत्यादीनां च व्याख्यातत्वात्।

यत्तु "यतो वा इमानि भूतानि जायन्ते" इत्यनेन प्रकृतावुपादाने पञ्चमी-विधानाद् ब्रह्मण उपादानत्वमिति, तत्र वक्ष्यामः; समवायनानात्वं त्विष्टमेव। रूपसमवायो नष्ट इति तु न स्वारसिकोऽनुभवः, अन्यथा समवायस्य नित्यत्वेऽपि तत्सिद्धेरावश्यकत्वात्। कपालद्वयं घट इत्यपि कल्पितैव प्रतीतिः, अतस्तदनिर्वाहेऽपीष्टापत्तिः। समवायस्थाने तादात्म्यं कल्प्यत इति तु नास्ति विवादो न तु वस्तुनीत्यत्र पर्यवसन्नः। भेदावगाहि-प्रत्ययस्य तेनानिर्वाहाच्च। किंच भवन्मते तादात्म्यं द्वेधा—ब्रह्मणा सहाध्या-सिकविषयतासंबन्धस्थानीयम्, अविद्यया सह समवायस्थानीयम्। तत्रान्त्येन जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन कारणता, अविद्याया अपि द्रव्यत्वात्। तत्साधारणजात्यन्तरस्यावच्छेदकत्वकल्पनाद्वा। तथा च ब्रह्मणो नोपादानत्वम्। समवायस्थानीयतादात्म्येन कार्यानधिकरणत्वात्।

यत्तु समवायस्थानीयतादात्म्यवदाध्यासिकविषयतासंबन्धोऽपि तादात्म्यमेव। तथा च तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न-कारणत्वमुपादानत्वमविद्यायामिव ब्रह्मण्यप्यक्षतमेवेति न पारिभाषिकमात्रं तदुपादानत्वमिति, तन्न; संबन्धद्वयस्य वस्तुनो भिन्नत्वेन तयोर्नामैक्यकरणेऽपि पारिभाषिकत्वानपायात्। एवञ्च ब्रह्मसत्तायां कार्यस्य समवायस्थानीय-तादात्म्यानङ्गीकारे घटः सन्निति सामानाधिकरण्येन धीर्न स्यादित्याशङ्काया-माध्यासिकविषयतासंबन्धस्थानीयतादात्म्यस्यापि तन्नियामकत्वादिति समाधानमप्यपास्तम्, सदाकारबुद्धेर्विषयैक्यरक्षणानुपपत्तेः। संबन्धविकल्प-स्त्वग्रे निरसनीय इत्यास्तां तावत्।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**प्रकाशात्मोक्तबाध्यत्वे अप्रकाशात्मतां गते ॥११॥**

———

# द्वादशोंऽशः

यत्तु **चित्सुखाचार्याः** "अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वादितरांशिवत् । न च कस्यचित्पटस्य संयोगेनैतत्तन्तुषु सत्वाद्व्यभिचारः, पक्षसमत्वात् । समवेतस्येव संयुक्तस्यापि तन्निष्ठात्यन्ताभावप्रतियोगित्वसंभवात्" इति तत्र, संयोगसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय सिद्धसाधनात् । न च समवायावच्छिन्नत्वं तद्विशेषणं संयोगसमवायोभयसंबन्धावच्छिन्नाभावेन सिद्धसाधनात् । नापि समवायान्यसंबन्धावच्छिन्नत्वं निवेश्यम्, समवायेन द्रव्यस्याप्यव्याप्यवृत्तित्वपक्षे किंचिदवच्छेदेन तदभावेन सिद्धसाधनात् । यत्त्वव्याप्यवृत्तित्वेनार्थान्तरमाशङ्क्योक्तं पटतदभावयोरैकाधिकरण्ये जगति विरोधविलयापत्तिरिति, तन्न; स्वानुमानप्रतिकूलस्यैव प्रत्युत दर्शितत्वात् । यदपीह तन्तुषु पट इति प्रत्यक्षबाधमाशङ्क्योक्तं चन्द्रप्रादेशिकत्वप्रत्यक्षवत्तस्याकिंचित्करत्वादुक्तप्रत्यक्षस्य त्वादृशैरिव चन्द्रप्रादेशिकत्वप्रत्यक्षस्यापि बहुभिः परीक्षितत्वाद्विचारशूरपरीक्षितत्वस्य दार्ष्टान्तिकेऽप्यभावादिति, तन्न; प्रत्यक्षस्यानन्यथासिद्धतया प्राबल्यमित्यस्य व्यवस्थापितत्वात् । प्रमाणानादरे च विचारशूरत्वस्य दुर्लभत्वादिह पटाभावो नास्तीति प्रत्यक्षाच्च । एतत्त्वं वृत्तिध्वंसप्रतियोगित्वस्योपाधित्वाच्च । पटान्तरादीनामेतत्तन्तुवृत्तिध्वंसप्रतियोगित्वस्य परैरप्यनङ्गीकारात् । एमवयं पटो नैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, एतत्तन्त्वारब्धत्वात्, यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभावो यथा पटान्तरे, इति व्यतिरेकेण प्रतिरोधोऽपि ध्येयः । न चाप्रसिद्धविशेषणत्वं समवायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वस्य स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावो हि प्रकृते साध्यः । स च संयोगसंबन्धावच्छिन्नप्रतियोगिताकैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिन्येव प्रसिद्धो विशेषणाभावप्रयुक्तत्वादिति प्रसिद्धिसौलभ्यात् । पक्ष एव प्रसिद्धेरनपेक्षितत्वात् प्रत्युत प्रतिकूलत्वात् । उक्तं **चाचार्यैः** "प्रसिद्धो हि धर्मो धर्मिणमन्वेति न तु धर्मिण्येव तत्प्रसिद्धिर्मृग्यते" इति । नचात्रैतन्निष्ठप्रागभावप्रतियोगित्वाभाव उपाधिः, एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वस्य पक्षावृत्तेः, पक्षवृत्तितया संदिह्यमानैतत्तन्तु-

"सर्वे हि तावद्वेदान्ताः पौर्वापर्येण वीक्षिताः।
ऐकान्तिकाद्वैतपरा द्वैतमात्रनिषेधतः।" इति,

तदसत्; तद्वाक्यानामद्वैतपरत्वस्य पूर्वपरिच्छेद एव निराकृतत्वात्। उत्पादनत्वबोधकश्रुतेश्च दुर्लभत्वात्। तदैक्षतेत्यादीनां च व्याख्यातत्वात्।

यत्तु "यतो वा इमानि भूतानि जायन्ते" इत्यनेन प्रकृतावुपादाने पञ्चमीविधानाद् ब्रह्मण उपादानत्वमिति, तत्र वक्ष्यामः; समवायनानात्वं त्विष्टमेव। रूपसमवायो नष्ट इति तु न स्वारसिकोऽनुभवः, अन्यथा समवायस्य नित्यत्वेऽपि तत्सिद्धेरावश्यकत्वात्। कपालद्वयं घट इत्यपि कल्पितैव प्रतीतिः, अतस्तदनिर्वाहेऽपीष्टापत्तिः। समवायस्थाने तादात्म्यं कल्प्यत इति तु नास्ति विवादो न तु वस्तुनीत्यत्र पर्यवसन्नः। भेदावगाहिप्रत्ययस्य तेनानिर्वाहाच्च। किंच भवन्मते तादात्म्यं द्वेधा—ब्रह्मणा सहाध्यासिकविषयतासंबन्धस्थानीयम्, अविद्यया सह समवायस्थानीयम्। तत्रान्त्येन जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन कारणता, अविद्याया अपि द्रव्यत्वात्। तत्साधारणजात्यन्तरस्यावच्छेदकत्वकल्पनाद्वा। तथा च ब्रह्मणो नोपादानत्वम्। समवायस्थानीयतादात्म्येन कार्यानधिकरणत्वात्।

यत्तु समवायस्थानीयतादात्म्यवदाध्यासिकविषयतासंबन्धोऽपि तादात्म्यमेव। तथा च तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वमुपादानत्वमविद्यायामिव ब्रह्मण्यप्यक्षतमेवेति न पारिभाषिकमात्रं तदुपादानत्वमिति, तन्न; संबन्धद्वयस्य वस्तुनो भिन्नत्वेन तयोर्नामैक्यकरणेऽपि पारिभाषिकत्वानपायात्। एवञ्च ब्रह्मसत्तायां कार्यस्य समवायस्थानीयतादात्म्यानङ्गीकारे घटः सन्निति सामानाधिकरण्येन धीर्न स्यादित्याशङ्कायामाध्यासिकविषयतासंबन्धस्थानीयतादात्म्यस्यापि तन्नियामकत्वादिति समाधानमप्यपास्तम्, सदाकारबुद्धेर्विषयैक्यरक्षणानुपपत्तेः। संबन्धविकल्पस्त्वग्रे निरसनीय इत्यास्तां तावत्।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**प्रकाशात्मोक्तबाध्यत्वे अप्रकाशात्मतां गते ॥११॥**

———

# द्वादशोंऽशः

यत्तु **चित्सुखाचार्याः** "अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वादितरांशिवत् । न च कस्यचित्पटस्य संयोगेनैतत्तन्तुषु सत्वाद्व्यभिचारः, पक्षसमत्वात् । समवेतस्येव संयुक्तस्यापि तन्निष्ठात्यन्ताभावप्रतियोगित्वसंभवात्" इति तत्र, संयोगसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय सिद्धसाधनात् । न च समवायावच्छिन्नत्वं तद्विशेषणं संयोगसमवायोभयसंबन्धावच्छिन्नाभावेन सिद्धसाधनात् । नापि समवायान्यसंबन्धावच्छिन्नत्वं निवेश्यम्, समवायेन द्रव्यस्याप्यव्याप्यवृत्तित्वपक्षे किंचिदवच्छेदेन तदभावेन सिद्धसाधनात् । यत्त्वव्याप्यवृत्तित्वेनार्थान्तरमाशङ्क्योक्तं पटतदभावयोरैकाधिकरण्ये जगति विरोधविलयापत्तिरिति, तन्न; स्वानुमानप्रतिकूलस्यैव प्रत्युत दर्शितत्वात् । यदपीह तन्तुषु पट इति प्रत्यक्षबाधमाशङ्क्योक्तं चन्द्रप्रादेशिकत्वप्रत्यक्षवत्तस्याकिंचित्करत्वादुक्तप्रत्यक्षस्य त्वादृशैरिव चन्द्रप्रादेशिकत्वप्रत्यक्षस्यापि बहुभिः परीक्षितत्वाद्विचारशूरपरीक्षितत्वस्य दार्ष्टान्तिकेऽप्यभावादिति, तन्न; प्रत्यक्षस्यानन्यथासिद्धतया प्राबल्यमित्यस्य व्यवस्थापितत्वात् । प्रमाणानादरे च विचारशूरत्वस्य दुर्लभत्वादिह पटाभावो नास्तीति प्रत्यक्षाच्च । एतत्तत्वं वृत्तिध्वंसप्रतियोगित्वस्योपाधित्वाच्च । पटान्तरादीनामेतत्तन्तुवृत्तिध्वंसप्रतियोगित्वस्य परैरप्यनङ्गीकारात् । एमवयं पटो नैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, एतत्तन्त्वारब्धत्वात्, यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभावो यथा पटान्तरे, इति व्यतिरेकेण प्रतिरोधोऽपि ध्येयः । न चाप्रसिद्धविशेषणत्वं समवायसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगित्वस्य स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावो हि प्रकृते साध्यः । स च संयोगसंबन्धावच्छिन्नप्रतियोगिताकैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिन्येव प्रसिद्धो विशेषणाभावप्रयुक्तत्वादिति प्रसिद्धिसौलभ्यात् । पक्ष एव प्रसिद्धेरनपेक्षितत्वात् प्रत्युत प्रतिकूलत्वात् । उक्तं **चाचार्यैः** "प्रसिद्धो हि धर्मो धर्मिणमन्वेति न तु धर्मिण्येव तत्प्रसिद्धिर्मृग्यते" इति । नचात्रैतन्निष्ठप्रागभावप्रतियोगित्वाभाव उपाधिः, एतत्तन्त्वारब्धत्वाभावव्यापकस्यैतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वस्य पक्षावृत्तेः, पक्षवृत्तितया संदिह्यमानैतत्तन्तु-

निष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वादिति वाच्यम्; साध्यहेत्वोर्व्याप्तिग्राहकतर्कसत्त्वात्सन्दिग्धोपाधित्वस्याप्ययोगात्। एतेन प्रागभावानङ्गीकारे एतदुपादानकत्वाभाव एवोपाधिरित्यप्यपास्तम्। उक्तं हि मणौ "यत्र साध्यहेत्वोः साध्योपाध्योर्वा व्याप्तिग्राहकसामान्यान्नैकत्र व्याप्तिनिश्चयस्तत्र संदिग्धोपाधित्वम्। यत्र त्वेकत्र तर्कावतारस्तत्र हेतुत्वमुपाधित्वं वा निश्चितमत एव पक्षेतरत्वं न संदिग्धोपाधिः" इति। प्रकृते च प्रयत्नादेरनुकूलतर्कस्य प्रतिस्थापनायामेव सत्त्वात्।

वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।
सुचित्सुखीयकुसुमं चित्सुखीयाद्धयं कृतम् ॥१२॥

———

## त्रयोदशोऽशः

यत्तु **आनन्दबोधाचार्याः** "विमतं ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात्, स्वप्नादिवद्" इति, तन्न; ज्ञानव्यतिरेकेणासत्त्वं हि ज्ञानभिन्नत्वाज्ञानकालमात्रस्थितिकत्वं वा? हेतुरपि किं ज्ञानोद्भेदेनानुपलभ्यमानत्वमुत ज्ञानाभावप्रयुक्तविरहप्रतियोग्युपलब्धिकत्वम्? नाद्यः, बौद्धोक्तसहोपलम्भनियमहेतोरस्य "नाभाव उपलब्धेः" इत्यादिसूत्रेष्वेव निरस्तत्वात्। पटस्य ज्ञानं न तु पट इति प्रत्ययात् स्वरूपसिद्धेः। नान्त्यः, अभेदे प्रयोज्यप्रयोजकभावविरहात्। दृष्टान्तोऽपि स्वप्नज्ञानं तद्विषयो वा? नाद्यः, उक्तदिशा साधनवैकल्यात्। नान्त्यः, अत एव जाग्रत्प्रत्ययविषयाणामेवार्थानां तद्विषयत्वोपगमेन साध्यकवैल्याच्च। यत्तु तस्य तात्पर्यमुक्तम्—"उक्तमिथ्यान्तरत्वं साध्यं स्वावच्छिन्नचिद्विषयत्वं हेतुः। जडानामेव चिदवच्छेदकत्वान्न ब्रह्मणि हेतुः। यद्वा सत्तादात्म्याविषयकबुद्ध्यविषयत्वं हेतुः सदविषयकबुद्धिविषयकत्वस्य ब्रह्मसाधारण्यात्तादात्म्यनिवेशः। वेदान्तिमते तादात्म्यस्य भेदनियतत्वादत्यन्ताभेदे तदनङ्गीकारात्" इति, तदसत्; स्वरूपसिद्धेः। चैत्रः पचतीत्यादिज्ञानस्य सत्तादात्म्यविषयकत्वे मानाभावात्। घटः सन्नित्यादावपि सत्तादात्म्यस्य नियमेन मानाभावात्। सत्ताया आश्रयत्वसंबन्धेनापि भानसंभवात्। सत्ताया ब्रह्ममात्रधर्मत्वनिरासाच्च।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**मानन्दमितमानन्दबोधमिथ्यात्वगोचरम् ॥ १३ ॥**

———

# चतुर्दशोंऽशः

यत्तु कौमुदी—विमतं मिथ्याधीकाल एवान्यथा प्रमितत्वात् । [illegible] न्नतादिवत् । भारूपवस्तु संलग्नत्वात्, सवितृछिद्रादिवदिति । न [illegible] धीकाल एव । "इदं सर्वं यदयमात्मा" इति श्रुत्या सर्वानात्मन [illegible] घटादि स्फुरतीतिभारूपसंलग्नत्वाच्चेति, तदप्यसत् ; सर्वेषां [illegible] इदं सर्वमिति श्रुतिजन्यात्मत्वधीनियमाभावेन स्वरूपासिद्धेः [illegible] व्यवस्थापितत्वाच्च । अत एव दृष्टान्तोऽपि साध्यविकलः चित्रनिम्नो[illegible] स्वाभावविषयकत्वनियतज्ञानविषयत्वाभावात् । भारूपस्याप्युन[illegible] दुर्वचत्वात् । ज्ञानविषयत्वातिरिक्तस्य ज्ञानसंलग्नत्वस्य [illegible] ।

यत्तु प्रपञ्चविलक्षणाखण्डानन्दरूपेण प्रमितत्वादिति हेत्वर्थः [illegible] ब्रह्मण्यपीति स्वधीकाले इत्युक्तम् । ब्रह्मधीकाले च ब्रह्मणि न तत् । [illegible] स्वेतरकल्पितध्वंसरूपत्वात् । तथा च ब्रह्मवृत्तिस्तद्धी[illegible] प्रतियोगिताको वा भेदो हेतुरिति वक्ष्यमाणे जडत्वहेतौ तात्पर्यम् । [illegible] प्रकाशरूपं तत्र सम्यग्लग्नत्वात् । यावत्स्वरूपं संबद्धत्वात् । [illegible] स्मिन् संबन्धस्तु यथोक्तः शुक्तिरजतादि वेति न विशेष इति तदपि [illegible] उक्तहेतोरप्यसिद्धेः ब्रह्मभेदस्यापि ब्रह्मणि सत्त्वेन तन्मते व्यभिचाराच्च ।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहलि ।**
**हतं बहुलयोगेन कौमुदद्वयमुद्यतम् ॥ १४ ॥**

---

# पञ्चदशोंऽशः

यत्तु "एतत्पटात्यन्ताभाव एतत्तन्तुनिष्ठः एतत्पटभावत्वान्नाद्यः, एतत्पटात्यन्ताभाववत् । तन्तुनाशजन्यपटनाशे तन्तुवृत्तित्वस्य बाधितत्वात् । तत्र व्यभिचारवारणायानादीति । असमवायिकारणनाशजन्यनाश प्रतियोगिपटात्यन्ताभावस्य पक्षत्वे तु स्वरूपासिद्धिवारणाय हेतावपि तत्परस्य निवेश्यत्वादनादिपदं न देयमेव, व्यर्थत्वात् । न च व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावे सिद्धसाधनं पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वादिति, तन्न; पटप्रतियोगिकत्वविशिष्टात्यन्ताभावत्वस्य पक्षतावच्छेदकत्वे पटसंयोगस्यापि घटप्रतियोगिकत्वेन स्वात्यन्ताभावाभावत्वेन च पक्षतावच्छेदकावच्छिन्नतया तत्र बाधापत्तेः । नहि परैरपि समवायिनि कार्यसंयोगः स्वीक्रियते । सप्तमपदार्थरूपाभावत्वविवक्षायामप्येतद्घटध्वंसस्य स्वात्यन्ताभावात्यन्ताभावत्वस्वरूपपक्षतावच्छेदकाक्रान्तत्वेन तत्रोक्तेर्हेतोर्भागासिद्धिप्रसंगात् । घटनिष्ठप्रतियोगितानिरूपितानुयोगित्ववदत्यन्ताभावत्वं पक्षतावच्छेदकम् । ध्वंसस्यात्यन्ताभावत्वं तु अत्यन्ताभावनिष्ठप्रतियोगितात्वनिरूपितमेवेत्युक्तावप्येतत्तन्तुनिष्ठत्वं पटकालावच्छेदेन साध्यं चेत् तदा प्रागभावे व्यभिचारः । अन्यथा तु पटपूर्वकालावच्छेदेन तन्तुनिष्ठत्वमादाय सिद्धसाधनम् । अनवच्छिन्नविशेषणतया एव तन्तुनिष्ठत्वस्य साध्यत्वे प्रागभाव एव व्यभिचारः । एतेन तत्पटप्रागभावस्तन्त्ववच्छिन्नचैतन्येऽविद्यायाञ्च वर्तते न तु तत्तन्तौ, वेदान्तिमते तत्तदवच्छिन्नचैतन्यस्य विवर्तोपादानतया विद्यायाश्च परिणाम्युपादानतया तन्तोस्तत्पटानुपादानत्वात् । अतो व्यभिचारवारणाय तन्तुपदं तत्पटोपादानपरम् । तत्परं तन्तुरन्येषां चैतन्यमस्माकमित्यन्यदेतत् । एतत्पटप्रागभावश्च तत्रास्त्येवेति न दोष इत्यपि परास्तम् । तत्पक्षेऽपि पटोत्पत्त्यनन्तरं चैतन्ये विद्यायां वा तत्पटप्रागभावाभावेनोक्तान्यतरदोषावश्यकत्वात् । साधनावच्छिन्नसाध्यव्यापकस्य समवायानवच्छिन्नप्रतियोगिताकत्वस्योपाधित्वाच्च । संबन्धान्तरावच्छिन्नप्रतियोगिताकैतत्पटाभावे साधनाव्यापकत्वाच्च । एतेन समवायसंबन्धावच्छिन्न एतत्परत्वान्यधर्मानवच्छिन्नश्चायमेतत्पटात्यन्ताभाव एतत्तन्तुनिष्ठः एतत्पटात्यन्ताभावत्वात् । संबन्धान्तरावच्छिन्नैतत्पटात्यन्ताभाववदित्यपि निरस्तम् ।

यदपि पटत्वं स्वप्रतियोगिकाभाववच्छेदकत्वं स्वाश्रयनिष्ठाधिकरणतानिरूप-

कतावच्छेदकत्व चेत्युभयसंबन्धेनात्यन्ताभाववदनात्मत्वात् संयोगत्व-
वदिति,तदपि न;समवायिनि संयोगसंबन्धेनात्यन्ताभावमादाय सिद्धसाधनात्।
न च समवायावच्छिन्नत्वं प्रतियोगितायां विशेषणम्, अत्यन्ताभावस्यापि
तन्मते मिथ्यात्वेनात्यन्ताभावत्वस्य हेतुमतोऽपि समवायसंबन्धावच्छिन्ना या-
त्यन्ताभावप्रतियोगिता तदवच्छेदकत्वसंबन्धेनात्यन्ताभावरूपसाध्यविरहेण
व्यभिचारात्। तन्मते आत्मभेदस्यात्मन्यपि सत्त्वेन तत्रोक्तसाध्याभावेन व्यभि-
चाराच्च। अत्यन्ताभावत्वं स्वाश्रयप्रतियोगितावच्छेदकत्वं स्वाश्रयसामानाधि-
करण्यनिरूपकतावच्छेदकत्वं चेत्युभयसंबन्धेन पटत्वाभाववत्, संसर्गाभाव-
विभाजकोपाधित्वाद्ध्वंसत्ववदिति फलतः प्रतिरोधाच्च। स्वपदमत्यन्ता-
भावत्वपरं संबन्धेनेत्यन्तं पटत्वाभावप्रतियोगितावच्छेदकसंबन्धप्रदर्शनम्।

यदपि नित्यद्रव्यान्यदव्याप्यवृत्तित्वानधिकरणं सामान्यानुमानोक्तपक्षता-
वच्छेदकवत् केवलान्वय्यत्यन्ताभावप्रतियोगि पदार्थत्वान्नित्यद्रव्यवत्।
न्यायमते गगनाद्यत्यन्ताभावस्यापि गगनाद्यात्मकात्यन्ताभावप्रतियोगिकत्वा-
त्केवलान्वयित्वं वृत्तिमदत्यन्ताभावप्रतियोगित्वं वाच्यम्। अतो न
दृष्टान्ते साध्यवैकल्यम्। गगनादेः स्वाभावाभावात्मकत्वस्य **दीधितिकारोक्त-**
रीत्या प्रमाणाभावादस्वीकारे तु वृत्तिमत्पदं न देयमेव। अधिष्ठानचिद्रू-
पात्यन्ताभावस्यात्यन्ताभावप्रतियोगित्वाभावात्तादृशचिद्रूपोऽत्यन्ताभावप्रति-
योगी योऽत्यन्ताभावस्तत्प्रतियोगित्वमनात्ममात्रेऽस्ति। न च ब्रह्मणि व्यभि-
चारः, ब्रह्माविषयकाविषयस्य हेतुत्वात्। स्वमते शुक्तिरूपमेव दृष्टान्तः।
न च त्वन्मतेऽत्यन्ताभावस्याधिष्ठानात्मकत्वाच्छुक्तिरूप्यात्यन्ताभावस्य शुक्त्य-
वच्छिन्नचिद्रूपतया तस्याश्च घटादिनिष्ठात्यन्ताभावप्रतियोयित्वात्कथं केवला-
न्वयित्वमिति वाच्यम्; अवच्छिन्नशुद्धयोरैक्यस्वीकारेण शुद्धचितोऽपि तद-
त्यन्ताभावत्वात्, तस्याश्चात्यन्ताभावप्रतियोगित्वानभ्युपगमादिति, तदप्य-
सत्; तन्मते ज्ञानमात्रस्य ब्रह्मविषयकत्वेन स्वरूपासिद्धेः "सर्वप्रत्ययवेद्यं च
ब्रह्मरूपे व्यवस्थिते" इति सिद्धान्तात्। नञ्व्यत्यासेन ब्रह्मान्यविषयकविषय-
त्वस्य हेतुत्वेऽपि शुद्धं ब्रह्म न विषय इति मते विशेषणवैयर्थ्यात्।

किञ्च शुद्धचितोऽपि कपालाद्यवच्छिन्नचिद्रूपतया तदात्मककेवला-
न्वय्यत्यन्ताभावप्रतियोगित्वेन पटादौ सिद्धसाधनम्। न चावच्छिन्नचितो न
केवलान्वयित्वंमिति वाच्यम्; तथापि हि घटस्य द्वावत्यन्ताभावौ–अवच्छिन्न-
चिच्छुद्धचिच्चेति परिभाषास्तु नाम तावत्, तथाप्यत्यन्ताभावत्वेनैव रूपेण
केवलान्वयितत्प्रतियोगित्वं साध्यम्। तद्रूपेणैव चितः प्रतियोगिनिरूप्यत्वात्।

तत्किञ्चितः केवलान्वयित्वेनान्यथा चिद्रूपात्यन्ताभावप्रतियोगित्वस्य सार्वत्रिकत्वेन तदभावरूपकेवलान्वयित्वस्यैवाप्रसिद्ध्यापत्तेः। तथा च मुक्त्यवच्छिन्नचिद्रूपस्य प्रतियोगिसापेक्षात्यन्ताभावत्वरूपेण घटादिनिष्ठात्यन्ताभावप्रतियोगित्वाद्दृष्टान्तस्य साध्यवैकल्यं दुर्वारम्, रूपान्तरेण केवलान्वयित्वस्यानुपयुक्तत्वात्।

किञ्च अत्यन्ताभावस्यापि पक्षतावच्छेदकावलीढतयात्यन्ताभावप्रतियोगित्वात्यन्ताभाववदत्यन्ताभावप्रतियोगित्वरूपसाध्यस्य बाधः। यत्रात्यन्ताभावेऽत्यन्ताभावप्रतियोगित्वात्यन्ताभावो वाच्यस्तस्य सा[धन] वैकल्यापत्तेः। अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येनापि बाधस्य विरोधित्वात्। पक्षतावच्छेदकीभूतावान्तरधर्मभूतात्यन्ताभावत्वावच्छेदेनानुमितौ यत्किंचिदत्यन्ताभावे उक्तरीत्या बाधस्य वृत्तत्वात्, अत्यन्ताभावत्वावच्छेदेनाप्यत्यन्ताभावप्रतियोगित्वसिद्धौ घटादीनां तादृशात्यन्ताभावप्रतियोगित्वसिद्धेरसंभवाच्च। परार्थत्वादिहेतुस्त्वप्रयोजकः। अन्यथा आकाशादिकं वृत्तिमत्, द्रव्यत्वादित्यादिकमपि स्यात्। किंच केवलान्वयित्वं संबन्धविशेषगर्भम्। उक्तं हि **दीधितौ** "यत्संबन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं यस्य तस्य तेन संबन्धेन केवलान्वयित्वम्। अत एव ज्ञानस्य ज्ञानत्वस्य च समवायेन ज्ञानविषयत्वादेश्च व्यधिकरणेन समवायादिना संबन्धेनाभावप्रतियोगित्वेऽपि विषयतया परम्परासंबन्धेन स्वरूपसंबन्धेन च केवलान्वयित्वम्" इति। एवमत्यन्ताभावस्यापि संबन्धविशेषावच्छिन्नप्रतियोगिताकस्यैव तत्, अन्यथाकाशादेरपि कालिकादिना घटादिवृत्तित्वात् तदवच्छिन्नाभावोऽपि तथा स्यात्। एवञ्च तत्संबन्धविशेषगर्भाभावस्य केवलान्वयित्वप्रवेशे यथासंभवं व्यभिचारादि, अत्यन्ताभावप्रतियोगित्वाभावमात्रनिवेशे त्वप्रसिद्धिः। यत्किञ्चित्संबन्धेन सर्वस्यैवात्यन्ताभावस्य सार्वत्रिकत्वात् सिद्धसाधनञ्च। घटात्यन्ताभावो न केवलान्वयी, पटाभावत्वात्, पटध्वंसवदिति प्रतिरोधाच्च। पक्षतावच्छेदकैक्यस्याप्रयोजकत्वादेकदेशबाधसंपत्तेश्च।

यदपि आत्मत्वावच्छिन्नधर्मिको भेदो न परमार्थसत्प्रतियोगिकः, आत्मप्रतियोगिकत्वाच्छुक्तिरूप्यभेदवदिति, तन्न; ईदृशभेदः परमार्थसत्प्रतियोगिकः, भेदत्वात्, परनिष्ठात्मभेदवदिति प्रतिरोधात्। न च शुक्तिरूप्यभेदे व्यभिचारः। अप्रातिभासिकत्वस्य भेदविशेषणत्वात्, मन्मते भेदमात्रमपि साध्यसंबन्धाच्च।

एतेन परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्तिसदितरावृत्तित्वात् ब्रह्मत्ववत् । ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकं सत्त्वसमानाधिकरणत्वादसद्वैलक्षण्यवदिति परास्तम्, हेतोः साध्याविशिष्टत्वात् सदितरस्य प्रसिद्धेश्च । ब्रह्मत्वं न सत्त्वव्यापकं सत्त्ववन्निष्ठात्यन्ताभावप्रतियोगित्वात् घटत्ववदिति प्रतिरोधाच्च । न च साध्याविशेषः, अखण्डावच्छेदकघटितव्याप्तिनिरूपकत्वरूपव्यापकत्वाभावस्य साध्यत्वात् । पटनिष्ठात्यन्ताभावप्रतियोगित्वस्य वा हेतुत्वात् ।

यदपि व्याप्यवृत्तिर्घटादिर्जन्याभावातिरिक्तसमानाधिकरणाभावमात्रप्रतियोगी, अभावप्रतियोगित्वादभिधेयत्ववत्, तद्धि परमते केवलान्वयित्वात् स्वसमानाधिकरणभेदमात्रप्रतियोगि । अस्मन्मते तु मिथ्यात्वात्स्वसामानाधिकरण्यात्यन्ताभावप्रतियोग्यपीत्युभयथा न साध्यवैकल्यम् । अभावीयप्रतियोगितानां संबन्धावच्छिन्नतया संयोगादिप्रतियोगितानां च तदनवच्छिन्नतया परस्परवैलक्षण्येन तासु प्रतियोगितात्वस्यैकस्याभावेन संयोगादिप्रतियोगितास्वरूपेण हेतुत्वे गुणादौ भागासिद्धिः स्यादतोऽभावीयप्रतियोगिताया हेतुत्वलाभाय हेतावभावपदं प्रतियोगितात्वस्यैक्ये तु प्रतियोगितासंबन्धेनाभावो हेतुः । अव्याप्यवृत्तित्वेनार्थान्तरवारणाय व्याप्यवृत्तिपदं बाधस्फोरणार्थमिति, तन्न; मात्रपदस्य साकल्यार्थत्वे दृष्टान्तस्य साध्यवैकल्यात् । अथाजन्यस्वसमानाधिकरणान्यस्याप्रतियोगीति साध्यम् । कपालादिनाशनाश्ये पटादौ समानाधिकरणान्यस्य ध्वंसस्य प्रतियोगित्वसत्त्वाद्बाधवारणाय अजन्येति । अधिकरणान्तरनिष्ठात्यन्ताभावप्रतियोगित्वस्य घटादौ सर्वसिद्धत्वादत्यन्ताभावस्य पटसामानाधिकरण्याभावे च तस्याप्यजन्यत्वे सति घटसमानाधिकरणान्यत्वापत्त्या तत्प्रतियोगित्वव्यवच्छेदः पक्षे बाधितः स्यादिति पक्षधर्मताबलादत्यन्ताभावस्य पर[पूर्व]सामानाधिकरण्यसिद्धिरिति चेत्, न; स्वकालावच्छेदेन सामानाधिकरण्यं भेदप्रतियोगितावच्छेदकत्वेन निवेश्यते उतैककालानन्तर्भावेन ? नाद्यः, उक्तासमानाधिकरणमन्यस्याजन्यस्य च प्रागभावस्य प्रतियोगित्वेन बाधात् । न द्वितीयः, घटपूर्वापरकालीनतत्सामानाधिकरण्येन तदत्यन्ताभावस्य सिद्धसाधनात्, अवृत्तिषु व्यभिचाराच्च । तदधिकरणाप्रसिद्धया समानाधिकरणान्यत्वस्याप्यप्रसिद्धेः । न च तदनधिकरणाधिकरणत्वरूपसमानाधिकरणान्यत्वं तत्रापीति वाच्यम्; दृष्टान्तस्य साध्यवैकल्यापत्तेः, प्रमेयत्वानधिकरणस्याप्रसिद्धेः । अधिकरणभेदेनाभावभेदपक्षे बाधाच्च । यदप्यत्यन्ताभावः प्रतियोग्यवच्छेदकावच्छिन्नवृत्तिः  नित्याभावत्वादन्योन्याभाववदवच्छेदकावच्छेदेना-

नुमितेरुद्देश्यत्वात् कुत्रचित् सिद्धसाधनेऽपि न दोष इति, तन्न; आकाशादौ भागबाधाच्च प्रागभावप्रतियोगित्वात्यन्ताभावे बाधाच्च। न च तत्रापि प्रतियोगिसामानाधिकरण्यमस्त्येवेति वाच्यम्; प्रागभावप्रतियोगित्वाभाववत्त्वे सति ध्वंसप्रतियोगित्वाभाववदभावत्वहेतोर्ध्वंससाधारण्यापत्तेः। न च सत्यन्तस्य नित्यपदार्थघटकस्यापि प्रकृते व्यर्थत्वान्निवेशो नेति वाच्यम्; ध्वंसे व्यभिचारस्योद्भटत्वात् समवायिनाशजन्यघटनाशे प्रतियोगिसामानाधिकरण्यविरहात्। अत्यन्ताभावो न प्रतियोग्यवच्छेदकावच्छिन्नवृत्तिः संसर्गाभावत्वात् ध्वंसवदिति सत्प्रतिपक्षाच्च। अत्यन्ताभावप्रतियोगिकात्यन्ताभावे बाधाच्च। नवीनमते तस्याभावरूपत्वादत्यन्ताभावरूपतत्प्रतियोग्यवच्छेदकाप्रसिद्धेः। घटात्यन्ताभावस्यापि परैरनवच्छिन्नवृत्तिकत्वस्योपगमात्। यदप्यत्यन्ताभावत्वं स्वावच्छेदकविशिष्टतदवृत्तिध्वंसनिरूपकत्वं चेत्युभयसंबन्धेन प्रतियोगिताविशिष्टं यत्तदवृत्तिनित्याभाववृत्तित्वादन्योन्याभावत्ववदिति, तदप्यसत्; अत्यन्ताभावत्वमुक्तोभयसंबन्धेन प्रतियोगिताविशिष्टं यत्तदवृत्तिसंसर्गाभावविभाजकोपाधित्वात् ध्वंसत्ववदिति प्रतिरोधात्। तद्घटत्वादिरूपप्रतियोगितावच्छेदकस्य तत्रापि सुलभत्वात्। एतेनावच्छिन्नवृत्तिकावृत्तित्वसाध्यमपि प्रतिरुद्धं बोद्धव्यम्। यदपि घटाभावत्वं स्वप्रतियोगिजनकाभावसमानाधिकरणवृत्त्येतद्घटसमानकालीनैतद्घटाभाववृत्तित्वात्, प्रमेयत्ववत्। स्वमत्यन्ताभावः, तत्प्रतियोगिजनकाभावः प्रागभावः, तत्सामानाधिकरण्यं चानवच्छिन्नं निवेश्यम्। तेन तादृशाभावानवच्छेदकेन तद्घटध्वंसकालेनावच्छिन्नप्रागभावसामानाधिकरण्यं घटात्यन्ताभावमादाय तद्वृत्तित्वेन न सिद्धसाधनम्। तत्कपालनाशजन्यतद्घटध्वंसत्वे व्यभिचारवारणाय कालीनान्तं तत्कपालनाशानाश्यघटव्यक्तिप्रवेशे तु तत्र देयम। अनादिप्रतियोगिकाभावत्वे व्यभिचारात्। एतद्घटप्रतियोगिकेति, तद्घटसंयोगादौ व्यभिचारादभावत्वेति, तदप्यसत्; नित्यप्रतियोगिकात्यन्ताभावे व्यभिचारात्। तत्र स्वप्रतियोगिजनकादेरप्रसिद्धेः।

यदप्येतत् कपालमेतद्घटात्यन्ताभावाधिकरणम्, आधारत्वात्, पटादिवदिति, तदप्यसत्; एतत्प्रागभावानाश्रयत्वस्योपाधित्वात्। यदपि ब्रह्मत्वेन परमार्थसन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम्, ब्रह्मवृत्तित्वात्, असद्वैलक्षण्यवदिति, तदप्यरमणीयम्; तन्मते ब्रह्मवृत्तेरपि घटस्य परमार्थसद्ब्रह्मनिष्ठान्योन्याभावप्रतियोगितावच्छेदकम्, भेदानुयोगितावच्छेदकत्वात्, घटत्ववदिति प्रतिरोधाच्च। यद्वा यावत्परमार्थसद्वृत्तित्वात् यद्यावद्भेदाश्रयावृत्ति

तत्सन्निष्ठभेदप्रतियोगितावच्छेदकम्, यथा घटभेदाश्रययावत्पटावृत्ति घटत्वं घटनिष्ठभेदप्रतियोगितावच्छेदकमिति प्रतिहेतुः। परमार्थसत्प्रतियोगिको भेदो न परमार्थसन्निष्ठः परमार्थसत्प्रतियोगिकत्वात्, परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभाववदित्यादि न साधु, ब्रह्मभेदस्य ब्रह्मवृत्तितायाः स्वयमेव स्वीकारेण व्यभिचारात्। ब्रह्मप्रतियोगिको भेदः प्रतियोगिसमानसत्ताकानुयोगिनिष्ठः, प्रातिभासिकानिरूप्यभेदत्वात्, घटनिष्ठपटभेदवदिति तद्रीत्या प्रतिरोधाच्च। एतेन परमार्थसन्निष्ठो भेदो न परमार्थसत्प्रतियोगिकः, परमार्थसदधिकरणकत्वात्, शुक्तिरूप्याभाववदित्यपि तथैव बोध्यम्, दृष्टान्तेऽपि सद्विलक्षणत्वासिद्धेः, ब्रह्मभेदस्यापि ब्रह्मवृत्तितया व्यभिचाराच्च। भेदत्वावच्छिन्नं सन्मात्रप्रतियोग्यधिकरणकं भेदत्वात्, ब्रह्मवृत्तिब्रह्मभेदवदिति प्रतिरोधाच्च। मिथ्यात्वत्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकतावच्छेदकं सकलमिथ्यात्ववृत्तित्वादित्यादिकं त्वाश्रयासिद्ध्यैव सावद्यम्। अन्यत् सूरिभिरूह्यम्।

अपि च—

ये वेदा अनुकूलतर्कपदवीं नीताः परैरद्वये
प्रागेवापरया तदर्थकथनाद्वाद्युक्तनद्दूषणात्।
सामान्येन विशेषतोऽप्यभिहिता अद्वैतवैतण्डिकै-
र्विज्ञेया ध्रुवमप्रयोजकतया हेत्या हता हेतवः॥"

किञ्च—

अद्वैतानुमितीनां शतमपि बाधादितोन्नयनः।
पक्षेतरोऽप्युपाधिर्बाधितुमन्ते कृतसमाधिः॥

वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।
मिथ्यात्वस्यानुमानानां भानत्वमवमानितम्॥१५॥

———

# षोडशोंऽशः

एवं स्थिते विश्वसत्त्वानुमानानि निर्बाधं प्रवर्तन्ते । तथाहि प्रमेयत्वमेतत्पटैतत्पटात्यन्ताभावोभयानधिकरणावृत्ति धर्मत्वात् भूतलत्ववत् । न च साध्याप्रसिद्धिः, एतत्पटात्यन्ताभाववत्त्वेनोभयसिद्धो भूतले यथोक्तोभयानधिकरणत्वस्य सत्त्वात् । मिथ्यात्ववादिनापि पटवति पटात्यन्ताभावस्वीकारेऽपि पटात्यन्ताभावतः पटवत्त्वनियमानभ्युपगमात् । अत्यन्ताभावत्वं प्रतियोग्यधिकरणावृत्त्यन्योन्याभावभिन्नाभावमात्रवृत्तित्वात् ध्वंसत्ववत् । मात्रवृत्तिपदं तदितरावृत्तित्वपरं न तु साकल्यार्थकम्, तेन न स्वरूपासिद्धिः । अयं पटः स्वात्यन्ताभावाधिकरणावृत्तिर्द्रव्यत्वादाकाशवत्, एतत्पटात्यन्ताभावः प्रतियोग्यनधिकरणमात्रवृत्तिः, द्रव्यात्यन्याभावत्वात्, आकाशात्यन्ताभाववत् । संयोगात्यन्ताभावे व्यभिचारवारणाय द्रव्यपदम् । न च दृष्टान्ते प्रतियोग्यनधिकरणेतरस्याप्रसिद्धिः, साकल्यार्थकत्वे तु सिद्धसाधनमिति वाच्यम्; प्रतियोग्यनधिकरणावृत्तित्वव्याप्यतायाः साध्यत्वात् । अयं पटः कपालावृत्तितन्तुवृत्त्यभावप्रतियोगी पटपटान्यतरत्वात् पटवत् । प्रागभावप्रतियोगित्वमादाय दृष्टान्ते साध्यप्रसिद्धिः । पक्षे तु कपालावृत्तित्वस्य घटप्रागभावे भेदे च बाधितत्वात्तादृशात्यन्ताभावसिद्धिः । एतत्कपालमेतद्घटनित्याभावानधिकरणम्, एतत्समवायनिरूपकत्वात्, एतद्घटवत् । भेदमादाय दृष्टान्ते साध्यसत्त्वम् । पक्षे तु तदभावस्य बाधितत्वात्तदत्यन्ताभावमादाय साध्यपर्यवसानम् । एवं चान्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावत्वमेतद्घटसमानकालीनावृत्त्यन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावमात्रवृत्तित्वादेतद्घटप्रागभावत्ववत् ; व्यधिकरणधर्मानवच्छिन्नत्वमपि तत्पक्षे बोध्यम् । अत्र स्वसमानकालीनस्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपसत्त्वसिद्धिरित्यपि साधीयः ।

न च साधनावच्छिन्नसाध्यव्यापकमेतद्घटप्रतियोगिकजन्यजनकान्यतरमात्रवृत्तित्वमुपाधिः । भवति हि यत्रोक्तसाधनावच्छिन्नत्वमेतद्घटसमानकालीनत्वमेतद्घटप्रागभावत्वे तादृशध्वंसत्वे च तत्रैतद्घटप्रतियोगिकजन्यजनकतद्घटध्वंसप्रागभावरूपान्यतरमात्रवृत्तित्वमिति वाच्यम्; हेतोः पूर्वोक्तयुक्त्या साध्यव्याप्यत्वेन तद्व्याप्यहेतव्याप्यत्वेनोक्तोपाधेः साध्यव्यापकत्वा-

भावात्। न चात्यन्ताभावत्वे व्यभिचारः, संयोगसंबन्धेन घटवत्य भूतले समवायेन तदाभावसत्त्वात् साध्याभाववति तत्र हेतोर्वृत्तित्वाद्येन संबन्धेन यद्घटाधिकरणं तत्संबन्धावच्छिन्नप्रतियोगिताकाभावमात्रवृत्तित्वविवक्षायां च दृष्टान्तस्य साधनवैकल्यादिति वाच्यम्; येन संबन्धेन यद्घटाधिकरणं तदन्यसंबन्धावच्छिन्नप्रतियोगिताकाभावमात्रवृत्तित्वस्य हेत्वर्थत्वात्। प्रागभावप्रतियोगितायाश्च भानाभावेन केनापि संबन्धेनानवच्छिन्नत्वान्न साधनवैकल्यम्। एवञ्च तत्र हेत्वभावादेव न व्यभिचारः। किञ्चात्यन्ताभावत्वम्, प्रतियोग्यसमानाधिकरणवृत्तिसंसर्गाभावविभाजकोपाधित्वात्,प्रागभावत्ववत्। अयं घटो घटप्रागभावातिरिक्तकपालावृत्त्यनाद्यभावप्रतियोगी, जन्यत्वात्, पटवत्। भेदेन सिद्धसाधनवारणाय कपालावृत्तीति। घटकालावच्छेदेन कपालावृत्तित्वस्य विवक्षितस्य प्रागभावेऽपि सत्त्वात्तेन सिद्धसाधनवारणायातिरिक्तान्तम्। कपालध्वंसजन्यध्वंसेन तद्वारणायानादीति। स्वप्रागभावप्रतियोगित्वमादाय दृष्टान्ते साध्यप्रसिद्धिः। पक्षधर्मताबलादेतद्घटकालावच्छेदेनैतत्कपालावृत्त्यत्यन्ताभावसिद्धिः। एतद्घटध्वंसः घटानाद्यभावानधिकरणावृत्तिः, ध्वंसत्वात्, पटध्वंसवत्। प्रागभावरूपघटानाद्यभावानधिकरणान्तं तु वृत्तित्वाद् दृष्टान्ते साध्यसमन्वयः। कपालस्य तु घटप्रागभावानधिकरणत्वबाधात्तादृशात्यन्ताभावपर्यवसानम्।

न च कपालनाशजन्यघटनाशे व्यभिचारः, घटप्रागभावानधिकरणवृत्तित्वेनैव तत्र साध्यसत्त्वात्। यद्वा संयोगनाशजन्यघटनाश एव पक्षः। तादृशध्वंसत्वमेव हेतुः। एतद्घटात्यन्ताभावः एतत्कपालनिष्ठात्यन्ताभावप्रतियोगी, अनाद्येतद्घटसंसर्गाभावत्वात्, एतद्घटप्रागभाववत्। घटकाले तत्प्रागभावस्य कपाले सर्वैरप्यनभ्युपगमात्, ध्वंसे व्यभिचारवारणायानादीति। भेदे तद्वारणाय संसर्गेति। एतद्घटध्वंसः स्वाव्यवहितपूर्वक्षणावच्छेदेन स्वाधिकरणवृत्तिघटत्वानवच्छिन्नप्रतियोगिताकघटानाद्यभावकः, एतद्घटप्रागभावध्वंसत्वात्, एतद्घटवत्। एतद्घटप्रागभावस्य हि द्वौ ध्वंसौ, एतद्घटः, एतद्घटध्वंसश्च। उभयत्रापि घटप्रागभावो ध्वस्त इति व्यवहारात्। अतः साधनस्य पक्षदृष्टान्तस्य साधारण्यम्। घटत्वावच्छिन्नप्रतियोगिताकाभावेन सिद्धसाधनवारणाय घटेति। न च तथापि व्यासज्यवृत्तिना व्यधिकरणेन वा धर्मेणावच्छिन्नप्रतियोगिताकं घटाभावमादाय तदिति वाच्यम्; तादृशाभावानभ्युपगमात्। अन्यथा तु घटत्वं घटवृत्तिभेदप्रतियोगितावच्छेदकं चेत्युभयधर्मानवच्छिन्नत्वेन प्रतियोगिताया विशेष-

णीयत्वात् । वह्नित्वादेरुभयत्वादेश्च घटवृत्तिभेदप्रतियोगितावच्छेदकत्वान्नोक्तदोषः। न च केवलघटत्वावच्छिन्नप्रतियोगिताया अप्युक्तोभयधर्मानवच्छिन्नत्वसत्त्वादुक्तदोषतादवस्थ्यमिति वाच्यम् ; तदुभयत्र प्रत्येकपर्याप्तावच्छेदकताकप्रतियोगिताभेदस्य तदर्थत्वात् । यद्वा घटत्वान्यघटपर्याप्तधर्मावच्छिन्नत्वं प्रतियोगिताविशेषणम्, व्यधिकरणधर्मस्य घटवृत्तित्वाभावात् । उभयत्वस्य तत्पर्याप्त्यभावान्न सिद्धसाधनम् । घटत्वस्यापि पटपर्याप्तत्वादवच्छिन्नात्यन्ताभावेन सिद्धसाधनस्य वारणाय घटत्वान्येति ।

नन्वेतद्घटभिन्नपटाभावमेवादायात्र सिद्धसाधनम्, सामान्याभावाधिकरणे विशेषाभावस्यापि सर्वसम्मतत्वात् । न च पटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावसामानाधिकरण्यविरहविशिष्टो घटत्वानवच्छिन्नप्रतियोगिताकाभावः साध्ये निवेश्य इति वाच्यम् ; दृष्टान्तस्य साध्यवैकल्यापत्तेरितिचेत्, न; घिटत्वानवच्छेद्यप्रतियोगिताकघटाभावस्य साध्यत्वात् । सामान्याभावाधिकरणे च विशेषाभावीयप्रतियोगितायाः सामान्येनाप्यवच्छेत्तुमर्हत्वान्नोक्तसिद्धसाधनम् । सामान्यावच्छिन्नप्रतियोगिताकत्वस्य विशेषाभावसमुदाये व्यासज्यवृत्तित्वेऽपि यथोक्तार्थस्य सुस्थत्वात् ।

अथ तथापि नव्यमते सामान्याभावस्यातिरिक्ततया विशेषाभावीयप्रतियोगितायाः सामान्यानवच्छिन्नतया विशेषाभावमादाय सिद्धसाधनमिति चेत्, सत्यम् ; प्राचीननयेनैतत्प्रयोगात् । तथा च पूर्वोक्तसामानाधिकरण्यविरहवशिष्टाभावे साध्येऽपि न क्षतिः। एतद्घटात्यन्ताभावः किञ्चिन्निष्ठात्यन्ताभावप्रतियोगी, अभावत्वादेतत्प्रागभाववत् । अन्योन्याभावस्यापि प्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वान्न व्यभिचारः। एतद्घटरहितदेशनिष्ठात्यन्ताभावप्रतियोगित्वस्यैतद्घटात्यन्ताभावे बाधितत्वादेतद्घटाधिकरणदेशनिष्ठात्यन्ताभावप्रतियोगित्वसिद्धिः । आकाशादेर्यदि स्वाभावाभावात्मकत्वं तदा साध्यमप्यस्त्येव। नो चेद्धेतुरेव नास्ति । उक्तं हि **केवलान्वयिग्रन्थे दीधितिकृता** "आकाशस्य तदभावाभावत्वमित्यभ्युपगममात्रम्, भाववति तदसत्त्वप्रतीत्या हि भावस्य स्वभावाभावत्वं कल्प्यते । न चेह तथा" इति । न च तथाप्याकाशात्यन्ताभावे केवलान्वयिनि व्यभिचार इति वाच्यम्; वृत्तिमत्प्रतियोगिकाभावत्वस्य हेतुत्वात् ।

न च तथापि संयोगात्यन्ताभावे व्यभिचार इति वाच्यम्; संयोगावच्छिन्ने तस्याप्यत्यन्ताभावसत्त्वात् । तस्य प्रतियोग्यवच्छिन्नेऽत्यन्ताभावादिति **केवलान्वयिग्रन्थे मणिकारोक्तेः** । यद्वा एतद्घटाभावत्वादिति हेतुः । न चाभा-

त्रीयविशेषणताविशेषावच्छिन्नप्रतियोगिताकैतद्घटाभावस्य केवलान्वयित्वात्तत्र व्यभिचारः, संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावनिवेशे तु दृष्टान्तस्य साधनवैकल्यप्रसङ्ग इति वाच्यम्; संयोगान्यसंबन्धानवच्छिन्नप्रतियोगिताकाभावस्य निवेश्यत्वात्। भेदप्रतियोगितायामपि तादात्म्यसंबन्धावच्छिन्नत्वस्य मानाभावेनानङ्गीकारात्। एतद्घटात्यन्ताभाव एतद्घटान्योन्याभावव्यभिचारी, एतद्घटसंसर्गाभावत्वात्, एतद्घटध्वंसवत्। घटान्योन्याभाववति तन्तौ एतद्घटध्वंसाभावादेतद्घटध्वंसस्यैतद्घटान्योन्याभावव्यभिचारित्वं व्यापकत्वाभावरूपम्। व्यभिचारित्वमत्र साध्यम्। पटवत्यपि घटात्यन्ताभावसत्त्वनियमे चैतद्घटवदेतद्घटान्योन्याभाववत्त्वनियमादेतद्घटात्यन्ताभावस्यैतद्घटान्योन्याभावव्यापकत्वमेव स्यादित्यर्थवशादेतद्घटवत्येतद्घटात्यन्ताभावो नास्तीति पर्यवसानम्। एतत्कपालवृत्तिर्घटात्यन्ताभाव एतद्घटत्वानवच्छिन्नप्रतियोगिताकः समवायावच्छिन्नप्रतियोगिताकैतत्कपालवृत्त्यभावत्वात्, पटाभाववत्। घटसमवायिकपालवृत्तिसंयोगसंबन्धावच्छिन्नप्रतियोगिताकैतद्घटात्यन्ताभावे व्यभिचारवारणाय समवायावच्छिन्नेति। एतेन भेदेऽपि व्यभिचारवारणम्। अन्यवृत्त्येतद्घटाभावे व्यभिचारवारणायैतत्कपालवृत्तीति। समवायेन वह्न्येतद्घटोभयाभावस्यापि साध्यसंबन्धान्न दोषः। न चैतद्घटत्वेन वह्न्याद्यभावे हेतुमति साध्याभावाद् व्यभिचार इति वाच्यम्; व्यधिकरणधर्मावच्छिन्नप्रतियोगिताभावानभ्युपगमात्। तत्पक्षेऽपि तदीयप्रतियोगितायाः संबन्धानवच्छिन्नत्वानभ्युपगमेन तत्र हेत्वभावादेव व्यभिचारानवकाशात्। एतत्कपालं कालिकान्यसंबन्धेनैतद्घटतदत्यन्ताभावोभयानधिकरणम्, आधारत्वात्, घटात्यन्ताभाववत्त्वेन सम्प्रतिपन्नभूतलवत्। एतत्कपालवृत्ति एतद्घटान्योन्याभाव एतद्घटानाद्यभावाभाववद्वृत्तिभेदत्वात्तान्त्वादिवृत्तिभेदवत्। तत्कपालान्यवृत्तेरेतद्घटभेदस्य प्रागभावरूपैतद्घटानाद्यभावाभाववद्वृत्तित्वात्।

न च पक्षेऽपि प्रागभावाभावमेवादाय दृष्टान्तवत् साध्यसत्त्वं स्यादिति वाच्यम्; ध्वंसाधिकरणे तदत्यन्ताभावो नास्तीति प्राचीनमतेन प्रयोगात्। एतद्घटात्यन्ताभाव एतद्घटै तद्घटात्यन्ताभावान्यतराधिकरणावृत्तिः एतद्घटै तद्घटात्यन्ताभावान्यतरत्वात्, एतद्घटवत्। एतद्घटात्यन्ताभावाधिकरणत्वेनोभयसंप्रतिपन्नदेशवृत्तित्वाभावस्यैतद्घटे सर्वसिद्धत्वात्। एतद्घटात्यन्ताभावे एतद्घटात्यन्ताभावाधिकरणदेशावृत्तित्वस्य बाधि-

तत्वादेतद् घटाधिकरणवृत्तित्वमादाय साध्यसिद्धिः। एतद् घटात्यन्ताभाव एतद्घटवदवृत्तिरेतद्घटप्रतियोगिकात्यन्ताभावत्वात्, यो यदत्यन्ताभावः स तद्वदवृत्तिः, यथा घटात्यन्ताभावो घटो घटात्यन्ताभाववदवृत्तिः। एतत्कपालध्वंसः घटध्वंसघटात्यन्ताभावोभयवत्त्वान्नियतप्रतियोगिकः,ध्वंसत्वात्तन्तुध्वंसवत्। तन्तौ घटात्यन्ताभावसत्त्वेऽपि घटध्वंसाभावात्तन्तुध्वंसस्योक्तोभयानियतप्रतियोगिकत्वम्, पक्षे एतत्कपालपदस्य यस्मिन्नसमवायिकारणसंयोगनाशाद् घटध्वंसो वृत्तस्तत्परत्वात्। तादृशकपालस्य च घटध्वंसाभावप्रयुक्तोभयवत्त्वानियमानुपपत्त्या घटात्यन्ताभावव्यतिरेकप्रयुक्तमेव तद्वाच्यम्, इति तत्कपाले घटात्यन्ताभावाभावसिद्धिः। एतत्कपालं घटध्वंसघटात्यन्ताभावोभयानधिकरणं कपालत्वात्, अन्यकपालवत्। घटनाशात्पूर्वं नष्टं कपालं दृष्टान्तः। पक्षस्तु पूर्वानुमाने पक्षीकृतध्वंसप्रतियोगित्वेनोक्तमेव कपालम्। दृष्टान्ते घटध्वंसानधिकरणत्वप्रयुक्तमुभयानधिकरणत्वम्। पक्षे तु घटात्यन्ताभावानधिकरणत्वप्रयुक्तमेव। न च ध्वंसोत्तरं तदधिकरणे तदत्यन्ताभावस्योपगमाद् घटध्वंसानधिकरणत्वस्य च तत्राभावाद्बाध इति वाच्यम्;एतदनुमानस्य प्राचीननयेन प्रवृत्तेः। कपालं घटत्वावच्छिन्नप्रतियोगिताकौ यावत्यन्तान्योन्याभावौ तदुभयानधिकरणम्, घटकपालान्यतरत्वात्, पटवत्। घटस्य पटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावाश्रयत्वेऽपि तादृशान्योन्याभावानाश्रयत्वात्। पक्षे तु घटत्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य सर्वसिद्धत्वात्। तादृशात्यन्ताभावानाश्रयत्वेनैव साध्यपर्यवसानम्। अत्यन्ताभावत्वं कपालावृत्ति, वृत्तिपदार्थविभाजकोपाधित्वात्, आकाशत्ववत्। विभाजकत्वञ्च साक्षात्परम्परासाधारणम्। तेन पक्षदृष्टान्तयोः साक्षाद्विभाजकत्वाभावेऽपि न क्षतिः। न चाभावपदार्थस्य सौत्रविभागाभावात्तथापि स्वरूपासिद्धिरिति वाच्यम्; अभावत्वस्य पदार्थविभाजकत्वेन सूत्रतात्पर्यविषयत्वात्। उक्तं हि द्रव्योपाये "सामान्यतो द्विविधः पदार्थो भावोऽभावश्चेत्यार्थः पदार्थविभागः, शाब्दश्च भावविभागः" इति। एतत्कपालं युगपद्घटघटात्यन्ताभावोभयानधिकरणं कपालत्वात्, अनारब्धघटकपालवत्। तत्र परैरपि घटानभ्युपगमात्। एतद् घटात्यन्ताभावः कदाचिदेतत्कपालनिष्ठात्यन्ताभावप्रतियोगी,एतद्घटसंसर्गाभावत्वात्, एतद्घटध्वंसवत्। घटवत्कपालं घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावानधिकरणं घटत्वावच्छिन्नप्रतियोगितावच्छेदकताकान्योन्याभावानधिकरणत्वात्। यो यद्धर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावाश्रयो न भवति स तद्धर्मावच्छिन्नप्र-

तियोगितावच्छेदकताकान्योन्याभावानाश्रयो न भवति, यथा वह्नित्वावच्छिन्न-
प्रतियोगिताकात्यन्ताभावानधिकरणत्वाभाववान् जलह्रदादिर्वह्नित्वाव-
च्छिन्नप्रतियोगितावच्छेदकताकवह्निमद्भेदानाश्रयो न भवतीति व्यतिरेकी।
भवति हि वह्न्यभाववति जलह्रदे वह्निमान्न भवतीति प्रतीतिः सर्वसिद्धा।
घटवत्कपाले तु घटवान्न भवतीति प्रत्ययाभावाद् घटात्यन्ताभावोऽपि तत्र
नास्तीत्यावश्यकम्। न च घटवद्भेदोऽपि तत्कपाले स्वीक्रियत इति वाच्यम्;
अपसिद्धान्तात्। उक्तं हि **चन्द्रिकायाम्**—"स्वाधिकरणनिष्ठभेदप्रतियोगि-
तावच्छेदकत्वं न मिथ्यात्वम्, पूर्वाचार्यैरनुक्तत्वात्। नह्यस्मन्मते घटादौ घट-
त्वादिना भेदः स्वीक्रियते किन्तु घटत्वाद्यत्यन्ताभावः" इत्यादि। एवं च
यथोक्तव्यापकं पश्चाद् व्यावर्त्तमानं स्वव्याप्यमादायैव व्यावर्त्तत इति घटवति
घटात्यन्ताभावोऽप्रामाणिक इति सिद्धम्।

अयं घटः सामानाधिकरण्यं प्रतियोगित्वं चेत्युभयसंबन्धेनात्यन्ताभाव-
हीनः द्रव्यत्वात्, आकाशवत्। पटात्यन्ताभावो घटतदभावोभयसामानाधि-
करण्यनियतः, अभावत्वात्, कपालात्यन्ताभाववत्। कपालात्यन्ताभावस्य
संमतघटात्यन्ताभावस्थले उक्तसाध्यसंप्रतिपत्तिः। घटवत्कपालवृत्तेश्च
घटात्यन्ताभावस्य घटसामानाधिकरण्यसत्त्वाद् घटात्यन्ताभावसामानाधि-
करण्याभावादेव साध्यसंबन्धो वाच्यः। घटवत्यपि घटाभावसत्त्वे तूक्तसामा-
नाधिकरण्यनियमो न स्यादित्यर्थवशाद् घटवति तदत्यन्ताभावाभावः
सिद्धः। एतत्तन्तुवृत्तिर्घटभेद एतत्पटानाद्यभावानधिकरणवृत्तिभेदत्वात्,
पटभेदवत्। एतत्पटवृत्तिभेदमात्रस्य भेदरूपैतत्पटानाद्यभावानधिकरणैत-
त्पटवृत्तित्वात्। तदन्यवृत्तिभेदस्य प्रागभावरूपैतत्पटानाद्यभावानधिकरण-
वृत्तित्वात्। पक्षीकृतभेदे एतत्पटप्रतियोगिकभेदप्रागभाववत्येतत्पटात्यन्ता-
भावानधिकरणवृत्तित्वमादायैव साध्यपर्यवसानम्। एतत्पटाभाव आकाशा-
त्यन्ताभावव्यापकत्वरहितः, एतत्पटसंसर्गाभावत्वात्, एतत्पटध्वंसवत्।
पटवत्यपि पटात्यन्ताभावसत्त्वे त्वाकाशात्यन्ताभावव्यापकत्वमेव तस्य स्यात्।
एतत्तन्तुवृत्तिराकाशात्यन्ताभाव एतत्पटसंसर्गाभावानाश्रयवृत्तिः, आकाशा-
त्यन्ताभावत्वात्, एतत्तन्तुभिन्नवृत्त्याकाशात्यन्ताभाववत्। एतत्तन्तुवृत्ति-
रत्यन्ताभावः पटत्वानवच्छिन्नप्रतियोगिताकः, एतद्वृत्तिसंसर्गाभावत्वात्,
एतत्तन्तुवृत्तिध्वंसवत्। एतत्तन्तुवृत्त्यत्यन्ताभावीया पटत्वावच्छिन्ना प्रति-
योगिता समवायसम्बन्धानवच्छिन्ना, एतत्तन्तुवृत्तिसंसर्गाभावनिरूपितपटवृत्ति-
प्रतियोगितात्वात्, तादृशसंसर्गप्रतियोगितावत्। भूतलादिवृत्तिपटात्यन्ता-

भावीयायां प्रतियोगितायां व्यभिचारादेतत्तान्तुवृत्तीति। संसर्गेति स्वरूपकथनमात्रम्। अभावमात्रं प्रविष्टम्, भेदनिरूपितायामपि साध्यसत्त्वात्। घटाद्यभावीयायां तस्यां तद्वारणाय पटवृत्तीति। पटत्वं स्वाश्रयसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यत्तद्भिन्नम्, द्रव्यत्वव्याप्यत्वात्, आत्मत्ववत्। द्रव्यवृत्तित्वादिति वा, संयोगत्वस्य तावतैव वारणात्। भेदस्याव्याप्यवृत्तित्वपक्षे तत्रैव व्यभिचारवारणाय साध्येऽत्यन्तपदम्। अन्यथाभावमात्रं वाच्यम्, तन्तुत्वं पटसंसर्गाभावसामान्याभावानाश्रयवृत्तिधर्मत्वात्, घटत्ववत्। तन्तुभिन्ने घटात्यन्ताभावसत्त्वेऽपि ध्वंसप्रागभावयोः कदाप्यसत्त्वात् साध्यप्रसिद्धिः। तन्तौ तु तदुभयसत्त्वात्पटात्यन्ताभावविरहप्रयुक्तमेव पटसंसर्गाभावसामान्याभावानाश्रयत्वं पर्यवस्यति। एवं तन्तुपक्षकमुक्तानाश्रयत्वसाध्यकं वस्तुत्वं हेतुकमप्यनुमानं बोध्यम्। पूर्वापरकालयोरत्यन्ताभावाभ्युपगमेऽपि पटकाले तदनाश्रयत्वं विना साध्यानुपसंहारादिष्टसिद्धिः। एतत्तान्तुसंयोगः एतत्पटसंसर्गाभावानाश्रयप्रतियोगिकः, संयोगत्वात्, घटभूतलसंयोगवत्। अत्यन्ताभावत्वमेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिवृत्ति, नित्याभावमात्रवृत्तित्वात्, अन्योन्याभावत्ववत्। उक्तप्रतियोगितत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं विना साध्यापर्यवसानात्तत्सिद्धिः। अन्यदपि धीमद्भिरूहनीयमिति तिष्ठतु विस्तरः।

एवं च—

हेतवोऽभीष्टसिद्ध्यर्थं सम्यञ्चो बहवश्च नः।
स्वल्पाः परस्य दुष्टाश्चेत्यत्र स्पष्टमुदीरितम्॥

इति श्लोकः परान्प्रत्येव पठनीयः, इति दिक्।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।**
**विश्वसत्त्वानुमितयस्तत्त्वानुगतयः कृताः॥१६॥**

———

# सप्तदशोंऽशः

हेतुष्वपि तावत् किं नाम दृश्यत्वम्? यत्तु "वृत्तिव्याप्यत्वमेव तत्, व्याप्यत्वं हेतुतावच्छेदकसंबन्धः, वृत्तित्वेन हेतुता। व्याप्यत्वं चापरोक्षवृत्तेः स्वजनकेन्द्रियसंयोगादिरूपम्, परोक्षवृत्तेस्तु स्वप्रयोजकव्यापकतावच्छेदकादिरूपम्। भ्रमात्मकवृत्तेस्तु स्वजनकदोषजन्यत्वादिरूपम्। यद्वा वृत्तिमात्रस्य स्वावच्छिन्नचैतन्यभिन्नचैतन्यप्रतियोगिकं तत्तदविषयनिष्ठं तादात्म्यमेव तत्, अनुमित्यादिवृत्तेरपि स्वावच्छिन्नचैतन्याभिन्नमहाचैतन्यव्यक्तिप्रतियोगिकब्रह्मादिनिष्ठतादात्म्यसत्त्वात्। अन्यतमत्वस्य स्वरूपत एवावच्छेदकसम्बन्धत्वान्नाननुगमगौर[वं] वृत्तित्वञ्च भीर्धीरित्यादि श्रुत्यनूद्यमानः संस्कारेच्छादिजनकतावच्छेदकतया सिद्धो धीत्वरूपो जातिविशेषः। तत्तद्विषयावच्छिन्नस्यासत्त्वापादकाज्ञानाभावस्य संस्कारादिहेतुत्वे गौरवात्। प्रमाभ्रमान्यतरत्वं वा तत्। ते च सखण्डेऽखण्डे वा" इत्यादि, तन्न; भीर्धीरित्यादिश्रुतेरात्मगुणत्वेन ज्ञानादिप्रतिपादकत्वस्यैवोक्ततया तत्साधारणैकधर्मे प्रमाणाभावात्, ज्ञानत्वातिरिक्ताया धीत्वजातेरसिद्धेः संस्कारादिजनकताया अपि तेनैवावच्छेदसंभवात्। चैतन्यप्रतियोगिताकतादात्म्यस्य च विषयेष्वव्याप्यसिद्धत्वात्। अन्यथा मिथ्यात्वसिद्धावनुमानवैयर्थ्याद् ब्रह्मणि व्यभिचारस्य दुर्वारत्वाच्च। न च तस्य वृत्तिविषयत्वं नेति वाच्यम्; तत्परवेदान्तानां वैयर्थ्यप्रसंगात्।

यत्तु "शुद्धं ब्रह्म न दृश्यम् "यत्तदद्दृश्यम्" इति श्रुतेः। उपहितस्य तु दृश्यत्ववन्मिथ्यात्वमपीष्टमेव, वृत्त्युपहितस्य शुद्धत्वासभवात्। सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थित इत्यस्याप्युपहितपरत्वात्, शुद्धस्य स्वप्रकाशत्वेन स्वत एव सिद्धत्वाच्च" इति, तदसत्; उपहितशुद्धयोरैक्येन तत्रापि हेतोः सत्त्वात्। अन्यथा शुद्धस्य संसारकालेऽशुद्धोपरागेण भानानुपपत्त्या स्वप्रकाशत्वं न स्यात्, शुद्धस्य पृथग्भानाभावात्। अन्यथा शुद्धत्वव्याघातात्। तथा च "अनुकृतेस्तस्य च" इति सूत्रादिविरोधः स्यादित्यादेः स्वयमेवोक्तत्वात्। अपि च शुद्धे दृश्यत्वनिषेधार्थं तस्य ज्ञानमवश्यं वाच्यम्, अज्ञाते धर्मिणि विधिनिषेधयोरप्ररोहात्। अथ स्वप्रकाशत्वेन स्वतः सिद्धे तस्मिन् वृत्त्यदृश्यत्वं निषिध्यत इति चेत्, न; शुद्धं स्वप्रकाशमिति शब्दजन्यविशिष्टवृत्तौ शुद्धप्रकाशे स्वप्रकाशत्वासिद्धेः।

अथ तादृशवाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः। तथा चाशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति, भेदनिषेधाद्भेदवदिति चेत्, न; अशुद्धत्वस्य शुद्धभिन्नत्वरूपतया वृत्तिविषयत्वव्यावृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यतीत्यस्योपहितत्वशून्यब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन स्वप्रकाशत्वं न ज्ञायत इत्यर्थः। अस्वप्रकाशत्वव्यापकाभावप्रतियोगित्वरूपाद्याः स्वप्रकाशत्वव्याप्तेर्ज्ञानस्योद्बुद्धसंस्कारस्योपहितत्वाभावरूपशुद्धत्वे ग्रहसत्त्वसमये शुद्धत्वविशिष्टे स्वप्रकाशत्वाभावज्ञानानुदयात्। वह्न्यभावव्यापकाभावप्रतियोगित्वस्य धूमे ज्ञानादिकाले धूमवान् वह्न्यभाववान् इति ज्ञानाभाववदिति, तादृशज्ञानासंभव एव स्वप्रकाशत्वसिद्धिः। एतेन शुद्धत्वस्य हेतोर्ब्रह्मण्यज्ञाने कथं तस्य स्वप्रकाशत्वस्यानुमितिरूपासिद्धिरित्यपास्तमिति, शुद्धस्वरूपज्ञानं विनापि शुद्धत्वस्योक्तप्रतियोगित्वधीसंभवात्। उपहितत्वमस्वप्रकाशत्वव्यापकमिति ज्ञानकालेऽप्युपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते, धूमव्यापको वह्निरिति ज्ञानकाले वह्न्यभाववान् धूमवानिति ज्ञानाभाववत्। अत उपहितत्वाभावरूपशुद्धत्वस्याज्ञातत्वेऽपिक्षत्यभावाच्च। न चोपहितत्वे स्वप्रकाशत्वाभावव्यापकताज्ञाने शुद्धत्वस्वप्रकाशत्वयोः सहचारज्ञानमावश्यकमन्यथोपहितत्वाभाववद्वृत्त्यस्वप्रकाशत्वमिति व्यभिचारज्ञानानुच्छेदेन तादृशव्यापकताज्ञानासंभवात्। तथा चोक्तसहचारघटकतया शुद्धज्ञानमावश्यकमिति वाच्यम्; शुद्धस्य वृत्त्यविषयत्वेन तदघटितोक्तव्यभिचारविषयकवृत्त्यसंभवात्। उपहिते तत्त्वाभावभ्रमकाले उक्तव्यापकत्वज्ञानासंभवेऽपि तदन्यकाले तत्संभवात्। उक्तसहचारभ्रमस्योपहितरूपाधिकरणमादाय संभवाच्च। न चैवं शुद्धत्वोपहिते स्वप्रकाशत्वसिद्धावपि शुद्धे तदसिद्धिरिति वाच्यम्; शुद्धत्वस्योपहितत्वाभावरूपत्वेनाभावरूपे धर्मे शुद्धसंबन्धस्योक्तत्वादुपहितत्वाद्यभावत्वोपहितेन ब्रह्मणा सह ब्रह्मणो भेदाभेदस्वीकारादभेदस्य धर्मधर्मितानियामकत्वादिति चेत्, अत्र ब्रूमः, वह्न्यभावव्यापकाभावप्रतियोगित्वस्य धूमे ज्ञानकाले हि धूमं धर्मितावच्छेदकीकृत्य वह्न्यभाववत्ताज्ञानं न जायते। न त्वन्यधर्मधर्मितावच्छेदकमपि पर्वतो वह्न्यभाववानित्यादिज्ञानोदयात्। इह तु स्वप्रकाशत्वाभावव्यापकाभावप्रतियोगित्वमुपहितत्वाभावरूपे शुद्धत्वे गृहीतम्। अतः शुद्धत्वधर्मितावच्छेदककं स्वप्रकाशत्वाभावप्रकारकज्ञानं मास्तु, धर्मान्तरधर्मितावच्छेदककं तु स्यादेव, बाधकाभावात्। तादृशधर्माणामपि व्यापकत्वज्ञानसंभवेऽपि तदभावकाले स्वप्रकाशत्वाभावज्ञानापत्तेश्च।

वस्तुतः शुद्धस्य स्वप्रकाशत्वसिद्धिः कथं निर्व्यूढा, तदभावज्ञानाभावमात्रेण तत्सिद्धेरङ्गीकारे ब्रह्मभावज्ञानाभावमात्रेण वह्निज्ञानकार्यापत्तेः। शुद्धस्वप्रकाशत्वं न स्यादित्यस्यैव परेणापादितत्वात्। भवदुक्तरीत्या च तदपरिहारात्। अपि चैवं घटादीनामपि स्वप्रकाशत्वसिद्धिः स्यात् उक्तज्ञानसत्त्वे वह्निधूमाभाववद्विशेष्यकस्यापि धूमधर्मितावच्छेदककवह्न्यभाववत्ताज्ञानस्याजायमानतया प्रकृतेऽपि शुद्धत्वाभाववद्विशेष्यकस्यापि शुद्धत्वावच्छिन्नधर्मिताकस्वप्रकाशत्वाभावज्ञानस्योक्तव्यापकत्वज्ञानकालेऽनुपपत्त्या घटादेरपि स्वप्रकाशत्वाभावप्रकारकज्ञानविशेष्यत्वविरहसाम्यात्। स्वप्रकाशत्वप्रमाविशेष्यत्वस्य च शुद्धेऽप्यनङ्गीकारात्। न हि धूमवद्विशेष्यकधूमधर्मितावच्छेदककवह्न्यभावप्रकारकज्ञानत्वं तादृशव्यापकत्वज्ञानप्रतिबध्यतावच्छेदकमिति न किंचिदेतत्। एतेन उपहितत्वमस्वप्रकाशत्वव्यापकमित्याद्यपि निरस्तम्। तस्मात् स्वप्रकाशत्वशुद्धत्वयोः सहचारज्ञानस्यावश्यमपेक्षणीयतया शुद्धत्वस्य च ब्रह्मनिष्ठत्वेन तदावश्यकतया शुद्धस्य ज्ञेयत्वं दुर्निवारमेव।

यत्तु शुद्धस्य वृत्तिविषयत्वेनेत्यादि, तन्न; स्वप्रकाशत्वसिद्ध्यर्थं बलादेववृत्तिविषयत्वस्यानीयमानत्वात्। उपहिताधिकरणे सहचारभ्रम इत्यप्युक्तम्; हेत्वभावाश्रये हेतुसाध्ययोः सहचारभ्रमसंभवेऽपि तस्यानुपयुक्तत्वात्। शुद्धत्ववति स्वप्रकाशत्वमित्येवंरूपे सहचारज्ञाने वस्तुतः शुद्धस्वविषयत्वसम्पत्तेश्च। न हि सहचारज्ञानाधिकरणविशेषान्तर्भावेन व्याप्तिर्गृह्यते। एतेन शुद्धपदेनाभिधालक्षणान्यतरेणापि शुद्धाप्रतिपादने तद्वैयर्थ्यमित्याशङ्क्य शुद्धत्वविशिष्टे स्वप्रकाशत्वाभावज्ञानसंभवरूपार्थमादाय तत्सार्थक्यमित्यपि निरस्तम्। परमार्थतस्तु स्वप्रकाशत्वाभावव्यापकाप्रतियोगी उपहितत्वाभाव इति ज्ञान एव शुद्धस्य ज्ञानसंपन्नम्, अभावस्य तन्मतेऽधिकरणस्वरूपत्वात्। एवं परप्रकाश्यत्वाभावस्वरूपस्य स्वप्रकाशत्वस्यापि शुद्धानतिरेकितया व्याप्याभावप्रतियोगितयैव शुद्धस्य ज्ञेयत्वमित्यवधेयम्।

एवं च शुद्धं स्वप्रकाशमिति वाक्यस्य पूर्वोक्तव्यतिरेकव्याप्तौ लक्षणापि निर्बीजा, वृत्तिरूपेण धर्मेण शुद्धत्वासंभवादिति त्वयुक्तम्; आगन्तुकविशेषगुणाश्रयराहित्यस्यैव शुद्धपदार्थत्वेन भवदुक्तशुद्धत्वभावापत्तेरिष्टापादनत्वात्। तस्माद्वक्रगत्यापि शुद्धस्य ज्ञेयत्वमनिवार्यम्। अत एवोक्तम्—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्तिः प्रकल्पिता" ॥ इति

तदेतत्सर्वं वस्तुगतिमभिसंधायोक्तम्। वस्तुतः शुद्धस्वप्रकाशत्वाभावप्रकारकज्ञानाविषय इत्येतादृशभवदीयज्ञानमेवादाय वृत्तिविषयत्वं तत्र सुलभम्। तथा च स्वप्रकाशत्वविरहज्ञानं शुद्धे निषेध[-य]ता स्वमेव ज्ञानमादाय ज्ञेयत्वं तत्रारोपितम्। एवंविशिष्टस्य विषयत्वेऽपि विशेष्यस्य तद्दुर्वारम्, विशिष्टज्ञाने विशेष्यस्यापि विषयत्वात्। न च विशिष्टस्यातिरिक्तत्वात् पर्याप्तिसंबन्धेन विषयत्वस्य वा हेतुत्वाद्विशेषमात्रं न हेतुरिति वाच्यम्; विशेषणस्याप्यविषयत्वापत्त्या भागसिद्धिप्रसङ्गात्। न तु विशेष्यतापन्नस्य विषयत्वेऽपि न क्षतिः, तस्य मिथ्यात्वाभ्युपगमात्। एतेनोपहितस्य विषयत्वेऽवधेयस्य तत्त्वं दुर्वारमित्यपि परास्तम्। उपहितात्मना तस्य साध्यसंबन्धात्। न च विशिष्टज्ञानेन शुद्धे ज्ञातत्वमज्ञाननिवृत्तिश्च न व्यवह्रियेतेति वाच्यम्; इष्टत्वात्। "अव्यवहार्यमलक्षणम्" इत्यादिश्रुतेः। उपहितविषयकतात्पर्यनिर्णायकस्यैव श्रवणत्वसंभवात्।

किञ्च उपहितब्रह्मभिन्नप्रपञ्चमात्रस्य मिथ्यात्वे उपहितत्वेन तत्र दृश्यत्वसत्त्वात्। तेन निर्विकल्पकानङ्गीकारे घटादेस्तत्स्वीकारेऽपि नित्यातीन्द्रियस्यापि विशिष्टरूपेणैव दृश्यत्वात्केवलं तत्र भागासिद्धिरित्यपास्तम्। घटादिस्वरूपस्योपहितान्यस्वरूपाभावादसिद्ध्यनवकाशादुपहिततत्स्वरूपसिद्ध्यैव नः कृतकृत्यत्वादिति चेत्, उच्यते; एवं तत्त्वमस्यादिवाक्यानां तात्त्विकप्रामाण्यमिति प्रवादोच्छेदः स्यात्। समानविषयकत्वेनैव ज्ञानस्याज्ञाननिवर्तकत्वस्वीकाराच्चाज्ञानविषयतायाश्चाश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलमिति शुद्ध एवाभ्युपगमात्। अविद्यातत्प्रयुक्ताविषयकज्ञानस्यैव तथात्वात्। शुद्धतद्व्यक्त्यवच्छिन्नविषयताकाज्ञानस्य शुद्धतद्व्यक्तिविषयकज्ञानं शुद्धशुक्तित्वादिविशिष्टावच्छिन्नविषयताकाज्ञानस्य शुक्तित्वांशेऽन्याप्रकारकशुक्तित्वप्रकारकज्ञानं जातित्वादिविशिष्टशुक्तित्वादिविशिष्टशुद्धयाद्यवच्छिन्नविषयताकाज्ञानस्य तादृशशुक्तित्वप्रकारकं ज्ञानं समानविषयकमित्यादेर्निरूपितत्वात्, श्रुत्याप्यव्यवहार्यत्वस्य शुद्धनिष्ठत्वेन बोध्यत्वाच्च।

यत्तु घटादेरुपहितान्यस्वरूपं नास्तीति, तन्न; उपहितान्यस्वरूपस्याब्रह्मणोऽपि सत्त्वे मानाभावात्। तथा च भागासिद्धिपरिहारप्रवृत्तेन व्यभिचार एवानीतः, इत्येतावतास्माकमपि कृतार्थत्वं स्यात्। तत्र प्रमाणोपन्यासे च शुद्धस्यापि हेतुमत्ताप्रसंगेन सुतरामेव व्यभिचारात्। तस्मात्—

ब्रह्मण्युपहितान्यस्मिन् मानस्य सदसत्त्वयोः।<br>अनैकान्तिकताहेतोरेकस्यैकान्तिकत्वभाक्॥

यत्तु ब्रह्मणः स्वप्रकाशत्वेन शुद्धरूपेण ज्ञानाविषयत्वेऽपि न क्षतिः, घटादेस्तु यदि शुद्धरूपं तदा ज्ञानाविषयत्वेऽलीकमेव स्यात्। स्वप्रकाशत्वं त्वनाशङ्क्यम् अनन्तानां तत्स्वीकारे गौरवाद् घटं न जानामीत्यनुभवाच्चेति, तदप्यसत्; ब्रह्म न जानामीत्यनुभवसामान्यात्। अन्यथा शास्त्रवैयर्थ्यात्। "एतद्वै तदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः" इति बृहदारण्यकात्। "न वै नूनं भगवंस्त एतदवेदिषुः" इति छान्दोग्ये उद्दालकं प्रति श्वेतकेतूक्तेः। "सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्" इति तत्रैव सनत्कुमारं प्रति नारदोक्तेश्च।

न चास्य भावरूपाज्ञानविषयकत्वं वक्तव्यम्; निराकरिष्यमाणत्वात्। प्रमाणविषयत्ववत्य स्वप्रकाशत्वे शशशृङ्गादिसाधारण्यात्। स्वप्रकाशकत्वेऽपि प्रमाणस्यावश्यं वाच्यत्वाच्च। अत एव ज्ञानस्वप्रकाशत्वेऽप्यनवस्थासाम्यमाकरेऽप्युक्तम्। यद्यपि सोऽयं घट इत्यादि वाक्यादस्मन्मते शुद्धव्यक्तिधीस्त्वन्मतेऽपि प्रमेयमित्यादिज्ञानाद्विशेष्यमात्रांशे उद्बुद्धसंस्काराद्विशेष्यमात्रस्मृतिरन्यथाननुभूतदशरथत्वादिविशिष्टे सत्त्ववादिज्ञानासंभवादिति, तदप्यसत्; प्रमेयत्वप्रकारकदशरथविशेष्यकसंस्कारादुक्तोद्बुद्धसंस्कारात्प्रमेयत्वांशे मोषवशाद्दशरथत्वप्रकारकस्मरणस्यैवोपपत्त्या तत्रापि निर्विकल्पकस्मृत्यनङ्गीकारात्। दशरथत्वांशेऽन्याप्रकारकदशरथत्वप्रकारकस्मृतिं प्रति तादृशसंकारस्यैव हेतुत्वात्, कथं तदंशे प्रमेयत्वप्रकारकसंस्कारादुक्तस्मृतिरित्याशङ्कायां दशरथत्वादिसंबन्धेन यत्र भ्रमो जातस्तत्र संसर्गविषयतायां तज्ज्ञानस्यानपेक्षणीयतया तत एव दशरथत्वादिज्ञानोपपत्त्यभ्युपगमात्।

यदप्युक्तम् "आश्रयत्वेत्यादेर्न विरोधः, अज्ञानकार्यानुपहितस्याज्ञानविषयत्वाश्रयत्वयोस्तद्वाक्येनोक्तेः। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति। नापि गोचर इत्युत्तरार्द्धेनाज्ञानकार्योपहितस्य विषयत्वाश्रयत्वोभयाभावे पश्चादुत्पन्नत्वस्य हेतोरुक्तत्वात्। अज्ञानोपहितस्याप्यविषयत्वाश्रयत्वे तात्पर्ये तु हेत्वनुक्त्या न्यूनतापत्तेः" इति, तदप्यसत्; अज्ञानकार्यानुपहितस्य तद्विषयत्वं तात्पर्यं हि तादृशस्यैव शुद्धत्वापत्तौ जीवेशभेदादिविषयकज्ञानस्याप्यज्ञाननिवर्तकत्वं स्यात्, शुद्धविषयकत्वसद्भावात्। तस्मात्कार्यपदं प्रयुक्तत्वपरम्, तच्च तदुच्छेदकज्ञानोच्छेद्यत्वमनादिसाधारणं वाच्यमित्यज्ञानतत्कार्योभयानुपहितमेव, ब्रह्माज्ञानविषयत्वाश्रयत्ववदिति तत्तात्पर्यम्। तद्विषयत्वातिरिक्तस्य शुद्धत्वस्य कल्पने गौरवाच्च। न चात्र हेत्वनुक्तिः, एकरूपेण यथोक्तप्रयुक्तत्वेन

पश्चिमपदतात्पर्यविषयेण तदभिधानात्। अज्ञानोपहितस्यैवाज्ञानविषयत्वेऽन्योन्याश्रयाच्च।

यत्तु "अज्ञानतदुपहितयोस्तद्गोचरसाक्षिणोश्चानादित्वेनोत्पत्तिज्ञप्त्योर्नान्योन्याश्रयः" इति, तन्न; तथाप्यज्ञानोपहितस्याज्ञानविषयत्वकल्पनायां प्रमाणाभावात्। अन्यथा आकाशविशिष्टे आत्मन्याकाशं वर्त्तते, अनादित्वादित्यादिकमपि स्यात्। किं च ब्रह्मणः स्वप्रकाशतया प्रकाशावरणार्थमज्ञानं कल्प्यते, यदि त्वज्ञानोपहितमेवाज्ञानविषयः तदा प्रकाशानापत्त्या तत्कल्पनमेव न स्यात्। न चाज्ञानोपहितसिद्ध्यर्थज्ञानं सिद्धमिति वाच्यम्; अज्ञानासिद्धौ तदुपहितस्यापि दुर्लभत्वापत्त्या मूलोच्छेद एव पर्यवसानात्, अज्ञानाभावे तदुपहितस्यापि वक्तुमशक्यत्वात्। तस्मादज्ञानानादित्वस्य धर्मिसिद्ध्युत्तरकालिककल्पनाकत्वात् तत्कल्पकप्रमाणेन कल्पनीयाज्ञानानुपहितमेव ब्रह्म तद्विषयतया कल्पनीयमिति कल्पनायामन्योन्याश्रयस्य दुरुद्धरत्वमिति सिद्धम्। अत एव "अहमज्ञः, अयं घट इत्यादि ज्ञानानामप्युपहितविषयत्वेनाज्ञाननिवर्तकत्वप्रसंगः" इति **अद्वैतसिद्धावुक्तम्**। विशिष्टविषयकत्वेन तद्व्याख्यायाः कष्टकल्पनमात्रत्वात्।

यदप्युक्तं विशिष्टाविषयकज्ञानाविषयत्वे सति विषयत्वं हेतुरतो न भागासिद्धिरिति, तदप्यसत्; विशिष्टाविषयकज्ञानाविषयत्वस्यैव सामर्थ्ये विशेष्यभागवैयर्थ्यात्। न च तुच्छे व्यभिचारपरिहारस्तदर्थः, शाब्दवृत्तिविषयत्वस्य शुद्धे सर्वसिद्धतया तेनापि तस्य दुरुद्धरत्वात्। न चोक्तमात्रमेव हेतूकर्तव्यमिति वाच्यम्; तुच्छसाधारण्यानपायात् निर्विकल्पकाङ्गीकारे स्वरूपासिद्धिप्रसंगात्, आकाशादिपदान्निर्विकल्पकोपगमे तत्र भागासिद्धेश्च। न च तत्रापि सुवर्थकत्वादिकमादाय विशिष्टविषयकत्वमेवेति वाच्यम्; शाब्दबोधे तथात्वेऽपि पदजन्यपदार्थस्मृतौ तदविषयकत्वस्य निर्बाधत्वात्। तत्त्वमसीत्यादावुपाधिविशिष्टचैतन्यांश एव संस्कारोद्बोधात्। तन्मात्रस्मारकत्वं निर्विकल्पकवाच्यार्थानुकूलस्य पदजन्यस्मरणस्यापि निर्विकल्पकत्वस्यानुभवसिद्धत्वादिति भवदङ्गीकारेण जीवे भागासिद्धेश्च। तुच्छस्थले त्वया विकल्पाख्यवृत्तेरेव स्वीकारेण विशिष्टाविषयकज्ञानाविषयत्वस्य तत्र सत्त्वात्। विकल्पस्य ज्ञानाद् भेद इति भवदभ्युपगमात्। एतावान्भेदः—तव ज्ञानत्वाभावात्तत्र हेतुसत्त्वम्, मम तु विशिष्टाविषयकत्वाभावादिति।

न चैतद्दोषानुरोधाच्छब्दाजन्यवृत्तिविषयत्वस्यासत्ख्यातिमते तस्याप्यनुमित्यादिविषयत्वे तु सोपाख्यनिष्प्रकारताकवृत्तिविषयत्वस्य हेतुत्वमुपाख्या

चास्तीति प्रतीतिविषयत्वं तुच्छस्याप्यस्तित्वेन ज्ञानमस्तीत्युक्तौ तु सत्तादात्म्यतत्त्वान्यतरकत्वमेव सोपाख्यत्वमिति ग्रन्थ एव वक्ष्यमाणत्वान्नायं दोष इति वाच्यम्; तथापि सत्तादात्म्यस्य ब्रह्मण्यपि सत्त्वेन सोपाख्येत्यादिहेतोरप्युक्तत्वात्। ब्रह्मरूपं यत्सत्तत्तादात्म्यस्य घटादौ सत्त्वे मानाभावेनासिद्धत्वाच्च। अन्यथा साध्याविशेषात्। एतेन सर्वेष्वनुमानेषु साध्यस्यैव मिथ्यात्वलक्षणत्वाभिप्रायेण तुच्छव्यावर्त्तकं सत्त्वेन प्रतीत्यर्हत्वादिकं साध्ये दत्तम्। वस्तुतस्तु साध्यतावच्छेदके तन्न देयम्, प्रयोजनाभावात्। अतो हेतौ तुच्छवारकविशेषणमप्यनुपादेयमित्यपि निरस्तम्। तथापि दोषान्तराणां दुर्वारत्वात्, इति दिक्।

नापि स्वाकारवृत्त्यभिव्यक्तचैतन्यविषयत्वरूपं फलव्याप्यत्वं हेतुः, नित्यातीन्द्रिये शुक्तिरूप्यादौ च तदभावेन भागासिद्धिसाधनवैकल्ययोः प्रसंगात्। "अथ स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वरूपं तदस्तु। ईश्वरोपाधिसत्त्वप्रधानमाया वर्तमानसर्वविषयाकारेण परिणमते। तस्मिंश्च परिणामे प्रतिबिम्बितचैतन्यं सर्वं पश्यत्याध्यासिकसंबन्धात्" इति **तत्वदीपनोक्तेः** अतीन्द्रियेष्वपि तत्सौलभ्यात्।

न च चैतन्यत्वेनैव तादात्म्यरूपविषयत्वेन हेतुत्वसंभवे विशेषणवैयर्थ्यम्; वृत्तिप्रतिबिम्बितत्वेनैव हेतुत्वम्, तादात्म्यं तदवच्छेदकसंबन्धः। न च तुच्छे व्यभिचारः, विद्यमानमात्रे तदुक्त्या तत्रोक्तमायावृत्तेरभावात्तादात्म्येन चैतन्यतादात्म्याभावाच्च। न च ब्रह्मणि व्यभिचारः, इयं शुक्तिरज्ञानं रजतञ्च मेयम्। अहं ब्रह्माज्ञानपटादिमेयमित्याकारकवृत्तौ ब्रह्माकारकत्वाभावात्। ब्रह्ममात्राकारकवृत्तेस्तु सप्रकारकत्वस्य वृतिविशेषणत्वेन वारणीयत्वात्, ब्रह्मान्यनिष्ठतादात्म्यत्वेनैव हेतुत्वाद्वा। अतीतादेरपि वर्तमानतादशायां तादृशचित्तादात्म्यान्न तत्र भागासिद्धिरिति चेत्, मैवम्; ब्रह्मणोऽपि ब्रह्मान्यत्वे दोषध्रौव्यात्, अतीतादिवदतीन्द्रियेऽपि तदवृत्त्यङ्गीकारे प्रमात्वाभावात्, पश्यतीति ग्रन्थस्वारस्याच्च। केचित्तु "वृत्तिविषयत्वेनैव सर्वव्यवहारनिर्वाहात्तदतिरिक्तचिद्विषयत्वाननुभवाच्च यथोक्तचिद्विषयत्वं न क्वापीत्यसिद्धो हेतुः, साक्षात्कारत्वस्यापीन्द्रियजन्यवृत्तिविशेषनिष्ठस्यैव कल्पनात्तद्विषयत्वरूपापरोक्षत्वस्य घटादिनिष्ठस्य संभवात्, ज्ञानत्वाश्रयीभूतवृत्तिविषयत्वरूपज्ञातत्ववत्। न च सुखादौ वृत्तिज्ञाने च तद्व्यवहारो न स्यात्, तद्विषयकवृत्त्यनङ्गीकारात्, कल्पने च गौरवादिति वाच्यम्; लाघवादवृत्तिविषयत्वस्य ज्ञानत्वादिव्यवहारप्रयोजकत्वे फलमुखत्वात्।

अन्यथा वृत्त्यकल्पनलाघवेन घटादेरपि सुखादिसमकक्षत्वप्रसंगात्। सुखाद्यवच्छिन्नचितीय[व] घटाद्यवच्छिन्नचित्यपि स्वत एवाज्ञानविरोधित्वस्य कल्पयितुं शक्यत्वात् । न च वृत्तिविषयत्वस्येच्छा[-दि]व्यवहारविषयत्वाप्रयोजकत्वादसत्त्वापादकाज्ञानविषयतावच्छेदकत्वस्य तत्प्रयोजकत्वोक्तौ च इच्छादिविरहः प्रयोजकत्वं तादृशाज्ञानविषयतावच्छेदकत्वस्य वाच्यम्; तथा चावच्छेद्या याज्ञानविषयता तदधिकरणे चिति असंबद्धस्य घटादेरवच्छेदकत्वानुपपत्त्या तादृशचित्तादात्म्यं घटादेरङ्गीकार्यम् । तच्चाध्यासिकविषयत्वरूपमेवेति तेषां चिद्विषयत्वं सिद्धमिति वाच्यम्। तावतापि स्वरूपसंबन्धविशेषरूपतादात्म्यस्यैव संभवे विषयत्वरूपतदङ्गीकारे मानाभावात्, घटादेरज्ञानविषयतावच्छेदकत्वकल्पनापेक्षया तद्विषयत्वस्यैव लाघवेन कल्पयितुमुचितत्वाच्च । न चैकत्रैव चिति तत्तदवच्छिन्नरूपेणाज्ञानविषयत्वकल्पनेन तदवच्छेदकघटाद्यनन्तधर्माणामप्रकाशनिर्वाहे तावतामज्ञानविषयत्वकल्पने गौरवमिति वाच्यम्; अनन्तधर्माणामवच्छेदकत्वकल्पनमपेक्ष्य विषयत्वकल्पनायामेव लाघवात्, विषयत्वस्याज्ञानस्वरूपत्वकल्पनया लाघवाच्च । अवच्छेदकत्वस्य तु घटादिभेदेनानन्त्यात्," इत्यादिकमाहुः । अपि च—इयं शुक्तिरज्ञानं रजतश्च मेयमहं ब्रह्माज्ञानघटादि मेयमित्यादिज्ञानानामधिकविषयकत्वेऽप्यज्ञानं प्रति समानविषयकत्वेन तन्निवर्तकत्वं स्यादेव, अवस्थाज्ञानतत्कार्यरजतादिज्ञानानामविद्यावृत्तित्वेन शुक्त्याद्यविषयकत्वेऽपि शुद्धब्रह्मज्ञानस्य मूलाज्ञानकार्यघटादिविषयकत्वसंभवात् । भ्रमप्रमात्मकसमूहालम्बनस्याबाधितविषयकत्वमादाय प्रमात्वसंभवाच्चेत्याशङ्क्य यदुक्तम् "तार्किकादिमते घटाभाववदिदं घटवदिति ज्ञानस्येव शुद्धब्रह्मविषयकज्ञानस्यातदन्यविषयकत्वमनुपपन्नम्, यादृशविषयतयोर्विरोधस्तादृशविषयतयोरेकज्ञानासंबन्धनियमस्य तुल्यत्वात् । विरोधश्च तन्मते प्रतिबध्यप्रतिबन्धकतावच्छेदकत्वमस्मस्मते नाश्यनाशकतावच्छेदकत्वं नाशतत्प्रतियोगितावच्छेदकं वेत्यन्यत् । वह्निव्याप्यो धूम इत्याकारोद्बुद्धसंस्कारकाले धूमवान् वह्न्यभाववानिति ज्ञानस्येव ह्रदो वह्न्यभाववानित्युद्बुद्धसंस्कारकाले ह्रदो वह्निमानिति ज्ञानस्याप्यनुत्पत्तेरानुभविकत्वात् । दृश्याभाववद्ब्रह्मेत्याकारकोद्बुद्धसंस्कारकालीनब्रह्मज्ञानकाले दृश्यानुविद्धतया भाननियमात् । ब्रह्मज्ञानात्पूर्वं घटत्वाद्युपस्थितयावद्धर्मावच्छिन्नाभावस्य मिथ्यात्वघटकतया ब्रह्मणि निश्चयात्तस्योद्बुद्धसंस्कारसत्त्वात् सर्वदा मुमुक्षुणा प्रपञ्चमिथ्यात्वस्य चिन्त्यमानत्वात् । अत एव

**विवरणे** "ननु ब्रह्मात्मानुभवद्वैतदर्शनयोः कुतः साहित्यम्" इत्याशङ्क्य "न वयं साहित्यं ब्रूमः किन्तु कदाचिदसंप्रज्ञातात्मैक्यदर्शनं कदाचिदारब्धकर्मोपस्थापितदोषनिमित्तं द्वैतदर्शनं च" इत्युक्तम् । संतमसबहुलालोकयोरिव द्वैताद्वैतधियो विरोध इति **तत्त्वदीपने** शङ्काव्याख्यानम् "असंप्रज्ञातं प्रत्यक्त्वादिभानाज्ञानम्" इति । अत्रेदं वक्तव्यम्—पूर्वोक्तसामान्यानुमानीयमिथ्यात्वे पारमार्थिकत्वं दृश्यत्वं वा भावप्रतियोगितावच्छेदकत्वेन यदि निविष्टं तदा तदवच्छिन्नप्रतियोगिताकाभावज्ञानादिसत्त्वेऽपि यथोक्तसमूहालम्बनोत्पत्तौ बाधकाभावः । घटाभाववान् घटवानिति ज्ञानानभ्युपगमेऽपि जातिविशेषवदभाववान्घटाभाववान् जातिविशेषवद्वान्वा इत्यादि ज्ञानस्य सर्वसम्मतत्वात् प्रकारतावच्छेदकत्वप्रतियोगितावच्छेदकत्वयोर्निरवच्छिन्नयोरेव तद्धर्मावच्छिन्नयोरेकज्ञानविषयत्वानङ्गीकारात् । पारमार्थिकत्वाद्यवच्छिन्नप्रतियोगिताकाभावज्ञानेऽपि रूपान्तरेण दृश्यविषयकज्ञानोत्पत्तेर्दुर्वारत्वात् ।

अथ घटत्वाद्यवच्छिन्नप्रतियोगिताका एवाभावा मिथ्यात्वघटकास्तर्ह्यनन्ततावद्धर्माणामभावप्रतियोगितावच्छेदकत्वेनैकपुरुषस्य भानासभवाद्यदा यदवच्छिन्नप्रतियोगिताकाभावज्ञानं नास्ति तदा तद्धर्मावच्छिन्नविषयकशुद्धब्रह्मविषयकज्ञानं दुर्वारम् । इदं चाभ्युपगम्योक्तम्—घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वीयाभावत्वावच्छिन्नावच्छेदकतानिरूपितप्रतियोगितासंसर्गावच्छिन्नावच्छेदकतावच्छेकत्वं यत्र घटत्वे पर्यवस्यति तद्ज्ञानस्यैव वानभ्युपगमात् । भूतलं घटवत्पर्वतो घटाभाववानित्यादिसमूहालम्बनानां सर्वसिद्धत्वात् । तादृशज्ञानवारणं तु यथोक्तसंबन्धेन तज्ज्ञाने घटत्वभेदस्य हेतुतयान्यथावेत्यन्यदेतत् । एवं च ब्रह्मणि तादृशाभावनिश्चयेऽपि स्वातन्त्र्येण घटादीनां विषयत्वसंभवात् । एतेन धूमवान् वह्न्यभाववानित्यादिकमपि निरस्तम् । तत्रापि विषयतानां परस्परं निरूप्यनिरूपकभावस्थल एव तदनङ्गीकारात् । धूमवह्न्यभावान्यतरस्यान्यतरधर्मितावच्छेदकत्वाभावे तादृशज्ञानस्यापि समूहालम्बनस्येष्टत्वात् । दृश्याभाववद्ब्रह्म दृश्यवदित्याकारकज्ञानासंभवेऽपि तद्धर्मितावच्छेदकत्वानवगाहितदुभयज्ञानसंभवात् । इदमपि वस्तुगत्योक्तम्, वेदान्तिनो मिथ्यात्वनिर्णयेऽपि तदन्यस्य तादृशज्ञानोत्पत्तौ बाधकाभावात् । तस्य त्वदुक्तरीत्या ब्रह्मविषयकत्वसंभवात् । नहि ज्ञानोत्पत्तिर्मतविशेषानुसारिणी किन्तु तत्प्रतिक्रियायां विषयविशेषे वा दर्शनानां विवाद इत्यन्यत् । वस्तुतस्तु वृत्त्यज्ञानप्रतिबिम्बादिकं सर्वमपि निरसनीयमिति संक्षेपः ।

अथ वृत्तिव्याप्यफलव्याप्ययोः साधारणं व्यवहारप्रयोजकविषयत्वं हेतुरिति चेत्, न; ब्रह्मण्यप्यस्तीत्यादि व्यवहारप्रयोजकविषयत्वसत्त्वादभावादिव्यवहारप्रयोजकशब्दविषयत्वस्य तुच्छेऽपि गतत्वादधिकस्य पूर्ववदनुसंधेयत्वाच्च।

यत्तु दृश्यत्वं चिद्विषयत्वम्, तच्च यथाकथंचिच्चित्संबन्धित्वम्। आवृतानावृतसाधारणं चित्तादात्म्यत्वं हेतुतावच्छेदकमिति यावत्। तच्च न चैतन्ये, ययोर्भेदस्तयोरेव संबन्धस्य भेदाभेदानुमाने विवेचितत्वात्। यद्यपि कल्पितश्चित्संबन्धश्चैतन्येऽप्यस्ति, सत्यत्वादिरूपस्य तस्य धर्मतास्वीकारात्, तथापि स्वजन्यतानाबाध्यचित्संबन्धवत्त्वं वाच्यमिति, तदसत्; तत्रैवोक्तनियमस्य निरस्तत्वात्, चित्संबन्धस्य चिदात्मकत्वेन स्वज्ञानाबाध्यत्वाच्च। एतेन भेदघटितं चित्संबन्धवत्त्वं हेतुः। तथा च चिदन्यनिष्ठचित्संबन्धस्तथेत्यपि परास्तम्, चितोऽपि चिदन्यत्वस्योक्तत्वात्।

अथ स्वगतमेव यावद्व्यवहारे स्वातिरिक्तसंविदपेक्षत्वं दृश्यत्वम्। संवित्पदेन विषयावच्छिन्नेनावारणेन शून्यं वृत्तिबिम्बितं वा शुद्धं वा चैतन्यमात्रं ग्राह्यम्। तथा च घटादौ नित्यातीन्द्रिये साक्षिभाष्ये च सर्वोऽपि स्फुरणाभिवदनादिसाधारणः। अविद्यादेः स्वावच्छिन्नचिद्रूपं स्फुरणमनाद्यप्यनवच्छिन्नचित्सापेक्षम् तदाश्रितत्वात्। प्रयुक्तत्वरूपसापेक्षत्वस्यानादावपि संभवात्। ब्रह्मणो व्यवहारान्तरे स्वातिरिक्तसंवित्सापेक्षत्वेन व्यभिचारवारणाय व्यवहारे यावदिति। ब्रह्मणः स्फुरणरूपे व्यवहारे स्वविलक्षणसंविदनपेक्षत्वात्। न च ब्रह्मणः स्वस्मिन् स्वात्मकसत्यत्वादिधर्मतानियामककल्पितभेदसत्त्वात्तथापि व्यभिचार इति वाच्यम्; स्ववृत्तितावच्छेदकं यद्विनाशप्रतियोगितात्वादि तद्विशिष्टानाश्रयत्वस्य विलक्षणपदार्थत्वात्, इति चेत्, मैवम्; अविद्यादेरिव ब्रह्मणोऽप्याश्रयत्वेन तत्सापेक्षत्वापत्त्या व्यभिचारात्। विशिष्टचितोऽपि विनाशित्वेन तदभ्युपगमात्स्वरूपासिद्धेः। उक्तं हि **चन्द्रिकायाम्** "येषां तु नाशप्रतियोगित्वदृश्यत्वादीनां न केवलचिन्निष्ठतासंभवस्तेषामप्यविद्याद्युपाधिनिष्ठानामेव तदुपहितचिन्निष्ठता, न चैवमुपहितघटत्वादिज्ञानात् केवलघटत्वादिज्ञानकार्यस्य जायमानस्यापलापापत्तिरिति वाच्यम्; केवलस्याप्युपहितधीविषयत्वात्। न चैवमुपहितनिष्ठसंयोगादीनां केवलनिष्ठत्वानुरोधेनोपहितकार्यजनकस्य केवलेऽपि तत्त्वादुपहितनाशकेन केवलस्यापि नाशापत्तिरिति वाच्यम्; येन संबन्धेन यदुपहिते जायते तेन तस्य केवलेऽप्युत्पत्तिरिति नियमाभावात्। कार्यतावच्छेदकेन विषयतासंबन्धेन ज्ञानस्येव प्रतियो-

गितासंबन्धेनोपहिते जायमानस्य नाशस्य तेन संबन्धेन केवलेऽनापत्तेः। जातिविषयकज्ञानस्य व्यक्तिविषयकत्वनियमवदुपहितविषयकज्ञानस्य केवलविषयकत्वमुपहितसंयोगादिजनकस्येव केवले संयोगादिजनकत्वमिति यथानुभवं नियमकल्पनात्। उपाध्युत्पत्तिनाशसामग्र्योरेवोपहितोत्पत्तिनाशसामग्रीत्वेनोपाध्युत्पत्तिनाशयोरनुपहितोत्पत्तिनाशत्वेऽपि केवलोत्पत्तिनाशत्वाभावेनोपहितनाशस्य केवलनाशत्वाभावात्" इति, वृत्तिनाशेन तद्विशिष्टचितोऽपि नाशस्य तुल्यन्यायेन दुर्वारत्वात्। अन्यथा तन्मिथ्यात्वासिद्धेः। अत एव जडत्वहेतौ तैरुक्तम् "जीवेशभेदादेरनादित्वेऽपि तदवच्छिन्ना चिदावरणभञ्जकवृत्तिविशिष्टतया गुणजन्यैव" इत्यादि।

किञ्च अज्ञानोपहितस्याज्ञानविषयत्वपक्षेऽविद्यावच्छिन्नचिद्रूपं स्फुरणमपि स्ववृत्तितावच्छेदकविनाशप्रतियोगितात्वविशिष्टं यद्विनाशप्रतियोगित्वं तदाश्रयसंविदपेक्षमेवेति भागासिद्धिः, अज्ञाननाशस्योपहितनाशत्वावश्यकत्वात्। तत्स्फुरणस्यापि शुद्धचिद्रूपत्वे मानाभावात्। अश्रितत्वेनोपहितचित्सापेक्षत्वस्यैव तत्रावश्यं वाच्यत्वात्। एतेन स्वातिरिक्तचित्प्रयुक्तस्फुरणकत्वमप्यपास्तम्।

यत्तु सापेक्षस्फुरणस्वरूपकत्वं हेतुरिति, तन्न; अनाद्यविद्यादाविव स्वस्मिन्नपि स्वसापेक्षत्वसंभवेन व्यभिचारात्। भिन्नसापेक्षेत्यभिधाने तूक्तदोषाणामवधेयत्वादित्यास्तां विस्तरः।

यत्तु स्वापरोक्षत्वस्वातिरिक्तानपेक्षत्वरूपं यत् स्वप्रकाशत्वं तद्भिन्नत्वरूपमस्वप्रकाशत्वमेव दृश्यत्वम्। अपरोक्षत्वमज्ञानसामान्यविरोधि चैतन्यम्, स्वातिरिक्तत्वं स्वविलक्षणचित्त्वम्, तेनाज्ञानविरोधित्वेन रूपेण वृत्त्यपेक्षायामपि न दोषः। शुद्धचैतन्यापरोक्षतात्वे तु स्वातिरिक्तेति न देयम्, अनपेक्षापरोक्षताकत्वस्य ब्रह्मणि सत्त्वात्। तदभिन्नत्वञ्च तदवच्छिन्नानुयोगिताकभेदप्रतियोगित्वम्, न तु तदवच्छिन्नप्रतियोगिताकभेदानुयोगित्वम्। ब्रह्म स्वप्रकाशं नेति बुद्धया स्वप्रकाशत्वावच्छिन्नप्रतियोगिताकभेदानुयोगित्वस्य ब्रह्मणि संभवेन व्यभिचारात्। अन्यानधीनापरोक्षत्वस्य ब्रह्मनिष्ठस्य ब्रह्मभिन्नत्वेऽविद्याद्यधीनत्वावश्यकत्वात्। ब्रह्मस्वरूपत्वे तु तस्य घटादिनिष्ठभेदप्रतियोगित्वेऽपि पटाद्यनिष्ठतया घटादिनिष्ठप्रतियोगितानवच्छेदकत्वात् पटादावसिद्धिप्रसंगात्। न च तथापि स्वप्रकाशं ब्रह्म नेति बुद्धया स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वं ब्रह्मण्यप्यस्त्येवेति वाच्यम्;

ईश्वरत्वादिधर्मोपहितप्रतियोगिकत्वेनैव तत्र भेदभानात् । तत्र शुद्धब्रह्मप्रतियोगिकत्वाभावात् । अभावप्रत्यक्षे प्रतियोगितावच्छेदकमिश्रितप्रतियोगिविषयकत्वानभ्युपगमात् । जीवत्वाद्युपहितब्रह्मणः शुद्धब्रह्मानुयोगिकभेदस्य च स्वप्रकाशत्वानवच्छिन्नानुयोगिताकत्वात् । न च स्वप्रकाशो न जीव इति प्रत्यक्षसिद्धभेदप्रतियोगित्वं ब्रह्मण्यपीति वाच्यम्; तादृशभेदप्रतियोगित्वस्य स्वावच्छेदकधर्मसामानाधिकरण्यनियमादुपहितस्य च शुद्धभिन्नत्वादुपहितवृत्तेः शुद्धवृत्तित्वे मानाभावाच्छुद्धे हेत्वभावादिति, तन्न; प्रत्यक्षे प्रतियोगितावच्छेदकधर्मभाननियमेऽपि स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वस्य ब्रह्मणि दुर्वारत्वात् । प्रतियोगित्वस्य प्रतियोगितावच्छेदकधर्मसामानाधिकरण्यनियमोऽपि निर्मूलः, व्यधिकरणधर्मावच्छिन्नाभावस्थले व्यभिचारात् । नापि भेदप्रतियोगित्वस्य तथा, संयोगेन गगनवान् यस्तद्भिन्नं रूपमित्यत्र व्यभिचारात् । संयोगेनाकाशस्य तत्रावृत्तित्वात् । न च संयोगावच्छिन्नप्रकारताया वृत्तित्वनैयत्यम् । भूतलीयो घट इत्यादौ व्यभिचारात् । घटात्यन्ताभाववद्भिन्न इत्यादौ च व्यभिचारस्य स्फुटत्वात् । प्रतियोगित्वस्य वृत्त्यनियामकत्वात् । अभावे घट इत्याद्यप्रत्ययात् । घटत्वात्यन्ताभावघटभेदयोः समनियतत्वेनैक्यात् । घटत्ववत्वस्यापि तत्प्रतियोगितावच्छेदकतया घटावृत्तेस्तस्य घटत्वे भेदप्रतियोगित्वसामानाधिकरण्यभावाच्च । अत एव सत्यत्वादिरूपब्रह्मणः स्वधर्मतानिर्वाहाय कल्पितभेदस्वीकारे शुद्धब्रह्म जगदुपादानमिति मते उपादानत्वान्यथानुपपत्त्या कल्पितभेदस्य च परोक्षबुद्धेयकविषयत्वेनानवच्छिन्नप्रतियोगिताकस्य प्रतियोगित्वमादाय शुद्धे व्यभिचाराद्भेदप्रतियोगित्वमात्रं न हेतुकृतमिति स्वयमेवोक्तम् । न च सति प्रतियोगितावच्छेदके तस्य प्रतियोगित्वसामानाधिकरण्यमिति वाच्यम्; अपरोक्षमात्रविषयभेदीयप्रतियोगिताया अप्यवच्छिन्नत्वे बाधकाभावात् । अन्यथा पिशाचभेदादिप्रतियोगिताया अप्यनवच्छिन्नत्वापत्तेः । एतेन स्वप्रकाशत्वविशिष्टे केवलब्रह्मरूपाभ्यां कल्पितभेदसत्त्वात् स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वं केवलब्रह्मण्यपीति व्यभिचारमाशङ्क्य यदुक्तम्, जीवत्वादिकमेव तादृशभेदप्रतियोगितावच्छेदकम्, तथा चोक्तभेदो यदि स्वप्रकाशत्वावच्छिन्नानुयोगिताकस्तदा जीवत्वाद्यवच्छिन्नप्रतियोगिताकत्वाज्जीवत्वाद्युपहितप्रतियोगिताक एव स्यान्न तु शुद्धब्रह्मप्रतियोगिकः, उक्तभेदस्य प्रत्यक्षत्वात् । तत्र च शुद्धस्य प्रतियोगित्वेनाभाननियमात् । अतः शुद्धानुयोगिकः स्वप्रकाशत्वावच्छिन्नानुयोगिताको वाच्यः । तथा च शुद्धब्रह्मण्युक्तहेतुरेव

नास्तीति, तत्सर्वं चिन्त्यम्; प्रतियोगितावच्छेदकानवगाहिभेदप्रत्यक्षस्तदभावेऽपि तत्प्रतियोगित्वस्य शुद्धे सुलभत्वादुपहितवृत्तेः शुद्धवृत्तित्वनियमस्य च भवत्संभतत्वादत्रैव तदनङ्गीकारे मूलाभावादस्य हेतोर्मिथ्यात्वासिद्धिप्रसंगाच्च। किं च स्वप्रकाशत्वं यदि शुद्धब्रह्ममात्रनिष्ठं तदा तस्य भेदानुयोगित्वमनवच्छिन्नमेव संभवति, अवच्छेदककल्पने फलाभावादिति स्वप्रकाशत्वावच्छिन्नानुयोगिताकभेदप्रतियोगित्वमप्रसिद्धम्। अथ जीवादिसाधारणं तदा तेषु भागासिद्धिः, स्ववृत्तिधर्मावच्छिन्नानुयोगिताकभेदप्रतियोगित्वस्य स्वस्मिन्नसत्त्वात्। एतेनोक्तास्वप्रकाशत्वरूपो जडस्य हेतुरपि निरस्तः, इति दिक्।

यदपि मूलाज्ञानविषयत्वावच्छिन्नप्रतियोगिताकः एकाज्ञानपक्षे तु चिन्मात्रविषयकधीविषयत्वावच्छिन्नप्रतियोगिताको भेदो हेतुरिति, तदपि न; स्वरूपासिद्धत्वादज्ञानोपहितस्याज्ञानविषयत्वे भागासिद्धेश्च। शुद्धचितोऽविषयत्वे द्वितीयस्याप्यसिद्धेः। उपहितस्य वेदान्तजन्याखण्डवृत्तिविषयत्वेऽपि ज्ञानस्याज्ञानस्वेतरतत्कार्योभयनाशत्वमते भुज्यमानादृष्टाभावकालीनज्ञानकाले स्वभिन्नोपाध्यसंभवात्। शब्दवृत्तेरेवोपाधित्वेन वाच्यत्वात्। उपहितविषयत्वे चोपाधेर्विषयत्वध्रौव्ये चिन्मात्रविषयकधियोऽप्रसिद्धेः। भुज्यमानादृष्टकालीनज्ञानेऽप्युपाधित्वाविशेषेण विनिगमकाभावेन तस्या अप्युपाधित्वोपपत्तेः। ज्ञानमेव ध्वंस इतिमतेऽप्यज्ञानस्योपाधित्वासंभवेन तत्कार्यस्य चैकजातीयस्यासार्वत्रिकतयाखण्डाकारवृत्तित्वेन तस्या एव सर्वत्रोपाधित्वस्य युक्तत्वात्। न च शब्दानुपस्थितस्य कथं शाब्दविषयत्वम्? अगत्या शाब्दस्य स्वाभिन्नशब्दानुपस्थिताविषयकत्वनियमस्य वाच्यत्वात्। न चैवमज्ञानतत्कार्यविषयकत्वेन तस्याः अज्ञाननिर्वतकत्वानुपपत्तिः, अज्ञानवृत्त्यन्यतत्कार्याविषयकज्ञानत्वेन निवर्तकत्वसंभवाद्गौरवस्य प्रामाणिकत्वात्।

यत्तु शाब्दविषयत्वानापन्नाया एव वृत्तेरुपधायकत्वम्, तदुक्तं **कल्पतरुकृद्भिः** "शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुच्यते, स्वस्याप्युपाधित्वाविशेषात्। एवं च वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न भाष्यतया विषयकोटिप्रवेशेन" इति। ततश्चाज्ञानोपहितस्य साक्षित्वेऽपि जडत्वेनाज्ञानस्य साक्षिकोटावप्रवेशवत्। वृत्त्युपहितस्य विषयत्वेऽपि स्वविषयत्वानुपपत्त्या वृत्तेर्न विषयकोटौ प्रवेशः, किन्तु स्वयमविषय एवाविषयाच्छब्दात्स्वविषयं विद्यमाना सती व्यावर्त्तयति। तथा च ब्रह्मान्वितं स्वविषयत्वं प्रत्यनन्वितत्वे विद्यमानत्वे च सति व्यावर्त्तकत्वाद् वृत्तेः स्वविषयतां प्रत्युपाधित्वं दण्डत्व-

स्येव घटकारणत्वे यदनन्वितत्वे सति यद्विशिष्टस्येतरस्माद्व्यावर्तकं यद् विद्यमानं तत्र तदुपाधिरिति लक्षणात्'' इति, तच्चिन्त्यम्; स्वविषयत्वं प्रयुक्तरीत्या वृत्तेरुपाधित्वोपपादनेऽपि विषयीभूतब्रह्मनिष्ठोपहितत्वनिरूपकयोपाधेरनिर्वाहात्। अन्यदीयोपाधिनाप्यन्यस्योपहितत्वोक्तौ च दण्डत्वेन चक्रत्वादेरप्युपहितत्वापत्तेः।

अथ स्वविषयत्वं प्रति ब्रह्मण एवोपाधिर्वृत्तिः यथा घटकारणत्वं प्रति दण्डस्य दण्डत्वमिति चेत्, सत्यम्; तर्हि यथा घटकारणत्वविशिष्टस्य दण्डस्य दण्डभिन्नाद् व्यावर्तकं दण्डत्वं समवायेन दण्डवृत्तिसंबन्धं विना व्यावर्त्तकायोगात्। तथैव स्वविषयत्वविशिष्टस्य ब्रह्मणः शुद्धाद्व्यावर्त्तिका वृत्तिर्ब्रह्मसंबद्धा वाच्या। न च विषयतासंबन्धेन सा ब्रह्मवृत्तिरिति वाच्यम्; यन्निरूपितमुपधेयत्वं तद्भिन्नस्यैव व्यावर्तकतावच्छेदकसंबन्धस्यापेक्षितत्वात् ब्रह्मण उपहितत्वसिद्धौ वृत्तेस्तद्विषयत्वम्, तद्विषयतया च वृत्तेस्तदुपधायकत्वमित्यन्योन्याश्रयात्। अथ तद्विषयकवृत्त्युत्पत्तौ ब्रह्मणः उपहितत्वं नापेक्ष्यते, अन्यथावृत्तेः स्वविषयकत्वाभ्युपगमेऽप्यनिस्तारात्। निर्विषयतावृत्तेरनुत्पत्तेः स्वोपधानस्य च स्वोत्पत्त्यनन्तरकालीनत्वात्। किन्तु यदा ब्रह्मविषयकवृत्त्युत्पत्तिस्तदा वस्तुतो ब्रह्मण उपहितत्वमात्रमपेक्ष्यम्। तच्च स्वरूपसत्यैव वृत्त्या निर्वहतीति चेत्, तर्हि; वृत्त्युत्पत्तिकाले तस्याः कथं तदुपधायकत्वं, उपाध्युपधानयोस्तुल्यकालत्वायोगात्। अथोत्पत्तिक्षणे तदनुपपत्तावपि द्वितीयक्षणे तदस्तु, यदोक्तवृत्तिस्थितिस्तदा ब्रह्मण उपहितत्वमित्येव वाच्यमिति चेत्; तर्हि उत्पत्तिक्षणे वृत्तिर्निर्विषया[सविषया]वा? नाद्यः, स्वभावविरोधात्। नान्त्यः, तत्र हि शुद्धब्रह्मविषया वा, उपहितब्रह्मविषया वा? नाद्यः, क्षणभेदेन ज्ञानस्य विषयभेदानुपपत्तेः, शुद्धस्य विषयत्वापत्तेश्च। नान्त्यः, दोषस्य प्रागेवोक्तत्वात्।

नन्वेवं पक्षद्वयेऽप्यनुपपत्तिः स्यादिति चेत्; अस्तु अत्यन्तमेवास्माकमिष्टसिद्धेः। भवदाशङ्कानुसारेणैव स्वविषयत्वपक्षस्योद्भावितत्वात्। अथैवं शुद्धस्य विषयत्वपर्यवसाने उक्तहेतौ व्यभिचारो नायातीति चेत्, सत्यम्; चिद्भेदस्यैव हेतुत्वसंभवेन व्यर्थविशेषणतया व्याप्यत्वासिद्धेर्दोषवत्संभवात्। तस्यैव हेतूकरणे तु वक्ष्यमाणजडत्वहेतावेवान्तर्भावापत्तेः। तत्र च दोषाणां वक्ष्यमाणत्वादिति दिक्।

**वेदाविरुद्धयुक्तीकामर्के तर्ककुतूहले।**
**दोषश्चेतोहरो हेतोर्दृश्यत्वस्य विमृश्यताम्॥ १७॥**

# अष्टादशोंऽशः

नाप्यज्ञानत्वरूपं जडत्वं हेतुः, ज्ञानभिन्नत्वस्य ब्रह्मणि व्यभिचारात्। न च ब्रह्मणो ज्ञानस्वरूपत्वम्, अर्थोपलक्षितप्रकाशस्यैव ज्ञानपदार्थत्वाच्छुद्धचिद्व्यक्तौ निरवच्छिन्नाया एव ज्ञानपदशक्यतायाः स्वीकारादिति वाच्यम्; "द्रष्टुर्दृष्टेः" इति **बृहदारण्यक**व्याख्यानसमये प्रथमपरिच्छेद एवैतदर्थविच्छेदस्य कृतत्वात्। अन्यथा निःप्रतियोगिकाभावस्येव निर्विषयकज्ञानस्यालीकत्वान्मोक्षे निर्विषयकज्ञानरूपस्यात्मनोऽनुपपत्तेः।

यत्तु किमिदं सज्ञेयत्वम्, ज्ञेयजन्यत्वं ज्ञेयव्याप्यत्वं वा? नाद्यः, परोक्षज्ञाने ईश्वरज्ञाने वाभावात्। नान्त्यः, यदा ज्ञानं तदार्थ इति कालिकव्याप्तावुक्तरीत्या व्यभिचारात्। यत्र ज्ञानं तत्रार्थ इति दैशिकव्याप्तेः शङ्कितुमप्यशक्यत्वात्। परमते ज्ञानस्यात्मनिष्ठत्वात्, अस्मन्मते चान्तःकरणनिष्ठत्वात्। तत्र च साक्षाद्घटादिविषयाणामभावात्। न च यदा अपरोक्षज्ञानं तदाऽर्थ इति व्याप्तिः। आत्मा च "यत्साक्षादपरोक्षात्" इति श्रुत्या तादृशज्ञानरूप एव त्वया वाच्य इति वाच्यम्; ईश्वरयोगिज्ञानयोर्व्यभिचारात्। यदा यदर्थेन्द्रिययोर्लौकिकसन्निकर्षजन्यं ज्ञानं तदा तदर्थ इति व्याप्तेश्चास्माकमपीष्टत्वात्। आत्मरूपज्ञानस्येन्द्रियादिजन्यत्वाभावादिति, तदसत्; यत्र ज्ञानत्वं तत्र सविषयकत्वमिति व्याप्तेः। सविषयकत्वं च विषयतासबन्धेन विषयसाधारणम्। एवं चेश्वरज्ञानादावपि न व्यभिचारः, उक्त निरूप्यत्वस्य तत्र सत्त्वात्।

यत्तु ज्ञानस्य विषयसंबन्धो न तात्त्विकः, वक्ष्यमाणरीत्या तात्त्विकस्य विषयतासंबन्धस्य निरूपयितुमशक्यत्वात्। किन्त्वाध्यासिकः। अतो न तस्य स्वाभाविकत्वमिति, तन्न; स हि प्रपञ्चमिथ्यात्वसिद्ध्या वा न तात्त्विकः, निरूपयितुमशक्यतया वा? नाद्यः, इदानीं मिथ्यात्वासिद्धेस्तदनुमानहेतोरेव निरूप्यमाणत्वात्। नान्त्यः, निर्वक्तुमसामर्थ्ये गुरव उपास्यन्तां येभ्यो निरुक्तिवचनानि शिक्ष्यन्त इत्येतत् **पूर्वाचार्यै**रुक्तोत्तरत्वात्। अविद्यायाश्च निरस्यत्वात्।

यदपि ज्ञाने विषयसंबन्धः स्वाभाविकः, एवमिच्छायामप्युपाध्यनुल्लेखेऽपि घटमिच्छामीत्यनुभवादित्यत्र दूषणमुक्तम् "प्रकारतयाज्ञानरूपोपाधि-

संबन्धानुल्लेखेऽपि संबन्धतया तदुल्लेखानपायाद्"इति, तदपि न; संबन्धतया ज्ञानस्यैव भानमित्यत्र बीजाभावात्। अन्ये तु "व्यक्तिं विना प्रलये जातिसत्त्वेऽपि व्यक्त्युपरक्तधीविषयत्वमन्यदास्त्येवेति जातौ व्यक्त्यनुपरक्तबुद्ध्यविषयत्वस्य वा ज्ञाने नियमः" इति वदन्ति, अत्राहुः–नैतद् युक्तम्; व्यक्त्यविषयकजात्याद्यनुमितिसंभवाद् ध्वंसो घटत्वाद्यप्रतियोगिक इत्यनुमित्यादेः सर्वसम्मतत्वादाद्यनियमे व्यभिचारात्। घटाद्यविषयकघटत्वादिभ्रमे दोषविद्दोषजन्यतया शङ्खः पीत इत्यादि यल्लौकिकप्रत्यक्षे द्वितीयेऽपि व्यभिचारात्। साक्षात्करोमीत्यनुव्यवसायानुरोधेन लौकिकसन्निकर्षस्येव दोषविशेषस्यापि तादृशविषयतानियामकत्वोपगमात्, कालिकसंबन्धेन पटे घटत्वप्रत्यक्षं भवत्वितीच्छाजन्ये वह्न्यनुमित्यादिसामग्रीकालीने घटाविषयके घटत्वप्रत्यक्षे व्यभिचाराच्च। तत्रेच्छानुरोधेन घटत्वादिभानेऽपि भिन्नविषयकानुमितिसामग्र्या प्रतिबन्धेन घटाभानात्। घटत्वे लौकिकसन्निकर्षसत्त्वेन तस्य लौकिकप्रत्यक्षत्वसंभवात्। समवायेन जातिप्रत्यक्षप्रमाया व्यक्तिविषयकत्वनियमे च ज्ञानविषयोभयवैशिष्ट्यावगाहिज्ञानस्य विषयविषयकत्वनियमस्य युक्तत्वादित्यादि, तत्रेदं चिन्त्यम्; घटत्वप्रतियोगिकत्वाभावानुमितौ न व्यभिचारः, समवायातिरिक्तसंबन्धावच्छिन्नजातिप्रकारताया निरवच्छिन्नाया अनभ्युपगमात्। घटेतरावृत्तित्वादिघटितघटत्वेने घटत्वस्य प्रकारतायाः प्रतियोगित्वोपर्यवश्यवाच्यतया व्यक्तिविषयकत्वसंभवात्। व्यक्तिविशेष्यकत्वपर्यन्तस्य व्याप्तावनिवेशात्। घटाद्यविषयकघटत्वादिभ्रमेऽपि घटस्य विशेष्यत्वविरहेऽपि व्यक्त्यन्तरविशेषणत्वेन तद्भानात्। न च समवायेनेव स्वाश्रयतादात्म्यसंबन्धेनापि जातिप्रकारताया निरवच्छिन्नत्वोपगमात्। घटत्वस्य संसर्गारोपे निरवच्छिन्नप्रकारतयैव व्यक्त्यन्तरे भानात्तत्र घटत्वत्त्वोपस्थितौ मानाभावात् कथं घटविषयकत्वनियम इति वाच्यम्; व्यक्तिमात्रविषयकत्वनियमस्य तथापि भङ्गाभावात्। स्वसमवायिव्यक्त्यन्तर्भावेन व्याप्तेरकल्पनात्। घटत्वमुख्यविशेष्यकसाक्षात्कारिभ्रमस्य संभवात् संयुक्तसमवायप्रत्यासत्तिं विना तत्प्रत्यक्षायोगात्। अन्यथा तु विशेष्यभानसामग्र्यन्तर्गतत्वेन तदभावेऽपि ज्ञानसन्निकर्षेण तद्धीसंभवात्। अभेदारोपस्थले च घटत्वस्य घटनिष्ठतयैव भानात्। एवं कालिकसंबन्धेनेत्यादिकमपि तथैव, कालिकसंबन्धेन घटत्वप्रकारकपटविशेष्यकप्रत्यक्षस्य घटत्वांशेऽन्याप्रकारकस्यासंभवाद्घटत्वत्वेन तत्रापि घटत्वभानस्यावश्यकत्वात्। अत एव कालो रजतत्ववानिति रजतत्वांशेऽन्यप्रकारक एव प्रत्ययो न तु कालो रजतमिति रजतत्वांशे

निरवच्छिन्नप्रकारताकः । तथा कालो रजतत्ववानित्येव शब्दः साधुः । न तु कालो रजतमित्यपि । तच्छक्तौ समवायस्यैव संसर्गताघटकत्वनियमादिति सिद्धान्तः । न च भिन्नविषयकानुमितिसामग्रीसत्त्वे इच्छाविषयातिरिक्तस्य कथं भानमिति वाच्यम् ; यावता विना तदिच्छाविषयसिद्धेरनिर्वाहस्तावतो मानाभ्युपगमात् । भिन्ने विषयकानुमितिसामग्रीकालीने वह्निप्रकारकप्रत्यक्ष जायतामितीच्छाधीनप्रत्यक्षे वह्नित्वादेरपि विषयत्वात् । ज्ञानविषयोभय-वैशिष्ट्यावगाहिज्ञानस्य विषयविषयकत्वनियमस्तु नैयायिकेन कल्प्यः, अनुव्यवसायमात्रवृत्तित्वात् । व्यवसाये विशेष्ये प्रकारवैशिष्ट्यभानेऽपि ज्ञान-निष्ठविषयवैशिष्ट्यस्यानवभासात्स्वतोग्राह्यत्वानभ्युपगमात् । स्वतः प्रामा-ण्यविप्रतिपत्तौ तु ज्ञानादिपदे बाधवारणाय तथोक्तत्वात् ।

प्रकृतमनुसरामः । शुद्धचिद्व्यक्तिभेदस्य हेतुत्वे स्वकीयविशिष्टरूपे कल्पित-तादात्म्यसत्त्वेऽपि शुद्धरूपे तदभावेन तद्भेदस्य तन्मते सत्वाद् व्यभिचारः । न च परार्थानुमानतया परसिद्धेन शुद्धव्यक्तौ तद्व्यक्तेरैक्यसंबन्धेन तद्व्यक्ति-विशिष्टप्रतियोगिकभेदस्य हेतुत्वमिति वाच्यम् ; परेण शुद्धचिद्व्यक्त्यनङ्गी-कारेण प्रतियोग्यप्रसिद्धेः । प्रसाध्याङ्गकत्वाभिप्रायेणैवास्य हेतोः प्रवृत्त्या स्वरीत्यैव निर्दोषीकर्त्तुमुचितत्वात् ।

न च शुद्धब्रह्मनिष्ठाया ज्ञातपदजन्यधीविशेष्यताव्यक्तिस्तदवच्छिन्न-प्रतियोगिताकभेदो हेतुः, तेन घटादेरपि लक्षणया तद्धीविशेष्यत्वेऽपि नासिद्धिः, ब्रह्मविषयकत्वेनैवावच्छेदकत्वनिवेशात् । न वा गुरोरनवच्छेदक-त्वपक्षेऽपि क्षतिः, ज्ञानपदं जन्यधीविशेष्यत्वस्य प्रतियोगितावच्छेदकानङ्गी-कारेण शुद्धचिन्निष्ठभेदप्रतियोगितायां विशेष्यताविशेषव्यक्तेरनवच्छेदकसंबन्ध-तयैव निवेशादिति वाच्यम् ; शुद्धस्याविषयत्वमते प्रतियोगितावच्छेदक-संबन्धस्याप्रसिद्धेः ।

अथ सत्यत्वादिरूपस्वधर्मतानिर्वाहकभेदस्य शुद्धब्रह्मणि स्वीकारमतेऽपि तस्याप्रत्यक्षतया तत्प्रतियोगिताया निरवच्छिन्नत्वात्तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकभेदस्य तद्व्यक्तावस्वीकारान्न दोष इति चेत्, न; अप्रत्यक्ष-भेदप्रतियोगिताया अप्यवच्छिन्नत्वे बाधकाभावात् । अन्यथा पिशाचवद्भेदा-दिप्रतियोगितायाः पिशाचाद्यनवच्छिन्नत्वप्रसंगात् । प्रतियोगितावच्छेदकान-वगाहिभेदप्रत्यक्षमात्रस्य परमताङ्गीकारात् । भेदप्रत्यक्षेऽधिकण
नियामकत्वेन ब्रह्मणि इदानीमावृतत्वेन तद्भेदस्याप्रत्यक्षत्वेऽपि जीवन्मुक्ति-

दशायां तत्प्रत्यक्षेण तत्प्रतियोगिताया अवच्छिन्नत्वध्रौव्यमिति स्वयमेव वक्ष्यमाणत्वाच्च ।

अथ तद्व्यक्तिवृत्तिभेदभिन्नभेदो हेतुरिति चेत्, न; तद्भेदेऽपि तद्व्यक्तिवृत्तिभेदघटोभयभेदसत्त्वात् । न च तद्व्यक्तिवृत्तिभेदत्वावच्छिन्नप्रतियोगिताकभेदाश्रयभेदो हेतुरिति वाच्यम्; घटादिभेदस्यापि ब्रह्मवृत्तितयोक्तभेदाप्रसिद्ध्या घटादावसिद्धिप्रसंगात् । न च विशेषणतयोक्तभेदो हेतुर्न तु प्रतियोगितयेति न दोष इति वाच्यम्; तथापि शुद्धचिद्व्यक्तिभेदस्य तद्व्यक्तिवृत्तितया घटादिवृत्तितद्भेदस्यापि तद्व्यक्तिवृत्तिभेदभिन्नत्वाभावादसिद्धितादवस्थ्यात् । एतेन स्वप्रतियोगिकवृत्तिभिन्नशुद्धब्रह्मप्रतियोगिकभेदो हेतुरपि निरस्तः । न चोक्तवृत्तित्वविशिष्टत्वं घटादिवृत्तिशुद्धचिद्भेदे नास्तीति वाच्यम्; तथापि हि उक्तभेदः पक्षान्तर्गतो न वा? नान्त्यः, तस्यामिथ्यात्वासिद्धिप्रसंगात् । नाद्यः, तत्रभागासिद्धेः ।

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले ।**
**जडत्वहेतावन्येषां जडत्वं विशदीकृतम् ॥१८॥**

---

# एकोनविंशोऽशः

विशेषणत्वसंबन्धेन शुद्धचिद्वृत्तिमति शुद्धचिद्भेदे शुद्धचिद्वृत्तिभिन्नत्वस्य तत्संबन्धेन विरहात्परिच्छिन्नत्वमपि हेतुः । तद्धि देशतः कालतो वस्तुतश्च त्रेधा, क्रमेणात्यन्ताभावध्वंसान्योन्याभावप्रतियोगित्वभेदात् । तत्राद्यान्त्ययोरात्मनि व्यभिचारः । मध्यस्य त्वाकाशादावसिद्धिः ।"आकाशःसम्भूतः, अतोऽन्यदार्त्तम्" इत्यादिश्रुतीनां आकाशादेर्जन्यत्वबोधकतायाः प्रबन्धेन निराकृतत्वात् । तेन जन्यमात्रस्याविद्योपादानकत्वात्तन्नाशनाश्यत्वादविद्यासंबन्धादेरप्यज्ञानप्रयुक्तत्वेनाज्ञाननाशकनाश्यत्वात् । शुक्त्यज्ञानसंबन्धादौ क्लृप्तत्वादेकाज्ञानपक्षे तस्याक्लृप्तत्वेऽपि "विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतेर्लाघवादनात्मत्वावच्छेदेनैवात्मज्ञानविरोधित्वकल्पनादनात्ममात्रं विनाशि । अविद्यानाशस्यैवानात्ममात्रनाशत्वकल्पनान्नाकाशादिनाशव्यक्तिकल्पनागौरवमित्यादि निरस्तम् । बाधकसत्त्वेऽपि लाघवमात्रानुरोधेनोक्तार्थकल्पने वस्तुत्वस्यैव नाश्यतावच्छेदकत्वकल्पनापत्त्या शून्यवादप्रसंगात् ।

अथात्यन्ताभावान्योन्याभावयोः स्वसमानसत्ताकत्वविशेषणान्नात्मनि व्यभिचारः । यत्र हेतुः स्थाप्यः स स्वपदार्थः, तथात्मात्यन्ताभावयोर्विषमसत्ताकत्वान्न व्यभिचारः, अज्ञानाकाशादौ चात्यन्ताभावसमानसत्ताकत्वान्नासिद्धिः । न च व्यावहारिकप्रतियोगिकाभावस्य पारमार्थिकपक्षेऽसिद्धिः, स्वान्यूनसत्ताकेति वाच्यत्वात् । अत एव प्रातिभासिकस्य शुक्तिरूप्यादेर्व्यावहारिकात्यन्ताभावप्रतियोगित्वेऽपि न क्षतिः । न च स्वत्वानुगमः, प्राचीननये तस्यादोषत्वादात्मावृत्तिप्रतियोगितायाः हेतुतावच्छेदकसंबन्धत्वाद्वेति चेत्, मैवम् ; सत्ताभेदस्य मिथ्यात्वसिद्ध्युत्तरकल्प्यतया तस्य हेतुघटकत्वानुपपत्तेः, आकाशाद्यत्यन्ताभावयोरात्मावृत्तिप्रतियोगितायाः संबन्धत्वे मानाभावाच्च । जीवादौ भागासिद्धिप्रसङ्गाच्च । केवलान्वय्यत्यन्ताभावे भागासिद्ध्यावश्यकत्वाच्च । प्रमेये भागासिद्धेश्च । न च प्रमेयस्य घटादिरूपतया तत्र प्रत्येकरूपावच्छेदेन प्रतियोगितयाभेदसत्त्वान्न दोष इति वाच्यम् ; येन रूपेण हेतुस्तेन रूपेण मिथ्यात्वसिद्धावपि प्रमेयरूपेण तदसिद्धेः । न च रूपेण मिथ्यात्वसिद्धौ रूपान्तरेणापि तत्सिद्धिरिति वाच्यम् ; उपहितरूपेण ब्रह्मणो मिथ्या-

त्वसिद्ध्या शुद्धस्यापि तदापत्तेः। प्रमेयस्य घटादिस्वरूपान्यरूपत्वाभावाद्वै-षम्यमिति चेत्, न; ब्रह्मण्यपि तुल्यत्वादित्यादेः पूर्वमेवोक्तत्वात्।

यत्तु **आनन्दबोधाचार्याः**—"घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वाद्,यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते, एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते सन्घटः सन्पट इत्यादि। यच्च व्याचक्षते "स्वानुगतप्रतिभासे स्वतादात्म्येन स्वरूपतो भानयोग्ये स्वतादा-त्म्यविषयतानिरूपितानवच्छिन्नप्रकारतावतीति यावत्। सप्तम्या व्यापकत्व-मर्थो व्यापकतानिरूपकत्वं तादात्म्येन। तथा च यदुक्तप्रकारतावत्तत्रकल्पि-तमिति व्यापकता लभ्यते। कल्पितत्वं ज्ञाननिवर्त्यत्वम्। तादृशप्रकारता-व्यापकस्वनिवर्तकधीविषयताकत्वं साध्यमुक्तप्रकारतायाः सामानाधिकरण्य-मात्रनिवेशे घटस्य स्वतादात्म्यभ्रमविषयघटत्वादौ कल्पितत्वमादाय परैरर्था-न्तरं वाच्यमतस्तद्व्यापकत्वनिवेशः। तादृशप्रकारतावति द्रव्यगुणकर्मादौ स्वनिवर्तकधीविषयत्वाभावादनवच्छिन्नेति। द्रव्यगुणादौ च नानवच्छिन्नप्र-कारत्वम्। प्रतियोगिताविषयतादेरखण्डत्वस्वीकारे तादृशप्रकारतावति तत्र घटादेः स्वनिर्वतकधीविषयत्वाभावान्निरूपितान्तस्थले स्वतादात्म्यसमानाधि-करणेति वाच्यम्। यथा सन्निवेशे व्यापकत्वं न व्यर्थम्। सामानाधिकरण्यं वा तत्स्थाने निवेश्यम। प्रतियोगित्वादेरपि धर्मत्वाद् घटादौ तादात्म्यस्वीकारे तु वक्ष्यमाणरीत्या सामान्यवत्तस्य ब्रह्मरूपत्वाद् घटादिनिवर्तकधीविषयत्वान्न व्यभिचारात् इति निरूपितान्तमपि निर्दोषम्। तच्च यथोक्तरूपेण साम्यसि-द्ध्यर्थं प्रकारताविशेषणम्"इत्यादि, तत्रेदं वाच्यम्;ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं निरस्तमेव। सन्घट इत्यादौ समवायेन सत्ताया एव भानमित्यस्य व्यवस्थापित-तया घटत्वावच्छिन्नघटनिष्ठविशेष्यतानिरूपितसमवायनिष्ठसंसर्गतानिरूपिता-नवच्छिन्नप्रकारताया एव सत्तायां सत्त्वात्। घटतादात्म्यविषयतानिरूपिता-नवच्छिन्नप्रकारतायाः सद्रूपे सत्त्वेऽपि न किंचिद्वीजम्; सत्त्वरूपप्रतियोगिक-तादात्म्यस्यैव सत्तास्वरूपसंबन्धेन सदाकारधीविषय इति भवदुक्तपक्षे यथोक्त-प्रकारतायाः दुर्लभत्वाच्च। द्रव्यगुणादीनामपि घटतादात्म्यविषयतानिरू-पितप्रकारतावत्त्वं निरस्तमेव। घटनिष्ठविशेष्यतानिरूपितसमवायसंसर्गतानि-रूपितप्रकारतायास्तादृशाभेदसंसर्गतानिरूपिताश्रयनिष्ठविषयतानिरूपितप्रका-रताया वा गुणादौ स्वीकारात्। प्रतियोगितेत्यादिकमपि न युक्तम्, अखण्ड-त्वेऽपि सांसर्गिकविषयतास्थल एव तेषां स्वरूपेण भानोपगमात्। प्रकारता-स्थले प्रतियोगितात्वादिरूपेणैव भानोपगमात्, घटत्ववानित्यादौ घटत्वत्वेन

घटत्वादिभानवत् । "धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यत्र वह्नित्वेन वह्नित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वविशिष्टाभावो बुध्यते" इति **दीधितिस्वारस्याच्च** । गोत्वादिसामान्यवत्तस्यापि ब्रह्मस्वरूपत्वमिति तु निराकर्तव्यम् । एतेन घटादिकं सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् । "प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवद्"इति **ब्रह्मसिद्धिकारोक्तम्** । स्वतादात्म्याविषयकप्रतीतिविषयत्वं हेत्वर्थः । यद्यतादात्म्याविषयकप्रतीतिविषयस्तत्तन्न कल्पितमिति सामान्यतो व्याप्तिरत एव दृष्टान्ते चन्द्रानुविद्धेत्युक्ते चन्द्रानुविद्धधीविषये इति तदर्थः । कल्पितत्वं स्वाभाववति प्रतीयमानत्वम् । स्वत्वव्यापकस्वात्यन्ताभावकत्वमिति यावत् । स्वानधिकरणकपालादिरूपसद्रत्यन्ताभावप्रतियोगित्वमादाय पटादौपरेषामर्थान्तरवारणाय व्यापकत्वनिवेशः" इति तदाशयवर्णनञ्च निरस्तम्, हेतोरसिद्धत्वात् द्वितीयमिथ्यात्वोक्तरीत्या सिद्धसाधनादेर्दुर्वारत्वाच्च । खण्डोगौर्मुण्डो गौरित्यादिज्ञानानुगते गोत्वादौ व्यक्त्यादेरकल्पितत्वेन व्यभिचाराच्च ।

यत्तु गोत्वादिसामान्ये मानाभावः, सत्सामान्येनैव तत्कार्यनिर्वाहात् । तथाहि यथा गोत्वाद्यभ्युपगमेऽपि तद्व्यञ्जकतावच्छेदकसामान्यान्तरानभ्युपगमाज्जातिवृत्तिलौकिकविषयतया, लौकिकप्रत्यक्षं प्रति स्वविषयसमवेतत्वसंबन्धेन प्रत्यक्षस्य हेतुतया, प्रत्यक्षविषयव्यक्तीनां गोत्वाद्यविशेषितानामेव सम्बन्धविधया जातिप्रत्यक्षोत्पत्तिप्रयोजकत्वरूपं व्यञ्जकत्वं, शास्त्राद्यवच्छिन्नसन्निकर्षादेर्गोत्वादिव्यञ्जकत्वेऽपि सास्नाद्यवच्छिन्नसन्निकर्षाश्रयतया व्यक्तीनां व्यञ्जकत्वं, तथा गोत्वादिनाभिमतव्यक्तीनामन्यतमनिष्ठतादात्म्यनिष्ठवैशिष्टयेन सत्सामान्यस्यैव गोत्वादिप्रयोज्यत्वाभिमतकार्यप्रयोजकत्वमुपपन्नम् । न च संबन्धाननुगमः, स्वरूपसंबन्धेन कारणत्वादिस्थले तस्यादोषत्वोपगमादन्यतमत्वेनानुगमसंभवाच्च । न च तादात्म्यानामनन्तत्वात् तद्घटितान्यतमत्वनिवेशे गौरवम्, तावदन्यतमव्यक्तेः स्वरूपत एव निवेशादनुगतरूपान्तरसत्त्व एव तेन रूपेणान्यथासिद्धिस्वीकारात् । अत एव स्वरूपसंबन्धेनाभावादेः कारणत्वादिस्थले तावत्स्वरूपान्यतमत्वमेव स्वरूपतोऽवच्छेदकमन्यथाननुगतसंबन्धे कारणत्वादेर्दुर्वचत्वात् । एवञ्च तादृशान्यतमसंबन्धेन सद्रूपमेव गौरित्यादिव्यवहारविषयः । गोत्वाद्यवच्छिन्नत्वेनाभिमतकारणत्वादिकमुक्तसंबन्धेन सद्रूपेणैवावच्छेद्यते । न च गोव्यक्तीनामन्यतमत्वेनापि कारणत्वादिसंभवात्सत्तामात्रमेव तत्कथमिति वाच्यम्;

गोत्वाद्यभ्युपगमेऽपि तादृशविनिगमनाविरहात्तेन रूपेणान्यथा सिद्धेरुभाभ्यां स्वीकार्यत्वादिति,

अत्रेदं वाच्यम्; गौरित्यत्र सद्रूपस्य विषयत्वे गौः सन्निति प्रत्ययो न स्यात्, संबन्धनिरूपितयोः प्रतियोगित्वानुयोगित्वयोरेकरूपावच्छेद्यत्वस्य भवतानभ्युपगमात्, अन्यथा सत्सदिति प्रत्ययापत्तेः। न चेष्टापत्तिः, स्वयमेव तदभावस्याभ्युपगतत्वात्। न चोक्तान्यतमसंबन्धेन सद्रूपस्य गौरित्यत्र विषयत्वात् सन्नित्यंशे च तादात्म्येन विषयत्वान्न दोष इति वाच्यम्; व्यक्त्युपरि सद्रूपस्यान्यतमसंबन्धेन भानेऽपि सद्रूपव्यक्तिनिरूपितसद्रूपप्रकारतायास्तादात्म्यस्यैव संसर्गतया दोषस्य दुर्वारत्वात्। न च विशेष्यताया सद्रूपं गोत्वरूपेण भासते। प्रकारतायां त्वनवच्छिन्नतयैवेति न दोष इति वाच्यम्; गोत्वस्य स्वरूपतो भानाभ्युपगमावश्यकत्वे गोत्वस्य सद्रूपत्वकल्पने बीजाभावात्। एकस्यैव वस्तुनः प्रकारत्वमनवच्छिन्नं विशेष्यत्वं त्ववच्छिन्नमिति वैषम्यस्य च निर्बीजत्वात्। अन्यथा सत्सदित्यत्रापि विशेष्यताया अवच्छिन्नत्वस्य दुर्वारत्वापत्तेः। स्वतादात्म्यविषयतानिरूपितानवच्छिन्नप्रकारताशालिनि सद्रूपे स्वनिवर्तकधीविषयत्वाभावेन यदुक्तप्रकारतावत्स्वनिवर्तकधीविषय इति व्यापकत्वभावेन तद्गर्भसाध्यस्यानुपपत्तेश्च। मया तु गोत्वस्य स्वरूपतो भानस्यानुभवसिद्धतया तत्प्रकारताया निरवच्छिन्नत्वस्वीकारात्। गोत्वेनानुभवानङ्गीकारे च लोकबाह्यत्वापत्तेः। एवं गोनिष्ठकारणतायां सद्रूपस्यावच्छेदकत्वमप्यनुपपन्नम्, अवच्छेद्यानाश्रयसाधारण्यात्। अकारणव्यावृत्तस्यैव धर्मस्य कारणतावच्छेदकत्वात्।

अथोक्तसंबन्धेन सद्रूपमप्यकारणव्यावृतमेव कारणतावच्छेदकसंबन्धेनैवाकारणव्यावृत्तत्वस्यावच्छेदकत्वोपयोगित्वात्। अन्यथा कालिकादिनातिप्रसक्ततया गोत्वादिकमप्यवच्छेदकं न स्यादिति चेत्, न; कारणतावच्छेदकसंबन्धेनानतिप्रसक्तत्वस्येव वस्तुतोऽवच्छेदकधर्मवृत्तिधर्मेणाप्यनतिप्रसक्तत्वस्यापेक्षितत्वात्। गवेतरासमवेतत्वादिरूपगोत्वत्वेन गोत्वस्य स्वरूपतोऽप्यनतिप्रसक्तत्वात्। कारणत्वमिव तदवच्छेदकत्वमप्यवच्छिन्नं नाङ्गीक्रियत इति त्वन्यदेतत्। अन्यथा गोत्वादिसत्त्वेऽपि तावत्न्यतमव्यक्तिमात्रवृत्तित्वसंबन्धेन द्रव्यत्वस्य कारणतावच्छेदकत्वमादाय विनिगमनाविरहापत्तेः। तदपेक्षया समवायस्यावच्छेदकतायां लाघवस्येवात्रापि कारणतावच्छेदकसंबन्धलाघवस्य गोत्वमेवावच्छेदकं न तु सद्रूपमित्यत्र कल्पकताया युक्तत्वात्। अन्यथा तावद्व्यक्तिवृत्तिभेदव्यतिरेकावच्छेदकत्वसंभवाज्जितं बाह्यैः।

यत्तु तेन रूपेणान्यथासिद्धेरुभयसिद्धत्वादिति, तन्न; मन्मते क्लृप्तमादाय कल्प्यस्य विनिगमनाविरहासंभवात्, भवन्मते तूभयोः क्लृप्तत्वेन तद्रूपेणैवान्यथासिद्धौ बीजाभावात्। कारणताया अन्वयादिग्राह्यतया गोत्वाद्यवच्छेदेनैव ग्रहणाच्च। अन्वयव्यतिरेकिस्तोमघटकावयवेषु सद्रूपस्यागृह्यमाणतया गोत्वादिनैव गृह्यमाणेन तथात्वात्। अत एव दण्डत्वं पटत्वावच्छिन्नकार्यतानिरूपितकारणतानवच्छेदकमिति व्यवहारः। दण्डत्वस्य कालिकादिनातिप्रसंगेऽपि दण्डत्वं घटत्वावच्छिन्नकार्यतानिरूपितकारणतानवच्छेदकमिति व्यवहाराभावात्। एतेन गवादिपदानां शक्यताया गोत्वाद्यवच्छिन्नत्वमपि व्याख्यातम्।

यत्तु सद्रूपविशिष्टगोव्यक्तिष्वेव शक्यताकारणत्वादेरनवच्छिन्नस्य स्वीकार इति, तन्न; सद्रूपविशिष्टत्वस्यापि वैयर्थ्यापत्तेः। एतेन कम्बुग्रीवादिमत्त्वादिना शाब्दस्यापि घटपदशक्तिज्ञानजन्यत्वापत्तिरित्याशङ्क्य यदुक्तम् "घटत्वप्रकारकघटबोधानुकूला शक्तिरेव घटपदे शक्तिः। तार्किकमते तु घटत्वेन घटो बोध्यतामिति विशेष्यत्वमेव सा, सद्रूपेण यत्किञ्चिद्गोव्यक्तौ शक्यताग्रहस्यैवान्वयव्यतिरेकाभ्यां सद्रूपेण गोव्यक्तिस्मृतिशाब्दहेतुत्वमनवच्छिन्नमेव। दण्डत्वविशिष्टादावप्यनवच्छिन्नमेव कारणत्वादि गृह्यते। न च घटत्वादिजातिं विना घटादिकारणत्वमेकं दुर्वचमिति वाच्यम्; शक्तिविशेषरूपस्यातिरिक्ताखण्डरूपस्य वा कारणत्वस्योक्तजातिं विनाप्यैक्यसंभवात्" इत्यादि, तत्सर्वमपास्तम्; शक्तिज्ञाने गोव्यक्तिविशेषणतया सद्रूपभानोपगमेऽनुभवविरोधात्। अन्यथा तु तद्रूपेण शक्तिज्ञानस्य तद्रूपेण व्यक्तिस्मृतिहेतुत्वमित्यादेर्दुर्घटत्वात्, दण्डत्वविशिष्टव्यक्तौ कारणत्वग्रहस्वीकारे दण्डत्वस्यावच्छेदकत्वध्रौव्यात्, एतदतिरिक्तस्यावच्छेदकत्वस्य मयाप्यनङ्गीकारात्। अत एव यमादायैव यस्यान्वयव्यतिरेकौ गृह्येते इत्यन्यथासिद्धिस्तस्य संगच्छते, शक्तिविशेषरूपाभिधावादिमीमांसकमतेऽपि शक्तेः परनिष्ठत्वस्यैव स्वीकाराच्छक्यतायामयं निष्ठायामवच्छेदकावश्यकत्वात्। कारणत्वस्यापि शक्तिविशेषरूपस्य दण्डत्वाद्यवच्छेदेनैव ग्रहात्। अतिरिक्ताखण्डरूपकारणत्ववादिनव्यमतेऽपि तदवच्छेदकग्रहस्यापेक्षितत्वात्। अवच्छेदकस्य कारणत्ववादिनां मते तु दण्डत्वादेरत्यावश्यकत्वात्। न चाभेदेऽवच्छेद्यावच्छेदकभावानुपपत्तिः, रूपभेदेन तत्संभवात्।

एतेन कार्यकारणभावकोटावन्यतमव्यक्त्योरेव सखण्डकारणताघटकत्व-

संभव इत्यपि चिन्त्यम् ; घटाव्यवहितपूर्वकालनिष्ठात्यन्ताभावप्रतियोगित्वाभावस्य रासभसाधारण्यात् । तादृशप्रतियोगितानवच्छेदकधर्मवत्त्वे चास्माकमिष्टसिद्धेः । प्रतिव्यक्तिकार्यकारणभावग्रहोक्तौ च प्रवृत्याद्यनुपपत्तिः । कारणत्वं सखण्डमखण्डं वातिरिक्तमवच्छेदकरूपं वेत्याद्यन्यदेतत् । दण्डत्वाद्यवच्छेदे च तद्ग्रहः इत्यस्यावश्यमङ्गीकार्यत्वात्सामान्याभ्युपगमो यथानुभवमावश्यक एवेति, तिष्ठतु तावत् ।

एतेन रूपादिहीनतया ब्रह्मणः कथं चाक्षुषादिविषयत्वमित्याशङ्क्य प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानैयत्यम्, ब्रह्म तु कालसत्तादिवत्सर्वेन्द्रियग्राह्यम्, अतो नानुपपत्तिरित्यपि निरस्तम् । सदाकारबुद्धौ ब्रह्मभानस्य पूर्वमेव निरस्ततया कालादिवत् सामान्यसामग्रीमर्यादयापि तद्भानानुपपत्तेः । तेन—

> अतोऽनुभव एवैको विषयो ज्ञातलक्षणः ।
> अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता ।। इति **वार्तिकम्** ।

अनुभवः सद्रूपम्, तस्यैव विषयत्वे हेतुरज्ञातलक्षण इति सद्रूपभिन्नं विषयीभूतसद्रूपावच्छेदकं न तु विषयः स्वतः सिद्धो नारोपितः । अथवाज्ञातो विषयोऽनुभव एव, जडेऽज्ञातत्वाभावात् । तथा च सद्रूपान्यस्य विषयत्वेऽपि न क्षतिः । अक्षादीनां चक्षुरादिप्रयोज्यज्ञानानां तेन भ्रमस्याप्यनुभवो विषय इति लभते । यत्र यद्विषयकत्वेन प्रमाणताप्रमात्वव्यवहारः । उक्तविषयकत्वं विना ज्ञानमात्रे प्रमात्वव्यवहारो न स्यात् अज्ञाताबाधितविषयकत्वस्यैव प्रमात्वादिभ्रमेऽप्यधिष्ठानीभूतसद्रूपतादात्म्यापन्नरजतादिविषयकत्वेनैव बाधपूर्वं प्रमात्वव्यवहार इति धीमात्रस्य सद्रूपविषयकत्वमावश्यकमित्यर्थकमपास्तम् । स्वसिद्धान्तमात्रमूलार्थकथनपरत्वेन साधकत्वाभावात् । ज्ञानविषयत्वाभावस्यैवाज्ञातत्वस्य मयाभ्युपगमात् । अबाधितत्वस्यापि घटादिष्वेव साधनात् तद्विषयकत्वेनैव प्रमात्वोपपत्तेः । तथा च घटादीनां बाधितत्वसिद्धौ प्रमात्वान्यथानुपपत्त्यासद्रूपविषयकत्वं धीमात्रस्य कल्प्यम् । तत्सिद्धौ चोक्तहेतुना तेषां मिथ्यात्वसिद्धिरित्यन्योन्याश्रयापत्तिः, प्रत्यक्षेण सद्रूपब्रह्मविषयकत्वस्य बुद्धीनामसिद्धेः । एतेनावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्याकारवृत्तिकाले घटाद्यवच्छिन्नसद्रूपेणानावरणाद्योग्यं भवतीत्यपास्तम् । ब्रह्मणश्चक्षुरादिग्रहयोग्यताकल्पकमानस्यानिरुक्तेः । रूपादिमदद्रव्य-

त्वस्य घटादिस्थले योग्यतावच्छेदकत्वेन क्लृप्ततया आकाशे च भ्रमविषयनैल्येन समानाभिहारात्, माषराशिस्थमसीगुटिकादेरिव पृथगभासमानस्यापि चन्द्रावच्छेदेन चाक्षुषमिति वैषम्यम् ।

यत्तु द्रव्यत्वं सद्रूपमेव तच्च कल्पिततादात्म्येन स्वस्मिन्नप्यस्तीति कल्पिततादाम्यं सद्रूपभिन्नद्रव्यव्यक्तिनिष्ठतादात्म्यानि चेत्यन्यतमसंबन्धेन सद्रूपविशिष्टमेवास्मन्मते द्रव्यम् । अतो रूपादिहीनस्य कथं चाक्षुषादि, तथापि सद्रूपभिन्नद्रव्यव्यक्तितादात्म्यानामन्यतमसंबन्धेन सद्रूपविशिष्टं यत्तद्वृत्तिविषयतासंबन्धेन प्रत्यक्षं प्रत्येव रूपादिहेतुः । अतः कल्पिततादात्म्यस्योक्तकार्यतावच्छेदककोटौ संबन्धत्वेनानिवेशाद् ब्रह्मचाक्षुषादौ न रूपाद्यपेक्षेति, तन्न; सामान्यस्य सद्रूपताया एवासिद्धत्वात् । उक्तविषयतया चाक्षुषादावुक्तापेक्षया समवायेन द्रव्यत्वविशिष्टवृत्तिलौकिकविषयताया एव लाघवेन कार्यतावच्छेदकसंबन्धत्वस्य युक्तत्वात् । उभयघटिततादात्म्यानामन्यतमसंबन्धेन सद्रूपविशिष्टस्यैव विषयतया हेतुतया निवेशे गौरवाच्च । आकाशादीनामपि चाक्षुषाद्यापत्तेश्च । सामान्यसामग्रीमात्रेणापि त्वया ब्रह्मणि कार्योत्पत्तेः स्वीकारात् । न च विषयतासंबन्धावच्छिन्नकारणताधीकल्पिततादात्म्यमेव निवेश्यत इति वाच्यम्, घटादीनां चाक्षुषानापत्तेः । न च तेषां विषयत्वेन हेतुत्वाकल्पनेऽपि उक्तरूपादिहेतुतयैव तदिति वाच्यम्; वायोरपि स्पार्शनापत्तेः । सद्रूपस्य तादात्म्येन चाक्षुषादिहेतुत्वकल्पने तु शुद्धस्यापि तदापत्तेः । पूर्णानन्दरूपेण तस्य मूलाज्ञानावृत्तत्वादेव न प्रकाशः । घटाद्यवच्छिन्नसद्रूपेण तु तदनावृतत्वात् । चाक्षुषादिसद्रूपपूर्णानन्दरूपयोर्भेदस्त्वाविद्यक इत्यादेश्च मनोरथमात्रत्वादित्यलं बहुना ।

यदपि द्रव्यग्रहे चक्षुषो रूपापेक्षा न त्वन्यग्रहे, ब्रह्म तु न द्रव्यम्, अस्थूलमनण्वह्रस्वमदीर्घमिति चतुर्विधपरिमाणनिषेधेन द्रव्यत्वनिषेधादिति, तदप्यसत्; द्रव्यान्यसमवेतभिन्नचाक्षुषस्य तथाप्यलीकत्वात् । द्रव्यभिन्नानां गुणकर्मसामान्यानां द्रव्यसमवेतानामेव चाक्षुषस्वीकारात् । अस्थूलमित्यस्यावान्तरपरिमाणमात्रनिषेधकत्वात् ।

यत्तु परिमाणमात्रस्यैव तत्र निषेधः, संकोचे मानाभावात्, घटादिसाधारणपरिमाणस्य ब्रह्मण्यपप्रसक्तत्वात्सर्वभासकत्वादिना प्रसक्तसर्वसंबन्धयोग्यस्य परममहत्त्वस्यैव प्रसक्तत्वादित्यादि, तन्न; रूपादिभासकस्यापि चक्षुषः परम्परासंबन्धस्यैव रूपादौ दर्शनेन सर्वभासकतयोक्तरीत्या परममहत्त्वस्य

प्रसक्त्यभावात् । तत्संयुक्तत्वस्यैव भासकत्वानुपयोगादणुत्वनिषेधस्य तथाप्यनुपपादनाच्च । "महतो महीयान्" इतिश्रुतिविरोधेन परिमाणमात्र-निषेधस्याशक्यत्वात् परिमाणशून्यत्वेन महत्त्वोपपादने च बीजाभावात्संको-चस्योभयत्रापि साम्यात्, "न चक्षुषा दृश्यते" इत्यादिश्रुतेर्मूलाज्ञानस्य वेद-जन्यवृत्त्यैव निवृत्तिरित्यर्थस्यापि संकोचरूपत्वात्, स्वकाल्पतनियमानुरोधेन श्रुतिसंकोचापेक्षया श्रुत्यनुरोधेन श्रुतिसंकोचस्यैव युक्तत्वात्, **दीधितिकारेण** पदार्थखण्डने ईश्वरजीवयोः परिमाणानभ्युपगमेऽपि श्रुतिविरोधस्य तुल्यत्वात्, द्रव्यत्वस्य तेनापि स्वीकाराच्च ।

ये तु श्रुतिद्वयप्रामाण्यादात्मनि परिमाणद्वयमिच्छन्ति ते हृदयशून्याः । घटादौ महत्त्ववानणुत्ववानिति बोधवारणायाणुत्वनिष्ठप्रकारतानिरूपित-विशेष्यत्वावच्छेदकतासंबन्धेनापरोक्षबोधत्वावच्छिन्ने महत्त्वभेदस्य हेतुत्व-कल्पनात् परिमाणद्वयाभाववादितद्द्वयवादिनोः । अन्यथा शब्दस्य परमात्म-गुणव्यवस्थापनविरोधात् । श्रुतियुक्तिविरोधेन निर्विशिष्टस्यैव हेयत्वात् ।

एवम् "ईश्वरे जीवे च द्रव्यत्वादौ संयोगे च भानाभाव आत्ममनोयोगादे-र्हेतुत्वेऽपि न भानम्" इत्यादि **सार्वभौमोक्तेश्च** उच्छृङ्खलतामात्रत्वात् । अन्यथा ज्ञानादिगुणानाश्रयत्वापत्तेः । ज्ञानादीनां गुणत्वानभ्युपगमे तु तेषामेवात्म-त्वापत्त्या बाह्यमतप्रवेशापत्तेः । न च ज्ञानस्य नित्यत्वमभ्युपगम्य वेदान्तिमत-प्रवेशेनानिस्तारः, उत्पत्तिविनाशप्रत्यक्षविरोधात् । द्रव्यत्वाभावेऽप्यात्म-चाक्षुषस्य तैरप्यनङ्गीकाराच्चेत्यास्तां विस्तरः ।

**वेदाविरुद्धयुक्तीनामर्कै तर्ककुतूहले ।**
**परिच्छिन्नत्वमुच्छिन्नमूहैः साधुसमूहिभिः ॥१९॥**

---

# विंशोऽशः

शुक्तिरूप्यादिकं तु न दृष्टान्तः। भ्रमेऽन्यत्र प्रसिद्धस्यैव रजतस्य भानोपगमादयथाख्यातेरेव प्रमाणसिद्धत्वात्। "योऽन्यथासन्तमात्मानमन्यथाप्रतिपद्यते" इत्यादि भ्रमानुवादस्थले दर्शनाच्च। न च रजतचाक्षुषत्वावच्छिन्ने रजतचक्षुःसंयोगस्य हेतुत्वकल्पना, तद्व्यतिरेकेण तदनुपपत्तिरिति वाच्यम्; रजतविशेष्यकत्वस्यापि तत्र कार्यतावच्छेदके निवेशात्। उपनयसन्निकर्षेण च तदुपस्थितिसंभवात्। सुरभिचन्दनमित्याद्यनुरोधेन तत्सन्निकर्षत्वस्यावश्यकत्वात्। सौरभमनुमिनोमीत्यनुव्यवसायाभावेन तत्र चन्दनत्वेन सौरभानुमाननियमस्य वक्तुमशक्यत्वात्। एतेन पर्वतो वह्निमानित्यत्रापि विशेषणसन्निकर्षातिरिक्तविशिष्टप्रत्यक्षसामग्रीसत्त्वादनुमित्युच्छेदापत्तिरिति निरस्तम्। भ्रमस्थले दोषस्योभयसिद्धतया लौकिकविषयतायामपि तस्यैव नियामकत्वाद्वा। लौकिकसन्निकर्षवद्दोषविशेषस्यापि लौकिकप्रत्यक्षहेतुत्वकल्पनात्। लौकिकसन्निकर्षाजन्यत्वस्य अव्यवहितोत्तरत्वस्य वा दोषजन्यतावच्छेदककोटौ निवेशात्। न च रजतादिलौकिकप्रकारतानिरूपिततादात्म्यादिनिष्ठसंसर्गतानिरूपितविशेष्यतया प्रत्यक्षं प्रति विषयतादिगतदोषहेतुत्वकल्पनापेक्षया तादात्म्यादिसंबन्धेन रजतादावेव हेतुत्वकल्पने लाघवादनिर्वाच्यरजतसिद्धिरिति वाच्यम्; लौकिकप्रकारतासंबन्धेन रजतस्यैव दोषकार्यतावच्छेदकत्वस्वीकारात्, वक्ष्यमाणगौरवाणां तन्मते आधिक्याच्च। तथा हि न तावद्रजतत्वावच्छिन्नं प्रति दोषस्य हेतुत्वम्, व्यावहारिकरजते व्यभिचारात्। न च विजातीयरजतत्वावच्छिन्ने प्रमाणान्तरेण वैजात्यासिद्धेर्दोषजन्यतावच्छेदकतयैव तत्कल्पनेऽपि स्थलद्वये वैजात्यस्य कार्यतावच्छेदकत्वे गौरवात्। व्यावहारिकरजतार्थिनस्तत्रप्रवृत्त्यनुपपत्तेश्च। एवं रजतत्वमेकमुभयसाधारणमिति जातित्रयं कल्प्यमिति महद्गौरवम्। न च व्यावहारिकप्रातिभासिकरजतयोस्तादात्म्यभानात्तथेति वाच्यम्; तदपेक्षया शुक्तिरजतयोस्तादात्म्यभानस्यैव स्वीकर्त्तुमर्हत्वात्। तदुभयतादात्म्यभानेऽपि दोषस्यैव हेतुतायावौचित्यात्। शुक्तिनिष्ठविशेष्यतानिरूपितविशेषणतया व्यावहारिकरजतभाने रजतचक्षुःसंयोगापेक्षा, न तु प्रातिभासिकरजतनिष्ठविशेष्यतानिरूपितविशेषणतया तद्भाने इति ब्रह्मणापि दुर्घटत्वात्। रजतं साक्षात्करोमीति प्रत्यये प्रातिभासिकरजतमेव विषय इत्यपरेणापि शपथमात्रैर्निर्णेयत्वात्।

एतेन व्यावहारिकरजते सन्निकर्षादिविरहेऽपि न क्षतिः। तादात्म्यप्रतीतेस्तदंशे स्मृतित्वात्। इदं सुरभीति यावत्। तत्रैका प्रमाणवृत्तिरत्र प्रमा, भ्रमवृत्त्यवच्छिन्नमेकं चैतन्यमिति तु विशेषः। इन्द्रियसंयुक्ततादात्म्यादेस्तत्र सन्निकर्षत्वसंभवाच्चेत्यपि निरस्तम्। तत्र सौरभं पश्यामीत्यनुव्यवसायाभावेन वैषम्यात्। रजतविशेष्यतानिरूपितरजतत्वातिरिक्तनिष्प्रकारतायाश्च प्रकृतेऽननुभवात्। न च व्यावहारिकनिष्ठस्यैव रजतत्वस्य प्रातिभासिकेऽप्यभ्युपगमात्तत एव प्रवृत्त्याद्युपपत्तेः प्रातीतिकव्यावहारिकरजततादात्म्यभानं स्वीक्रियत इति वाच्यम्; अपसिद्धान्तात्। प्रातिभासिकव्यावहारिककार्यापत्तिवारणाय व्यावहारिकत्वविशिष्टकारणस्यैव कार्यप्रयोजकत्वादिकल्पनापत्तेश्च। उभयसाधारणरजतत्वे प्रमाणाभावाच्च। अपि चैवमत्र परेषां सिद्धान्तनिष्कर्षः। तादात्म्यादिसंबन्धावच्छिन्नप्रतियोगिताकाभावेन तद्व्याप्येन च विशिष्टं यत्तदवच्छिन्नं चिद्विषयताकाज्ञानाधारतावच्छेदकत्वं श्रुत्यादिनिष्ठम्, रजतादेः रजत्वादिसांसर्गस्य तादात्म्यस्य तदुपहितस्य चोत्पत्तौ हेतुः। स्वप्रकारतावच्छिन्नसांसर्गिकविषयतावच्छिन्नविशेष्यतावत्तादात्म्यम्, रजतत्वादिप्रकारतावच्छिन्ना या स्वीयसांसर्गिकविषयता तदवच्छिन्नविशेष्यतावत्तादात्म्यम्, प्रतियोगित्वं, तादात्म्यं चेति यथाक्रमं कार्यतावच्छेदकसंबन्धाः। पल्लवाज्ञानतादात्म्याश्रयनिष्ठेनाकारत्वाख्यविषयतासंबन्धेन भ्रमं प्रति स्वाव्यवहितपूर्वकालवृत्तित्वं स्वतादात्म्याश्रयवृत्तिविषयत्वं वेत्युभयसंबन्धेन विषयविशिष्टं पल्लवाज्ञानं भ्रमभिन्नो यः स्वतादात्म्याश्रयस्तद्वृत्तिविषयतासंबन्धेन हेतुः। अज्ञाननिष्ठेन तादात्म्यसंबन्धेन कार्यत्वावच्छिन्नं प्रत्यज्ञानमुपादानम्। व्यावहारिककार्यजनने त्वज्ञानस्य नोक्तविशेषसामग्री किन्तु दण्डकपालादिरूपा श्रुत्याद्यवच्छिन्नचिद्विषयताकाज्ञानाधानतावच्छेदकत्वस्य सत्त्वेऽपि कदाचिद्दोषाभावेन भ्रमानुत्पत्त्या तत्तद्दोषविशिष्टकार्यं प्रति तत्तद्दोषाणामपि हेतुत्वम्। "अविद्यैव वाह्यदोषसहिता रजताद्याकारेण तत्तद्ज्ञानाभासाकारेण च परिणामभावा स्वकार्येण सह साक्षिणो विषयः" इति **विवरणोक्तेः**। नेदं रजतमित्यादेरिदं रजतभेदव्याप्यश्रुतित्वादित्यादेर्वानाहार्यभ्रमत्वज्ञानानास्कन्दितनिर्णयस्य श्रुतित्वं रजतभेदव्याप्यमित्यादि तादृशनिश्चयकालीनोद्बुद्धसंस्कारस्य वा सत्त्वे इदमादावुक्तावच्छेदकत्वे मानाभावात् "भ्रमपुष्कलकारणसत्त्वे तत्त्वज्ञानानुदयः" इति **विवरणोक्तेश्च** न रजतादेरुत्पत्तिः। भ्रमत्वं च प्रातिभासिकाकारकाविद्यावृत्तिगतो जातिविशेषः, भ्रान्तं मयेत्यनुभवेनोक्तकार्यतावच्छेदकत्वेन च सिद्धः। भ्रमस्य ... स्थावृतत्वाच्च बाधात्पूर्वं तस्य

भ्रमेषु न गृह्यते प्रमात्वस्य चारोपः। तादात्म्येन भ्रमोत्पत्तिपूर्वमज्ञाने तत्परिणामवैशिष्ट्याभावात् स्वतादात्म्योपलक्षितवृत्तिविषयताया निवेशः। तत्संबन्धेन च भाविकार्यस्याप्यज्ञाने सत्त्वम्, अतीतानागतघटादौ स्वसमवायिवृत्तिविषयत्वेन ज्ञायमानघटत्वादेः सत्त्ववत्। तन्मात्रनिवेशे भ्रमपूर्वतृतीयादिक्षणेऽपि तत्संबन्धेनाज्ञाने तत्कार्यसत्त्वात्तदव्यवहितोत्तरक्षणे भ्रमोत्पत्तिः स्यादतोऽव्यवहितपूर्वत्वनिवेशः। तस्मादिदं रजतमित्यादिभ्रमे एतावन्ति जायन्ते—इदमाद्यवच्छेदेन रजतादितद्धर्मसंसर्गौ, रजताद्यवच्छेदेनेदमादितादात्म्यतद्धर्मसंसर्गौ, इदमादिप्रमावच्छेदेन तावद्विषयकभ्रमतादात्म्यतद्धर्मसंसर्गौ, उक्तभ्रमावच्छेदेन उक्तप्रमातद्धर्मयोस्तादात्म्यसंसर्गौ, यदवच्छेदेन यदीयो यः संबन्धो जायते तदवच्छेदेन स तदुपहित इति परस्पराध्यासपरिच्छेद इति।

अत्रेदं वक्तव्यम्—एतावतामुत्पत्तिकल्पनापेक्षया दोषस्य लौकिकविषयतानियामकत्वमात्रकल्पनमेव लाघवाद्युक्तम्। एवं रजतभेदरजतत्वात्यन्ताभावतद्व्याप्यादीनां ग्रहकालेऽपि रजतोत्पत्तौ बाधकाभावात्तद्बोधापत्तिः। न च तदानीं यथोक्तमवच्छेदकत्वम् इदमादौ नास्ति, त्वन्मते भ्रमहेतोरुक्तनिश्चयावच्छिन्नाभावस्य निश्चयकालेऽसत्त्ववदिति वाच्यम्; प्रतियोग्यभावयोः परस्परविरुद्धत्वेन च तथात्वेऽप्युक्तावच्छेदकत्वोक्तनिर्णययोर्विरोधे मानाभावात्, गौरवाच्च। उक्तनिश्चयत्वावच्छिन्नाभावस्य निश्चयकाले परैरप्यङ्गीकाराच्च। पुरुषान्तरस्योक्तनिर्णयसत्त्वे पुरुषान्तरस्यापि तच्छुक्त्यवच्छेदेन रजतभ्रमानुत्पत्तिप्रसंगाच्च। उक्तनिश्चयत्वावच्छिन्नाभावस्य भ्रमप्रमासाधारण्येन हेतुत्वकल्पनया मन्मते गौरवविस्तराच्च। न च प्रमायामपि नोक्तहेतुत्वम्, तत्सामग्रीप्रतिबन्धकतयैव निर्वाहात्, प्रतिबन्धकत्वाभिमतकालीनकारणे शक्त्यस्वीकारेणोपपत्त्या कुत्रापि कार्ये प्रतिबन्धकत्वास्वीकाराच्च। प्रतिबन्धकाभावस्येव शक्तेर्नित्यत्वेऽप्यव्याप्यवृत्तित्वसंभवादिति वाच्यम्; प्रतिबन्धकाभावहेतुतयैवोपपत्त्यशक्तावेव प्रथमं प्रमाणाभावात्। ब्रह्मादिस्थले प्रतिबन्धकत्वेन मदभिमतानां शक्तिनाशे उत्तेजकत्वाभिमतानां च शक्त्यन्तरोत्पत्तौ हेतुत्वस्य कल्प्यतया गौरवाधिक्याच्च। अनित्यस्य शक्तिनिष्ठशक्तिमन्नित्यत्वस्य च सिद्धान्तविरुद्धत्वात्। सामग्रीप्रतिबन्धकतया च निर्णयोत्पत्त्यनन्तरक्षणे कार्यानुत्पत्तेरनिर्वाहात्। अपि चोक्तरीत्या शुक्त्यवच्छेदेन रजतोत्पत्तावुक्तभेदादिनिर्णयवतोऽपि पुरुषान्तरस्य तद्रजतचाक्षुषापत्तिः, चक्षुःसंयोगादिसत्त्वात्। बाधनिर्णयप्रतिबन्धकत्वस्य भवताऽनभ्युपगमात्। उत्पत्तेश्च

पुरुषान्तरीयबाधाभावकालीनेनेदमादिनिष्ठेन यथोक्तावच्छेदकत्वेनैव सम्पन्नत्वात्, तत्पुरुषस्य बाधबुद्ध्यभावेन तदा तद्रजतस्य नाशाभावाच्च । न च पल्लवाज्ञानतादात्म्याश्रयनिष्ठेनेत्यादि पूर्वोक्तकार्यकारणभावे पल्लवाज्ञानस्य पुरुषभेदेन भिन्नत्वान्न तद्ग्रहस्तदानीं तत्पुरुषीयपल्लवाज्ञानस्योभयसंबन्धेन विषयविशिष्टत्वे मानाभावादिति वाच्यम्; भ्रमत्वस्य तत्कार्यतावच्छेदकतया तदवच्छिन्नस्यापत्त्यसंभवेऽपि न चक्षुःसंयोगादिबलाज्ज्ञानत्वावच्छिन्ने आपाद्यमानेऽर्थतः प्रमापत्तेर्दुर्वारत्वात् । न च विषयतया प्रातिभासिकग्रहेऽविद्यावृत्तेस्तादात्म्येन हेतुत्वकल्पनाद् भ्रमभिन्नज्ञानविषयत्वं तस्य नास्तीति वाच्यम्; तथापि रजतचक्षुःसंयोगस्य रजतप्रत्यक्षहेतुतायां व्यभिचारापत्तेः । व्यावहारिकरजतप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वे च गौरवात् । वृत्तेर्ज्ञानत्वाभावेऽप्यमुख्ययोः परोक्षापरोक्षत्वयोस्तत्र परैः स्वीकारात् । अन्यथा साक्षात्करोमीत्याकारकानुभवानुपपादनेन प्रयासवैयर्थ्यात् । न च रजतचक्षुःसंयोगकार्यतावच्छेदके मुख्यमेव प्रत्यक्षत्वं निवेश्यत इति वाच्यम्; मयापि भ्रमप्रमास्थलीयसाक्षात्कारद्वये वैजात्यद्वयमभ्युपगम्य चक्षुःसंयोगादेर्दोषस्य च तदवच्छिन्नं प्रत्येव हेतुत्वकल्पनसंभवेन चक्षुःसंयोगव्यतिरेकेण कथं रजतलौकिकप्रत्यक्षमित्यादेर्भवदीयप्रत्यवस्थानस्य निरवकाशत्वापत्तेः ।

एतेन इन्द्रियजन्यवृत्तिं प्रति प्रातिभासिकस्य तादात्म्येन प्रतिबन्धकत्वकल्पनमप्यनाशङ्क्यम्, मन्मते तूक्तबाधनिर्णयस्य तादृशविशिष्टबुद्धौ सामानाधिकरण्येन विरोधित्वान्न काप्यनुपपत्तिरिति वैषम्य शुक्तौ रूप्यं नष्टमिति प्रत्ययापत्तिश्च । शुक्तेरनुपादानत्वेऽपि तदुपादानीभूताज्ञानविषयतावच्छेदकत्वात् । अन्यथाव्यावहारिकरजतावयवेष्वपि तन्नाशग्रहो न स्यात् ।

यत्तु उत्पत्तिनाशधीर्भ्रान्तिसमये आपाद्यते, बाधसमये वा? नाद्यः, पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया ग्रहस्यैव प्रतिबन्धकत्वात्, विरोधिज्ञानानुदयेन तदा रूप्यनाशाभावाच्च । नान्त्यः, अत्यन्ताभावग्रहस्य प्रतियोगिवत्तदुत्पत्तिविनाशयोरपि ग्रहे विरोधित्वादत्यन्ताभावाधिकरणत्वेन गृहीते उत्पादविनाशबुद्धेरनुत्पत्तेरिति, तन्न; भेदग्रहात्पूर्वं तदुत्पत्तिप्रत्ययविरोधित्वादिकल्पने गौरवात् । अत्यन्ताभावस्य ध्वंसप्रागभावाभ्यां सामानाधिकरण्यस्य नव्यैरभ्युपगमादुक्तविरोधे बीजाभावात् । न चात्रैव तत्कल्पन इति युक्तम्; दोषादिहेतुतयैव साक्षात्कारिभ्रमोपपत्त्यान्यथानुपपत्त्यभावात् । न च विनिगमकाभावः, अनन्तगौरवस्य परमत एव सत्त्वादत्यन्ताभावत्वेन ज्ञानाभावकालेऽपि शुक्तौ रूप्यनाशानुभवाच्च । एतेन मिथ्यात्वादिवदुत्पत्त्यादिकमावृत्तत्वादेव रूप्यादौ

न गृह्यते। एवं च तद्ग्राहकसामग्र्यनवतारादेव न तद्ग्रहः। सामग्र्यनवतारकालीनात्यन्ताभावबुद्धेर्नाशादिबुद्ध्यनुत्पत्तिव्याप्यत्वे च प्रतिबन्धकत्वाभिधायिग्रन्थस्य तात्पर्यमित्यपि निरस्तम्। आवृत्तत्वादेव प्रत्यक्षानुत्पत्तिसमाधानसंभवे शशशृङ्गादेरपि स्वीकारापत्तेः।

किंच शुक्तौ रजतसत्त्वे तस्य त्रैकालिकनिषेधप्रतियोगित्वरूपसाध्यवैकल्यम्, स्वसमये तस्य स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वस्य मिथ्यात्वमिति पूर्वमसिद्धत्वात्। न चाधिष्ठानसाक्षात्कारानन्तरं शुक्तौ रूप्यं नास्ति नासीन्न भविष्यतीति प्रतीत्या तत्सिद्धिरिति वाच्यम्; विशुद्धप्रतीतिद्वयेऽन्यतरस्याविषयापहारध्रौव्यात्। न च पारमार्थिकत्वेन रूपेण तदापि तदभाव इति वाच्यम्; स हि पारमार्थिकत्वनिष्ठावच्छेदकताकप्रतियोगिताया नेदं रजतमित्यादिज्ञानविषयत्वाद्वा युक्तिवशाद्वा? नाद्यः, सर्वानुभवविरोधात्। नान्त्यः, घटादिभ्यो विशेषनिरुक्तेः। नेदं रजतमिति ज्ञानस्य व्यावहारिकरजताभावविषयत्वेन पूर्वं व्यवस्थापितत्वाच्च। व्यावहारिकस्य प्रतियोगित्वेऽन्यथाख्यातेर्दुर्वारत्वाच्च। एतेन पारमार्थिकत्वेन रूप्यं नास्तीति बाधस्य रूप्याभावाविषयकत्वेन पारमार्थिकत्वाभावविषयकत्वं वाच्यम्। तथा चासंगतिः। पारमार्थिकत्वस्यापि भ्रमसमये प्रतीतत्वेन त्रैकालिकनिषेधप्रतियोगित्वानुपपत्तेः। रूप्यस्य प्रतियोगित्वानुभावे बोधाच्चेत्याशङ्क्य यदुक्तम् "प्रतीतिकालप्रतीतं पारमार्थिकत्वमपि प्रातीतिकमेव" इति, न तन्निषिध्यते, किन्त्वन्यत्र वर्तमानमेव, तच्च विषयत्वं वाभावबुद्धौ न निषेध्यत्वेन किन्तु तदवच्छेदकत्वेनेति नोक्तदोषः। न च स्मृतिरूपायाः पारमार्थिकत्वप्रसक्तेः सत्त्वेऽपि निषेध्यत्वप्रयोजिका पारमार्थिकत्वाकारेण प्रातिभासिकस्य प्रसक्तिर्नास्त्येवेति वाच्यम्; यद्रूपविशिष्टस्य प्रतियोगित्वधीस्तद्विशिष्टस्यैव प्रसक्तेरपेक्षितत्वात्। व्यधिकरणधर्मविशिष्टस्य च प्रतियोगित्वाननुभवात्। व्यधिकरणधर्मावच्छिन्नाभावप्रत्ययस्य प्रत्येकप्रसिद्ध्यैवोपपत्तेः। प्रतियोग्यंशे तस्याविशिष्टस्य वैशिष्ट्यमित्याकारकत्वानभ्युपगमात्। विशेषणतावच्छेदकप्रकारकज्ञानहेतुत्वे मानाभावात् समानाधिकरणधर्मावच्छिन्नाभावबुद्धेरपि निर्विकल्पकोत्तरं स्वीकारात्। तद्धेतुत्वस्य प्रामाणिकत्वे तु व्यधिकरणधर्मावच्छिन्नाभावधियस्तदुत्तरं स्वीकारे बाधकाभावादित्यादिकं परास्तम्। पारमार्थिकत्वस्याबाध्यं सर्वं मेयमित्यादिधीरूपस्य विषयतासंबन्धेन रूप्ये सत्त्वे बाधकाभावात्तस्योक्तनिषेधप्रतियोगिताव्यधिकरणधर्मत्वे मानाभावात्। रूप्ये पारमार्थिकत्वाभावस्य मानान्तरानधिगतत्वात्।

यत्तु धर्मिप्रतियोगिनोरेकविभक्त्यन्तपदोपस्थाप्यत्वे नञोऽन्योन्याभावबोधकत्वव्युत्पत्तेर्घटः पटो नेत्यादौ क्लृप्तत्वादिदं रजतं न भवतीति वाक्यस्य भेदबोधकत्वात्तदभिलप्यमानप्रतीतेरपि भेदविषयकत्वम्, अभिलप्यमानप्रतीतेरभिलापजन्यप्रतीतिसमानविषयकत्वात्। तथा चेदंशब्दनिर्दिष्टे पुरोवर्त्तिनि प्रातीतिकरजते रजतशब्दनिर्दिष्टव्यावहारिकरजतान्योन्याभावप्रत्ययादार्थिकं मिथ्यात्वम्। नात्र रजतमिति वाक्याभिलप्या तु प्रतीतिरत्यन्ताभावविषया, धर्मिप्रतियोगिनोर्भिन्नविभक्त्यन्तपदोपस्थाप्यत्वात्। सा च पुरोवर्तिप्रातीतिकरजतस्यैव व्यावहारिकमत्यन्ताभावं विषयीकरोतीति कण्ठोक्तमेव मिथ्यात्वम्। स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य विना मिथ्यात्वमनुपपत्तेरिति, तच्चिन्त्यम्; इदं रजतमिति ज्ञाने इदन्त्वेन शुक्तेरेव भानात्, शुक्तिरजतयोरभेदस्यैव तादृशभ्रमविषयत्वात्, नेदं रजतमित्यनेनापि तयोरेव भेदग्रहात्, इदमित्यस्य शुक्त्यनवगाहित्वे शुक्तेरुक्तरजतोपादानाज्ञानविषयतावच्छेदकत्वादावेव भानाभावात्। शुक्त्यभिन्नत्वेन रजतज्ञानस्य तदुत्पत्तिज्ञानादिविरोधित्वस्य परैरप्युक्तत्वात्। न चेदमित्यस्य शुक्त्यभेदेन प्रातीतिकरजतविषयत्वम्, रजतमित्यस्य च तत्र व्यावहारिकरजताभेदावगाहित्वमिति वाच्यम्; मानाभावाद्रजतं साक्षात्करोमीत्यस्यानुपपत्तेश्च। इदमंशे विशेषणस्यैव रजतस्य तादृशधीविषयत्वात्। एतेन चाक्षुषेदंवृत्त्यवच्छिन्नचैतन्यस्याविद्यापरिणामत्वेन शुक्तिज्ञानस्य चाक्षुषत्वोपचार इति निरस्तम्। उपचारेण यथोक्तविषयत्वनिर्वाहे चाक्षुषविषयीभूतेदमंशनिष्ठाभेदप्रतियोगित्वज्ञानेन रजतांशेऽपि साक्षात्करोमीति प्रत्यय इत्यस्य मयापि वक्तुं शक्यत्वात्।

यत्तु इदमंशो न करणवृत्त्या रजतांशश्चाविद्यावृत्त्या गृह्यते, रजतभ्रममूलाज्ञानस्यैव रजताकारज्ञानत्वेन परिणामात्। न चैवं भ्रमे ज्ञानैक्यानुभवविरोधः, विषययोरभेदाध्यासे ज्ञानयोरप्यभेदाध्यासात्। यद्वा इदमंशावच्छिन्नचैतन्यगताविद्यापरिणामत्वाद्यथारूप्यमिदन्त्वेन भाति तथेदमाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यगताविद्यापरिणामत्वेन रूप्यज्ञानमिदंज्ञानत्वेन भाति। यद्वा अविद्यावृत्तेर्न ज्ञानत्वम्, अतो ज्ञानैक्यधीः ज्ञानत्वस्याज्ञाननिवर्त्तकमात्रवृत्तित्वादविद्यावृत्तेरतथात्वात्। "धारावहनस्थले तत्तत्कालकलाविशिष्टग्राहकत्वेनाग्रहीतग्राहितयाज्ञाननिवर्तकत्वात्। ज्ञानभेदेनाज्ञानभेदोपगमात्। तन्निवर्त्यज्ञानानां तत्तज्ज्ञानशक्त्या निवृत्तिसंभवाच्च। परोक्षस्थले विषयगताज्ञाननिवृत्त्यभावेऽपि प्रमातृगताज्ञाननिवृत्त्या तत्र ज्ञानत्वसौलभ्यात्। तदभेदग्रहात्परोक्षभ्रमेऽपि जानामीति प्रत्ययात्। अन्तःकरणपरिणामे ज्ञानत्वोपचारात्"

इति विवरणोक्तेश्च प्रकाशकत्वनिबन्धनज्ञानपदप्रयोगौपचारिकत्वपरतया अज्ञाननिवर्तकत्वनिबन्धनज्ञानपदप्रयोगस्यान्तःकरणवृत्तावौपचारिकत्वे तात्पर्यविरहात् । यद्वा वृत्तिभेदेऽपि इदंरूप्ययोरिदमंशावच्छिन्नचैतन्यप्रकाशत्वेन फलैक्याज्ज्ञानैक्यधीः, अन्यस्य तदाकारतासंपत्तिरिति सिद्धान्तात् । प्रातिभासिकस्यास्वच्छत्वादेव तदवच्छिन्नचितः प्रकाशानापत्त्या तत्रावृतत्वानङ्गीकारात् । अविद्यावृत्त्यैव चैते तत्रावरणनाशरूपफलविशिष्टत्वेनेदमंशावच्छिन्नचित एव फलत्वं न तु रूप्यावच्छिन्नचितः । ततश्चोक्तफलैक्यात्तदवच्छिन्नयोर्वृत्तिज्ञानयोरैक्यव्यवहारसंभवात् । परोक्षभ्रमेऽपरोक्षकरसचैतन्यरूपफलैक्याभावेऽपि फलैक्यमभ्युपचर्य ज्ञानैक्योपचारात्, इत्यादि, तत्सर्वं चिन्त्यम् ; जानामीत्यस्य कुत्रचिदौपचारिकत्वं क्वचिच्च नेत्यत्र बीजाभावात् । तावत्स्थले तु तावदुक्ताभेदज्ञानस्य विनानुभवं कल्पनस्य चायुक्तत्वात् । रूप्यावच्छिन्नचित आवरणनाशरूपफलाविशिष्टत्वेऽविद्यावृत्तेरावरणनाशफलकत्वाभावाद् वृत्तिद्वयस्य फलैक्यासंभवात् । तदजन्यस्य तन्निरूपितफलत्वानुपपत्तेः । एतेन इदमाकारान्तःकरणवृत्त्यभिव्यक्तचैतन्यस्यैव रूप्याभिव्यञ्जकत्वात्फलैक्यमित्यपि परास्तम् । अज्ञाननाशस्यैवाभिव्यक्तित्वात्तस्य च रजताकाराविद्यावृत्त्यसाध्यत्वात् । एतेन ख्यातिबाधान्यथानुपपत्त्यानिर्वाच्यख्यातिसिद्धिरपास्ता । ख्यातेर्देशान्तरीयरजतपरतयैवोपपत्तेः । बाधस्य च भ्रमविशेष्यकभ्रमत्वप्रकारकज्ञानातिरिक्तस्यानभ्युपगमात् । तदुक्त**माकरे**"बाधकेन भ्रमस्य भ्रमत्वबुद्धिरेव बाधः'' इति । रजतनाशस्य च नेदं रजतमिति ज्ञानानन्तरमुत्पत्तौ मानाभावात् । एवं मिथ्यैव रजतमभादित्यनुभवस्यानिर्वाच्यख्यातौ भानत्वमप्यनाशङ्क्यम् ; अयं हि न शाब्दः, प्रत्यक्षस्य प्रमाणत्वेनोपन्यासोपक्रमविरोधात् ।

अथोक्तशब्दोल्लेख्यप्रत्यक्षस्य तत्समानविषयकत्वात्तदत्र विवक्षितमिति चेत्; तर्हि किं मिथ्याशब्दस्यानिर्वाच्यं शक्यमिति व्याकरणकोषादिषु क्वचिदत्र भवतोपलब्धं येनैवं स्यात् । असदेव रजतमभादित्यत्रापि सज्ज्ञानविशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपमेवासत्त्वं विषयः, तेनानिर्वाच्यैकदेशसत्त्वव्यतिरेकविषयकत्वेन तद्वर्णनमनुपादेयम् । अन्यथैवकारेण सत्त्वव्यतिरेकान्यभागस्य तत्र निषेधादसत्ख्यातावेव तस्य प्रामाण्यं स्यात् । एतेन मिथ्यात्वमपि व्याख्यातम् ।

यद्वा मिथ्येति भानक्रियाविशेषणम्। मिथ्यात्वं च ज्ञाने व्यधिकरणप्रकारकत्वमेव। तथा च तदभिन्नातीतानुभवविषयो रजतमित्यर्थः। व्यावहारिकरजतस्यापि प्रातिभासिकरजतविशेषणतया भाने मिथ्यैव रजतमभादित्यप्रातिभासिकान्यरजतस्य तद्धीविषयत्वव्यवच्छेदबोधकतया तत्पक्षप्रतिकूलत्वाच्च। तस्माद्विषयत्वविशेषशालिबुद्धेर्जनकौ लौकिकसन्निकर्षदोषौ। रजतादिषु दोषकारणत्वं परमासंभवदुक्तिकं गरीयः।

वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।
वाच्यैर्निर्वासिताख्यातिरनिर्वाच्या सयुक्तिकैः ॥ २० ॥

---

# एकविंशोऽशः

भावरूपे त्वनादावज्ञाने मानाभावः। नन्वहमज्ञ इति प्रत्यक्षं तत्र मानम्, तथाहि अस्य ज्ञानाभावविषयकत्वपक्षे यावद्विशेषाभावातिरिक्तसामान्याभावविषयकत्वम्, सामान्यावच्छिन्नप्रतियोगिताकयावद्विशेषाभावविषयकत्वं वा वाच्यम्; तथा च व्याघातः। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रकारकाभावप्रत्यक्षबुद्धौ प्रतियोगितावच्छेदकप्रकारकप्रतिश्यमपेक्षितत्वात्, योगिज्ञानस्य स्वातन्त्र्येण विशेषणतावच्छेदकप्रकारकनिर्णयविधया वा अवज्ञानाभावप्रत्यक्षे विशेष्यभूताहमर्थज्ञानस्याप्यावश्यकत्वाच्च। न ह्येवं सति ज्ञानत्वावच्छिन्नप्रतियोगिताकाभाव आत्मनि संभवति, उक्तज्ञानयोरपि ज्ञानत्वावच्छिन्नत्वादतिरिक्तसामान्याभावे विशेषाभावसमुदाये

वा यत्किञ्चित्प्रतियोगिसत्त्वस्यैव विरोधित्वात्। धर्मिप्रतियोगिज्ञानाभावे च सामग्र्यभावादेव ज्ञानाभावप्रत्यक्षानुपपत्तेरिति तस्य भावरूपाज्ञानविषयकत्वं कल्प्यते इति चेत्, उच्यते; अहमज्ञ इति प्रत्यक्ष प्रमैवेत्यत्र मानाभावः। अतो ज्ञानत्वावच्छिन्नप्रतियोगिताकाभावविषयकत्वेऽप्यनुपपत्तिर्नास्त्येव। घटवत्यपि घटो नास्तीत्यादि प्रत्ययानामयथार्थानामुदयमानत्वात्।

अयं तु विशेषः—घटादिसामान्यज्ञानं [ज्ञानं सामान्यं चेत्येवो]भयरूपम्, ज्ञानसामान्याभावज्ञानं तु भ्रम एवेति। न च प्रमात्वरक्षार्थमिति वाच्यम्; तन्मात्रानुरोधेन सर्वत्रातिरिक्तविषयकल्पने भ्रमस्यैवोच्छेदापत्तेः। यदि प्रमात्व एवाग्रहस्तर्हि ज्ञानविशेष एव तत्र प्रतियोगित्वेनाभावांशे प्रकारतया भाति। प्रतियोगिता पुर्नविजातीयज्ञानत्वादिनैव तत्रावच्छिद्यत इति कल्प्यताम्।

एवं शाब्देऽपि बोध्यम्। अभावज्ञाने प्रतियोगितासंबन्धेनाभावांशे प्रकारीभूय भासमानेऽर्थे प्रकारतया भासमानस्यैव धर्मस्य प्रतियोगितावच्छेदकत्वमित्युत्सर्गस्य प्रकृते बाधेन त्यागादन्वयिवृत्तिप्रतियोगितायामेव नियमोपगमात्। अत एव स्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य ज्योतिष्टोमत्वे भाने विजातीयस्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वत्वमेव प्रतियोगितावच्छेदकत्वेन भासते। अन्यथा गङ्गास्नानादिजन्यस्वर्गस्थले स्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्य ज्योतिष्टोमत्वेन स्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकस्य स्वर्गसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य ज्योतिष्टोमत्वे बाधादित्य**भियुक्ताः**। अत एवोक्तप्रत्यक्षस्य न जानामीत्यभावबोधकशब्देनैवोल्लेखो दृश्यते। अन्यथा त्वत्रापि लक्षणया भावरूपाज्ञानपरत्वकल्पनक्लेशः स्यात्। न च त्वयाप्यत्र ज्ञाधातोः साक्षात्कारादौ लक्षणैव वाच्येति साम्यमेवेति वाच्यम्; शक्यतावच्छेदकधर्मानुप्रवेशेन नञ्पदादेः स्वार्थपरत्वरक्षणेन च तारतम्यस्य जागरूकत्वात्। पुष्करिण्यां जलं नास्तीत्यादौ प्रत्यक्षे शाब्दबोधेन यथोक्तप्रकारस्य सर्वैरभ्युपगम्यत्वाच्च। प्रत्यक्षे प्रकृष्टजलत्वावच्छिन्नप्रतियोगितासंसर्गः। शाब्दे च प्रकृष्टजले जलपदस्य लक्षणेति। अत एव "अस्य ज्ञानं नास्तीत्यादौ प्रकृष्टज्ञाने लक्षणा" इति **नव्वादीयदीधितिव्याख्यातृभि**रुक्तम्। अन्यथा अजलपदार्थस्यापि क्लृप्तातिरिक्तस्य स्वीकारापत्तेः। अत एवाहं ब्रह्म न जानामीति प्रत्ययस्य स्वाभिन्नश्रवणमननादिप्रयोज्यज्ञानशून्यविशिष्टसमवायसंबन्धावच्छिन्नप्रतियोगिताकतया वा

ज्ञानाभावो विषयः, संबन्धविषयताशालिबुद्धौ संबन्धज्ञानस्यानपेक्षिततया श्रवणमननादिप्रयोज्यत्वज्ञानशून्यकालेऽपि तादृशसंसर्गताशालिबोधसंभवादिति शङ्कन्ते ।

ननु यत्किञ्चिद् विशेषाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे घटवत्यपि भूतले निर्घटमिति प्रतीतिः स्यात्, वायौ रूपं नास्ति पुरोदेशे रजतं नास्तीत्याद्याप्तवाक्यजन्यप्रतीत्यनन्तरमपि संशयनिवृत्तिर्न स्यात्, एकविशेषाभावबोधनेऽपि विशेषान्तरमादाय संशयोपपत्तेरितिचेत्, न; निर्घटमिति प्रतीतिरयथार्था यथार्था वा आपाद्या ? नाद्यः, इष्टापत्तेः । नान्त्यः, घटत्वावच्छिन्नप्रतियोगिताकत्वेनाभावग्रहे वा बाधसत्त्वात् । तादृशत्वेन यत्किंचित् घटाभावग्रहे त्विष्टापत्तेः । तात्पर्यसत्त्वे तस्य दुर्वारत्वात्, वायो रूपं नास्तीत्यादौ तु नानुपपत्तिः, बाधकाभावात् । नह्येकत्रान्यथाकल्पनेत्यत्रापि तथैव स्यात्, बाधके सत्येवोत्सर्गत्यागात् । सामान्याभावश्च नव्यानामतिरिक्तः प्राचां तु विशेषाभावसमुदाय एव । तत्प्रतियोगितावच्छेदकं सामान्यमिति विशेष इति अन्यदेतत् ।

किञ्च ज्ञानप्रागभावविषयैवाहमज्ञ इति धीरस्तु । न च विशेषगता प्रतियोगिता सामान्यरूपेण कथं गृह्यतामिति वाच्यम्; इदमभिधेयवत्प्रमेयादित्यनुमाने यत्र प्रमेयं तत्राभिधेयमिति व्याप्तिग्रहसमये सामानाधिकरण्यरूपाया व्याप्तेर्वृत्तिमत्प्रमेयत्वावच्छेदेनैव सत्त्वेऽपि प्रमेयत्वमेव व्याप्यतावच्छेदकतया गृह्यते न तु वृत्तिमत्प्रमेयत्वम्, गौरवाद्वैयर्थ्याच्च । अवृत्तिषु साध्यसामानाधिकरण्यरूपव्याप्त्यभाववत्साध्याभावसामानाधिकरण्यरूपव्यभिचारस्याप्यभावात् । व्यर्थविशेषणत्वरहितत्वे सति व्यभिचारिव्यावृत्तत्वमात्रेण व्याप्यतावच्छेदकत्वसंभवाच्च । एवं च वृत्तिमत्प्रमेयगता व्याप्तिर्यथा प्रमेयत्वेन गृह्यते तथा ज्ञानविशेषगतापि प्रतियोगिताज्ञानत्वेनेति न दोषः ।

यत्तु उदाहृतव्याप्तिस्थले बाधकाभावात्तथात्वेऽपि प्रकृते न तथेति, तन्न; सामान्याभावभाने भ्रमत्वापत्तेरत्रापि बाधकसत्त्वात् । वस्तुतः "इहेदानीं घटो नास्तीति" बुद्धिं प्रक्रम्य यदुक्तं **दीधित्यादौ**—"नहीयं घटप्रतियोगिकाभावविषयमवगाहते, यत्किंचिद्घटवत्यपि तथा बुद्ध्यापत्तेः, किन्तु घटत्वावच्छिन्नप्रतियोगिताकम् । न च ध्वंसप्रागभावौ तथासंभवतो वा तदा तत्र कपाले बहूनामुत्पत्स्यमानत्वान्नष्टत्वाच्च । अतः सामयिकोऽत्यन्ताभावस्तत्र विषयः । सामयिकत्वञ्च समये विशेषणतावच्छेदेन वर्तमानत्वम् । कपिसंयोगा-

त्यन्ताभावस्य देशविशेषावच्छेदेन वर्तमानत्ववदविरुद्धम्" इत्यादि। तत्सर्वं तत्र घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्याबाधितत्वात्तद्विषयकत्वेनैव-प्रतीत्युपपत्तौ घटत्वावच्छिन्नप्रतियोगिताकत्वानुभवमपलप्यमानान्तरासिद्ध-प्रागभावविषयकत्वकल्पनस्यानौचित्यादित्यभिप्रायेण। यत्र तु सामान्याव-च्छिन्नप्रतियोगिताकत्वं बाधितं तत्र बुद्धेर्भ्रमत्वमुक्तरीतिर्वेत्यन्यतरदवश्यमा-श्रयणीयम्। भवति हि घटो ध्वस्त इति प्रतीतिः,सर्वासिद्धात्यन्ताभावाविषयक-त्वेन संमता च। तत्र न घटत्वावच्छिन्नप्रतियोगिताकत्वम्, चरमध्वंसाति-रिक्तध्वंसे सामान्यावच्छिन्नप्रतियोगितायाः अप्रसिद्धेः। न च तत्र तद्घटत्वा-दिना विशेषरूपेण प्रतियोग्युपस्थितिरिति सुवचम्; सर्वानुभवविरोधात्। अतस्तद्घटनिष्ठैव प्रतियोगिता घटत्वेन गृह्यत इत्यावश्यकम्। अत एवान्तरा-श्यामे रक्तरूपं नास्तीति प्रत्ययस्य पूर्वापररक्तिमध्वंसप्रागभावावगाहित्वं **दीधितावा**शङ्कितम्। अत एवात्यन्ताभावनिष्ठेन्द्रियसबद्धविशेषणताया एव प्रतियोगितावच्छेदकावच्छिन्नाभावप्रत्यक्षत्वं कार्यतावच्छेदकमतः तेजस्त्वा-दिप्रकारकज्ञानात्प्रागभावध्वंसप्रत्यक्षम्। अत एव इहेदानीं घटध्वंस इत्यति-प्रसक्तघटत्वाद्यवच्छेदेनैव ध्वंसप्रत्यक्षं सर्वानुभवसिद्धमिति **सामान्यलक्षण-ग्रन्थे** व्याख्यातृभिरुक्तम्। एवमिहापि ज्ञानसामान्याभावस्य बाधितत्वात्। उक्तगत्या ज्ञानप्रागभावस्तदनङ्गीकारे तु ज्ञानध्वंस एव विषय इत्यभ्युपगम्य-ताम्, इह घटो नेत्यत्र तु वैषम्यं पूर्वमेवोक्तम्। अतो ज्ञाननिष्ठध्वंसविषय-त्वेनैवाहमज्ञ इति प्रतीतेरुपपत्त्या न तस्या अक्लृप्तभावरूपाज्ञानविषयकत्व-कल्पनं युक्तम्। किं च ज्ञानत्वावच्छिन्नप्रतियोगिताकत्वं तत्रानुभविकं न वा? नाद्यः, उक्तरीतीनामन्यतमस्यावश्यकत्वादतिरिक्तविषयकत्वासिद्धेः। नान्त्यः, ज्ञानप्रतियोगिकाभावविषयकत्वेनैवोपपत्तेः। अत इहेदानीं घटो नास्तीतिवन्नानुभवस्यात्र प्राबल्यप्रसरः, इति स्पष्टमेव वैषम्यम्।

अथ यदीयमत्यन्ताभावविषयिणी स्याज्ज्ञानत्वावच्छिन्नप्रतियोगिताकत्व-विषयिणी स्यादित्यापाद्यत इति चेत्तर्हि; ध्वंसविषयकत्वपक्षे आपादकं स्वरूपासिद्धम्। अथ यदि ध्वंसविषयिणी स्यात्तदा ज्ञानत्वावच्छिन्नप्रतियो-गिताकत्वविषयिणी न स्यादिति चेत्; तर्हि इष्टापत्तिः। उभाभ्यामेव तद-नङ्गीकारात्। अथ यत्किंचिज्ज्ञानसत्त्वेऽपि ध्वंसविषया उक्तप्रतीतिः स्या-दिति चेत्; इष्टापत्तिः। ध्वंसप्रतियोगिधर्मिज्ञानसत्त्वेऽप्युक्तप्रतीतेर्जायमान-त्वात्। इहेदानीं घटो नास्तीत्यपि प्रतीतिर्यत्किंचिद्घटसत्त्वे स्यादिति चेन्न;

तत्र ध्वंसविषयत्वानङ्गीकारात् । सामान्यावच्छिन्नप्रतियोगिताकत्वानुभवान्यथाचेष्टापादनादिति दिक् ।

अहमज्ञ इति धीर्ज्ञानसामान्याभावावगाहिन्यपि प्रमैव । सुषुप्तिकाले तस्यात्मनि सत्त्वात् । अहमिदानीमज्ञ इति धीस्तु यदानुभवसिद्धा तदा यद्येतत्कालावच्छेदेनात्मनि ज्ञानसामान्याभावमवगाहते तदा भ्रम एव । यदि तु एतत्कालीनत्ववत्यात्मनि ज्ञानसामान्याभावमवगाहते तदा प्रमैव । गन्धप्रागभावकालीनो घटो गन्धवानित्यादावुभयस्य कल्पितत्वात् । वायौ रूपसामान्याभावप्रतीतिस्तु प्रमैव । तत्र समवायेन कदापि रूपस्याभावादिति वैषम्यम् । अत एव घटो रूपाभाववानिति सामान्याभावज्ञानं प्रमैव । उक्तं हि **दीधितौ**—"रूपादिसामान्याभावसाध्ये पृथिवीत्वादिकं सद्धेतुरेव । प्रलये परमाणावुत्पत्तिकाले चावयविनि तत्सत्त्वात्" इत्यादि । न चातीतानागतकालानवगाहिज्ञानसामग्र्या ज्ञानोत्पत्तिक्षणविशिष्टार्थविषयकज्ञानजनकत्वस्वाभाव्यात्सुषुप्तिकालानवगाहिनोऽहमज्ञ इति प्रत्ययस्य स्वोत्पत्तिक्षणावच्छिन्नज्ञानसामान्याभावविषयकत्वमेव वक्तव्यम् । अतो भ्रमत्वापत्तिर्दुःपरिहरैवेति वाच्यम् ; तदंशे भ्रमत्वेऽपि क्षतिविरहात् । किं च जानामीत्यत्र वर्तमानत्वेन स्थूल काल एव भासते, न तु क्षणोऽतीन्द्रियत्वादिति स्पष्ट**माकरे** । एवं च सामान्याभावाधिकरणक्षणोत्तरोत्पन्नज्ञानरूपप्रतियोगिज्ञानेन तृतीयक्षणे ज्ञानाभावग्रहः । चतुर्थ चानुव्यवसायः । तावद्गर्भवर्तमानत्वान्तर्भावेनाहमज्ञ इति धियः प्रमात्वमुपपाद्यम्, इदानीमित्यस्य क्षणमात्रविषयकत्वे प्रमाणाभावात् । एतेन त्वदुक्तमर्थं न जानामीत्यस्यापि तत्र प्रामाण्यत्वमुक्तार्थज्ञानज्ञाने त्वदुक्तार्थस्यापि विषयत्वात् । ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात् । प्रतियोगिज्ञानस्यैव त्वदुक्तार्थज्ञानत्वात्तदभावस्य तत्र बाधितत्वादित्यप्यपास्तम् । त्वदुक्तार्थज्ञाने जातेऽपि वादिवचनत्वादिनाप्रामाण्यज्ञानस्यावश्यकतया तस्य त्वदुक्तार्थज्ञानाभावाज्ञानं प्रत्यविरोधित्वात् । सामानाधिकरण्यं विशेष्यत्वं चेत्युभयसंबन्धेनाप्रामाण्यग्रहाभाववत एव ज्ञानस्य विरोधित्वात् । अभावज्ञानोपजीव्यप्रतियोगिज्ञाने च तदप्रामाण्यज्ञानाभावनिवेशे प्रयोजनाभावात् । त्वदुक्तार्थज्ञानज्ञानरूपस्य तस्य भ्रान्तिज्ञानस्येव प्रामाण्यस्यापि सत्त्वाच्च ।

वस्तुतस्तु त्वदुक्तार्थज्ञानेऽप्रामाण्यग्रहे जाते तदुत्तरकालीनत्वदुक्तार्थज्ञानज्ञाने त्वदुक्तार्थविषयकत्वमेव नास्ति, अप्रामाण्यज्ञानेन तदभाववद्विशेष्यकत्वा-

द्यवगाहनात् । तद्रूपबाधज्ञानस्यैव प्रतिबन्धकत्वात् । ज्ञानज्ञानस्य यावद्विषयविषयकत्वनियमे बाधकाभावस्यापि निविष्टत्वात् । अन्यथा भ्रान्तिभ्रान्तिज्ञसंकरापत्तेः, ईश्वरस्य भ्रान्तत्वापत्तेश्च । एतेन विषयबाधोऽपि निरस्तः, पूर्वोत्पन्नत्वदुक्तार्थज्ञानस्य नष्टत्वात् । त्वदुक्तार्थज्ञानज्ञानस्य चोक्तबाधकेन त्वदुक्तार्थविषयकत्वाभावात् । त्वदुक्तार्थज्ञानाभावस्य तत्र सत्त्वात् । ज्ञानसत्त्वमात्रेण तद्विषयस्यापि तत्र स्वीकारे वातिप्रसंगस्य स्पष्टत्वात् ।

यदप्युक्तम्, एतावन्तं कालं न किंचिदवेदिषमिति स्मरणसिद्धं सौषुप्तप्रत्यक्षमपि भावरूपाज्ञानविषयकमेव । न च तत्रानुल्लेखान्न स्मरणम्, तत्र तदुल्लेखनियमाभावात् । अन्तःकरणोपरागकालीनानुभवजन्यत्वाभावेन च तत्रानुल्लेखसंभवात् । न च त्वन्मतेऽनाद्यविद्योपरक्तसाक्षिचैतन्यरूपस्य सौषुप्तज्ञानस्यानित्यतया स्वरूपत उपाधितो वा नाशासंभवात्कथं तेन संस्कारोत्पत्तिः, विनश्यदवस्थ स्यैव ज्ञानस्य संस्कारजनकत्वात्, तदभावे च कथं स्मरणमिति वाच्यम्; अज्ञान स्याज्ञानवृत्तिप्रतिबिम्बिततयैव तस्य विधास्यत्वात् । अज्ञानवृत्तिप्रतिबिम्बितचैतन्यस्यैव साक्षिपदार्थत्वादज्ञानचैतन्ययोरनादित्वेन तदा नाशाभावेऽपि वृत्तिनाशादेव संस्कारोपपत्तेः । न चाज्ञानवृत्तिप्रतिबिम्बितचैतन्यरूपस्याज्ञानानुभवस्य जाग्रद्दशायामपि सत्त्वात्कथमुक्तस्थलेऽज्ञानस्मरणम्, सामग्रीसाम्ये एकत्रानुभवत्वमन्यत्र स्मृतित्वमिति वक्तुमशक्यत्वात् । अन्यथा धारावाहिकबुद्धिषु स्मरणत्वव्यवहारापत्तेरिति वाच्यम्; सुषुप्त्याख्यतामसवृत्तेरज्ञानसंबन्धिन्या नाशेन जाग्रदवस्थायां तद्विशिष्टाज्ञानस्याननुभवात् । संस्कारजन्याविद्यावृत्त्यैवाज्ञानस्य विशिष्टस्वरूपमात्रस्य विषयीकरणात् स्मृतित्वोपपत्तेः । विशिष्टस्वरूपान्याज्ञानस्वरूपांशे तु सामग्रीसाम्याद्धारावाहित्वस्योपगमात् । तथा चैकैव निर्विकल्पकवृत्तिरुक्तविशिष्ट केवलं वा अज्ञानस्वरूपं विषयीकरोति, विशिष्टांशे स्मृतिः, केवलांशे त्वनुभव इत्यादि, तच्चिन्त्यम्; एतादृशप्रक्रियाया अज्ञानसिद्ध्युत्तरकल्प्यतया तदनुसारेण प्रथमं नावेदिषमिति प्रत्ययस्याज्ञानविषयकत्वेन व्यवस्थापयितुमशक्यत्वात् । उक्तप्रत्ययस्य त्वनुमित्यात्मकत्वेनैवोपपत्तेः ।

अथ कीदृश्यनुमितिः । तत्कालावच्छिन्नोऽहं तदानीं ज्ञानाभाववान्, अवस्थाविशेषवत्त्वादित्यत्र ज्ञानाभावातिरिक्तविशेषस्य दुर्वचत्वम् । तस्य च पूर्वमसिद्धिरेव । न च ज्ञानसामग्रीविरहो हेतुः, तस्य ज्ञानाभावमात्रानुमेयत्वात् । न च ज्ञानवत्त्वेनास्मर्यमाणत्वं, तथा यो यत्कालीनयद्विषयकज्ञान-

वत्त्वेन न स्मर्यते, स तत्कालीनतद्विषयकज्ञानाभाववान्, यथाऽहं प्रातर्घटज्ञानवत्त्वेनास्मर्यमाणस्तदानीन्तनघटज्ञानाभाववानिति सामान्यव्याप्तेरेव वाच्यत्वात् । विशेषव्याप्तौ दृष्टान्ताभावात् । तथाचापेक्षणीयज्ञानस्यैव निवेशे तदभावसिद्धावप्युपेक्षाज्ञानाभावो न सिद्ध्येत्, तस्य स्मरणानाधायकतया तदभावेन तदभावानुमित्यनुपपत्तेः । न च ज्ञानसामान्यं निवेश्यम्, उपेक्षाज्ञान एव व्यभिचारापत्तेरिति चेत्, उच्यते; नावेदिषमिति प्रत्ययमात्रं ह्युपपाद्यम्, तच्चोक्तरीत्या सिद्धमेव । उपेक्षाज्ञानाभावस्तु प्रमाणाभावादेव, ज्ञानमात्रनिवेशेऽप्यदोषाच्च । न च व्यभिचारः, स्वार्थानुमाने तदभावात् । न चानुमितेर्भ्रमत्वापत्तिः, साध्यवति व्यभिचारिलिङ्गजन्यानुमितेरपि प्रमात्वात् । न च साध्यवत्त्वं केन सिद्ध्यतीति वाच्यम्; अनुमानश्रुत्यादितस्तत्संभवात् । न ह्युक्तज्ञानमेव सुषुप्त्यवस्थायां प्रमाणमिति केनाप्युच्यते । अनुमानं तु मदीयजागराद्यज्ञानप्रागभावो मदीयप्रत्यक्षविशेषगुणानधिकरणकार्यद्रव्याधिकरणवृत्तिः, प्रागभावत्वात्, घटप्रागभाववत् ।

न च पूर्वस्मरणकालमादायार्थान्तरं कार्यद्रव्यपदस्य मदीयजीविशरीरपरत्वात्, शरीरप्रागभावस्य दृष्टान्तत्वसंभवात्, मदीयजागराद्यज्ञानाव्यवहितपूर्वकालवृत्तित्वेन कार्यद्रव्याधिकरणविशेषणाद्वा । न चाप्रयोजकत्वं प्रत्यक्षविशेषगुणसत्त्वे तदनुभवध्रौव्येण स्मरणापत्तेर्बाधकत्वात् । यद्वा मदीयजागरान्त्यज्ञानध्वंसो मदीय[-प्रज्ञान]विशेषगुणानधिकरणमदीयजीविशरीराधिकरणवृत्तिध्वंसित्वात्, शरीरध्वंसवत् । पूर्ववदन्यत् । श्रुत्यादिकं चानुकूलतर्कः । एवं मदीयजीवच्छरीरं प्रत्यक्षविशेषगुणानवच्छेदकं शरीरत्वाच्चात्र शरीरवदित्यादिकमपि बोध्यम्, "न बाह्यं किंचन वेद नान्तरम्" इत्यादि श्रुतयः पूर्वमेव व्याख्याताः । केचित्तु "सुषुप्तोऽहं न किंचिदज्ञासिषमिति प्रत्यक्षेण मनःसंबद्धविशेषणतया तदानीन्तनः सुखाद्यत्यन्ताभावो विषयीक्रियते" इत्याहुः ॥

**वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले ।**
**अविद्याया अवद्यानामपरोक्षे परीक्षणम् ॥ २१ ॥**

# द्वाविंशोऽशः

यत्तु जन्यसविकल्पकाजन्यघटचाक्षुषप्रमा स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्विका, अप्रकाशिकार्यप्रकाशत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रमावत्। स्वविषयावरणत्वं स्वजननायोग्यत्वं स्वनिवर्त्यत्वं स्वजन्यनाशप्रतियोगित्वं वस्त्वन्तरत्वं स्वभिन्नत्वम्। स्वप्रागभावपूर्वकत्वमादायार्थान्तरवारणाय आद्यं विशेषणम्, इच्छाप्रागभावादिना तद्वारणाय द्वितीयम्, स्वपूर्ववर्तित्वेन तद्वारणाय तृतीयम्। यद्वा स्वप्रागभावान्यस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकत्वं साध्यं स्वसमानाधिकरणप्रागभावान्यार्थकमाद्यम्, इच्छाभ्रान्तिप्रागभावादिनार्थान्तरवारणाय आत्मत्वादिवारणाय द्वितीयम्, स्वसमानाधिकरणयोग्यार्थकतया स्वजनकादृष्टादिवारकं तृतीयमिति, तच्चिन्त्यम्; अन्धकारस्योद्भूतानभिभूतरूपवत्तेजःसामान्याभावरूपतया प्रमाजन्यनाशप्रतियोगित्वाभावेन स्वनिवर्त्यत्वगर्भसाध्यानाश्रयत्वात्। स्वप्रयोज्याभावप्रतियोगित्वमात्रोक्तौ च इच्छाप्रागभावादिनार्थान्तरतादवस्थ्यात्, कालोपाधिविधयोक्तचाक्षुषप्रमाया अपि इच्छाप्रागभावादिनाशकत्वाच्च। प्रतियोगिविधया स्वनाशत्वोक्तौ च साध्याभावात्। भवदभिमताज्ञानज्ञानयोः प्रतियोग्यनुयोगिभावाभावात्। भ्रमसंशयोत्तरप्रमायां सिद्धसाधनाच्च। न च पटचाक्षुषोत्तरघटचाक्षुषप्रमायां घटचाक्षुषेच्छाजन्यत्वेन तस्याः पटाविषयकत्वेन पटसविकल्पकाजन्यतया पक्षान्तर्गतायां सिद्धसाधनवारणाय योग्यात्मगुणाव्यवहितोत्तरान्यत्वस्याजन्यान्तार्थत्वान्न दोषः। परमते निर्विकल्पकाव्यवहितोत्तरत्वस्य पक्षे सत्त्वात् योग्येति। सविकल्पकसुखादेरपि योग्यत्वान्न सिद्धसाधनमिति वाच्यम्; तन्मतेऽज्ञानस्यापि योग्यात्मगुणत्वेन पक्षस्यैवानवाप्तिप्रसंगादज्ञानसिद्धौ बाधप्रसंगावश्यकत्वाच्च। पक्षदृष्टान्तसाधारणप्रकाशपदार्थैक्याभावाच्च। प्रकाशपदवाच्यतावच्छेदकत्वेन ज्ञानत्वालोकत्वयोरनुगमस्याप्यकिंचित्करत्वात्। उभयत्र शक्तेः प्रामाणिकत्वेऽप्यवच्छेदकत्वस्य भिन्नत्वात्। प्रकाशपदयोर्भावे करणे च व्युत्पत्त्योभयत्र वृत्तेः। पक्षीभूतायाः प्रमादृष्टान्तीभूतश्च य आलोकस्तदन्यतरत्वं हेतुरित्यस्याप्याग्रहमात्रत्वात्।

यत्तु चैत्रप्रमा चैत्रप्रमाप्रागभावातिरिक्तानादिनिवर्त्तिका प्रमात्वान्मैत्रप्रमावदिति, तन्न; प्रागभावानभ्युपगमे साध्याप्रसिद्धेः। प्रमात्यन्ताभावनिव-

र्तकत्वेन सिद्धसाधनात् । प्रमोत्पत्तौ तदभावसंबन्धनिवृत्त्या तदभावनिवृत्तेः । न च निवृत्तिपदेन नाश एव विवक्षित इति वाच्यम्; ज्ञाने सत्यज्ञानस्य शक्त्यभिभवोऽवस्थाविशेषप्रत्ययो वा भीरुभटवदपसरणं वा कटवत्संकोचो वेति पक्षेषु विरोधापत्तेः । ईश्वरज्ञाने च व्यभिचारात् । न च तत्रापि दृष्टान्तवदेव साध्यसत्त्वमिति वाच्यम्; ईश्वरज्ञानहेतुतायाः कालिकसंबन्धावच्छिन्नतया तत्साधारणे निवर्तकत्वे साध्ये पक्षेऽपि कालोपाधिविषया मैत्रप्रमाप्रागभावनिवर्त्तकत्वेनैव सिद्धसाधनापत्तेः ।

यत्तु तत्र प्रमात्वं नास्ति गुणजन्यतावच्छेदकस्य तस्य तस्मिन्नसंभवात्, यदि प्रमाप्रमात्वासमानाधिकरणरूपनिरूपितकार्यत्वप्रतियोगिककारणजन्या न स्यादप्रमा स्यादिति फक्किकायां वस्तुतस्त्वप्रमा स्यात् प्रमा न स्यादित्यर्थः ।"ईश्वरज्ञानं तु नप्रमेति न व्यभिचारः" इत्यस्य मिश्रै रुक्तत्वाच्चेति, तच्चिन्त्यम्; "प्रमात्वं ज्ञानत्वावच्छिन्नकार्यत्वनिरूपितकारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकं ज्ञानत्वसाक्षाद्व्याप्यधर्मत्वादप्रमात्ववदित्यत्र प्रमात्वस्य नित्यवृत्तितया कार्यतानवच्छेदकत्वात्" इति मणावुपाये च लिखितत्वात् । सिद्धान्तेऽप्यनित्यप्रमात्वमनित्यज्ञानत्वावच्छिन्नकार्यत्वप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यतावच्छेदकमनित्यज्ञानत्वव्याप्यकार्यतावच्छेदकधर्मत्वादप्रमात्ववदित्यादेरुक्तत्वात् । "स्वाश्रयेण गृह्यत एवेति विप्रतिपत्तावीश्वरज्ञानग्राह्यत्वेन सिद्धसाधनवारणाय यावदर्थकमेव पदम्" इति मिश्रोक्तेश्च । अन्यथा पक्षीकृतघटवति घटत्वप्रकारत्वरूपप्रमात्वाश्रयत्वाभावेन स्वाश्रयपदेनैव तद्व्यावृत्तिसिद्धेः । "योगजधर्माद्यजन्यत्वं पक्षविशेषणम्" इति पक्ष प्रक्रम्य "इदमुपलक्षणं जन्यत्वमपि विशेषणम्, ईश्वरज्ञानप्रामाण्ये सिद्धसाधनतादवस्थ्यात्" इति मिश्रै रुक्तत्वाच्च । दीधितावपि "तत्र जन्यपदोपादानात् । अत एव ज्ञानसाक्षाद्विभाजकोपाधित्वात् । इत्यत्र विद्या वाविद्या चेति प्राथमिको वैशेषिको विभागः" इति व्याख्यानमनूद्य "तच्चिन्त्यम्; तत्रोक्तस्य विद्यात्वस्य निर्विकल्पकसाधारणस्य नित्यावृत्तेर्विशिष्टज्ञानमात्रवृत्तिनित्यसाधारणात्प्रमात्वादनित्यत्वात्" इति तत्रोक्तम् । एवं तद्वतीत्यत्र न तद्विशेषणज्ञानजन्यत्वमीश्वरज्ञानस्य प्रमाप्रमोभयबहिर्भावापत्तेरित्यपि तत्रोक्तम् । अत एव "प्रमामात्रेव नानुगतो गुणः किन्तु तत्तत्प्रमायां भूयोऽवयवेन्द्रियसन्निकर्षयथार्थलिङ्गसादृश्यवाक्यार्थज्ञानानां यथायथं प्रत्येकमेव गुणत्वम्" इति मूले । "यद्यपि प्रमासामान्येनानुगतो गुणोऽन्वयव्यतिरेकसिद्धस्तथापि प्रमाविशेषे गुणविशेषाणामन्वयव्यतिरेकाभ्यां कार्यकारणभावे सिद्धे सामान्यत

एव बाधकाभावात्। तथात्वं सेत्स्यतीत्यभिप्रायवान्समाधत्ते" इत्युक्त्वा किंत्वित्यादिप्रतीकमुपादाय "यस्य यस्य यादृशि यादृशि प्रमाविशेषेऽन्वयव्यतिरेकशालित्वं विशिष्य तत्र तत्र तस्य हेतुत्वम्, एवं च विशेषतः सिद्धप्रमाकारणभावानां प्रमाकारणत्वेन जन्यप्रमासामान्ये कारणत्वमेतेन दोषो व्याख्यातः" इति तत्र व्याख्यातम्। प्रमाकारणत्वेन प्रमात्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतावत्त्वेनेत्यर्थः। "सर्वं कार्यं प्रमासाधारणमीश्वरीयज्ञानमेव गुणः" इति मिश्रोक्तावपि जन्यप्रमात्वस्यैव गुणकार्यतावच्छेदकताया अभिमतत्वात्। अद्वैतसिद्धावप्युक्तम् "ननु दोषं विना भ्रमस्वीकारे स्यादप्रामाण्यस्य स्वतस्त्वापत्तिः, दोषजन्यत्वे तु दोषस्याप्यध्यसनीयत्वेनानवस्थापत्तिरिति चेन्न; अनादिविद्याध्यासस्य दोषानपेक्षत्वात्। साद्यविद्याध्यासस्य वाविद्याजन्यत्वाप्रामाण्यस्य स्वतस्त्वम्। नाप्यनवस्था, अन्यथा तार्किकाणामप्यनादिप्रमागुणं विनापीति प्रामाण्यपरतस्त्वं भज्येत। जन्यप्रमामात्रस्य गुणजन्यत्वं जन्याध्यासमात्रस्य दोषजन्यत्वेन समं तदुत्तरमप्युक्तम्। "यथा नित्यज्ञानवादिनां ज्ञानत्वस्य न शरीरजन्यतादावच्छेदकत्वं न वा गुणजन्यत्वस्य प्रामाण्यप्रयोजकत्वं बाधकबलात् तज्जन्याध्यासं प्रत्येव दोषादीनां कारणत्वं गुणाजन्यत्वेऽप्यबाधितविषयतया नित्यज्ञानप्रामाण्यवद्दोषाजन्यत्वेऽपि बाधितविषयतयानाद्यध्यासस्याप्रामाण्योपपत्तिः" इति। अपि च— प्रमामात्र इति वाक्यमभ्युपगमवादत्वेन **मिश्रै**र्व्याख्यातम्। यद्यपि प्रमामात्रे नानुगतो गुणस्त्वन्मते तादृशवस्त्वप्रसिद्धेस्तथापि प्रत्येकप्रमितौ प्रत्येकस्य गुणत्वं त्वन्नयेनैवास्त्वित्यभिप्रेत्य सिद्धान्तयति—प्रमेति। अस्मन्मते त्वनुगत एव सर्वसाधारणोऽस्तीति वयं वक्ष्यामः" इत्युक्तेः। पश्चादप्युक्तम् "ग्रन्थस्त्वेवं योजनीयः। प्रमामात्रे नानुगतो गुण इत्यन्तरमस्त्वित्यध्याहार्यम्। प्रत्येकमेव गुणत्वमित्यत्र केन वारणीयमित्यध्याहार्यम्। तेनाभ्युपगमसिद्धान्तरीतिः स्फुटीभवति। तथा चेदं पर्यवसितम्—अस्ति तावदनुगतमेव, यदि च तव रीत्येश्वरद्वेषान्न तथा संभवति तथापि प्रत्येकगुणत्वेऽपि सिद्धं नः समीहितम्, प्रमाया गुणजन्यत्वात्। तदनन्तरमनापत्त्येश्वरसिद्धिश्च" इत्यादि। तथा च मीमांसकाभ्युपगतरीतितात्पर्यके मूले कथमनित्यत्वघटितं प्रमात्वं कार्यतावच्छेदकत्वेन तात्पर्यविषयः स्यात्, व्यावर्त्याभावेन विशेषणवैयर्थ्यात्। अत एव चतुर्थस्तवकान्ते **कुसुमाञ्जलावुपाये** च मिलित्वोक्तम् "ननु च नेश्वरज्ञानं प्रमा, नित्यत्वेन फलानात्मकत्वात्। प्रमायाश्च क्रियात्वेन जन्यत्वात्। नापि प्रमाणम्, निर्व्यापारत्वेनाकरणत्वात्। अत एव न तदाश्रयः प्रमाता, प्रमासमवायिकारणस्यैव प्रमातृत्वात्। उच्यते—

मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ "इति।

यथार्थानुभवत्वमेव प्रमात्वं नित्यानित्यसाधारणम्। न च क्रियात्वविरोधः, धात्वर्थमात्रस्यैव नित्यानित्यसाधारणस्य सत्तादेरिव क्रियात्वात्। अनित्यत्वेन तद्विशेषणस्य गौरवेण व्यर्थत्वात्। नित्यानुभवसिद्धौ तद्व्यवच्छेदस्यानिष्टत्वादसिद्धौ च व्यवच्छेद्याभावात्। न चोक्तमनुमानमाश्रयासिद्धिबाधयोरन्यतराक्रान्तत्वात्। नापि प्रमाणमित्यत्र च सिद्धसाधनम्, स्वप्रमां प्रत्यकरणत्वात्। अस्मदादिप्रमां प्रति तु तत्करणत्वं वर्तत एव, तस्य सव्यापारत्वात्। प्रमातृत्वं च प्रमासमवायित्वमेव न तु कारणत्वगर्भम्, उक्तरीत्या वैयर्थ्यात्। यच्चैवमाप्तप्रामाण्यादिति सूत्रविरोधः, तेन हीश्वरे प्रामाण्यं प्रतिपाद्यते न तु प्रमातृत्वमिति चेत्, न; निमित्तसमावेशेन व्यवहारसमावेशाविरोधात्। प्रमासमवायो हि प्रमातृव्यवहारे निमित्तम्। प्रमया त्वयोगव्यवच्छेदेन संबन्धः। प्रमाणव्यवहारे चक्षुरादीनामपि चरमसहकारिक्षणे प्रमयायोगव्यवच्छेदेन संबन्धस्य विद्यमानत्वात्। अस्ति च तदुभयमीश्वरे ह्यत्रापि कार्यं सतीति विशेषणं पूर्ववद्व्यर्थं प्रमाणप्रमातृपदयोः करणकर्तृकार्थकप्रत्ययान्तत्वेऽपि तस्य व्युत्पत्तिमात्रत्वात्। प्रमाकर्तृकत्वेन प्रमातृत्वेऽस्मदादीनां तदभावापत्तेः। तदनुकूलप्रयत्नवत्त्वं हि स्वातन्त्र्यतत्कर्तृत्वम्। तच्च सर्वं प्रमायामस्मदादीनामपि नास्ति, अस्मदादिप्रयत्नं विनाप्यस्मदादिप्रमोत्पत्तेः। प्रमाणव्यवहारस्तु यद्यपि लोकेऽयोगव्यवच्छेदेन जनकत्वनिमित्तकोऽपि, तथापि कारकविशेषवाचिप्रमाणं शब्दस्येश्वरे वृत्त्यभावेऽपि प्रमयायोगव्यवच्छेदेन संबन्धानिमित्तक एव सत्रे इति साक्षात्कारिप्रमावत्तया चेश्वरस्य प्रत्यक्षप्रमाणेऽन्तर्भावात्। इन्द्रियार्थसन्निकर्षोत्पन्नमिति लक्षणस्य च लौकिकमात्रविषयत्वात्, ईश्वरप्रमायाश्च साक्षात्कारित्वस्य धर्मिग्राहकमानसिद्धत्वादिति दिक्।

एतेन **न्यायसूत्रे** वेदार्थप्रमावत्त्वेनेश्वरस्य प्रामाण्यं यदुक्तम्, तत्रानित्यत्वरहितमेव प्रमात्वमुपयुज्यत इत्येव तदभिप्रायः। जन्यत्वघटितमुख्यार्थैकदेशत्यागेनाजन्यज्ञाने सौत्रप्रमाशब्दस्य प्रवृत्तिसंभव **इत्याचार्या**भिप्रायाच्च। अत एव प्रमाया अयोगव्यवच्छिन्नत्वे सति कारणत्वरूपस्य मुख्यार्थस्यैकदेशे वायोगव्यवच्छेदेनेश्वरे सौत्रप्रमाणशब्दवृत्तिः। न चैतावता लक्षणा "शक्यादन्येन रूपेण ज्ञाने भवति लक्षणा" इत्यत्र शक्यपदस्य शक्यतावच्छेदकघटक-

मात्रपरत्वात्। "श्येनेन यजेत" इत्यादौ बलवदनिष्टाननुबन्धित्वस्य मानाधिकरणेष्टसाधनत्वशक्तस्य विधेः केवलेष्टसाधनत्वबोधकत्वेऽपि लक्षणाविरहादित्यादि निरस्तम्। प्रमाया अनित्यत्वघटितत्वे मानाभावस्योक्तत्वात्। उक्त-**मणिवाक्ये** ईश्वरज्ञानसाधारण्यवारणाय जन्यतावच्छेदककोटावनित्यत्वनिवेशेऽपि प्रमालक्षणे तदभावात्। शक्यपदस्य शक्तिविशेष्यपरताया गोपदस्य गौः शक्य इत्यादिव्यवहारे दर्शनात्। "श्येनेन यजेत" इत्यत्र चेष्टसाधनत्वस्य विशेष्यत्वात्। विशेष्यतावच्छेदकरूपेण बोधने लक्षणाविरहेऽपि प्रकृतौ विशेषणमात्रपरत्वे लक्षणाया आवश्यकत्वात्। अन्यथा गौर्नित्य इत्यत्र लक्षणेति सिद्धान्तभङ्गापत्तेः। न च विशेषणविशेष्यभावे विनिगमकाभावात्, कारणत्वे सति प्रमायोग्यव्यवच्छिन्नत्वस्यैव प्रमाणलक्षणत्वसंभवान्न दोष इति वाच्यम्; तथापि तस्य विशेष्यत्वव्यवस्थापनस्य दुष्करत्वात्। श्येनेन यजेतेत्यत्र तु विध्यन्यथानुपपत्तिरेवेष्टसाधनत्वस्य शक्तिविशेष्यत्वे मानमिति वैषम्यात्। अत एव वेदलक्षणेऽखण्डशक्तिपक्षेऽपि एकोच्चारणान्तर्भावेनैव शक्तेः स्वीकारात् प्रमाणशब्दमात्रपरत्वेन लक्षणातादवस्थ्यमित्युक्तं **न्यायसूत्रमालायाम्**।

यत्तु "स्वाधिकरणक्षणे ध्वंसोत्पत्तिक्षणत्वव्यापकप्रमितिकत्वरूपप्रमायोगव्यवच्छेदः सौत्रप्रमाणशब्दार्थः। स चेश्वरे प्रमाचरमकारणे चास्ति" इति व्याख्यानमनूद्य दूषणमुक्तम् "यद्ययं प्रामाण्यपदमुख्यार्थस्तदा परमाण्वादावकारणेऽपि तत्त्वापत्तिरीश्वरप्रमामादाय तत्राप्युक्तार्थसत्त्वादुक्तप्रमित्यधिकरणत्वोक्तावपि जन्यमात्रस्येश्वरप्रमामादाय तत्सत्त्वात् जन्यप्रमानधिकरणकालोत्पन्ने चरमक्रियादौ प्रमाणपदमुख्यार्थत्वापत्तिः, यदिवायं गौणो व्यवहारस्तदा प्रवृत्तिनिमित्तन्तु यथोक्तमेवेत्युत्तरग्रन्थविरोधः। अथ प्रमोपधायकत्वघटितमुक्तरूपं मुख्यार्थः। उक्तग्रन्थस्य तु यथोक्तप्रवृत्तिनिमित्तमेव तद्घटकत्वादित्यर्थः। तदास्मदुक्तार्थपर्यवसानम्" इति, तदपि चिन्त्यम्; करणकर्तृव्युत्पत्त्या तस्य व्युत्पत्तिमात्रत्वादित्युभयसाधारण्येनोक्तावपि प्रवृत्तिनिमित्तन्तु यथोक्तमेवेत्यस्य प्रमातृपदस्य प्रमासमवायित्वमेवार्थ इति तन्मात्रपरतयैवोपपत्तेः। प्रमाणव्यवहारस्त्वन्यत्र यद्यप्युक्तनिमित्तकोऽपीत्यादिना प्रमाणविषयस्य पृथगेवोक्तत्वात्। अपिशब्देन प्रमाया अयोगव्यवच्छेदेन जनकत्वस्य प्रवृत्तिनिमित्तनियमविरहस्य लाभात्। हेतुत्वसमवायान्यतरसंबन्धेनोक्तव्यापकप्रभृतित्वस्य प्रमाणपदप्रवृत्तिनिमित्तात्वस्य विवक्षितत्वात्। द्रव्यत्वादेर्द्रव्यपदप्रवृत्तिनिमित्तस्यापि परैः व्यक्तिवृत्ति-

कल्पिततादात्म्यतद्भिन्नद्रव्यव्यक्तिवृत्तितादात्म्यानि चेत्यन्यतरसंबन्धेन सद्रूपात्मकत्वोपगमात् । इत्यास्तामप्रकृतमेतत् ।

यत्तु **दीधितावु**क्तम् "प्रमात्वघटकं याथार्थ्यमिच्छासाधारणमनित्यज्ञानत्वञ्च तत्राद्यमेव गुणजन्यतावच्छेदकमन्यत्तु सामान्यसामग्रीनिर्वाह्यम्" इति । तत्रानित्यत्वं प्रमालक्षणान्तर्भूतमिति नार्थः, किन्तु गुणजन्यतावच्छेदकमनित्यत्वगर्भमित्येव । अत एव **माधवमिश्रै**रुक्तम्--"ननु प्रमात्वं प्रत्यक्षप्रमात्वं वार्थसमाजसिद्धं कथमवच्छेदकम्, न चैवं वहिर्द्रव्यप्रत्यक्षत्वमपि नावच्छेदकं स्यात्, इष्टत्वात् । यदुपाध्यवच्छेदकत्वमन्तरेण प्रकृतोपाधेरेवांशयोरनवच्छेदकत्वेनार्थसमाजन्यायः स एव परमुपाधिरवच्छेदकः । तथाहि द्रव्यविषयप्रत्यक्षत्वं द्रव्यविषयत्वेन प्रत्यक्षत्वेन वावच्छेदकेनोपपन्नकार्यभावमार्थं स्यात् । द्रव्यविषयत्वं तु न तथा । ननु तत्रापि द्रव्यसामग्र्या द्रव्यं विषयकत्वसामग्र्या सविषयकत्वमस्तु । द्रव्यसामग्र्या अनुगताया अभावादिति, तन्न; अनित्यत्वं प्रमात्वं तद्वत्त्वं विशेष्यत्वं च यद्यवच्छेदकं स्यात्, स्यादपि तदा प्रकृतमार्थत्वम्, नत्वेवमिति । किञ्च प्रमाया असाधारणकारणजन्यत्वे प्रमाजन्यत्वमुपाधिः, न च पक्षेतरत्वम् । तवेश्वरज्ञानस्य मम त्वत्पक्षस्य व्यावर्त्यत्वात् । उभयसिद्धव्यावर्त्तकत्वं तन्त्रम्, न तु व्यावर्त्यस्योभयसिद्धिर्गौरवात् । व्यतिरेकस्यासाधारणत्वञ्च पक्षेतरस्यानुपाधित्वे बीजम् । तच्चात्र नास्ति भगवज्ज्ञानस्य त्वत्पक्षस्य सपक्षत्वादिति तावन्मीमांसकोक्तदूषणं **मणावु**पन्यस्तम । तत्र ईश्वरज्ञानञ्च न पक्षः । जन्यप्रमामात्रस्य पक्षत्वादिति **मिश्रव्याख्यातृ**भिर्व्याख्यातम् । **दीधिताव**प्युक्तम् "न चानित्यप्रमायाः पक्षत्वे प्रमान्यत्वस्य न पक्षेतरत्वम् । नहि करकाया निस्नेहत्वे साध्ये जलान्यत्वस्य तथात्वम् । प्रमामात्रपक्षतायां चांशतो बाध इति वाच्यम्; पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् इति चाक्षुषप्रमात्वम् । चाक्षुषाप्रमाकारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकम्, चाक्षुषभ्रमावृत्तिकार्यतावच्छेदकत्वात् । घटत्ववदित्यनुमानेऽप्युक्तम्, प्रमात्वस्येश्वरज्ञानवृत्तितया बाधवारणाय चाक्षुषेति" इति दिक् ।

प्रकृतमनुसरामः । यत्तु विमता प्रमा प्रमाभावातिरिक्तस्यानादेर्निवर्त्तिका, कार्यत्वात्, घटवत्, ज्ञानत्वाद्वा भ्रमवत् । भ्रमानुत्तरप्रमास्वाभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वात्, भ्रमोत्तरप्रमावदिति, तदसत्; पूर्ववत् सिद्धसाधनादेः सुलभत्वात् ।

**वेदाविरुद्धयुक्तीनामकें तर्ककुतूहले ।**
**अज्ञानस्यानुमानानाममानत्वं विभावितम् ॥२२॥**

# त्रयोविंशोऽशः

यत्तु छान्दोग्ये दशमे प्रपाठके "तद्यथा हिरण्यनिधिं निहितमक्षे तत्रानुपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा" इति श्रुतिः ब्रह्मज्ञानप्रतिबन्धकत्वेनावृतं ब्रुवाणा भावरूपेऽज्ञाने प्रमाणम् । न चात्रानृतपदस्य दुःकर्मपरत्वम्, "ऋतं पिबन्तौ" इत्यादौ ऋतशब्दस्य सत्कर्मपरत्वदर्शनादिति वाच्यम् । उत्तरवाक्ये च आत्मापहतपाप्मेत्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुःकर्मप्रत्यूढत्वविरोधात् । सुषुप्तौ कार्यमात्रनाशे दुःकर्मणोऽप्यभावात् । कारणात्मनाविस्मयानेवाज्ञानस्यावश्यकत्वात् । ब्रह्मज्ञानप्रतिबन्धकस्यानादित्वावश्यकतया कर्मणस्तदनुपपत्तेश्चेति, तदसत्; अपहतपाप्मत्वस्याज्ञानेऽपि बाधकत्वात् । जीवनिष्ठत्वेनैव चैतन्यवाच्यत्वात् । सुषुप्तौ कार्यमात्रनाशस्य निरसनीयत्वात् । जीवब्रह्मणोर्भेदस्य च व्यवस्थापितत्वात् ।

'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥"

इति **स्मृतेश्च** । कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य तत्रैव लाभात् । प्रवाहानादित्वस्यापि पापे संभवात् । न च पापस्य मिथ्याज्ञानजन्यसंस्कारस्य वा प्रतिबन्धकत्वमित्यत्र विनिगमकाभावात्तद्भिन्नमेवानादिप्रतिबन्धकत्वेन कल्प्यत इति वाच्यम्; अनृतशब्दस्य मुख्यार्थः पापमेवेत्यस्यैव विनिगमकत्वात् । न च ऋतशब्दस्य सत्यवाचकस्य सत्यब्रह्मप्रापकत्वेन पुण्यं गौणोऽर्थो न तु मुख्यस्तथा सत्यब्रह्मविरोधित्वेन पुण्यवासनयोरप्यनृतशब्दगौणार्थत्वं पापवत्संभवत्येवेति वाच्यम्; ब्रह्मैव सत्यमित्यस्य मिथ्यात्ववादवासनामात्रमूलकत्वात् ।

ननु तथापि अनृतशब्दस्य पापं न मुख्योऽर्थः, **कोषादावदर्शनादिति** चेत्, सत्यम्; "नानृतं वदेत्, प्रातः प्रातरनृतं ते वदन्ति" इत्यादौ **कोषे** चानृतशब्दस्यासत्यवाक्यतदर्थान्यतरपरत्वादुभयथापि कारणे कार्यलक्षणया पापस्य शीघ्रोपस्थितिकतया तत्परत्वे लाघवस्यैव विनिगमकत्वात् । मुख्यानादित्वस्य च प्रतिबन्धकतायामनुपयोगात् । प्रतिबन्धकालावस्थायित्वस्यैव

तत्र तन्त्रत्वात् । पुण्यस्य च ब्रह्मज्ञानविरोधित्वे मानाभावात् । "सर्वकर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति स्मृत्या ज्ञानानुकूलत्वस्यैव लाभात् । मिथ्याज्ञानवासनायाश्चात्मतत्त्वसाक्षात्कारनाश्यतया तत्र प्रतिबन्धकत्वानुपपत्तेः । परमतेऽपि शब्दजन्यशुद्धब्रह्मविषयकवृत्त्यात्मकसाक्षात्कारस्याविद्यानिवृत्त्युपधायकत्वाभ्युपगमेनोक्तसाक्षात्कारकारणीभूताभावप्रतियोगित्वस्याविद्यायामभावात् । "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" इति च स्मृतेः । निधिप्राप्तावपि पापविशेषस्यैव विरोधित्वाच्च । "भाग्यहीना न पश्यन्ति रत्नपूर्णां वसुन्धराम्" "त इमे सत्याः कामा अनृतापिधाना" इति पूर्ववाक्येऽनृतपदार्थाविधेयस्य सत्यत्वोक्तेश्च । अज्ञानस्यानृतपदार्थत्वे तु विषयाणां मिथ्यात्वापत्त्या तद्विरोधात् । न चाज्ञानस्यात्ममात्रावरकतया तस्य सत्यतया न दोषः, जडेष्वावरणकृत्याभावादिति वाच्यम्; त इमे इति [ सर्वनाम्ना सत्यादि ]पितृलोककामो भवतीत्यादिना प्रक्रान्तानामेव विषयाणां परामर्शात् । त्वन्मते प्रति [वाक्यं] तदापत्तेश्च ।

"न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ।।"

इति मन्त्रोऽपि न तदुक्ताज्ञाने प्रामाण्यम् । हे नरा य इमाः प्रजा जजान उत्पादयामास तं यूयं न जानीथ अन्यद्युष्माकं अन्तरव्यवधानं बभूव । नीहारेण तत्सदृशेनावरकेन प्रावृता यूयं जल्प्याः । मनुष्योऽहमित्यादि जल्पनशीलाः । असुतृपः इन्द्रियतर्पणशीला विषयासक्ताः उक्थशासः स्तोत्रविशेषवरणशीलाः कर्ममात्रानुष्ठायिनः । तदत्र नीहारपदं साध्यवसानलक्षणया तत्सदृशमात्रपरं न तु विशिष्य धर्मिविशेषपरम् । अर्थगत्यैव तस्य कल्प्यत्वात् । अत एव "चमसवदविशेषात्" इति व्याससूत्रे,

यथाऽर्वाग्विलश्चमसमूर्द्ध उक्षथास्मिन् यशो निहितं विश्वरूपम् ।
तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना ।।

इत्यत्र चमसशब्दो न धर्मिविशेषसमर्पकः, किन्त्वर्वाग्विलश्चमस ऊर्ध्व बुधा [उक्था]इतीदं तच्छिर इत्यादिव्याख्यानबलादेव तन्निर्णयः । तथा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यजाशब्दोऽपि । अतो न सांख्यसंमतप्रधानसिद्धिरित्युक्तम् ।

यत्तु अनृतनीहारादिशब्दानां दुःकर्मपरत्वे "अनीशया शोचति मुह्यमानं" इति आथर्वणमन्त्रे अनीशया ईशत्वविरोधिना ईशभेदेन शोचति संसरतीत्य-

र्थतया जीवेशभेदोपपादकत्वं यदुक्तं तद्विरोधः, कर्मण आवरकत्वे मोहस्यापि तद्रूपत्वाद्भेदकत्वं वाच्यम् । न च तत्संभवति, तस्य सादित्वाद्भेदस्य चानादित्वात्, अज्ञानपरत्वे तु तदानुकूल्यमिति, तन्न; अनीशयेत्य-थेशभेदपरत्वे उक्तिसंभवाभावात् । स्त्रीत्वस्य कथमप्यनुपपत्तेः । अघट-इत्यादौ घटभिन्नस्यैव बोधात्, भेदमात्रपरत्वासंभवाच्च । न च तत्रापि अघट-पदं घटभेदपरमेव, आश्रयत्वं तु संसर्ग इति वाच्यम्; अभेदसंसर्गकबोधस्य सर्वसिद्धत्वात् । "न कस्यचित्समर्थोऽहं दीन इति संभावनाऽनीशे" इति कल्पत-रुकृद्भिर्विवृतत्वाच्च । जीवेशभेदस्यानौपाधिकत्वव्यवस्थापनाच्च ।

यत्तु "एवमेवैषा माया स्वाव्यतिरिक्ता परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवे-शावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुत्यन्तरम् । तदपि जीवेशभेदस्याविद्यकत्वपरमविद्यायाः प्रपञ्चोपादानत्वपरं वा आभासेन करोतीत्यन्वयात् । त्वन्मते मायाजीवेशौ करोतीत्यस्यैव सामर्थ्यात् । नचा-भासपदं भेदपरमिति भेदवन्तौ करोतीत्यर्थ इति वाच्यम्; अप्रसिद्धार्थकत्वात् । दर्शयित्वेति दर्शनानन्तर्यस्य भेदे विशुद्धत्वाच्च । भेदस्यानादितया एव परैः स्वीकृतत्वात् । तस्मादयमर्थः—मायादृष्टं स्वस्मादव्यतिरिक्तानि कारण-त्वेन जन्यमात्रेऽननुगतत्वात् । न च व्यतिरिक्तशब्दस्य भिन्नार्थकतया स्वाभि-न्नत्वस्य कार्यजाते लाभात् । निमित्तकारणतादात्म्यस्य च कार्येऽनङ्गीकारा-दुपादानत्वलाभ इति वाच्यम्; तदज्ञानविषयकज्ञानव्यतिरेकप्रयुक्तव्यतिरेक-प्रतियोगिज्ञानप्रकारो न वा । यस्य पदस्य समभिव्याहृतयत्पदव्यतिरेकप्रयुक्त याहशान्वयाननुभावकत्वं ताहशान्वयानुभवे समभिव्याहृततत्पदस्य तेन ताह-शान्वयाननुभावकत्वं तयोराकांक्षा अन्वयव्यतिरेकाभ्यां व्याप्तिग्रह इत्यादौ संसर्गाभावेऽपि व्यतिरेकपदप्रयोगदर्शनेन भेदमात्रवाचकत्वे मानाभावात् । परिपूर्णानि स्वस्वधर्मवन्ति क्षेत्राणि भोगसाधनानि दर्शयित्वा तन्निरूपित-कारणाश्रयीभूय जीवस्य भोक्तृत्वनिर्वाहकतया ईश्वरस्य सहकारितया च करणं परैरपि जीवेशयोरनादित्वास्वीकारेण करोतेरुत्पत्त्यर्थताया: परित्याज्यत्वात् । तदाह—आभासेनेति । तदिदमुक्तमाचार्यैः :—

"इत्येषा सहकारिशक्तिरतुला माया दुरुन्ननीतितो
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।"इति ।

सहकारिशक्तिरदृष्टम् । तस्याभिधानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्व-मायानिवृत्तिरिति श्रुतेश्च श्रवणाद्यधीनसाक्षात्कारेण विश्वमायानिवृत्तिरन्ते

प्रारब्धभोगसमाप्तौ तु भूयोऽवशिष्टदेहेन्द्रियादिरूपमायानिवृत्तिरित्यर्थोऽस्माकमप्यनुकूलः। मायापदमदृष्टपरमिति तु विशेषः, जीवन्मुक्तेः सर्वसिद्धत्वात्। तत्त्वस्य सर्वाधिष्ठानस्य भावोऽविद्यानिवृत्तिरूपा प्राप्तिर्यस्मादिति तु नास्मत्संमतोऽर्थः। तत्त्वभावात्तत्त्वसाक्षात्कारादित्येव संभवात्। एवमन्यत्राप्यवधेयम्।

वेदाविरुद्धयुक्तीनामर्के तर्ककुतूहले।
परोक्षार्थप्रातिकूल्यं श्रुतीनामवधारितम् ॥ २३ ॥

---

## चतुर्विंशोंऽशः

दृष्टिसृष्टिर्ज्ञानप्रामाणिकी। यत्तु "एवमस्मादात्मनः सर्वेषाणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एव आत्मने व्युच्चरन्ति" इति श्रुतिः। सुषुप्तौ प्राणादिप्रपञ्चसत्त्वात् किमर्थं पुनः सृष्टिरिति वाच्यम्; नतु तत्। द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदित्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात्। हिता नाम नाड्य इति वा ॥*

*अस्य ग्रन्थस्येयानेवांशोऽस्मत्संग्रहस्थग्रन्थे सरस्वतीभवनस्थग्रन्थे चोपलब्धः "एतत्तु दृष्टिसृष्टिनिरासे वक्ष्यामः" इति ग्रन्थकृता पूर्वमुक्तम्, एतेन ज्ञायते दृष्टिसृष्टिनिरासस्तु तेन कृत एव अन्येऽपि केचन सिद्धान्ता निराकृताः स्युः, प्रचुरमन्वेषयद्भिरपि नास्माभिः पूर्णो ग्रन्थ उपलब्धः। पूर्णग्रन्थश्चेदुपलब्धश्चेदग्रिमे संस्करणे दास्यते।

# उद्धृतनामानुक्रमणी

---